श्रीवेदव्यासप्रणीतानि

# श्रीमद्ब्रम्हसूत्राणि

जगद्गुरु श्रीमदुत्तरादिमठाधीश अभिनवानन्दतीर्थ

श्री श्री सत्यध्यानतीर्थविरचितं

# भेदप्रमाणान्येव खलु ब्रम्हसूत्राणि च

卐  卐

श्रीमदानन्दतीर्थभगवत्पादाः


S. M. S. O. SABHA,

Padma Sarovar-Chiratanur. (A.P.)

# S.M.S.O. SABHA PUBLICATIONS No. 1

॥ श्री ॥

श्रीवेदव्यास प्रणीतानि

## श्रीमद्ब्रम्हसूत्राणि

---

जगद्गुरु श्रीमदुत्तरादिमठाधीश अभिनवानन्दतीर्थ
प्रातःस्मरणीय श्री श्री सत्यध्यानतीर्थ विरचित

# भेदपराण्येव खलु ब्रम्हसूत्राणि च

---

जगद्गुरु श्रीमदुत्तरादिमठाधीश — अभिनवसत्यध्यानतीर्थ — पंडितकुलसार्वभौम —
श्री १००८ श्री सत्यप्रमोदतीर्थानां अनुग्रहसन्देशश्च

**श्री मध्वसिद्धान्तोन्नाहिनीसभाशतमानोत्सवस्मारकग्रंथः**

**Centenary Commemoration (1878–1978)**

संपादकाः
पं. माधवाचार्य कट्टी

संशोधकाः
— प्रथमद्वितीयाध्यायौ —

पं. केशवाचार्य कट्टी पं. केशवाचार्य जालीहाळ
पं. एन्. कृष्णमूर्ति

— तृतीयचतुर्थाध्यायौ —

पं. रामाचार्य गलगली पं. विजयीन्द्रशर्मा रा. नागरहळ्ळी

शतमानोत्सवस्मारक ग्रंथः

# Bhedaparanyev Khalu Brahmasutrani

# भेदपराण्येव खलु ब्रम्हसूत्राणि

विद्यावर्धनपुण्यकर्मनिरता सार्था-
भिधा मध्वसिद्धान्तोन्नाहिसभा शुभा
प्रियबुधा बाभात्यसौ भारते ।
तस्या वर्षशतांकतोत्सवसमारम्भेऽधुना-
स्मारक ग्रंथोऽयं मुदमातनोतु विदुषां-
सदध्यात्मतोषैः कृतः ॥

राष्ट्रपतिप्रशस्तिप्राप्त, महामहिमोपाध्याय,
पं. गलगली रामाचार्याः

पुनर्मुद्रणम् - श्रीशालिवाहन शके १८९९

मुद्रकाः
प्रथमद्वितीयाध्यायौ : १) होंबाळी मुद्रणालय, गदग
२) श्री भावबोध मुद्रणालय, बेंगळूर
तृतीयचतुर्थाध्यायौ : नूतन मुद्रणालय, बेळगांव

Copies can be had on donation of Rs. 15-00
and more from :
S.M.S.O Sabha
CHIRATANUR : 517 503

॥ श्री दिग्विजयरामो विजयतेतराम् ॥

॥ श्री मूलरामो विजयतेतराम् ॥

॥ श्री भारतीरमणाय नमः ॥

# ॥ भूमिका ॥

अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ॥

इति सूक्त्यनुसारेण ब्रह्मणो दुःखासंस्पृष्टत्वात जडस्य दुःखानुभवासम्भवात् जीवा एव तु दुःखिनः इत्यतिरोहितमेतत् । तादृशानां जीवानां दुःखप्रहाणाय वेदानां प्रवृत्तिः इति सर्वे वैदिकाः सम्प्रतिपद्यन्ते । जीवैरविदिताः वेदाः दुःखहानिं सम्पादयितुं न क्षमन्ते । अतः वेदानां यथार्थज्ञानं तज्ज्ञेभ्यः अवश्यं सम्पादनीयम् । वेदार्थज्ञानाय यथा वेदाङ्गानां अध्ययनमावश्यकं तथा ततोऽप्यधिकतया च मीमांसाशास्त्रस्य ज्ञानमवश्यं प्राप्तव्यं भवति ।

'अर्थे प्रमीयमाणेतु वेदेन करणेन हि ।
इति कर्तव्यताभागं मीमांसा पूरयिष्यति ॥'

इत्युक्तेः मीमांसाशास्त्रस्येतिकर्तव्यतारूपत्वं तैस्तैर्वादिभिः उररीकृतम् । एतादृशी मीमांसा कर्मदेवब्रह्मप्रतिपत्त्युपकरणत्वभेदेन त्रिविधा भवति इत्यत्रापि न केऽपि वादिनः विप्रतिपद्यन्ते । एवं ब्रह्मप्रतिपत्त्यर्थं ब्रह्ममीमांसा अवश्यं शरणीकरणीयेति समर्थनमाम्रेडनं स्यात् इति तन्न क्रियते । ब्रह्ममीमांसा तु नारायणावतारभूतवेदव्यासापरपर्यायश्रीमत्कृष्णद्वैपायनविरचितविष्णुसंख्याकसूत्रसन्दर्भात्मिका नेत्यपि प्रमेयं सर्वेषां पण्डितपामराणां विदितचरम् । अत्र च 'पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि 'इति प्रमाणं जागर्ति ।

अत्र इदं अवश्यं अनुसन्धेयम् । ब्रह्ममीमांसायाः वेदेतिकर्तव्यतात्वेऽपि न वेदापेक्षया अपरत्वं अवगन्तव्यम् । करणापेक्षया इतिकर्तव्यतायाः अपरत्वमिति न सर्वत्र नियमः । करणभूतशिष्यप्रयत्नापेक्षया इतिकर्तव्यतारूपगुरुप्रसादस्य बलवत्त्वं " लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि " इत्यत्र सूत्रकारैरेव प्रतिपादितम् । यागीयहिंसायां इतिकर्तव्यताया एव प्राबल्यं दृष्टम् ।

किं च परत्वं द्विविधं विशिष्टवस्तुप्रतिपादकत्वं अनुग्राहकत्वं चेति । तत्र ब्रह्ममीमांसायाः द्विविधपरत्वोपेततया वेदादीनां परत्वसम्पादकतया च सर्वापेक्षया परत्वं निश्चेतव्यम् ।

विस्तरस्तु अस्मत्कृतश्रीमन्न्यायसुधामण्डने द्रष्टव्यः ।

तत्तादृशब्रह्मसूत्रप्रतिपाद्यविषये बहवो वादिनो विवदन्ते यत् " अभेद एव ब्रह्मसूत्रार्थः भेदस्त्वाविद्यकः अविद्यानिरासे अभेद एव अवतिष्ठते । अद्वितीयं निर्गुणं निर्धर्मकं अत एव निर्विशेषं ब्रह्मैव तत्त्वम् । तच्च सर्वथा अवेद्यम् । तत् रूपाभावात् प्रत्यक्षविषयतां नाश्नुते । मनोऽतिदूरत्वात् अतर्क्यत्वाच्च ब्रह्म नानुमेयतां प्रतिपद्यते । अवाच्यत्वात् निर्धर्मकत्वात् निर्विशेषत्वाच्च शब्दातिदूरं ब्रह्म कथं शब्दराशिवेदवेद्यं स्यात् । अतः विगतसजातीयविजातीयस्वगतभेदं ब्रह्म अध्यक्षीकुर्वतां अविद्याविलासभेदप्रपञ्चः नैव प्रतिभासते । तादृशाविद्यानिबर्हणार्थं श्रुत्यादिकस्य समधिगम्यत्वेन तदुपकरणीभूता ब्रह्ममीमांसा प्रवर्तते । अतः ब्रह्ममीमांसाशास्त्रे श्रुत्यादिषु च इदं एकमेव प्रमेयमधिगम्यते । करणोपकरणयोरेकविषयत्वावश्यंभावात् ' इति केषांचनमतम् तत् न समञ्जसम् । यदि इदं मतमास्थीयते तदा शास्त्रं नास्ति, शास्ता नास्ति, शिष्योऽपि नास्ति, अज्ञानं नास्ति, अज्ञानहानिरप्यसम्भविनी नैव बन्धः, नापि

मोक्षः, न साधनं, नैव साधकः, नापि साध्यम्, इत्यास्थेयं स्यादिति चेन्न। इष्टापत्तिरेषा। एवमेव प्रत्यपीपदन् अस्मदाचार्याः दशश्लोक्याम्—

'न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि।
अनात्माश्रयाहंममाध्यासहानात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः।
स्वरूपावबोधो विकल्पासहिष्णुः
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥७॥ इत्यादि

इति चेत् मैवं वोचः। तथा च अद्वैतमतानुसारेण वेद्याभावात् विविदिषोरसत्त्वात् वेदनकरणानां वेदानामप्यवर्तमानत्वात् वेदेतिकर्तव्यतायाः मीमांसायाः अपि अविद्यमानत्वात् कथं मीमांसाशास्त्रं अध्येयपदवीमश्नुवीत इति सूक्ष्मेक्षिकया विचारयन्तोऽपि वयं न जानीमहे।

वस्तुतः प्रत्यक्षादिप्रमाणैः संसारस्याध्यवसितत्वात्, मूर्धाभिषिक्तसाक्षिप्रमाणेन जीवानां अज्ञत्वेन अल्पत्वेन दुःखित्वेनाधिगतत्वात् भेदप्रपञ्चस्य च प्रत्यहं प्रतिक्षणं तत्तत्प्रामणगोचरत्वात्, वेदेतिहासपुराणस्मृतिभिः सर्वत्र भेदस्यैव प्रमितत्वात्, "न चाभेदे कश्चिदागमः

सन्ति च भेदे सर्वागमाः" इति स घण्टाघोषं भगवत्पादैरुद्घोषितत्वात् भेदमतमेव सर्वथा सर्वदा सर्वैः समादरणीयम् । विशिष्य ब्रह्मसूत्राणि भेदमेव प्रतिपादयन्ति इति अस्मत्परमगुरुभिः प्रातःस्मरणीयैः विद्वत्कुलसार्वभौमैः श्रीमत्सत्यध्यानश्रीमच्चरणैः आसेतु आहिमाचलं नैकवारं दिग्विजयं कुर्वद्भिः तत्र तत्र देशेषु प्रसिद्धिमुपगतान् तांस्तान् वादिनः समाहूय तैः सह साङ्गोपाङ्गं विचारं वितत्य समर्थितम् ।

सूक्ष्मातिसूक्ष्मप्रणालिकतया शाङ्करभाष्यपर्यालोचनयाऽपि सर्वाणि सूत्राणि भेदमेव प्रतिपादयन्ति इति श्रीचरणैः प्रतिपदं समर्थितम् । एतदर्थमेव शङ्करवचनान्येवोपन्यस्य भेदपराण्येव खलु ब्रह्मसूत्राणि इति ग्रन्थः व्यरचि । सोऽयं ग्रन्थराजः जिज्ञासूनां मार्गदर्शनार्थं प्रचाकशीति । वस्तुतः पक्षपातविधुरैः यदि ब्रह्मसूत्राणि निपुणं समाधीयन्तेऽस्याभिप्रायस्य सर्वथा सामञ्जस्यं बाभाति इति संक्षेपतः प्रदर्शयितुमस्माभिरल्पीयान्यत्नो वितन्यते ।

तत्राल्पीयसि सन्दर्भे विस्तरेण वक्तुमशक्यत्वात् तनीयस्यैव शब्दकदम्बिन्या, सरलया भङ्ग्या, विवक्षित जिज्ञासूनां बुद्ध्यारोहाय सुस्पष्टीक्रियते । प्रथमसूत्रे ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ इत्यत्र जिज्ञासा शब्दितविचारः प्रतिज्ञातः । एष तु अद्वैतमते न सङ्घटीति । आत्माभिन्नस्य ब्रह्मणो ज्ञातत्वात्, स्फीतालोकमध्यवर्तिनि घटे इव न कोऽपि तत्र संशेते । सन्देहं विना विचारप्रवृत्तिरसम्भाविनी । अतः ब्रह्म आत्माभिन्नमङ्गीकृत्य तद्विषयाज्ञानसन्देहादिकं अवश्यं स्वीकरणीयम् । ब्रह्म च निर्धर्मकं नैव भवेत् । कुत इति चेत्, द्वितीयसूत्रे एव तस्य जगज्जन्मादिकारणत्वमुक्तम्, निर्विशेषं निष्क्रियं ब्रह्म कथंकारं कारणं स्यात् । यदि अद्वैतमतमेव सूत्रकाराणां विवक्षितं स्यात् जन्मादिपदस्थाने विवर्तपद-

प्रयोगः कर्तव्यः स्यात् । तृतीयसूत्रे ब्रह्मणः शास्त्रयोनित्वाङ्गीकारेण तस्यावेद्यत्वं निरस्तमास्ते । चतुर्थे 'समन्वयात्' इति सूत्रे सर्वनामलिङ्गसमन्वयं प्रतिज्ञातवता सूत्रकारेण ब्रह्मण अवाच्यत्वं निर्धर्मकत्वं दत्ततिलाञ्जलि इति स्पष्टमेव प्रेक्षावताम् । ईक्षत्यधिकरणे अशब्दत्वमपाकृतं वरीवर्ति । ईक्षतेर्नाशब्दमिति नञ्द्वयगर्भप्रयोगं कुर्वता सूत्रकृता मुख्यवृत्त्या शब्दविषयत्वं सुदृढीकृतम् । युक्तिग्रथनात्मकेन ब्रह्मसूत्रेण युक्तिः सर्वत्र प्रदर्श्यते । सा च युक्तिः लिङ्गात्मिका धर्मस्वरूपा स्यादेव । निर्धर्मके ब्रह्मणि नास्त्येव धर्मः इति सर्वत्र हेत्वसिद्ध्या ब्रह्मसूत्रेण सिसाधयिषितं साध्यं नितान्तं दुःसाध्यं स्यात् । 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशात्' इति सूत्राभ्यां भेद एव प्रतिष्ठापितो बोभवीति । 'अस्मिन्नस्य च तद्योगं शास्ति' इति सूत्रेण ब्रह्मणि अस्य जीवस्य योगं प्रतिपादयता ब्रह्मभवनमपाक्रियते । 'अन्तस्तद्धर्मोपदेशात्' इति सूत्रं निर्धर्मकं निर्विशेषं ब्रह्म ब्रह्ममीमांसाप्रतिपाद्यं इति तु अत्यन्तमसङ्गतमिति प्रतिपादयति । 'विवक्षितगुणोपपत्तेश्च' 'सुखविशिष्टाभिधानादेव च' 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'रूपोपन्यासाच्च' 'शब्दादेव प्रमितः' 'सर्वधर्मोपपत्तेश्च' इत्यत्र सुस्पष्टमेव धर्माद्युपन्यासात् । ननु मिथ्याधर्मोपदेशः तत्र क्रियते इति चेत् ब्रह्मसूत्रकृतां सर्वज्ञशिरोमणीनां नारायणावतारभूतानां कृष्णद्वैपायनानां प्रतारकत्वं प्रसज्येत । एवमेव 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्चान्यः' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'सत्त्वाच्चावरस्य' इत्यादीनि सूत्राणि निस्संशयं निष्प्रचं च जीवब्रह्मणोः भेदमेव बोधयन्ति । अभेदस्य जगन्मिथ्यात्वस्य मायावाद्यङ्गीकृताविद्यायाः निर्विशेषस्य ब्रह्मणस्तु प्रतिपादनं ब्रह्मसूत्रेषु न कुत्रापि दृश्यते ।

अन्तिमाध्यायस्यान्तिमे पादे नितान्तमवश्यं प्रतिपाद्यां निर्गुणभावरूपां मुक्तिं अप्रतिपाद्यैव सगुणब्रह्मप्राप्तिरूपां मुक्तिं स्पष्टया वाचा युक्त्या च सूत्रकृद्बोधयामास ।

तद्यथा—' जगद्व्यापारवर्जम् ' ' भोगमात्रसाम्यलिङ्गाच्च ' इत्यादीनि सगुणब्रह्मप्राप्तिरूपमोक्षपक्षे एव सामञ्जस्येन उपपद्यन्ते । निर्गुणब्रह्मभावपक्षे सर्वथानुपपन्नानि बोभुवति । ' अनावृत्तिः शब्दादनावृत्तिः शब्दात् ' इत्यन्तं सूत्रं विरचितवद्भिः सूत्रकृद्भिः निर्गुणभावरूपमुक्तेः शशविषाणायितत्वमेव समसूचि इत्यलं विस्तरेण । ननु अद्वैतभाष्यकारैः सकलान्यपि सूत्राणि अद्वैतपरतया भाषितानि इति कथं न जानन्ति भवन्तः इति चेत् , मैवं वादीः ; अद्वैतभाष्यकृद्भिरपि ' शास्त्रदृष्टया तूपदेशो वामदेववत् ' ' अविभागेन दृष्टत्वात् ' ' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' इति सूत्रत्रयं विहाय सर्वाणि ब्रह्मसूत्राणि भेदपरत्वेन व्याख्यातानि इति तद्भाष्यटीकाटिप्पणीकृतां वचनेभ्य एव स्पष्टमवसीयते ।

तथाचोक्तम् – विद्वत्सार्वभौमैः श्रीमत्सत्यध्यानश्रीमच्चरणैः 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थे, शङ्कराचार्यप्रभृतिभिरद्वैतिभिरेव तन्मतरीत्या पञ्चपञ्चाशदधिकपञ्चशतसूत्रेषु ' शास्त्रदृष्टया तूपदेशो वामदेववत् ' ' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' ' अविभागेन दृष्टत्वात् ' इति सूत्रत्रयमभेदप्रतिपादकं इत्युक्तत्वेन त्रिसूत्रीं विहाय द्विपञ्चाशदधिकपञ्चशतसूत्राणि भेदप्रतिपादकानि इत्यङ्गीकृतत्वेन विगतबहुलभारा वयमिदानीं, त्रिसूत्र्याः अपि अभेदप्रतिपादकत्वं न सम्भवति प्रत्युत भेदपरत्वमेव साधु सङ्घटीति इति प्रथममुपपाद्य तदनु ५५२ सूत्राणां भेदपरत्वमेवाद्वैतिभिः कथमङ्गीकृतं इति एनमपि प्रकारं निरूपयिष्यामः ।

इदानीं तावत् तद्गतवाक्यानि उदाह्रियन्ते । आनन्दगिरिटीकायां 'जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारः मुखतो वदति, किन्तु सर्वत्र भेदमेव, अतः न ऐक्यमिष्टम् तत्राह प्रतिपादयन्तु इति । रत्नप्रभायामपि 'सूत्रेषु अभेदः नोक्तः इति भ्रान्तिं निवारयति 'प्रतिपादयन्तु' इति । शाङ्करभाष्ये च 'प्रतिपादयन्तु शास्त्रार्थं आत्मैकत्वमेव दर्शयति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यादिना इति'। आनन्दगिरिटीकायां 'आदिपदं 'आत्मेति तूपगच्छन्ति' इत्यस्य संग्रहार्थम्" इति । रत्नप्रभायां 'आत्मेति तूपगच्छन्ति' इत्यादिसूत्राणि आदिपदार्थः' इति आनन्दगिरिरत्नप्रभाव्याख्यासहितशाङ्करभाष्येण पञ्चपञ्चाशदधिकपञ्चशतसूत्रेषु द्वित्रसूत्राणामेव अभेदपरत्वं इतरेषां च भेदपरत्वं उपवर्णितम् ।

अस्यापि सूत्रत्रयस्य भेदबोधकत्वमेव संभवति न कथमपि अभेदबोधकत्वं इति निपुणतरमुपपादितं महानुभावैर्गुरुचरणैः । विशेषजिज्ञासुभिः तत्सर्वं अवश्यं सावधानैः समध्येतव्यमिति संसूचयामः । तेषामाशयस्तु अस्माभिः संक्षिप्तुवाक्यैर्जिज्ञासूनां अवगाहनार्थं संगृह्यते ।

अभेददृष्टिर्न शास्त्रदृष्टिः । अन्तर्यामिदृष्टिरेव शास्त्रदृष्टिः । वामदेवेनर्षिणा भगवतोऽन्तर्यामितयोपासनस्य वेदसूक्तत्वात् । ब्रह्मणो जीवान्तर्यामित्वेऽङ्गीकृते जीवब्रह्मणोर्भेदस्य न किमपि छिन्नं भवति, प्रत्युत अन्तर्यामित्वदृष्टिर्जीवब्रह्मभेदोपोद्बलिका भवति ।

'आत्मेति तु' इत्यत्रापि 'आत्मा' इत्यस्य स्वामी इत्यर्थः । उपगच्छन्ति ग्राहयन्ति इति पदाभ्यां भेद एव समर्थ्यते, नैवाभेदः । ताभ्यां पदाभ्यां ज्ञातृज्ञेयभावबोधनेन, ज्ञातृज्ञेयज्ञापयितृभावबोधनेन च भेद एव प्रतिपाद्यते इत्यवश्यं ज्ञेयम् ।

'अविभागेन दृष्टत्वात्' इत्यविभागशब्दः न अभेदबोधकः अपि तु अपार्थक्यबोधकः अपार्थक्यवतोरपि पदार्थयोः भेदः अवश्यमधिगम्यते। यथा अस्मन्मते जीवजीवच्छरीरयोः, नैयायिकमते गुणगुणिनोः, इत्यलं पल्लवितेन।

पण्डितमण्डलचक्रवर्तिभिः जगद्गुरुभिः प्रातःस्मरणीयैः श्रीमत्सत्यध्यानश्रीचरणैः विरचितः 'भेदपराण्येव खलु ब्रह्मसूत्राणि' इति ग्रन्थः श्रीमध्वसिद्धान्तोन्नाहिनीसभया स्वात्मनः शताब्दिमहोत्सवे मुद्राप्य प्राकाश्यं नीयते, इति महान् प्रमोदोऽस्माकम्।

अनेन शुभकर्मणा यशोधवलितदिगन्तास्मद्गुरुपरम्परासमाराध्यः भारतीरमणमुख्यप्राणान्तर्गतजानकीजानिदिग्विजयरामः सभापतीन् सदस्यांश्च ज्ञानभक्तिवैराग्यादीन् शुभगुणान् प्रदाय दीर्घेण सीतासमेतरामसमीरसेवारतेनायुषा समनुगृह्णातु इति प्रार्थयमानाः विरमामो विस्तरात् इति शम्॥

१८९९ पिङ्गल सं.
पुष्य शु. १२,
होसपेट.

श्रीमदुत्तरादिमठाधीशाः
श्री १००८ श्रीमत्सत्यप्रमोदतीर्थश्रीचरणाः



संख्यावज्जनसौख्यजीवनविधौ विद्यासमुज्जीवने ।

संख्यातीतधनौर्णवस्त्र–रजत–स्वर्णान्नविश्राणनात् ।।

सत्यध्यानयतीश्वरोऽभिनव इत्योजस्विनाम्ना श्रुतः ।

सत्यामोदगुरुर्बुधामरतरु कुर्यात्सदा मङ्गलम् ।।

# INTRODUCTION

It is the common desire of all living beings to attain pure bliss untarnished by any trace of misery. It is impossible to realise this unmixed bliss anywhere in this worldly life, even in the Heaven. This most coveted desire is fulfilled only when one gets rid of this bondage and attains salvation. The omnipotent Providence holds the key to bondage and liberation. So His supreme grace is the only means to attain salvation. A firm conviction of the countless unfathomable auspicious qualities of the Lord will only make for His supreme grace. This conviction only comes from a scientific study and understanding of the heart of the eternal Vedas. The style of the Vedas is usually obscure. It is made still more so by many mis-interpretations. So God Narayana kindly took the form of Shri Badarayana and composed Brahma sutras to dispel all doubts by cogent arguments and convey the real hidden purport of the Vedas.

Later on these pithy sutras of Shri Badarayana were manhandled and misinterpreted by many commentators. So Vayu the Supreme son came down to the

earth at the command of the Lord and composed Bhashya and other works. Many of these works known as Sarvamoolas were commented and clarified in an unsurpassed manner by Shri Tikacharya.

It is thus obvious that the correct knowledge of the Sutras is essential for the attainment of the most coveted goal of salvation. Some commentators have tried to give a monistic interpretation of the sutras. This interpretation is quite remote from and adverse to the purport of the sutras. A conviction in this respect can be easily got if it is shown that there are many self contradictions and that even the monistic interpretors have given clearly dualistic interpretation in most places. This unique task has been accomplished in a masterly manner in the volume "Bheda Paranyeva Brahmasutrani" by Shri Satyadhyan Tirtha, the illustrious pontiff of Uttaradi Mutt.

This valuable and immortal work was first published in parts in a Sanskrit Magazine "Madhuravani". The issues were not regularly published and the copies reached only a few. The issues in which the work was published were not preserved carefully. So the work had gone into oblivion long ago. This work is indispensable for all Madhwas who want to gain a firm conviction of Hari Sarvotthamatwa. The language of this book is simple and the arguments are most convincing and irrefutable.

The S. M. S. O. Sabha, Chiratanur, decided to republish this rare work as a commemoration publication

at the time of its centenary celebrations. The idea in undertaking this publication is only to propagate Madhwa philosophy without any intention to make profit. With great effort and enquiring every where, only two copies of the first two Adhyayas were available. The Sabha requested Shri 1008 Shri Satya Pramoda Tirtha; the present pontiff of Uttaradi Mutt to give us a complete copy. His Holiness was kind enough to give us the only complete copy available in the Mutt Library. His Holiness has also been kind enough to give us a suitable foreward to the work in Sanskrit written in a highly scholarly manner. He has blessed the members of the Sabha in his foreward. He has helped the Sabha in a number of ways. The Sabha is highly obliged to His Holiness for all the help he has given. The work is dedicated to him with all humility and devotion.

Just as the Bhashya is described as the sacred idol of Shri Madhwacharya in 'Madhwa Vijaya', this work is undoubtedly the sacred idol of Shri Satyadhan Thirtha.

It is hoped that those who are competent to preach this book will do so. Those who can understand it should read or listen to its preaching. Others should at least worship it as the holy image of Shri Satyadhyana Tirtha. There is not the least doubt that all these devotees will gain immense merit and will be amply rewarded in this life and beyond. If the work is put to proper use by all the Madhwas, the Sabha will consider this effort and the large amount of money spent over the publication of the work, fruitful.

Due to acute printing difficulties the work had to be printed in two or three places. Inspite of all efforts, some printing mistakes have remained (and the indulgence of the readers is requested).

The Sabha thanks all those who have rendered help directly or indirectly.

May the supreme Lord Shrinivasa with his eternal beloved Smt. Padmavati bestow His kind grace to all.


—**Madhavacharya S. Katti**
Vice-President
S.M.S.O. Sabha,
Chiratanur


Magh Shuddha Navami
16—2—1978

॥ श्रीरामचन्द्राय नमः ॥

# ॥ भेदपराण्येव खलु ब्रह्मसूत्राणि ॥

जयतात् जानकीजानिः कल्याणगुणवारिधिः ।
दुर्वादिमतविच्छित्तौ प्रेरयन्मन्मनः सदा ॥ १ ॥
मायावादतमोव्याप्तिः अञ्जसा येन वारिता ।
प्रकाशितं च तत्त्वं तं भजे मध्वदिवाकरम् ॥ २ ॥
यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
लभन्ते मानुषा नूनं तान् जयादिगुरून् भजे ॥ ३ ॥

वेदार्थनिर्णायकानि ब्रह्मसूत्राण्यपि जीवब्रह्मणोर्भेदप्रतिपादकान्येव नत्वैक्यप्रतिपादकानि । शङ्कराचार्यप्रभृतिभिरद्वैतिभिरेव तन्मतरीत्या पञ्चपञ्चाशदधिकपञ्चशतसूत्रेषु 'शास्त्रदृष्टया तूपदेशो वामदेववत्' ( ब्र. सू. १ । १ । ३० ) 'आत्मेति तूपगच्छन्ति ग्राहयंति च' (ब्र.सू. ४ । १ । ३) 'अविभागेन दृष्टत्वात्' ( ब्र.सू. ४ । ४ । ४ ) इति, सूत्रत्रयमिदमभेदप्रतिपादकमित्युक्तत्वेन त्रिसूत्रीं विहाय द्विपंचाशदधिकपंचशत ( ५५२ ) सूत्राणि भेदप्रतिपादकानीत्यङ्गीकृतत्वेन विगतबहुलभारा वयमिदानीं त्रिसूत्र्या अपि अभेदप्रतिपादकत्वं न संभवति प्रत्युत भेदपरत्वमेव साधु सञ्जाघटीतीति प्रथममुपपाद्य तदनु ५५२ सूत्राणां भेदपरत्वमद्वैतिभिः कथमङ्गीकृतमित्येतमपि प्रकारं निरूपयिष्यामः । तावदिदानीं तद्वाक्यान्युदाह्रियन्ते । आनन्दगिरिटीकायां 'जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति, किंतु सर्वत्र भेदमेवातो नैक्यमिष्टं तत्राह । 'प्रतिपाद्यं'त्विति ।

शां. भाष्ये 'प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति शास्त्रदृष्ट्या तूपदेशो वामदेववत् इत्यादिना' इति (शां. भा. १.३.१९)

रत्नप्रभायां 'सूत्रेषु अभेदो नोक्त इति भ्रांतिं निवारयति प्रतिपाद्यं त्विति ।

(आ. गि.) 'आदिपदं आत्मेति तूपगच्छंतीत्यादि संग्रहार्थं'

(र. प्र.) 'आत्मेति तूपगच्छंतीत्यादि सूत्राण्यादिपदार्थः'

इत्यानन्दगिरिरत्नप्रभाव्याख्यासहितशाङ्करभाष्येण पंचपंचाशदधिकपंचशतसूत्रेषु द्वित्रसूत्राणामेवाभेदपरत्वमितरेषां च भेदपरत्व मुपवर्णितम् ।

प्रकृते शास्त्रदृष्ट्या तूपदेशो वामदेववत् इतिसूत्रस्य भेदपरत्वं अभेदपरत्वाभावं च दर्शयिष्यामः ।

ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ

इति सूत्रं न जीवब्रह्मणोरैक्यबोधकं अस्मिन् सूत्रे जीवब्रह्मणोरैक्यबोधकपदाभावात् । तथाहि सूत्रस्य प्रतीयमानोऽर्थः यथा वामदेवस्य उपदेशः शास्त्रदृष्ट्या, तथा प्रकृतोप्युपदेशः शास्त्रदृष्ट्या इति । न ह्यनेन जीवब्रह्मणोरभेदः सिध्यति । न च शास्त्रदृष्ट्या तूपदेशो वामदेववत् इति सूत्रस्य, यथा वामदेवः अहं मनुरभवं सूर्यश्चाहं कक्षीवानिति आत्मनः सर्वाभेददृष्ट्या ब्रह्माभेददृष्ट्या वा मनुत्वसूर्यत्वादिकं आत्मन उक्तवान् तथा अयमिंद्रोऽपि अहमेव परं ब्रह्म इति शास्त्रानुसारिज्ञानेन मामेव विजानीहि इति प्राणशब्दबोध्यं परं ब्रह्म मामेव मदभिन्नत्वेन जानीहि इत्युपदेशं कृतवान् इत्यर्थ इति शङ्कराचार्यैरुक्तत्वेन, जीवब्रह्मणोरैक्यं सिध्यतीति वाच्यम् । एतावदर्थबोधक पदाभावात् । अस्य अर्थस्य प्रमाणबाधितत्वाच्च । अहमेव परं ब्रह्मेति वेदे सूत्रे गीतायां च कुत्राप्यनुक्तत्वेन अहमेव परं ब्रह्म इति दृष्टेः

शास्त्रानुसारित्वाभावेन शास्त्रदृष्ट्या इति पदस्य तथा अर्थकरणानुपपत्तेः शास्त्रदृष्ट्येति पदेन तादृशार्थस्य प्रतीयमानत्वाभावाच्च। य आत्मनि तिष्ठन् .... य आत्मानमंतरो यमयति ' यः सर्वभूतेषु तिष्ठन् .... यः सर्वाणि भूतानि अंतरो यमयति, इत्याद्यनेकवाक्यैः परमात्मनः इंद्रादिसर्वनियामकत्वस्योक्तत्वेन शास्त्रदृष्ट्येत्यस्य शास्त्रानुसार्यंतर्यामि-दृष्ट्या अथवा शास्त्रजन्यांतर्यामिदृष्ट्येत्यर्थसम्भवेन यथा वामदेवः अंतर्यामिपरमात्मनः दृष्ट्या अहं मनुरभवं सूर्यश्चेति उक्तवान् तथा इंद्रः मां मदंतर्यामिणं परमात्मानं विजानीहि इत्यभिप्रायेण मामेव विजानीहि इत्युक्तवान् इत्यर्थस्य युक्तत्वात्। किं च अहं मनुरभवं सूर्यश्चेति ( ऋ. १५-१ ) मन्त्रद्रष्टुः वामदेवस्य आत्मनः ( स्वस्य ) सार्वात्म्यज्ञानं वा परमात्माभेदज्ञानं वा नासीदेव। तथाहि तेनैव-

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मापुर आयसीररक्षन्नधश्येनो जवसानिरदीयम् ॥ १ ॥

( ऋ. ३. ६. १६ ) (पदविभागः ) गर्भे नु सन् अनु एषां अवेदं अहं देवानां जनिमानि विश्वा शतं मा पुरः आयसीः अरक्षत् अधश्येनः जवसा निः अदीयम्।

गर्भे नु गर्भ एव सन् विद्यमानोऽहं वामदेवः एषां इन्द्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अन्ववेदं आनु-पूर्व्येणाज्ञासिषं परमात्मनः संकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः

नघासमामपजोषं जभाराभीमास त्वक्षसा वीर्येण।
ईर्मापुरंधिरजहादरातीरुतवाताँऽअतरच्छूशुवानः ॥ २ ॥

( पदविभागः ) न घ सः मां अप जोषं जभार अभि ईं आस त्वक्षसा वीर्येण ईर्मा पुरंधिः अजहात् अरातीः उत वातान् अतरत् शूशुवानः।

सः गर्भः मां वामदेवं जोषं पर्याप्तं नघ नैवापजभार अपजहार गर्भेऽपि वसतो मे मोहो माभूदित्यर्थः । अहं तु ई इदं गर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येन अभ्यास अभ्यभवं ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरां धारकः परमात्मा अरातीः गर्भसंस्थितान् अजहात् अत्यजत् जघान उतापि च शूशुवानः वर्धमानः परिपूर्णः परमात्मा वातान् गर्भक्लेशकरान् वायून् अतारीत् ॥ २ ॥

इत्युत्तरमंत्राभ्यां सर्वे देवाः परमात्मनः जाताः, सर्वस्य प्रेरकः परमात्मा अरातीः गर्भसंस्थितान् शत्रूनजहात् । परिपूर्णः परमात्मा वातान् गर्भक्लेशकरान् वायुनतरत् इति परमात्मना स्वस्य देवानां च भेदः ज्ञातः, परमात्मनः अंतर्यामित्वं च ज्ञातं वामदेवेन इति स्पष्ट-मुक्तत्वेन, विद्यारण्यभाष्येऽपि एवमेव व्याख्यातत्वेन च वामदेवस्य अहमेव परं ब्रह्म इति ज्ञानं नासीत् इति सिद्ध्या वामदेववदिति सूत्र-गतपदस्य यथा वामदेवः अभेददृष्ट्या अहं मनुः अहं सूर्यः अहं कक्षीवान् इति उक्तवान् तथा इन्द्रोऽपीत्युक्तिरसङ्गतैव ।

अद्वैतमतरीत्यापि विशिष्टयोरैक्यायोगात् विशिष्टस्य वामदेवस्य विशिष्टैः मन्वादिभिः ऐक्यासम्भवेन अहं मनुः अहं सूर्य इत्यादिज्ञानस्य भ्रमत्वापत्तेः । नहि ज्ञानिनः भ्रमः सम्भवार्हः ।

न च अहंमन्वादिपदानां चिन्मात्रे लक्षणामङ्गीकृत्य चित् चित् अभवं इति वा चित् इति अखण्डबोधो वा अभिप्रेतस्तस्य वाक्यस्येति वाच्यम् । तत्त्वमस्यादिवाक्यविचारोक्तरीत्या लक्षणाद्यसंभवाद्यनेक दोषदुष्टत्वेन तादृशबोधस्य स्वीकर्तुमशक्यत्वात् । मुख्यार्थस्य बाधे अन्यार्थस्य इतरप्रमाणानुकूलस्य इतरप्रमाणाबाधितस्यैव च स्वीकार्यत्वेन अभेदप्रतिपादकप्रमाणानामभावेन भेदबोधकानां प्रमाणानां सत्वेन तद नुकूलतया तदविरुद्धतया च ' अहं ' मदन्तर्यामी मन्वन्तर्यामी इत्याद्यनेकार्थानां सम्भवेन त्वदभिमतार्थस्य स्वीकारायोगाच्च ।

तत्कतमदत्र लिङ्गं लिङ्गाभासं च कतमदित्यत्र विचार्यते इत्यादि भामतीवाक्येन च सहोवाच प्राणोऽस्मि प्रज्ञात्मा (कौ. ३-१-२-३) इत्यादि वाक्यानि विचार्यत्वेनात्र उपक्षिप्य वाग्विन्द्रजीवब्रह्मणां लिङ्गानां विद्यमानत्वेनायमेवात्र प्रतिपाद्यत इति निर्णयो नैव शक्यत इत्यादि पूर्वपक्षं च प्रापय्य ब्रह्मलिङ्गाद्ब्रह्मैवात्र प्रतिपाद्यते इतरत्=ब्रह्मभिन्नं प्राणवाग्विन्द्रजीवादिकं न प्रतिपाद्यत इति सिद्धांतितत्वेन स्पष्टं प्राण वाग्विन्द्रजीवानां परमात्मना भेदस्य कथितत्वात्। यदि प्राणेंद्रजीवानां परब्रह्मणा ऐक्यं अभिप्रेतं स्यात् तदा तथा पूर्वपक्षकरणमयुक्तं स्यात्। तथा अज्ञानवशात् पूर्वपक्षे कृतेऽपि इंद्रादिजीवानां परमात्मना ऐक्यमेवेति समाधानं कर्तव्यं स्यात्। तथा अकृत्वा ब्रह्मैव प्राणशब्दवाच्यं नान्ये जीवादयः इत्युक्तिरसङ्गता स्यात्। तस्मान्नेदं सूत्रं जीवब्रह्मणोरैक्यबोधकम्। नाप्येतदधिकरणांतर्गतं 'न वक्तुरात्मोपदेशादिति-चेदध्यात्मसंबंधभूमा ह्यस्मिन्' (१ १ २९) इति सूत्रं जीवब्रह्मणोरैक्यबोधकम्। तथाहि तत्सूत्रे प्राणोऽस्मि प्रज्ञात्मा इति इन्द्रेण आत्मनः (स्वस्य) प्राणत्वेनोपदेशात् ब्रह्मण्यसम्भाव्यमानानां त्वाष्ट्रवधादि-धर्माणां इन्द्रसंबंधिनां प्राणे कथितत्वेन इन्द्र एव प्राणशब्दवाच्यः न ब्रह्म इति पूर्वपक्षं प्रापय्य यावद्ध्यस्मिन् शरीरे प्राणो वसति ताव-दायुरिति तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेव एता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञानन्दोऽजरोऽमृत इति स य आत्मेति विधानात्। इति च अध्यात्म (परमात्म) सम्बन्धबाहुल्यस्यैतदध्याये दृश्यमानत्वेन ब्रह्मोपदेश एवायं न देवतात्मोपदेशः (इन्द्रोपदेशः) इति सिद्ध्यति इति इदमपि सूत्रं भेदबोधकमेव।

'जीवमुख्यप्राणलिङ्गादिति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्, इत्युत्तरसूत्रेऽपि प्राणोऽस्मि प्रज्ञात्मा इत्यादिवाक्येषु जीव

लिङ्गानां प्राणलिङ्गानां ब्रह्मलिङ्गानां च श्रवणात् जीवः प्राणो ब्रह्मच प्रतिपाद्यतां न ब्रह्मैवेति पूर्वपक्षयित्वा प्राणशब्दस्य प्राणजीवब्रह्मपरत्वे अङ्गीकृते उपासात्रैविध्यप्राप्तेः ब्रह्मलिङ्गानां सत्वात् तेषामन्यपरतया नेतुमशक्यत्वात् 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (का.२.५.५.) इत्यादिश्रुत्या प्राणादिव्यापारस्य परमात्मायत्तत्वावगमात् प्राणाद्यन्यलिङ्गानां परमात्मनि नेतुं शक्यत्वेन प्राणशब्देन ब्रह्मैव प्रतिपाद्यं, न जीवप्राणावपि इति शङ्करेण सिद्धांतितत्वेन उत्तरसूत्रेऽपि जीवपरमात्मनोर्भेदस्यैव बोधितत्वेन मध्यस्थं शास्त्रदृष्ट्येति सूत्रमपि अद्वैतव्याख्यानरीत्याऽपि न जीवब्रह्मणोरैक्यबोधकमिति। एवं च एतदधिकरणांतर्गताभ्यां 'प्राणस्तथेति' न वक्तुरिति चेति पूर्वसूत्राभ्यां इंद्रब्रह्मणोर्भेदस्यैव कथने कथं 'प्राणोस्मि प्रज्ञात्मा' इति इन्द्रेण प्राणशब्दबोध्यपरमात्माभेदोपदेशः कृत इति शङ्कायां तन्निवारणार्थं प्रवृत्तं 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति सूत्रं न प्राणब्रह्मणोरैक्यं वक्तुं प्रवृत्तमिति कथयितुं शक्यम्। यत एतदधिकरणीयप्रधानेन प्राणस्तथेतिसूत्रेण, तथा पूर्वसूत्रोक्तं भेदं व्यवस्थापयद्भ्यां न वक्तुरिति, जीवमुख्यप्राणेति, पूर्वसूत्राभ्यां अनेकश्रुतिसूत्रगीतारूपप्रमाणैश्च विरुद्धम्। तस्मात् शास्त्रदृष्ट्या इत्यस्य य आत्मनि तिष्ठन् य आत्मानमंतरो यमयति यः सर्वेषु भूतेषु तिष्ठन्.... यः सर्वाणि भूतानि अंतरो यमयति इत्यादि शास्त्रजन्यया नियम्य मृत्तिकावाचिमृच्छब्देन तन्नियामकदेवतोक्तिवत् स्वांतर्यामी (स्वनियामकः) परमात्मा इति दृष्ट्या प्राणोऽस्मि प्रज्ञात्मा इत्युपदेशः यथा परमात्मना जीवात्मनः स्वस्य च भेदज्ञानवतो वामदेवस्य यथा अंतर्यामिदृष्ट्या अहं मनुरभवं सूर्यश्चेति उपदेशः तद्वत् इतिसूत्रार्थस्यैव इतरप्रमाणानुकूलत्वेन इतरप्रमाणाविरुद्धत्वेन च युक्तत्वात् नेदं सूत्रं जीवब्रह्मणोरभेदबोधकं किंतु भेदबोधकमेवेति।

अभेदबोधकत्वेनाद्वैत्यभिमतद्वित्रब्रह्मसूत्रान्तर्गतं 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इतिसूत्रमपि नाभेदबोधकम्। तत्रैक स्यापि अभेदबोधकस्य पदस्याभावात्। भेदबोधकपदानां सत्वाच्च। तथाहि शब्दस्वारस्येन प्रतीयमानोऽर्थस्तु आत्मा इति उपगच्छन्ति, जानन्ति, ग्राहयन्ति इति। अत्र हि नाभेदबोधकं किंचिदपि पदमस्ति। प्रत्युत ज्ञातृज्ञेयभावबोधनेन ज्ञातृज्ञेयज्ञापयितृभावबोधनेन च भेदबोधकमेव।

ननु 'यः शास्त्रोक्तविशेषणः परमात्मा सः किमहमिति प्रतिपत्तव्यः किं वा मदन्य इति संशये परमात्मा अहमिति प्रतिपत्तव्यः। न ह्यपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुम् विपरीत गुणो वाऽपहतपाप्मत्वादिगुणत्वेन। अपहतपाप्मत्वादिगुणश्च परमेश्वरः तद्विपरीतगुणस्तु शारीरः (जीवः)। ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः। ततः शास्त्रानर्थक्यम्। संसारिणोऽपि ईश्वरात्मत्वे अधिकार्यभावाच्छास्त्रानर्थक्यमेव। प्रत्यक्षविरोधश्च।

अन्यत्वेऽपि तादात्म्यदर्शनं प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत् काममेवं भवतु। न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नःप्रापयितव्यम्। एवं प्राप्ते ब्रूमः– आत्मेत्येवेश्वरः प्रतिपत्तव्यः। तथाहि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवेनमुपगच्छन्ति। त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि देवते इति। तथाऽन्येऽपि अहं ब्रह्मास्मि इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति च आत्मत्वेनैवेश्वरं वेदांतवाक्यानि 'एष त आत्मा सर्वान्तरः (बृ. ३. ४. १.) एष त आत्माऽन्तर्याम्यमृतः (बृ. ३-७-३) तत्सत्यं स आत्मा तत्त्वमसि (छां. ६-८-७) इत्येवमादीनि' (ब्र. सू.-शां. भां. ४·१·३) इति शाङ्करभाष्यदिशा आत्मेति तूपगच्छंति

ग्राहयन्ति च इति सूत्रं जीवपरमात्मनोरैक्यं श्रुत्यवष्टंभेन वक्तीतिचेत् न। शाङ्करीयसूत्रार्थकथनस्य अयुक्तत्वात्। तथाहि-

जाबाला आत्मत्वेन एतं (परमेश्वरं) उपगच्छंति इति 'आत्मेति तूपगच्छंति' इति सूत्रभागस्यार्थकरणं तावदयुक्तम्। सूत्रे परमेश्वरबोधकपदाभावात्। नच परमेश्वरं इति पदमध्याहृत्य परमेश्वरं आत्मा इति उपगच्छन्ति इत्यर्थः क्रियते इति वाच्यम्। परमेश्वरनियम्यं, परमेश्वरदासं, परमेश्वरजन्यं, परमेश्वररक्ष्यम् अस्वतंत्रम् इति वा पदस्य अध्याहारेण परमेश्वरनियम्यं परमेश्वरदासं वा आत्मा इति (आत्मत्वेन) उपगच्छन्ति इत्यादिकं प्रमाणपरिष्कृतमर्थं परित्यज्य परमेश्वरं इति पदमेवाध्याहृत्य परमेश्वरम् आत्मेति उपगच्छंति इत्यप्रामाणिकार्थकरणे नियामकाभावात्। प्रत्युत परमेश्वरदासं इत्यादिपदाध्याहारेण परमेश्वरदासं आत्मेति उपगच्छन्ति इत्यादिभेदानुगुणार्थकरण एव ५५४ सूत्रेषु द्वित्रसूत्राणि विहाय परमेश्वरनियम्यत्वादिना भेदप्रतिपादकतया अद्वैत्यभिमतानां ५५१ सूत्राणामानुगुण्यरूपस्य भेदप्रतिपादकश्रुत्यानुगुण्यरूपस्य च नियामकस्य सत्वेन परमेश्वरदासं आत्मेति उपगच्छंति इत्यर्थकरणस्यैव युक्तत्वात्। परमेश्वरदासमिति पदाध्याहारः कर्तव्यः उत परमेश्वरमिति सन्देहेऽपि अस्य सूत्रस्य अभेदे प्रमाणत्वासंभवात्। परमेश्वरमिति पदमध्याहृत्य 'परमेश्वरं आत्मा' इति (आत्मत्वेन) उपगच्छन्ति इत्यर्थकरणेऽपि न जीवब्रह्मणोरैक्यसिद्धिः। आत्मशब्दस्य आप्त्यादिगुणविशिष्टपरमात्मबोधकत्वेन जीवाबोधकत्वात्। परमेश्वरं आत्मा = यच्चाप्नोतीत्यादिप्रमाणसिद्धाप्त्यादिगुणवान् इति (आप्त्यादिगुणवत्वेन) जानन्तीत्येवार्थो भवति न तु परमेश्वरम् आत्मत्वेन (जीवत्वेन) जानन्तीत्यर्थो भवतीति भक्षितेऽपि लशुने न शांतो व्याधिरिति न्यायेन परमेश्वरम् इति पदमध्याहर्तुरद्वैतिनो

जीवपरमात्मनोरभेदासिद्धेः । मुख्यया वृत्त्या आत्मशब्दस्य आप्त्यादि बहुगुणविशिष्टपरमात्मबोधकत्वमेव न तु जीवबोधकत्वमित्येतत् शङ्कराचार्याद्यद्वैतिभिरेव ' द्युभ्वाद्यायतनं स्वशब्दात् ' ( ब्र. १.३.१. ) इति सूत्रभाष्यव्याख्यावसरे उक्तम् । तथाहि तद्वाक्यानि– ( अर्थतः शाङ्करभाष्यम् ) द्युभ्वाद्यायतनं परं ब्रह्म भवितुमर्हति, न जीवादयः आत्मशब्दात् । आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे ( जीवांतरपरिग्रहे ) इति ।

भामत्यर्थानुवादः– द्युभ्वाद्यायतनं परं ब्रह्मैव, न प्रधानाव्याकृतवायुशारीर ( जीव ) हिरण्यगर्भाः स्वशब्दात् ( आत्मशब्दात् ) इति । रत्नप्रभा– नन्वात्मशब्दो जीवे संभवतीत्यत आह आत्मशब्दश्चेति । आनंदगिरि- जीवादावपि तदुपपत्तिमाशङ्क्योक्तम् आत्मशब्दश्चेति । पक्षान्तरे मुख्यमाप्त्याद्ययुक्तमित्यर्थः । ब्रह्मविद्याभरणे- यद्यप्यात्मशब्दो जीवसाधारणोऽपि भवति, तथापि योगेन ब्रह्मासाधारण एव । तथा च व्यापकत्वरूपयोगेन रूढ्या च परमेश्वरे स्वरसस्य न रूढिमात्राश्रयणेन जीवसाधारण्यं कल्पयितुं युक्तमिति ।

तथा च परमेश्वरम् इति पदमध्याहृत्य परमेश्वरम् आत्मत्वेन उपगच्छंति इत्युक्तावपि परमेश्वरम् आप्त्यादिगुणयुक्तत्वेन जानन्तीत्येवार्थः सिद्ध्यति, नतु परमेश्वरम् आत्मेति ( जीव इति ) जानन्ति इत्यर्थः । ततः ' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' इति सूत्रं न जीवब्रह्मणोरभेदबोधकमिति ।

परमेश्वरम् आत्मत्वेन उपगच्छन्ति इत्यस्मिन्विषये यानि प्रमाणतया उदाहृतानि ' त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि देवते इति ' अहं ब्रह्मास्मि ' इत्यादीनि वाक्यानि तानि परमेश्वरस्य आत्मत्वोपगमे प्रमाणं भवितुं नार्हति । तेषामद्वैतिभिः

अखण्डार्थबोधकत्वाङ्गीकारात् । विशेषविचारस्तु तत्त्वमस्यादिवाक्यार्थविचारे द्रष्टव्यः ।

ग्राहयन्ति च=आत्मत्वेनैवेश्वरं वेदान्तवाक्यानि ' एष ते आत्मा सर्वान्तरः ' ( बृ. ३-४-१ ) ' एष ते आत्मा अन्तर्याम्यमृतः ( बृ. ३-७-३ ) तत्सत्यं स आत्मा तत्त्वमसि ( छां ६-८-७ ) इत्येवमादीनि इति, ग्राहयन्ति चेति सूत्रभागस्य शाङ्करीयार्थवर्णनं तदप्यत्यन्तायुक्तम् ।

ईश्वरम् इत्यर्थबोधकपदस्य सूत्रे अभावात् । अध्याहारेण तथा वर्णने दोषस्योक्तत्वात् ।

अभेदविषये यत् ' तत्सत्यं स आत्मा तत्त्वमसि ' इत्यादि-प्रमाणोदाहरणं तदप्ययुक्तम् । तत्त्वमसीति वाक्यस्यापि अद्वैतिभिः अखण्डार्थबोधकत्वाङ्गीकारात् । ' तत्सत्यं स आत्मा ' इत्यधिकोदाहरणस्य तेषां प्रयोजनं न पश्यामः । अधिकांशोदाहरणं तु आत्मा अतत् त्वं असि इति पदच्छेदज्ञापनद्वारा ' सन्मूलाः सोम्य सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ( छां. ६-८-६ ) इति पूर्ववाक्ये सर्व-प्रजानां परमात्मजन्यत्वेन परमात्माश्रितत्वेन परमात्मप्रतिष्ठितत्वेन परमात्मनो भिन्नत्वस्योक्त्या त्वं ( अपि ) अतत् परमात्मभिन्नोऽसि इत्यर्थकरणं ज्ञापयति द्वैतिनः ।

किंवा तत् कारणीभूतं सदाख्यं ब्रह्म सत्यं, सः सदाख्यं ब्रह्म तत्त्वं याथात्म्यं इति उपनिषद्भाष्ये स्वकृत ( शङ्करकृत ) व्याख्यानसूचनद्वारा ' आत्मा तत्त्वमसि' इति वाक्यं केवलम् अखण्डार्थबोधकत्वेन वा आत्मा अतत् इति पदच्छेदेन वा अभेदाप्र-तिपादकं न, अपितु तत् त्वं इति पदच्छेदमन्तरा आत्मा तत्त्वं इति पदच्छेदस्यापि सम्भवेन ' आत्मा तत्त्वमसि ' इति वाक्यमभेदबोधकं न भवति इति सूचनार्थं च भवति ।

ग्राहयन्ति चात्मत्वेन ईश्वरम् इत्यस्मिन्विषये 'एष त आत्मा अंतर्याम्यमृतः' इति च यत् बृहदारण्यकवाक्योदाहरणम् तत् परप्रतारणरूपं स्वव्याहतं च। तथाहि 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (ब्र. १-२-२०) इति सूत्रभाष्ये उभयेऽपि हि शाखिनः काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेनैनं शारीरं (जीवं) पृथिव्यादिवत् अधिष्ठानत्वेन नियम्यत्वेन चाधीयते। यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति एष ते आत्मा ऽन्तर्याम्यमृतः (बृ. ३-७-२२) यो विज्ञाने तिष्ठन् इति काण्वाः य आत्मनि तिष्ठन् इति माध्यन्दिनाः। य आत्मनि तिष्ठन् इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। यो विज्ञाने तिष्ठन् इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीरः उच्यते। विज्ञानमयो हि शारीरः। तस्मात् शारीरादन्य ईश्वरोंतर्यामीति सिद्धं। (ब्र.सू. शां. भा. १-२-२०) इति वाक्येन तथा 'भेदव्यपदेशाच्चान्यः' (ब्र. सू. १-१-२१) इत्येतत्सूत्रभाष्ये—

'आदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः, [बृ. ३-७-९] इति श्रुत्यन्तरे भेदव्यपदेशात्। तत्र हि आदित्यादंतरो यमादित्यो न वेद इति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामी स्पष्टं निर्दिश्यते' इति वाक्येन, तथा—

'उभयव्यपदेशात्त्वहिकुण्डलवत्' [ब्र. ३-२-२७] इत्येतत्सूत्रभाष्ये क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते। ........ यः सर्वाणि भूतान्यन्तरो यमयति एष ते आत्माऽन्तर्याम्यमृतः' इति नियन्तृ-नियन्तव्यत्वेन' इति वाक्येन, तथा—

'अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इत्येतत्सूत्रभाष्ये 'एष ते आत्माऽन्तर्याम्यमृतः.... एष ते आत्माऽन्तर्याम्यमृतः इति वाक्यघटितानामेकविंशतिवाक्यानां जीवब्रह्मणोर्भेदपरत्वमुक्त्वा 'एष ते आत्माऽन्तर्याम्यमृतः इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते इति जीवस्य मुख्यात्मत्वाभावकथनेन च 'यं पृथिवी न वेद इति च पृथिवीदेवतया अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यमंतर्यामिणं दर्शयति' इतिकथनेन च 'एष ते आत्माऽन्तर्याम्यमृतः' इति वाक्यं जीवेश्वरयोर्भेदबोधकमिति क्रियासमभिव्याहारेण स्वयमेव स्पष्टं कथयित्वा आत्मत्वेनैवेश्वरं वेदान्तवाक्यानि ग्राहयन्ति इत्यस्मिन्विषये स्वव्याहतमेतद्वाक्योदाहरणमयोग्यजनमोहनार्थं वा चित्तास्वास्थ्यमूलकं वा।

अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः॥

इत्यद्वैतिभिः स्वीकृतत्वेन स्वव्याहत्यादिर्भूषणमिति भ्रममूलकमेव चेति समुपेक्षणीयमेव प्रज्ञाशालिभिर्नादरणीयमेव। काममाद्रियंतां नामेतरे।

एषः पृथिव्याद्यन्तर्यामित्वेनोक्तः अमृतः आत्मा- परमात्मा ते- तव ( उपलक्षणया ) मम च अंतर्यामी इत्यर्थकत्वेन 'एष ते आत्मा अंतर्याम्यमृतः' इत्येकविंशतिवारं पठितानि वाक्यानि जीवपरमात्मनोर्भेदपराण्येव नाभेदपराणीति।

ग्राहयन्ति चात्मत्वेनेश्वरमित्यस्मिन्विषये 'एष ते आत्मा सर्वान्तरः' ( बृ. ३-४ १ ) इति वाक्योदाहरणमप्ययुक्तम्। तत्र अभेदबोधकपदाभावात् प्रत्युत ते आत्मा इति जीवपरमात्मनोः सम्बन्धकथनेन भेदबोधकत्वात्। परिच्छिन्नस्य जीवस्य आत्मत्वसर्वान्तरत्वयोरसंभवेन आत्मशब्देन जीवग्रहणासंभवाच्चेति।

यद्यपि ' आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' इतिसूत्रं नाभेदबोधकं नापि अभेदे प्रमाणतयोदाहृतानि श्रुतिवाक्यानि नाभेदबोधकानि इति स्थितमिति न विचारांतरस्यास्त्यवकाशः तथापि परमात्मा अहमिति न ग्राह्यः इति कथयित्रा यानि यानि साधकानि ' परमात्मा अहं'मिति ग्रहणे यानि बाधकान्युक्तानि तेषां दूषणं यदुक्तं शङ्कराचार्यैः तस्मिन् असामञ्जस्यप्रदर्शनमन्तरा न स्वमते दार्ढ्यं भवतीति तस्यासामञ्जस्यं किंचित् प्रदर्श्यते । तथाहि—

जीवब्रह्मणोर्भेदे ' त्वमहमस्मि ' इति वाक्यस्य का गतिरिति शङ्कायां भेदवादिनो ' यथा मनो ब्रह्मेति ' अभेदोक्तिः मनःप्रतीकत्वेन ब्रह्मोपासनविधायिका न तु मनसो ब्रह्मतादात्म्यबोधिका तथा त्वमहमस्मि इति वाक्यं जीवप्रतीकत्वेन ब्रह्मोपासनविधायकं न तु जीवस्य ब्रह्मतादात्म्यविधायकमिति यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यति ' इति वाक्येनानूद्य तथात्वे गौणत्वप्रसङ्गात् तिद् यद्दूषणमाहुः शङ्कराचार्याः तत् निजभोजनभाजने पतितेऽपि रासभशवे परस्य पत्रावल्यां मक्षिकानिवारणन्यायमनुरुन्धे । स्वमतेऽपि ( शङ्करमते ) ' त्वमहस्मि ' ' तत्त्वमसि ' इत्यादिवाक्यानां बोधकत्वमेव नास्ति । बोधजनकत्वेऽपि तत् त्वं असि इति पदत्रयाणामपि लक्षणया वृत्त्या चिन्मात्रबोधकत्वमिति गौणार्थाङ्गीकारात् ।

यच्चोक्तम्- ' यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति, यथा- ' मनो ब्रह्म ( छां. ३-१८-१ ) आदित्यो ब्रह्म [ छां. ३-१९-१ ] इत्यादि । इह पुनः ' त्वमहमस्मि अहं च त्वमसि इत्याह । अतःप्रतीकदृष्टिवैरूप्यादभेदप्रतिपत्तिरिति ' तदप्ययुक्तम् । प्रतीकदृष्ट्यभिप्राये सकृदेव वचनमिति नियमस्य कुत्राऽप्यदृष्टेः । प्रकृतेऽपि ' त्वमहमस्मि ' इति सकृदेवोक्तत्वात् ' अहं त्वमसि ' इति वाक्यं

भिन्नानुपूर्वीकम् अनुयोगिप्रतियोगिभेदेन भिन्नार्थकमिति न प्रतीक-श्रुतिवैरूप्यमिति । यद्यपि प्रतिमादिषु विष्ण्वादिदर्शनं कार्यमिति नास्माकं सिद्धान्तः । मिथ्योपासनायाः —

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

इत्यादिना निषिद्धत्वात् । तथाऽपि मिथ्योपासनमन्यत्राङ्गी कृत्य अत्र तद्वैरूप्यदर्शनं शङ्कराचार्यणामयुक्तमित्येव दर्शने तात्पर्यम्। यदुक्तम् 'भेददृष्टयपवादाच्च । तथाहि-

'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' [ बृ ४-४-१९ । कठ. ४-१० ] मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति [ बृ ४-४-१९ । कठ. ४-१० ] 'सर्वं तं परादा द्योऽन्यत्रात्मनः सर्वं वेद इत्येवमाद्या भूयसी श्रुतिर्भेदमपवदति इति तदप्ययुक्तम् । उदाहृतां 'अथ अऽन्यां देवतामुपास्ते' इति श्रुतिं तावत् कार्मिणां निंदाबोधकतया उपनिषद्भाष्ये गीताभाष्ये सूत्र भाष्ये च व्याख्याय अत्र पुनर्भेददृष्टिनिंदाविषये तदुदाहरणस्य स्व वाक्यविरुद्धत्वात् । जीवब्रह्मणोर्भेददृष्टिनिंदाया अप्रतीतेः । तथाहि उपनिषद्भाष्ये 'अथ यःकश्चिदब्रह्मवित् अन्यां आत्मनः [परमात्मनः] व्यतिरिक्तां यां कांचिद्देवतां [इन्द्राग्न्यादिरूपां ] उपास्ते स्तुतिनम - स्कारयागबल्युपहारप्रणिधानध्यानादिना उपास्ते तस्या गुणभावं उपगम्यास्ते अन्योसावनात्मा मत्तः पृथक् अन्योऽहमस्म्यधिकृतो मयाऽस्मा ऋणिवत्प्रतिकर्तव्यमित्येवंप्रत्ययः सन्नुपास्ते, न स इत्थं - प्रत्ययो वेद विजानाति तत्त्वमिति वाक्येन अहमस्म्यधिकृतः मया अस्मै ऋणिवत्प्रतिकर्तव्यमित्येवंप्रत्ययः सन् यः परमात्मभिन्नां इंद्रा दिदेवतां बल्युपहारप्रणिधानादिना उपास्ते स तत्त्वं न वेद इति कार्मिणां निंदा प्रतीयते न तु भेददृष्टिमतां निन्दा । प्रत्युत अन्यां परमात्म

भिन्नां इन्द्रादिदेवतामिति स्पष्टमिन्द्रादिजीवानां परमात्मनो भेद एव प्रतीयते इति नैतद्वाक्यं जीवब्रह्मणोर्भेदद्रष्ट्र्यपवादकम् ।

न च असौ अनात्मा=परमात्मभिन्ना देवता अन्यः मत्तः पृथक् अहम् अन्यः इत्येवंप्रत्ययः न वेदेत्युक्त्या भेदज्ञानिनिंदा प्रतीयते इति वाच्यम् । इंद्रादिदेवतायाः कर्मकर्तृजीवाद्भेदस्याद्वैतमतेऽपि विद्यमानत्वात् । इंद्रादिदेवतानां जीवाद्भेदनिंदायामेवैतद्वाक्यस्य तात्पर्यसत्वे ' अन्योऽसावनात्मा मत्तः पृथक् अन्योऽहम् ' ' इत्येवंप्रत्ययः ' इत्येतावन्मात्रेण निर्वाहे ' अहमस्म्यधिकृतो मयाऽस्मा ऋणिवत्प्रतिकर्तव्यम् ' इति वाक्यस्य आधिक्यापाताच्च । तस्मात् नित्यफलप्रापकं ब्रह्मज्ञानमसम्पाद्य अल्पफलार्थमिंद्रादीदेवतामुद्दिश्य यागकर्तॄणां कर्मिणां निन्दायामेव तात्पर्यं न तु भेदनिन्दायाम् ।

यद्यस्य वाक्यस्य भेदनिन्दाबोधने तात्पर्यं स्यात् तर्हि ' योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीत्याकारः स्यात्, न तु योऽन्यां देवतामिति । नहि घटत्वेन घटं जानन् परं परत्वेन अवगच्छन् गर्दभं गर्दभत्वेन मन्वानः, बी ए. परीक्षामुत्तीर्णं बी ए. पदवीभाजं च जानानोऽविद्वान् भवति । भिन्नदेवताया भिन्नत्वेन ज्ञानिनोऽज्ञत्वं देवानांप्रियोपि न ब्रूयात् महान्तः शङ्कराचार्यास्तु एवं वदेयुरिति संभावनापि न संभावनार्हेति तामसलोकमोहनार्थमेव क्वचित्तथा प्रदर्शयामासुरित्यवश्यं स्वीकार्यम् । तेषामेव तथाभिप्राये भिन्नां देवतां भिन्नत्वेन जानतोऽज्ञत्वं वक्तुः किं वक्तव्यं सुधिय एव विदांकुर्वन्तु । तथा गीताभाष्ये—' काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ' । (४-१२) इति श्लोकव्याख्यावसरे काङ्क्षन्तोऽभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तो यजन्त इहास्मिँल्लोके देवता इन्द्राग्न्याद्याः ' अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम् ' इति श्रुतेः ' इति वाक्येन

'अथ योऽन्यां देवतामिति श्रुतेः इन्द्राग्न्यादिदेवता उद्दिश्य कर्म - कर्तृनिंदापरत्वं न तु भेदनिंदापरत्वमिति सिध्यति ।

एवम् 'अनात्मवित्त्वात्तथाहि दर्शयति' (ब्र.सू. ३-१-७) इत्येतत्सूत्रभाष्येऽपि 'तथा हि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति — 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' इति वाक्येन च कर्मनिंदापरत्वं न तु भेदनिंदापरत्वमिति सिद्ध्यति ।

अनेन वाक्येन भेदज्ञाननिंदाया असिद्ध्या नेदं वाक्यं भेद-निंदाबोधकमिति नैतद्वाक्योदाहरणं भेदनिंदायां कर्तव्यमद्वैतिभिरिति ।

यच्च जीवब्रह्मभेददृष्ट्यपवादे 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति [कठ- ४-१०] इति वाक्योदाहरणं तदपि न युक्तं । तत्र जीवब्रह्मभेददृष्टेरनिषेधात् । तथाहि- पूर्ववाक्यसहितं तद्वाक्य-मिदं- यदेव तदमुत्र यदमुत्र तदन्विह ।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति [कठ.८-१०]

इति । तस्यार्थस्तु इह- एतल्लोके यत् ब्रह्म तदेव अमुत्र परलोके यत् ब्रह्म अमुत्र परलोके तत् नु तदेव इह एतल्लोके [एतल्लोकपरलो-कान्तर्गतरूपयोः भेदो नास्ति] यः मनुष्यः इह एतल्लोकपरलोकान्तर्गत रूपयोः नाना-भेदं पश्यति सः मृत्योः मृत्युं मरणम् आप्नोति-प्राप्नोति तथाचैतद्वाक्यं स्वगतभेदं निषेधति न तु ब्रह्मणि जीवभेदम् 'यदेवेह' इति पूर्ववाक्ये एतल्लोकपरलोकान्तर्गतरूपयोरभेदं [ऐक्यं] कथ-यित्वा उत्तरवाक्ये एतल्लोकपरलोकान्तर्गतपरमात्मरूपयोर्भेदं जानतः अनर्थोक्तेः । 'मनसैवेदमाप्तव्यं' इत्युत्तरवाक्ये जीवस्य ज्ञातृत्वेन ब्रह्मणो ज्ञेयत्वेन कथितत्वाच्च ज्ञातृज्ञेयभावेन भेदस्यैव कथनात् ।

अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।

इत्युत्तरवाक्येनापि ‘ य आत्मनि तिष्ठन् ’ इत्यादिवाक्यवत् जीवपरमात्मनोर्भेदस्यैव कथितत्वात् । ‘ ईशानो भूतभव्यस्य ’ इति पूर्वेण पञ्चमेन तथा उत्तरेण द्वादशेन त्रयोदशेन च भूतभविष्यज्जगदीशानत्वोक्त्या भेदस्यैव कथितत्वात् ।

‘ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥

इत्युत्तरेण पञ्चदशेन च एवं–तादृग् भवति इत्युक्त्या भेद - व्याप्तसादृश्यं कथयित्वा तादृगेवेति एव शब्देन अभेदस्य निषेधाच्च । एवं पूर्वोत्तरैरनेकवाक्यैर्भेदस्यैव कथितत्वेन ‘ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ’ इत्येतद्वाक्यं परमात्मरूपेषु भेदज्ञानिनमेव निंदति न परमात्मनि जीवभेदज्ञानिनम् इति नैतद्वाक्यं भेददर्शनमपवदति ।

एतेन ‘ मृत्योः स मृत्युमाप्नोति ’ ( बृ. ४-४-१९ ) इति बृहदारण्यकवाक्यस्यापि भेददर्शनापवादकत्वं निरस्तम् । ‘ सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः........ एष सर्वेश्वरः एष भूताधिपतिरेष भूतपाल, इत्युत्तरवाक्यस्वारस्येन तद्व्याख्यानभूतेन—

‘ स च सर्वस्य ब्रह्मेन्द्रादेर्वशी सर्वो हि अस्य वशे वर्तते । उक्तं च ‘ एतस्य वा अक्षरस्य प्रशासने ’ इति । न केवलं सर्वस्येशानः ईशिता च ब्रह्मेंद्रप्रभृतीनामीशितृत्वंच कदाचिज्जातिकृतं यथा राजकुमारस्य बलवत्तरानपि भृत्यान् प्रति तद्वन्माभूदित्याह सर्वस्याधिपतिः अधिष्ठाय पालयिता स्वतन्त्रः इत्यर्थः । न राजपुत्रवत् अमात्यादिभृत्यतन्त्रः । त्रयमप्येतद्वशित्वादि हेतुहेतुमद्रूपम् । यस्मात्सर्वस्याधिपतिस्ततोऽसौ सर्वस्येशानः, इत्यादि शाङ्करभाष्येण च ब्रह्मेंद्रादिसर्ववशित्व ब्रह्मेंद्रादीशितृत्वस्वतन्त्रत्वादिना ब्रह्मे ( चतुर्मुखे ) न्द्रादिजीवानां परमात्मना भेदस्यैव कथनाच्च ।

'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद (बृ. ४ ५ ७) इति श्रुतिर्भेददर्शनमपवदति इति भेददर्शनापवादे प्रमाणतया यदुदाहृता तदप्यसङ्गतम्। श्रुतौ भेददर्शननिषेधकपदाभावात्। 'सर्वं तं परादात्' इति वाक्यात्। पूर्वमेतादृशानि बहूनि सन्ति वाक्यानि। तानि च 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वद, लोकास्तं परादुः.... देवास्तं परादुः, ....वेदास्तं परादुः.... भूतानि तं परादुः, सर्वं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्यस्याः श्रुतेः, 'यो हि ब्रह्मक्षत्रादिकं जगत् आत्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत् पराकरोति पुरुषार्थात् पराकुर्यात्- प्रच्यावयेत' इति हि ब्र. सू. १. ४. १९ भाष्ये शङ्कराचार्या अर्थमाहुः। तथा च 'सर्वस्य वशी सर्वस्येशानः' (बृ.) सर्वाः प्रजाः सदायतनाः' इत्याद्यनेकश्रुतिषु जगतः परमात्माधारत्वेनैव स्थितेः परमात्मानमाश्रित्य स्वातन्त्र्येण स्थित्यभावस्य चोक्तेः। अस्मिन्नपि वाक्ये परमात्माश्रितत्वेनैव तिष्ठतो ब्रह्मक्षत्रादिजगतः स्वातन्त्र्येण ज्ञातुः पुरुषस्य मिथ्याज्ञानित्वेन [भ्रांतत्वेन] भ्रांतं पुरुषं पुरुषार्थात्प्रच्यावयति ब्रह्मक्षत्रादिजगदित्येव बोध्यते न तु परमात्मना जगतो भेददृष्टिरपोद्यते इति नेदमपि वाक्यं भेददृष्ट्यपवादे प्रमाणं भवितुमर्हति। विशेषविचारं प्रसङ्गे करिष्यामः।

॥ * इति भेददर्शनापवादश्रुत्यभावनिरूपणम् * ॥

भेदवादिनोक्तस्य विरुद्धधर्मवतोर्जीवपरमात्मनोरन्योन्यात्मत्वासम्भव इति दूषणस्य विरुद्धगुणताया मिथ्यात्वोपपत्तेः इति यत् शाङ्करीयं समाधानं तत्तु अतिहेयम्। ब्रह्मणः अपहतपाप्मत्वसर्वज्ञत्वाद्यनेकगुणबाधिकानां य अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः (छां. ८ ७ १) इत्याद्यनेकश्रुतीनां सत्वात्। श्रुत्युक्तापहतपाप्मत्वादिगुणनिषेधकानां

[ बाधकानां ] श्रुतीनामभावाच्च । निर्निमित्तं नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वोक्तौ सर्वापलापप्रसङ्गः । वेदानामप्रामाण्यापत्तिश्च । अतो विरुद्धगुणानां मिथ्यात्वकथनं वैदिकानामयुक्तमेव । न केवलं वैदिकानां, आस्तिकानाम् - ( अस्ति परलोक इति बुद्धिमताम् ) अपि अयुक्तम् । आस्तिकत्वहानेः । विशेषविचारो ब्रह्मणो गुणपूर्णत्वनिरूपणे द्रष्टव्यः ।

भेदवादिना ईश्वरस्य संसार्यात्मत्वे ईश्वराभावप्रसङ्गः । ततः शास्त्रानर्थक्यं संसारिणोपीश्वरात्मत्वेधिकार्यभावाच्छास्त्रानर्थक्यमेवेति जीवेश्वराभेदवादिनं प्रति उक्तदूषणस्य शङ्कराचार्यैः समाधानमुक्तम् 'तदसत् । शास्त्रप्रामाण्यात् अनभ्युपगमाच्च । न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः । किं तर्हि । संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवं च सति अद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता विपरीतगुणता त्वितरस्य ( जीवस्य ) मिथ्येति व्यवतिष्ठते ' इति, तदप्ययुक्तम् । तथाहि—

शास्त्रप्रामाण्यादित्युक्तम् । निर्गुणं ब्रह्मैकं सत्यं ततोऽन्यत्सर्वं मिथ्येत्यद्वैतिमते सत्यत्वेन कथ्यमानं निर्गुणं ब्रह्म तु न ज्ञेयम् यत् ज्ञेयं जगत् तत्सर्वं मिथ्येति न तस्मिन्विषये शास्त्रं प्रमाणं भवितुमर्हति इति कस्मिन्विषये शास्त्रप्रामाण्यमङ्गीकुर्वंति शङ्कराचार्यास्तत्सुधियः एव विभावयंतु । ननु शास्त्रस्य व्यावहारिकप्रामाण्यं कथ्यत इति चेन्न । व्यावहारिकप्रामाण्यं तु अप्रामाण्यपर्यवसायीति कल्पतरुपरिमलादावुक्तत्वेन, बौद्धमतनिराकरणावसरे प्रमाणानां व्यावहारिकवस्तुविषयकत्वरूपव्यावहारिकप्रामाण्यं न संभवतीति भामतीकारप्रभृतिभिरुक्तत्वेन च वेदानां व्यावहारिकप्रामाण्यमिति वाचोयुक्तेरेवायुक्तेः ।

तिष्ठतु स विचारः । शास्त्रप्रामाण्यादिति हेतुना किं सिसाधयिषितं प्रकृते शङ्कराचार्याणामिति न जानीमो वयम् । ईश्वरस्य

संसार्यात्मत्वं प्रतिपाद्यत इति नाभ्युपगच्छाम इति यदुक्तं तत्सत्यमेव ईश्वरस्य संसार्यात्मत्वप्रतिपादकशास्त्राभावात् ।

संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमित्यभ्युपगच्छाम इति कथनमयुक्तम् । तथाप्रतिपादकशास्त्राभावात् । तथाशास्त्रसद्भावाभिमाने तच्छास्त्रकथनेन स्वगुरुवाक्यं साधयन्तु तन्मताभिमानिनः । अद्वैतेश्वरस्य अपहतपाप्मत्वादिगुणता विपरीतगुणता तु इतरस्य ( जीवस्य ) मिथ्येत्युक्तिस्तु आत्मानं वैदिकंमन्यानां न शोभते । वेदप्रामाण्यवादिनो वेदप्रतिपाद्या अर्था मिथ्या इति वाक् माता वन्ध्येति वाग्वत् स्वव्याहता ।

तस्मात् वेदोक्तानां गुणानां मिथ्यात्वकथनमत्यन्तासमञ्जसमिति ।

भेदवादिनोक्तं अधिकार्यभावः प्रत्यक्षादिविरोधश्चेत्येतदनूद्य 'तदप्यसत् प्राक् प्रबोधात्संसारित्वाभ्युपगमात् तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् ( बृ. २·४·१४ ) इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्गः इति चेन्न । इष्टत्वात् । अत्र पिता अपिता भवति इत्युपक्रम्य वेदा अवेदाः ( बृ ४-३-२२ ) इति वचनादिष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे' इति यत्समाधानमुक्तं तत्प्राज्ञानां वैदिकानां न मनोरमम् । तथाहि–

मिथ्याशब्दार्थः कल्पित इति नास्ति नासीन्नभविष्यति इति त्रैकालिकनिषेधप्रतियोगीति अद्वैतिभिः स्वीकृतत्वेन मिथ्यावस्तुनः कदाप्यविद्यमानत्वप्राप्त्या संसारित्वस्य मिथ्यात्वं ( कल्पितत्वं ) स्वीकुर्वतां शङ्कराचार्याणां प्रबोधात् प्राक् सत्वाभ्युपगमः स्वव्याहतः । प्राक्प्रबोधात्संसारित्वस्याभ्युपगमेन ज्ञानात्पूर्वं संसारित्वं सदिति सिध्यति पुनः ज्ञानात्पूर्वकालेऽपि असत् इति सिध्यतीति कथनं कथं न व्याहतमित्येतत्सचेतसो विभावयन्तु ।

( आनन्दगिरि. ) ' अहं सुखीत्याद्यनुभवेन विरुद्धस्वभावत्वात् भेदो दहनतुहिनवदिति अनुमानेन च, विरोधान्न तयोरैक्यमिति भेदवादिनोक्तौ शङ्कराचार्यैः तद्विषयत्वात्प्रत्यक्षादिव्यवहारस्येत्युक्तं। तत्र तद्विषयत्वादित्यस्य प्रबोधपूर्वकालीनसंसारित्वभेदादिविषयकत्वा त्प्रत्यक्षादिव्यवहारस्य इति खल्वर्थः । स च न संभवति । प्रत्यक्षं वा अनुमानं वा नहि प्रबोधपूर्वकालीनं संसारित्वं विषयीकरोति किं तु संसारित्वादिकं विषयीकरोति इति पूर्वकालीनसंसारित्वादिकं विषयी करोतीत्युक्तिरनुभवविरुद्धैव ।

यत्र त्वस्येत्यादिना प्रबोधे प्रत्यक्षाद्यभावं दर्शयतीत्युक्तिः ब्रह्मातिरिक्तप्रत्यक्षादिपदार्थानां कालत्रयेऽप्यभावरूपं मिथ्यात्वं वर्णयतामद्वैतिनां विरुद्धैव । प्रबोधकालविशेषे प्रत्यक्षाद्यभावकथने पूर्वं प्रत्यक्षादीनां सत्वसिद्धेः वस्तुतः यत्र त्वस्येति श्रुतिः प्रबोधे प्रत्यक्षाद्यभाव न दर्शयति प्रत्युत प्रत्यक्षादीनां सत्वं व्यवस्थापयतीति। अधिकं श्रुतिविचारभागे द्रष्टव्यम् ।

' प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेन्न इष्टत्वात् । अत्र पिताऽपिता.... वेदा अवेदा इति वचनादिष्यत एवास्माभिः श्रुतेरप्य-भावः प्रबोधे ' इति यदुक्तं शङ्कराचार्यैस्तत्तु स्वव्याहतम् ।

' अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चण्डालः अचण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वा गतं पुण्येनानन्वागतं पापेन तीर्णोहि तदा सर्वान्शोकान् हृदयस्य भवति' ।( बृ. ४-३-२२ ) इतिवाक्यस्य शङ्कराचार्यकृता व्याख्यैवम्-

' अत्र अस्मिन् सुषुप्ते पिता=जनकः अपिता भवति । पुत्रं प्रति तस्य जनयितृत्वात् यत्पितृत्वं तत्कर्मनिमित्तं तेन च कर्मणा अयम संबद्धोऽस्मिन्काले तस्मात् पितापुत्रसम्बन्धनिमित्तात्कर्मणो विनिर्मुक्त

त्वात् । तथा पुत्रः पितुरपुत्रो भवति इति सामर्थ्याद्गम्यते । उभयोर्हि संबन्धनिमित्तं कर्म तदयमतिक्रांतो वर्तते । अपहतपाप्मेति ह्युक्तम् । तथा माता अमाता । लोकाः कर्मणा जेतव्या जिताश्च । तत्कर्मसंबन्धाभावाल्लोका अलोकाः । तथा देवाः कर्माङ्गभूतास्तत्कर्म सम्बन्धात्ययाद्देवा अदेवाः । तथा वदाः साध्यसाधनसम्बन्धाभिधायका मन्त्रलक्षणाश्चाभिधायकत्वेन कर्माङ्गभूता अधीता अध्येतव्याश्च कर्मनिमित्तमत्र संबध्यन्ते पुरुषेण । तत्कर्मातिक्रमणात् एतस्मिन्काले वेदा अप्यवेदाः सम्पद्यन्ते । स्तेनः= ब्राह्मणसुवर्णहर्ता अस्तेनो भवति '। इत्यादिवाक्येन । पिता अपिता भवतीत्यस्य नहि पितुरभावः (त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं=कल्पितत्वं ) वार्थः । किं तु पितुः सत्वेऽपि पुत्रनिरूपितं यत्कर्मनिमित्तं पितृत्वं तत्कर्मणो मुक्तत्वेन [ कर्मणामभावेन ] पुत्रसम्बन्धाभावादेव अपिता भवतीत्युच्यते । यथा कस्यचित्पुरुषस्य अन्यपुरुषनिरूपितं वेतनदाननिमित्त यजमानत्वं वेतनाभावे तस्य पुरुषस्य सत्वेऽपि यजमानत्वं निवर्तते । तथा– पुत्रत्वमातृत्वादिकमपि कर्मनिमित्तं कर्मणो निवृत्तौ पुत्रस्य मातुश्च सत्त्वेऽपि पुत्रसम्बन्धाभावात् मातृसम्बन्धाभावात् अपुत्रः अमाता इत्युच्यते । एवं वेदाः कर्माङ्गभूता अधीता अध्येतव्याश्च कर्मनिमित्तमेव सम्बध्यन्ते पुरुषेण । तत्कर्मातिक्रमणात् एतस्मिन् काले वेदा अप्यवेदाः सम्पद्यन्ते इति वेदानां सत्वेऽपि वेदसम्बन्धाभावादेव अवेदा इत्युक्तं न तु वेदाभावनिमित्तकमिति स्वयमेवोपनिषद्भाष्ये व्याख्याय, सूत्रभाष्ये वेदानामप्यभावोक्तिः स्वव्याहता वेदनित्यत्वप्रतिपादकवाक्यविरुद्धा च ।

' एतत्सामगायन्नास्ते ' ( तै. ३ ) इति प्रबोधानन्तरं मुक्तिकालेऽपि साम ( वेद ) गायनोक्त्या वेदाभावोक्तिस्तद्विरुद्धा चेति

नेयं श्रुतिर्वेदाभावं वक्तीति प्रबोधकाले वेदाभावोक्तिः स्वव्याहता प्रमाणविरुद्धा चेत्युपेक्षणीयमेव वैदिकैः ।

'वेदसत्यत्वश्रद्धालुः शङ्कते प्रत्यक्षाद्यभाव इति.... आरोपितक्रमस्वरविशिष्टवर्णात्मकस्य वेदस्य मिथ्यात्वं दुर्वारम् । वादिनां सत्यत्वाग्रहस्त्वविद्याविजृंभित इति वेदस्य सत्यत्वाभावो न दोष इत्याह नेति' इति वक्तृभीरत्नप्रभाकारादिभिरद्वैतिभिरात्मनो वैदिकत्वं सम्यग् व्युत्पादितम् । वेदस्य इमे इति व्युत्पत्या हि निष्पन्नो वैदिकशब्दो वेदसम्बधित्वमाह । सम्बन्धश्च वेदप्रामाण्याभ्युपगन्तृत्व-वेदसत्यत्वाङ्गीकर्तृत्व- वेदोक्तधर्मसत्यत्वस्वीकर्तृत्वादिरूप इति ये वेदेन सह वेदप्रामाण्याभ्युपगन्तृत्वादिरूपसम्बन्धवन्तस्ते किल वैदिका इति व्यपदिश्यन्ते । ये च वेदेन सह वेदप्रामाण्याभ्युपगन्तृत्वादिरूपसम्बन्धरहिताः ( वेदप्रामाण्यानभ्युपगन्तारः, वेदसत्यत्वमनङ्गीकुर्वतः वेदः केनचित्पुरुषेण कल्पित इति वक्तारः वेदोक्तानां ब्राह्मणादिवर्णानामाश्रमाणां धर्माणां च केनचित्कल्पितत्वं वदन्तः ) ते खल्ववैदिका इत्येतावत्पर्यन्तं व्यवहारः आसीत् । स च व्यवहारोऽद्वैतिनां वैदिकत्वाङ्गीकारे वेदस्य इमे वैदिकाः सम्बन्धश्च वेदस्य कल्पितत्वाङ्गीकर्तृत्वं वेदप्रामाण्यानभ्युपगन्तृत्वं वेदोक्तानां ब्राह्मणादिवर्णानां ब्रह्मचर्याद्याश्रमाणां पुण्यपापदेवतीर्थादीनां च कल्पितत्वस्वीकर्तृत्वमित्यादिः । एतादृशसम्बन्धभाजो हि वैदिकाः । ईदृशसम्बन्धविरहिता ये 'अङ्गीकृतवेदप्रामाण्या वेदोक्तधर्माणां कल्पितत्वमनङ्गीकुर्वतः ( सत्यत्वमङ्गीकुर्वाणाः ) ते किलावैदिका नाम इत्यन्यथयितव्यः । हा हन्त ! तथा च वैदिकावैदिकव्यवहारोपि विपर्यासितव्यः । ततश्च 'वेदप्रामाण्याद्यनङ्गीकुर्वाणाश्चार्वाका बौद्धा जैना एव वैदिकाः वेदप्रामाण्यमानिनस्त्ववैदिका इति । अन्यथा बौद्धवत् वेदप्रामाण्याद्यनभ्युपगन्तॄणामद्वैतिनां वैदिकत्वं कथं स्यात् । अतो बौद्धवत् वेद-

प्रामाण्याद्यनभ्युपगन्तृभ्य उक्तरीत्या वैदिकंमन्येभ्यः सहस्रकृत्वो विधास्यामो दूरात्प्रणामम् ।

हा कष्टमेतादृशं वैदिकत्वम् !

ननु 'अविभागेन दृष्टत्वात्' इति सूत्रे परं ज्योतिरुपसंपद्य स्वेन रूपेण अभिनिष्पद्यमानो जीवः परस्मादात्मनः पृथगेव भवति उत अविभागेनैवावतिष्ठते इति संशये 'स तत्र पर्येति' (छां. ८-१२-३) इत्यधिकरणाधिकर्तव्यनिर्देशात् 'ज्योतिरुपसम्पद्य' इति च कर्तृ कर्मनिर्देशाद्भेदेनैवावस्थानमिति पूर्वपक्षे मुक्तः परेणात्मना अविभक्त एवावतिष्ठते दृष्टत्वात् । तथाहि— 'तत्त्वमसि' (छां. ६-८-७) 'अहं ब्रह्मास्मि' [बृ. १-४-१०] 'यत्र नान्यत्पश्यति' [छां ७-२४ १] 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' [बृ. ४ ३ २३] इत्येवमादीनि वाक्यानि अविभागेनैव परमात्मानं दर्शयन्ति । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' (काठ. ४-१५) इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यानि अविभागमेव दर्शयन्ति नदी-समुद्रादिनिदर्शनानि च' इति शाङ्करभाष्यरीत्या तत्त्वमस्यादि श्रुतिप्रमाणमवलम्ब्य मुक्तजीवपरब्रह्मणोरभेदं प्रतिपादयतीति चेन्न । श्रुतिसूत्रादेरभेदप्रतिपादकत्वाभावात् । प्रत्युत भेदस्यैव प्रतिपादकत्वाच्च । तथाहि– तत्त्वमसि, 'अहं ब्रह्मास्मि' इत्यादिमहावाक्यानां बोधजनकत्वस्यैवाद्वैतिभिरनङ्गीकारात् ।

बोधजनकत्वाङ्गीकारे वा लक्षणया वृत्त्या चित् इत्येतावन्मात्रबोधजनकत्वाभ्युपगमेन अभेदविषयकबोधाजनकत्वात् । तुष्यतुदुर्जनन्यायेन

येन अभेदविषयकबोधजनकत्वेऽङ्गीकारेऽपि सर्वेशत्वादिगुणविशिष्टस्य तत्पदार्थस्य अल्पज्ञत्वादिगुणविशिष्टेन त्वंपदार्थेन जीवेनैक्यासम्भवात्। लक्षणया तत्त्वंपदाभ्यां चिन्मात्रोपस्थितिं स्वीकृत्य चित् चिदसीति चिच्चितोरेवाभेदो बोध्यत इत्यभ्युपगमेन जीवब्रह्मणोरभेदानुक्तेः। चितः चिदभेदबोधनस्य ज्ञातज्ञापकत्वेन निष्प्रयोजनत्वाच्च। इत्यादि दूषणैरभेदप्रतिपादकत्वाभावस्य पूर्वं वर्णितत्वात्।

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम'। इति वाक्ये यथा शुद्धोदके आसिक्तं शुद्धमुदकं तादृगेव-पूर्वविद्यमानशुद्धजलसदृशमेव भवति, नतु पूर्वं विद्यमानोदकाभिन्नं भवति। तथा हे गौतम! विजानतः (ज्ञानिनः) मुनेः आत्मा (स्वरूपं) एवं उदकवत् (निर्दोषत्वनिर्दुःखत्वादिना) ब्रह्मसदृशं भवति इति दृष्टांतवाक्ये तादृक् इति पदेन स्पष्टं बोधितत्वात् 'यथोदकं' इति वाक्यं अविभागं (अभेदं) दर्शयति इति कथनं यादृशोऽग्निस्तादृशो माणवक इति वाक्यं श्रुत्वा माणवके पावकाभेदमभिज्ञाय तच्छिरसि पाकनिष्पत्तये भाण्डारोपणमुपदिशतो मन्दस्य व्यवहारमनुकरोति। नदीसमुद्रादिनिदर्शनानि च अविभागमेव दर्शयन्ति इत्यपि न साधु। 'ननूक्तं यथा नदी समुद्रो भवतीति का पुनर्नद्यभिमता आयुष्मतः। किंपाथःपरमाणव उत एषां संस्थानभेदः आहोस्वित् तदारब्धोऽवयवी। तत्र संस्थानभेदस्य वा अवयविनो वा समुद्रनिवेशे विनाशात् कस्य समुद्रेण एकता? नदीपाथःपरमाणूनां तु समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः एवं समुद्रादपि तेषां भेद एव (ब्र. भा. भाम. १-४-२२) इति

वाक्यैः भामत्यां नदीसमुद्रयोरैक्यस्य युक्त्या निराकृतत्वात् । कल्प· तरुपरिमलेऽपि ‘ तथा च नद्या अवयवसन्निवेशविशेषरूपेण अवयवि रूपेण स्वारंभकपरमाणुरूपेण वा समुद्राभेदप्राप्त्यभावेऽपि समुद्रप्राप्तौ नद्यवयविनाशात् तदीयनामरूपप्रहाणमस्तीत्येतावदंशे श्रुतौ नदी– समुद्रदृष्टांतः । अत एवास्तं गच्छन्तीत्येव दृष्टांतभागे श्रवणमिति भावः ’ इति वाक्यैरेतैर्नदीसमुद्रयोरैक्याभावस्य वर्णितत्वात् नदीसमुद्र दृष्टान्तदानं च नामरूपप्रहाणविषय एवेत्युक्तत्वाच्च ।

‘ यत्र नान्यत्पश्यति ’ ( छां. ७·२४-१ ) इति वाक्यं अवि भागेनैव परमात्मानं दर्शयतीति यदुक्तं तन्न समञ्जसम् । तस्मिन्वा- क्ये मुक्तस्य परमात्मना अभेद ( अविभाग ) बोधकपदाभावात् । उत्तरवाक्ये च ‘ स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्.. तस्य सर्वेषु लोकेषु कामचारो भवति ’ इति भूम्नो ज्ञेयत्वेन जीवस्य ज्ञातृत्वस्य च कथनेन ‘ सर्वेषु लोकेषु कामचार ’ इत्यनेन सर्वलोका- नां सत्त्वस्य भूमरूपब्रह्मज्ञानिनः कामचारित्वादीनां च कथितत्वेन जीवब्रह्मणोर्भेदः लोकानां सत्वं ज्ञानिनां कामचारित्वादिकं च कथ्यत इति इदं वाक्यं जीवब्रह्मणोर्भेदबोधकमेवेति ।

एवं सूत्रेऽपि अभेदबोधकपदं नोपलभ्यते । अविभागेनेतिपदं अभेदबोधकमस्तीति चेन्न । अविभागपदस्य संयुक्तार्थकत्वात् । चैत्र- स्य भिन्नयोरपि ओष्ठयोः परस्परसंयोगकाले चैत्रस्योष्ठौ अविभक्तौ इति प्रयोगात् अविभागशब्दो न भेदविरोध्यभेदार्थकः । किन्तु भेदा- विरोधि (भेदसमानाधिकरण) संयोगार्थकः ।‘ अविभागो वचनात् तु ( ब्र. ४-२-१६ ) इति सूत्रे भेदाविरोध्यर्थेऽविभागशब्दप्रयोगा’

अविभागशब्दघटितं ' अविभागेन दृष्टत्वात् ' इति सूत्रं ईषदपि नाभेदं बोधयितुमलं किंतु भेदसमर्थनसमर्थमेवेति दिक् ।



॥ श्रीरामचन्द्राय नमः ॥

( शङ्करव्याख्यानरीत्या )

# ॥ भेदपराण्येव खलु ब्रह्मसूत्राणि ॥

ॐ अथातो ब्रह्मजिज्ञासा ॐ

अथ– नित्यानित्यवस्तुविवेक-वैराग्यशमदमादिसंपन्मुमुक्षा – रूपाधिकारप्राप्त्यनन्तरं अतः=कर्मणां अनित्यफलकत्वात् ब्रह्मज्ञानेन मोक्षाख्यफलसद्भावात् ब्रह्मजिज्ञासा= ब्रह्मणः 'जन्माद्यस्य यत' इति वक्ष्यमाणलक्षणस्य विचारः कर्तव्यः । अत एव न ब्रह्मशब्दस्य जाति-जीव–कमलासनाद्यर्थान्तरपरत्वमिति अस्य सूत्रस्य शङ्कराचार्यैः व्याख्यातत्वेन ज्ञातृज्ञेयभावादिना ब्रह्मणा जीवस्य भेद एवोक्तः । जन्माद्यस्य यतः इति उत्तरसूत्रेण ब्रह्मशब्देनापि ज्ञेयब्रह्मणः सर्वज्ञत्वादयो धर्माः प्रतीयन्ते इति शङ्करोक्त्याऽसर्वज्ञेन जीवेन भेदो बोधितो भवति । १-१-२

ॐ जन्माद्यस्य यतः ॐ

यतः=सर्वज्ञात् सर्वशक्तेः कारणात् अस्य=प्रत्यक्षादिप्रमाण-सिद्धस्य जगतः जन्मादि=उत्पत्त्यादि भवति तद्ब्रह्म । न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणं ( सर्वज्ञत्वादिविशेषणं ) ईश्वरं विहाय अन्यतः प्रधानादचेतनात्.... संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यं, इति शङ्कराचार्यैर्व्याख्यातत्वेन सूत्रेणानेन जगज्जन्माद्यकर्तृ-चेतनाचेतनात्मकजगतो ब्रह्मणा भेद एवोक्तः । १-१-२.

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपलक्षितं । तदेव दृढयन्नाह-

ॐ शास्त्रयोनित्वात् ॐ

अनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभाग-हेतोः ऋग्वेदाद्याख्यस्य...यस्मान्महतो भूतात् योनेः संभवः तस्य

महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ( शास्त्रयोनित्वात्=वेदादिशास्त्रकारणत्वात् ब्रह्म सर्वज्ञं सर्वशक्तिमच्चेति ) अथवा शास्त्रयोनित्वात्=शास्त्रप्रमाणकत्वात् ब्रह्म जगतो जन्मादिकारणं इत्यर्थकतया व्याख्यातमिति अनेन सूत्रेणापि असर्वज्ञात् शास्त्राकर्तुः चेतनाचेतनात्मकजगतः सर्वज्ञे सर्वशक्तिमति ब्रह्मणि भेद उक्तो भवति । १-१-३.

ॐ तत्तु समन्वयात् ॐ

तत्-सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म वेदांतशास्त्रादेवावगम्यते । समन्वयात्-सर्वेषु वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि इत्यर्थकतया व्याख्यातत्वे नैतेनापि सूत्रेण असर्वज्ञात् असर्वशक्तेः चेतनाचेतनात्मकजगतः सर्वज्ञे सर्वशक्तौ परमात्मनि भेद एव सिध्यति । स्वमताग्रहमूलं उत्सूत्रं यद्बहु विलिखितं भाष्ये सूत्रार्थविचारकाले अप्रकृतत्वात् तस्य परीक्षा नात्र क्रियते । प्रसक्त्यनुसारेण तत्र तत्र तस्यासमञ्जसतां दर्शयिष्यामः । १-१-४.

ॐ ईक्षतेर्नाशब्दम् ॐ

इति सूत्रभाष्ये सदेव सोम्येदमग्र आसीदित्यादिश्रुतौ जगत्कारणतया प्रतिपाद्यमानं सच्छब्दवाच्यं प्रधानं उत ब्रह्मेति संशये प्रधानमिति पूर्वपक्षे न सांख्यपरिकल्पितं अचेतनं प्रधानं जगतः कारणं शक्यं वेदांतेषु आश्रयितुं, अशब्दं हि तत् । ईक्षतेः-ईक्षितृत्वश्रवणात् कारणस्य 'तदैक्षत बहुस्यां प्रजायेयेति' 'तत्तेजोऽसृजतेति' (छां.६ २-३) इत्यादिजगत्कारणत्वप्रतिपादकवाक्यानि ईक्षापूर्वं तेजःप्रभृतेः स्रष्टृत्वं दर्शयन्ति इति व्याख्याततया प्रधानेन ब्रह्मणो भेदः सिद्धः । जगत्कारणस्य सर्वज्ञत्वादिविशिष्टब्रह्मणः जगतः अकारणात्

असर्वज्ञात् जीवाद्भेदोऽपि सिद्धः इतीदमपि सूत्रं जडब्रह्मणोर्जीवब्रह्मणोश्च भेदप्रतिपादकमेव नत्वैक्यप्रतिपादकम् । १-१-५

ॐ गौणश्चेन्नात्मशब्दात् ॐ

यदुक्तं प्रधानमचेतनं सच्छब्दवाच्यं तस्मिन् ईक्षतिः गौणः ( औपचारिकः ) इति तदसत् । सच्छब्दवाच्ये वस्तुनि आत्मशब्दश्रवणात् न प्रधानं सच्छब्दवाच्यं किंतु ब्रह्मैवेति व्याख्याततया इदं गुणसूत्रमपि प्रधानब्रह्मणोर्भेदबोधकमेव । १-१-६

ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ

अस्मिन् सूत्रे तन्निष्ठस्य सद्वस्तुज्ञानिनः ' आचार्यवान् पुरुषो वेद ' ' तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथसंपत्स्ये (छां ६ १४-२) इति वाक्येन सत्प्राप्तिरूपमोक्षश्रवणान्न प्रधानं सच्छब्दवाच्यं किं तु ब्रह्मैवेति व्याख्यातत्वेन प्रधानब्रह्मणोर्भेद उक्तः। अथ संपत्स्ये इति एतत्सूत्रगृहीतश्रुतौ जीवस्य ब्रह्मप्राप्तिरूपमोक्षश्रवणेन प्राप्यप्राप्तृभावेन ब्रह्मणा जीवस्यापि भेदः उक्तः । १-१-७

ॐ हेयत्वावचनाच्च ॐ

यथा अरुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां ताराममुख्यामरुंधतीत्युपदिशति तथा आत्मभिन्नमपि प्रधानमात्मत्वेनोपदिशति इति सांख्येन पुनः पूर्वपक्षिते यथा अनन्तरं स्थूलतारा, नेयमरुन्धतीति हेयतया कथ्यते तथा अत्रापि नेदमात्मेति हेयतयोच्येत तथा हेयत्वावचनान्न प्रधाने आत्मशब्दो युक्तः किं तु ब्रह्मण्येवेति प्रधानं न सच्छब्दवाच्यं किं तु ब्रह्मैवेत्यर्थपरतया व्याख्यातत्वेन प्रधानब्रह्मणो भेदप्रतिपादकमेवेदं सूत्रम् । १-१-८

ॐ स्वाप्ययात् ॐ

सता सोम्य तदा संपन्नो भवति, स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते इति ( छां. ६-८-१ ) छांदोग्यवाक्यमुदाहृत्य 'सता–सदेवेत्यादिवाक्यप्रस्तुतसच्छब्दवाच्येन शारीरस्य जीवस्य संपत्तिरूपा ( प्राप्तिरूपा ) प्ययस्य कथितत्वेन जडप्रकृतौ जीवस्या-प्ययासंभवेन सच्छब्दवाच्यं ब्रह्मैवेति व्याख्याततया अनेनापि सूत्रेण प्रकृतिब्रह्मणोर्भेद एव कथ्यते न त्वभेदः ।

अपिच 'अधिकं तु भेदनिर्देशात् [ ब्र. सू. २-१-२३ ] इति सूत्रव्याख्यावसरे 'यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरात् अधिकमन्यत् तत् वयं जगतः स्रष्टृ ब्रूमः न तस्मिन् हिताकरणादयो दोषाः प्रसज्यन्ते । शारीरस्त्वनेवंविधः तस्मिन् प्रसज्यन्ते हिताकरणादयो दोषाः न तु तं वयं जगतः स्रष्टारं ब्रूमः। कुतः एतत् ? भेदनिर्देशात् 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'(बृ २-४-५) 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः (छां.८-७-१ ) 'सता सोम्य तदा सम्पन्नो भवति ( छां.६.८.१ ) 'शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढः'(बृ.४-३-३५) इत्येवंजातीयकः कर्तृकर्मादिनिर्देशः जीवादधिकं ब्रह्म दर्शयति इति भाष्ये एतत्सूत्रोदाहृतायाः 'सता सोम्य तदा सम्पन्नो भवति ' इत्यस्याःश्रुतेर्जीवब्रह्मणोर्भेदबोधकतया व्याख्यातत्वेन एतत्सूत्रे गृहीतया तयैव श्रुत्यापि [प्राप्यप्राप्तृभावेन ] जीवब्रह्मणोः भेद उक्तो भवति ।

किञ्च सुषुप्त्युत्क्रान्त्योर्भेदेन [ १.३.४२ ] इति सूत्रीयशाङ्कर भाष्ये सुषुप्तावुत्क्रान्तौ च शारीरात् ( जीवात् ) भेदेन परमेश्वरस्य व्यपदेशात् । सुषुप्तौ तावत् 'अयं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ' [ बृ.४-३-२१ ] इति शारीराद्भेदेन परमेश्वरं व्यपदिशति । तत्र पुरुषः शारीरः स्यात् । तस्य वेदितृत्वात् ।

प्राज्ञः परमेश्वरः सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् । तथा उत्क्रान्तावपि अयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जन् याति ( बृ. ४-३-३५ ) इति जीवाद्भेदेन परमेश्वरं व्यपदिशतीति 'प्राज्ञेनात्मना संपरिष्वक्तः' इति श्रुत्या सुषुप्तिकाले परमात्मसम्बन्ध-बोधनेन जीवपरमात्मनोर्भेदः सिध्यति इति कथनेन तत्समानार्थवत्या सता सोम्येति श्रुत्या सुषुप्तिकाले परमात्मसम्बन्धबोधनेन भेदः सिध्यतीति बलादायातमिति ।

अपि च सता सोम्येति श्रुत्युक्तं स्वाप्ययं ( सुषुप्तौ परमात्म-संबन्धं ) बोधयता 'स्वाप्ययात्' इति सूत्रेणापि जीवपरमात्मनोर्भेदो बोधितो भवति । १-१-९

ॐ गतिसामान्यात् ॐ

एवमेव 'एतस्मादात्मनः सर्वे प्राणा यथायतनं संप्रतिष्ठंते प्राणे-भ्यो देवाः देवेभ्यो लोकाः' ( कौ. ३-३ ) इत्यादि सर्ववेदांतजन्य–ज्ञानस्य सामान्यात्-देवादीनामाकाशादिजडानांच परमात्मजन्यत्वरूपै कविषयकत्वात् सर्वज्ञं ब्रह्म जगतः कारणं इति व्याख्यातत्वेन देवा-दीनां आकाशादिजडानां च सर्वज्ञब्रह्मणा ( कार्यकारणभावेन ) भेदमेव बोधयतीदमपि सूत्रम् । १-१-१०

ॐ श्रुतत्वाच्च ॐ

'स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते श्वेता-श्वतराणां मन्त्रोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य ' सकारणं करणाधिपा-धिपो न चास्य कश्चिज्जनिता न चाधिपः' ( श्वे. ६-९ ) इति । तस्मा त्सर्वज्ञं ब्रह्म जगतः कारणं नाचेतनं प्रधानमन्यद्वेति सिद्धम् ' इति व्याख्यातमिति इदं सूत्रं असर्वज्ञप्रधानजीवाभ्यां परमात्मनो भेदं दर्शयति । एतत्सूत्रोदाहृता ' सकारणं करणाधिपाधिपः ' इति श्रुति रपि करणाधिपाधिप इति पदेन करणानां अधिपाः जीवास्तेषामधिपः

परमेश्वर इत्यर्थकेन जीवाधिपतित्वकथनद्वारा जीवात् ब्रह्मणो भेदमेव वक्ति। १-१-११

ॐ आनन्दमयोऽभ्यासात् ॐ

अष्टसूत्रात्मकमधिकरणमिदम्। अस्याधिकरणस्यार्थद्वयमभिहितं भाष्ये शङ्करेण। एकोऽर्थः स्वरसतः सूत्रप्रतीतः। अन्यस्तु वेदसूत्रविरोधे गुणे त्वन्यायकल्पनेति न्यायमनुसृत्य वेदार्थनिर्णायकसूत्र प्रणयनकर्तुः साक्षाद्भगवदवतारस्यापि बादरायणस्याज्ञानं कल्पयित्वा स्वमनीषामात्रेण कृतः। कः सूत्रार्थः समीचीनः को वात्रासमीचीनः इति विचारः शाङ्करव्याख्यानुसारेणापि न सूत्राण्यभेदपराणीति प्रतिपादयितुमुपक्रांतानामस्माकं प्रकृतानुपयुक्त इति मत्वा तद्व्याख्यान रीत्यैवाभेदबोधकत्वाभावं भेदबोधकत्वं च दर्शयिष्यामः।

'तस्मात्संसार्येव (जीव एव) आनन्दमय आत्मा इति प्राप्त इदमुच्यते। आनन्दमयोऽभ्यासात् इति।

पर एवात्मा आनन्दमयो भवितुमर्हति। कुतः अभ्यासात्' इति शङ्करव्याख्यानेन आनन्दमयो जीव इति पूर्वपक्षयित्वा परमात्मैवानन्दमयो न जीवः संसारीति व्याख्यातत्वेन स्पष्टं जीवपरमात्मनोर्भेदोऽवगम्यते। १-१-१२

ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ

नानन्दमयः परमात्मा भवितुमर्हति। आनन्दमय इति मयटो विकारार्थत्वात्। + तस्मादन्नमयादिशब्दवत् विकारविषयः (जीवविषय) एव आनन्दमयशब्द इति चेत् प्राचुर्यार्थेऽपि मयटः स्मर-

---

+ श्रुतेर्विकारार्थत्वे तद्युक्तः संसारिणमेव सन्निधिः गोचरयतीत्याह तस्मादिति आनन्दगिरि टिप्पण्या जीव इति पुनः पूर्वपक्षं प्रापय्य सिद्धांतितत्वसूचनात् भेदोऽवगम्यते।

णात् । आनन्दप्रचुरत्वं च ब्रह्मणः मनुष्यत्वादारभ्य उत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात् प्राचुर्यार्थे एवायं मयट्शब्द इति आनन्दमयो ब्रह्मैव न जीव इति सिद्धांतितत्वेन भेदबोधकमेवेदं सूत्रम् । १-१-१३

ॐ तद्धेतुव्यपदेशात् ॐ

' इतश्च प्राचुर्यार्थे मयट् । यस्मादानन्दहेतुत्वं ब्रह्मणो व्यपदिशति श्रुतिः - ' एष ह्येवानन्दयाति ' आनन्दयतीत्यर्थः । यो ह्यन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति । यथा लोके यः अन्येषां धनिकत्वमापादयति स प्रचुरधन इति गम्यते तद्वत् । तस्मात्प्राचुर्यार्थेऽपि मयटः संभवादानन्दमयः पर एवात्मा इति' शङ्कराचार्यैर्भाषितत्वेन जीवपरमात्मनोर्भेदपरमेवेदं सूत्रम् । १-१-१४

ॐ मान्त्रवर्णिकमेव च गीयते ॐ

' इतश्चानन्दमयः पर एव आत्मा । यस्मात् ' ब्रह्मविदाप्नोति परं ' इत्युपक्रम्य ' सत्यं ज्ञानमनन्तं ब्रह्म ' इत्यस्मिन् मन्त्रे यत्प्रकृतं ब्रह्म सत्यज्ञानानन्तविशेषणैर्निर्धारितं, यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितं सर्वान्तरं, यस्य विज्ञानाय ' अन्योन्तर आत्मा अन्योन्तर आत्मा ' इति प्रक्रान्तं, तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते— ' अन्योन्तर आत्माऽनन्दमयः" (तै २ ५ ) इति मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तं अविरोधात् । अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्यातां । न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तरं आत्माऽभिधीयते । एतन्निष्ठैव च ' सैषा भार्गवी वारुणी विद्या ' ( तै. ३ ६ ) तस्मादानन्दमयः पर एवात्मा ( न जीवः )' इति व्याख्यातत्वेन जीवब्रह्मणोर्भेदबोधकमेवेदं सूत्रम् । १-१-१५

ॐ नेतरोऽनुपपत्तेः ॐ

अस्मिन् सूत्रेऽपि 'इतरः ईश्वरादन्यो-जीवो नानन्दमयशब्देन अभिधीयते'। किं तु पर एवात्मा। जीवे आनन्दमये उक्तसर्वविकारस्रष्टृत्वानुपपत्तेः इति व्याख्याततत्वेन जीवपरमात्मनोर्भेद उक्तः। १-१-१६-

ॐ भेदव्यपदेशाच्च ॐ

इदमपि सूत्रं, 'यस्मादानन्दमयाधिकारे ' रसो वै सः ' रसंह्येवायं लब्ध्वाऽऽनन्दी भवति ( तै. २-७ ) इति श्रुतिः जीवानन्दमयौ भेदेन व्यपदिशति। अतः आनन्दमयः संसारी न। किं तु परमात्मैव, इति व्याख्याततत्वेन संसारि ( जीव ) ब्रह्मणोर्भेदमेव कथयति। नेतरोऽनुपपत्तेः भेदव्यपदेशाच्चेत्येतयोः सूत्रयोर्भेदबोधकत्वं स्वीकृत्य इमे सूत्रे मिथ्याभेद प्रतिपादयत इत्युक्तिः स्वमताग्रहमूलैव। श्रुत्या प्रतिपादितस्य श्रुत्यर्थनिर्णयार्थं प्रवृत्तेन भगवदवतारभूतेन व्यासमहर्षिणा कृतसूत्रेण निर्णीतस्य भेदस्य मिथ्यात्वकथनं अवैदिकानामेव शोभते ' नान्योतोऽस्ति द्रष्टा' इति श्रुतेः भेदनिषेधकत्वाभावः अनेकत्र प्रतिपादित इति। १-१-१७

ॐ कामाच्च नानुमानापेक्षा ॐ

इदं सूत्रमपि आनंदमयाधिकारे ' सोऽकामयत' ( तै. २-६) इति कामयितृत्वनिर्देशात् न सांख्यपरिकल्पितं प्रधानं आनन्दमयत्वे नापेक्षितव्यं, इत्यर्थकतया व्याख्याततत्वेन प्रधानब्रह्मणोर्भेदप्रतिपादकमेवेति। १-१-१८

ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ

'यस्मात् अस्मिन् आनन्दमये प्रकृते आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति शास्त्रम्। तच्च परमात्मपरिग्रहे घटते न प्रधानपरिग्रहे जीवपरिग्रहे वा। तस्मात् आनंदमयः परमात्मा। न प्रधानं

जीवो वा' इति व्याख्यातत्वेन इदं सूत्रं चेतनाचेतनात्मकप्रपञ्चात् ब्रह्मणः भेदमेव बोधयति । १-१-१९

आनन्दमयोऽभ्यासादित्याद्यष्टसूत्राणामन्यार्थत्वपक्षेऽपि आनन्दमयोऽभ्यासादित्यस्य ' ब्रह्मपुच्छं ' इत्युक्तं ब्रह्म, स्वप्रधानमेवो - पदिश्यते । 'असन्नेव स भवति ' इत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वादिति, तद्धेतुव्यपदेशाच्चेत्यस्य सूत्रस्य आनन्दमयादिसर्वकारणत्वव्यपदेशाद्ब्रह्म प्रधानमेव नत्वानन्दमयावयवरूपमिति। + नेतरोनुपपत्तेः, इत्यादेः इतरः आनन्दमयो जीवः अत्र न प्रतिपाद्यः सर्वस्रष्टृत्वाद्यनुपपत्तेरित्याद्यर्थकथनेनानन्दमय ( जीव ) ब्रह्मणोर्भेदबोधकान्येवाष्टावपि सूत्राणि नत्वैक्यबोधकानीति ।

ॐ अन्तस्तद्धर्मोपदेशात् ॐ

' य एषोन्तरादित्ये ' ' य एषोऽन्तरक्षिणि ' इति च श्रूयमाणः संसारी ( जीवः ) इति पूर्वपक्षे अन्तःश्रूयमाणः परमेश्वर एव न संसारी । कुतः तद्धर्मोपदेशात् इति व्याख्यातत्वेन इदं सूत्रमपि जीवब्रह्मणोर्भेदबोधकमेव । १-१-२०

ॐ भेदव्यपदेशाच्चान्यः ॐ

'अस्ति आदित्यादिशरीरमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः । ( बृ. ३-७-९ ) इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र हि आदित्यादन्तरो यमादित्यो न वेदेति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामीति

---

+ नेतरोऽनुपपत्तेरित्यस्य इतर आनन्दमयो जीवः अत्र न प्रतिपाद्यः सर्वस्रष्टृत्वाद्यनुपपत्तरित्यादिना रत्नप्रभायां [ व्याख्याने ] आनन्दमय रूपजीवस्य ब्रह्मणा भेद एवोक्तः ।

स्पष्टं निर्दिश्यते........तस्मात्परमेश्वर एवेहोपदिश्यत' इति सिद्धमि ति व्याख्यातत्वेन जीवपरमात्मनोर्भेदबोधकमेवेदं सूत्रम्। १-१-२१

ॐ आकाशस्तल्लिंगात् ॐ

इदं सूत्रमपि 'अस्य का गतिरित्याकाश इति होवाचेति वाक्य-घटकाकाशशब्दो भूताकाशपर इति पूर्वपक्षे प्राप्ते आकाशशब्देन ब्रह्मणो ग्रहणं युक्तं कुतः तल्लिङ्गात् ' इत्यर्थकतया व्याख्यातत्वेना-काशादिजडपरमात्मनोर्भेदबोधकम् । १-१-२२

ॐ अत एव प्राणः ॐ

उद्गीथे ' प्रस्तोतर्या देवता अन्वायत्ता ' इत्युपक्रम्य, ' कतमा सा देवतेति प्राण इति होवाच' इति वाक्ये श्रूयमाणः प्राणो वायु-विकार इति पूर्वपक्षयित्वा एतत्प्राणशब्दबोध्यमपि परं ब्रह्मैव भवि-तुमर्हति न वायुविकारः तल्लिङ्गात्- ब्रह्मलिङ्गादित्यर्थकं इदं सूत्रं जडब्रह्मणोर्भेदबोधकमेव । १-१-२३

ॐ ज्योतिश्चरणाभिधानात् ॐ

' अथ यदतः परो दिवो ज्योतिर्दीप्यते ' ( छां. ३ १६-७) इति वाक्ये ज्योतिःशब्देनादित्यादिकमेव परिगृह्यते इतिपूर्वपक्षे ज्योतिरिह ब्रह्म ग्राह्यम् । कुतः चरणाभिधानात्–पादाभिधानात् इत्यर्थकतया व्याख्यातं, इति इदं सूत्रं आदित्यादेर्ज्योतिषः सकाशात् ब्रह्मणो भेदबोधकमेव । १-१-२४

ॐ छंदोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनं ॐ

इति गुणसूत्रमपि ज्योतिःशब्दस्य विष्णुपरत्वमाक्षिप्य पुनर्वि ष्णुपरत्वं व्यवस्थापयतीत्यर्थकतया व्याख्यातत्वेन पूर्वसूत्रवत् भेद-बोधकमेव । १-१-२५

ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ

पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्मेत्यभ्युगन्तव्यम् । भूतादिपादोपदेशोपपत्तेः इति ज्योतिःशब्दस्य ब्रह्मपरत्वमेवेति व्याख्याततया पूर्वसूत्रवत् भेदबोधकमेवेदं सूत्रमिति । १-१-२६

ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ

इदं सूत्रमपि ज्योतिःशब्दस्य पूर्वोक्तपरब्रह्मपरत्वोपपादकतया व्याख्यातत्वेन आदित्यादेः सकाशात् ब्रह्मणा भेदबोधकमेवेति ।

ॐ प्राणस्तथानुगमात् ॐ ( १-१-२८ )

ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ( १-१-२९ )

ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ( १-१-३० )

ॐ जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगात् ॐ ( १-१-३१ )

इति चतुःसूत्रात्मकमिदमधिकरणमिन्द्रादिजीवानां ब्रह्मणा भेदबोधकमेवेति पूर्वमेवोक्तम् ।

इति प्रथमाध्यायस्य प्रथमः पादः ।



|| अथ प्रथमाध्याये द्वितीयः पादः ||

सर्वत्र प्रसिद्धोपदेशात् इत्याद्यष्टसूत्रात्मकमिदमधिकरणं शाङ्करभाष्यरीत्या जीवब्रह्मणोर्भेदबोधकमेव न त्वैक्यबोधकम् । तथाहि-

स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः

( छां. ३-१४-१-२ ) इत्यादिवाक्ये मनोमयत्वेनोपास्यः किं शारीरः=जीवः ? आहोस्वित् परं ब्रह्मेति संशय्य मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इति प्राप्ते परमेव ब्रह्म मनोमयत्वादिभिर्धर्मैः उपास्यं न तु जीवः । कुतः ?

ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॐ विवक्षितगुणोपपत्तेश्च ॐ

सर्वेषु वेदांतवाक्येषु जगत्कारणतया ब्रह्मशब्दालम्बनतया च प्रसिद्धस्य 'सर्वं खल्विदं ब्रह्मेति' उपक्रमे कथनात् सत्यसङ्कल्पत्वादिविवक्षित ( उपादेय ) गुणानां परब्रह्मण्येवोपपत्तेश्चेति व्याख्यातत्वेन जीवब्रह्मणोर्भेदबोधकमेवेदं सूत्रद्वयमिति । १-२ २-२

ॐ अनुपपत्तेस्तु न शारीरः ॐ

ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं न तु शारीरो जीवः मनोमयत्वादिगुणः, सत्यसङ्कल्पत्वादिगुणानां शारीरे जीवेऽनुपपत्तेरिति शाङ्करव्याख्यानात् जीवपरब्रह्मणोर्भेदं कथयति सूत्रमिदम्। १-२ ३

ॐ कर्मकर्तृव्यपदेशाच्च ॐ

इतश्च न शारीरो मनोमयत्वादिगुणः — यस्मात्कर्मकर्तृव्यपदेशो भवति । एतमितः प्रेत्याभिसंभवितास्मि । ( छां. ३-१४-४ ) इति । एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशतिअभिसम्भावितास्मीति शारीरमुपासकं कर्तृत्वेन

प्रापकत्वेन अभिसम्भवितास्मीति प्राप्तास्मीत्यर्थः । न च सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः । तत्रोपास्योपासकभावोऽपि भेदाधिष्ठान एव इति तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः इति व्याख्याततत्वेन शारीर (जीव) परमात्मनोः प्राप्तिकर्तृत्वप्राप्तिकर्मत्वेन उपास्योपासकभावेन च भेदमेव व्यपदिशति सूत्रमिदम् । १-२ ४

ॐ शब्दविशेषात् ॐ

इतश्च शारीरादन्यो मनोमयत्वादिगुणः यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यन्तरे– ' यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः ( शत. ब्रा. १०-६ ३-२ ) इति । शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति तस्माद्विशिष्टोऽन्यः प्रथमांतः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः । तस्मात्तयोर्भेदोऽधिगम्यते इति व्याख्याततत्वेन जीवपरमात्मनोर्भेदप्रतिपादकमेवेदं सूत्रम् । १ -२–५

ॐ स्मृतेश्च ॐ

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति— ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ( गीता १८–६१ ) इत्याद्या इति व्याख्याततत्वेन जीवपरब्रह्मणोर्भेदबोधकमेवेदं सूत्रम् ।

अत्राह– कः पुनरयं शारीरो नाम परमात्मनोऽन्यः यः प्रतिषिध्यते ' अनुपपत्तेस्तु न शारीरः ' इत्यादिना । श्रुतिस्तु ' नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता ' [ बृ. ३-७-२३ ] इत्येवं जातीयका परमात्मनोऽन्यमात्मानं वारयति । तथा स्मृतिरपि ' क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ' [ गी. १३-२ ] इत्येवंजातीयकेति वाक्येन सूत्रेषु उक्तं जीव ( शारीर ) परमात्मनोर्भेद–

माक्षिप्य ‘ औपाधिकोऽयं भेदः कल्पितः न परमार्थः । कल्पितभे - दापेक्षया कर्मकर्तृत्वादिव्यवहारः न विरुध्यते । प्राक् ‘ तत्त्वमसि ’ इत्यात्मैकत्वोपदेशग्रहणात् ” इति यत् स्वव्याहत्यादिदोषयुक्तमुक्तं शङ्कराचार्यैः तत् बुद्धवत् आसुरजनमोहनार्थं वा स्वोक्तार्थविस्मरण-मूलकं वा भ्रममूलकं वेति कल्प्यम् । अन्यथा गत्यभावात् । अन्य-तमपक्षनिर्धारणं तु प्रकृतानवसरग्रस्तमिति न क्रियते । ते च स्वव्या-हत्यादिदोषाः इत्थम् तथाहि- १ ‘ यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यम-यत्येष त आत्मान्तर्याम्यमृतः ’ २ ‘ योऽप्सु तिष्ठन्.... ’ ३ ‘ योऽग्नौ तिष्ठन्.... ’ ४ ‘ योऽन्तरिक्षे तिष्ठन्... ’ ५ ‘ यो वायौ तिष्ठन्...’ ६ ‘ यो दिवि तिष्ठन... ’ ७ ‘ य आदित्ये तिष्ठन्....’ ८ ‘ यो दिक्षु तिष्ठन्... ’ ९ ‘ यश्चन्द्रतारके तिष्ठन्.... ’ १० ‘ य आकाशे तिष्ठन्.... ’ ११ ‘ यस्तमसि तिष्ठन्.... ’ १२ ‘ यस्तेजसि तिष्ठन्... ’ १३ ‘ यः सर्वेषु भूतेषु तिष्ठन्... ’ १४ यः प्राणे तिष्ठन्... ’ १५ ‘ यो वाचि तिष्ठन्... ’ १६ ‘ यश्चक्षुषि तिष्ठन्... ’ १७ ‘ यः श्रोत्रे तिष्ठन्...’ १८ ‘ यो मनसि तिष्ठन्... ’ १९ ‘ यस्त्वचि तिष्ठन् २० ‘ यो विज्ञाने तिष्ठन् अथवा य आत्मनि तिष्ठन्... ’ २१ ‘ यो रेतसि तिष्ठन् रेतसोऽन्तरो यं रेतो न वेद यस्य रेतश्शरीरं यो रेतो-ऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ’ इत्यादिपूर्ववाक्यानि भूत भूताभिमानिदेवतानां जीवानां च परमात्मना नारायणेन भेदं बोध-यन्तीति स्वयमेव कथयित्वा तदुत्तरं तद्घटकं ‘ नान्योऽतोऽस्ति द्रष्टा ’ इति वाक्यमभेदं बोधयतीति शङ्कराचार्योक्तिः कथं स्वव्याहता न भवेत् । न हि अपौरुषेयी प्रमाणभूता श्रुतिः शङ्कराचार्यवत् पूर्वोत्तर-योर्व्याहतभाषिणी इति वक्तुं शक्यत इति नेयं श्रुतिर्जीवब्रह्मणोर्भेद - निषेधिका । विशेषविचारस्तु एतत्-श्रुत्यर्थविचारे द्रष्टव्यः ।

'क्षेत्रज्ञं चापि मां विद्धि' इति गीताश्लोकोऽपि न जीवब्रह्मणोरैक्यबोधकः। महाभूतादिसकलजगद्रूपक्षेत्रज्ञानस्य जीवेऽसंभवात्। 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते' 'अनादिमत्परं ब्रह्म' इति श्लोकेन श्रीमद्भगवता श्रीकृष्णेनैव क्षेत्रज्ञः परब्रह्मेति कथितत्वेन शङ्कराचार्यैरपि क्षेत्रज्ञः परं ब्रह्मेति 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इति श्लोके कृष्णेन कथ्यते इत्युक्तत्वेन क्षेत्रज्ञभूतपरब्रह्मणा कृष्णस्यैक्यमुच्यते न तु जीवेनेति नैष श्लोकः जीवब्रह्मणोरैक्यबोधकः। न वा तत्त्वमसीति वाक्यमात्मैकत्वबोधकम्। शङ्करादिभिरद्वैतिभिरखण्डार्थबोधकतया अङ्गीकृतत्वादिति। विशेषविचारः तत्तत्-श्रुतिगीताविचारे अस्मत्कृते द्रष्टव्यः। स्मरणार्थं किंचिद्विचारितमत्रेत्यलम्।

'अनुपपत्तेस्तु न शारीरः' 'कर्मकर्तृव्यपदेशाच्च' 'शब्दविशेषात्' 'स्मृतेश्च' एतानि सूत्राणि तदुदाहृतानि श्रुतिगीतावाक्यानि च जीवब्रह्मणोर्भेदबोधकानि इत्यत्र न विवादः कर्तुं शक्यः अद्वैतिभिः। शङ्कराचार्यैरेव तथाऽङ्गीकृतत्वात्।

श्रुतिसूत्रगीतोक्तस्य भेदस्य असत्यत्वकथनं (श्रुतिसूत्रगीतानामप्रामाण्यकथनं) अवैदिकानां शोभावहं न तु वैदिकानामिति। १-२ ६

ॐ अर्भकौकस्त्वात्तद्व्यपदेशान्नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ

'एष म आत्मांतर्हृदये' इति परिच्छिन्नायतनत्वात्, 'अणीयान् व्रीहेर्वा यवाद्वा' इति अणीयस्त्वव्यपदेशात्, शारीर एव आराग्रमात्रो जीव इहोपदिश्यते न सर्वगतः परमात्मेति प्राप्ते यथा सर्वगतमपि सत् व्योम सूचीपाशाद्यपेक्षया अर्भकौकोऽणीयश्च व्यपदिश्यते यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधिपतिरिति व्यपदिश्यते तथा उपासनार्थं सर्वगतोऽपि अणीयस्त्वादिना व्यपदिश्यते यथा शालग्रामे हरिः इत्यर्थकतया व्याख्यातत्वेन जीवब्रह्मणोर्भेदबोधकमेवेदं सूत्रम्। १-२-७

ॐ संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ

व्योमवत् सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबंधात् चिद्रूपतया च शारीरादविशिष्टत्वात् सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येतेति चेन्न 'वैशेष्यात्' विशेषो हि शरीरपरमात्मनोः एकः कर्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च एकस्तद्विपरीतोऽपहतपाप्मत्वादि-गुणः एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्येत्यर्थकतया व्याख्या-तत्वेन जीवब्रह्मणोर्भेदबोधकमेवेदं सूत्रम् । शङ्कराचार्यकृतस्य उत्सूत्रार्थकथनस्य विचारे नात्रावसरः । १-२ ८

ॐ अत्ता चराचरग्रहणात् ॐ ॐ प्रकरणाच्च ॐ

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः (का.१-२-२४) इति कश्चिदत्ता प्रतीयते । स किं अग्निर्वा जीवो वा परमात्मा वेति संशये, 'अग्निरन्नाद' (बृ,१-४-६) इति श्रुतिप्रसिद्धिभ्यां अग्निरिति वा 'तयोरन्यः पिप्पलं स्वाद्वत्ति इति दर्शनात्, जीवो वा भवितुमर्हति न परमात्मा । अनश्नन्नन्यो अभिचाकशीति ( मुं. ३ १-१ ) इति परमात्मनः अनदनोक्तेरिति प्राप्ते- 'अत्ता' परमात्मा भवितुमर्हति । 'चराचरग्रहणात् अद्यतया सर्वस्यग्रहणात्' न जायते न म्रियते वा विपश्चित् (का. १-२-१८) इत्यादिब्रह्मप्रकरणाच्चेत्यर्थकतया व्याख्याततत्वेन जीवब्रह्मणोर्भेद-बोधकमेवेदं सूत्रद्वयम् । १ २९ १०

ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छाया तपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः (का. १ ३-१) इति वाक्ये प्रतिपाद्यौ किं बुद्धिजीवौ उत जीवपरमात्मानौ इति सन्दिह्य बुद्धिजीवाविति पूर्वपक्षयित्वा, जीवपरमात्मानाविति सिद्धांत-

यित्वा, जीवस्तावत्पिबति ईश्वरस्तु पाययतीति पिबतीत्युच्यते, पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् , इति व्याख्यातत्वेन पातृत्वपाययितृत्वरूपविरुद्धधर्माधिकरणत्वेन विज्ञानात्मपरमात्मानौ इति द्विवचनप्रयोगेण च, जीपरमात्मनोर्भेदबोधकमेवेदं सूत्रम् । १-२-११

ॐ विशेषणाच्च ॐ

'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' (का. १-३-३) इत्यादिना ग्रन्थेन विज्ञानात्मानं रथिनं संसारमोक्षयोर्गंतारं, 'सोऽध्वनःपारमाप्नोति तद्विष्णोः परमं पदम्"( का. १-३-९ ) इति च परमात्मानं गन्तव्यं, तथा, 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्टं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' ( का. १-२-१२ ) इति पूर्वस्मिन्नपि ग्रन्थे मंतृमंतव्यत्वेनैतावेव विशेषितौ । तस्मादिह जीवपरमात्मानावुच्येयातामित्यर्थकतया व्याख्यातत्वेन गंतृगंतव्यत्वेन मंतृमंतव्यत्वेन च जीवपरमात्मनोर्भेदबोधकमेवेदं सूत्रम् । १-२-१२

ॐ अंतर उपपत्तेः ॐ

'य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" ( छां. ४ १५ )इति वाक्ये अक्ष्यधिकरणः किं बिज्ञानात्मा=जीवः उत देवतात्मा इंद्रियस्याधिष्ठाता अथवा ईश्वर इत्यादि संशय्य, अंतरः अक्ष्यधिकरणः जीव इति वा आदित्यपुरुषो वा इत्यादि पूर्वपक्षयित्वा, चक्षुरंतस्थः परमेश्वर एव 'उपपत्तेः' चक्षुरन्तस्थे उक्तानां आत्मत्वामृतत्वाभयत्वानां परमेश्वर उपपत्तेरित्यर्थकतया व्याख्यातत्वेन जीवपरब्रह्मणोर्भेदप्रतिपादकमेवेदं सूत्रम् । १-२-१३

आकाशवत्सर्वगतस्य ब्रह्मणः अक्षिरूपं अल्पस्थानं कथमुपपद्यते इत्याशङ्कायां प्रवृत्तम्–

ॐ स्थानादिव्यपदेशाच्च ॐ

इति सूत्रम् । यदि चक्षुरेकमेव स्थानं व्यपदिश्येत तदा इयं शङ्का स्यात् । यः पृथिव्यां तिष्ठन् यश्चक्षुषि तिष्ठन् यो वायौ तिष्ठन् इत्याद्यनेकस्थानानां व्यपदेशात् , परमात्मा सर्वान्तस्थोऽपि चक्षुरन्तस्थो भवितुमर्हति इति पूर्वसूत्रोक्तार्थस्थापकतया व्याख्यातत्वेन पूर्वसूत्रवद्भेदबोधकमेवेति । १-२-१४

ॐ सुखविशिष्टाभिधानादेव च ॐ

' प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्म, ' इति वाक्योपक्रमे सुखविशिष्टब्रह्मणः अभिधानात् चक्षुरंतस्थः परमात्मैवेति पूर्वोक्तस्यैव स्थापकतया व्याख्यानाज्जीवब्रह्मणोर्भेदबोधकमेवेदमपि सूत्रम् । १-२-१५

ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः । यस्मात् श्रुतोपनिषत्कस्य श्रुतिरहस्यविज्ञानस्य ब्रह्मविदा या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ ' अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते ' (प्र. १-१० ) इति । स्मृतावपि– ' अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो-जनाः ' ॥ ( गी. ८ २४ ) इति । सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते । अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्ति ' इत्युपक्रम्य ' आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ' ( छां. ४-१५ ५ ) इति । तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्याऽक्षिस्थानस्य ब्रह्मत्वं निश्ची-

यते इति व्याख्यातत्वेन ज्ञातृज्ञेयभावगंतृगंतव्यभावादिना जीवपरमात्मनोर्भेदबोधकमेवेदं सूत्रम् । १-२-१६

ॐ अनवस्थितेरसंभवाच्च नेतरः ॐ

सर्वशरीरस्थितस्य जीवस्य चक्षुर्मात्रे अवस्थितिकथनायोगात् अमृतत्वादिगुणानामसम्भवाच्च इतरः परमात्मनोऽन्यः जीवः (विज्ञानात्मा) न चक्षुरन्तस्थ इत्याद्यर्थकतया व्याख्यातत्वेन जीवब्रह्मणोर्भेदबोधकमेवेदं सूत्रम् । १-२-१७

'य इमं लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति इत्युपक्रम्य श्रुतेषु यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, एष ते आत्माऽन्तर्याम्यमृतः (बृ. ३-७-१-२) इत्यादिवाक्येषु अधिदैवतं अधिलोकं अध्यात्मं अधिवेदं अधियज्ञं अधिभूतं च कश्चिदवस्थितोऽन्तर्यामी श्रूयते । स किं अधिदैवाद्यभिमानी देवतात्मा कश्चित्, किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी किं वा परमात्मा इति संशय्य पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् योगी वा स्यात् इति पूर्वपक्षे च प्रवृत्ते–

ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ

इतिसूत्रं, अधिदैवादिषु श्रूयमाणः अंतर्यामी परमात्मैव नान्यो देवतादिः । 'तद्धर्मव्यपदेशात्' पृथिवीपृथिव्यभिमानिदेवतादिरूपसमस्तजगतः अंतस्तिष्ठन् यमयितृत्वात् अमृतत्वात् अभयत्वात् पृथिव्याद्यभिमानिदेवताऽज्ञेयत्वपूर्वकं पृथिव्याद्यभिमानिदेवताभिन्नत्वतदन्तर्यामित्वादिव्यपदेशादित्यर्थकतया व्याख्यातं पृथिव्यादिदेवेभ्यःभिन्नं परमात्मानं बोधयति । १-२-१८

ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ

इदं सूत्रं, सांख्यस्मृत्युक्तं प्रधानं पृथिव्याद्यन्तर्यामि भवितुं नार्हति प्रधानधर्माणामन्तर्यामिणि कथनाभावात् इति व्याख्यातृतया प्रधानादिजडभेदं ब्रह्मणः कथयति। १-२-१९

ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ

शारीरश्च (जीवश्च)नांतर्यामी। यतः 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं' इति 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यं' इति काण्वमाध्यन्दिनशाखिनौ अंतर्यामिणो भेदेन एनं शारीरं [जीवं] पृथिव्यादिवत् अधिष्ठानत्वेन नियम्यत्वेन चाधीयते तस्माच्छारीरात् [जीवात्] अन्य ईश्वरोऽन्तर्यामीति सिद्धमिति व्याख्यातृत्वेन जीवब्रह्मणोर्भेदं गमयति।

यत्पुनरुक्तं जीवब्रह्मणोर्भेदनिषेधिकया 'नान्योऽतोऽस्ति-द्रष्टा" इत्यादिश्रुत्या विरोधात्। 'अंतर्याम्यधिदैवादिषु तद्धर्म-व्यपदेशात्' 'न च स्मार्तमतद्धर्माभिलापात् 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति सूत्रैः तद्गृहीतैः 'यः पृथिव्यां तिष्ठन्' 'यो विज्ञाने तिष्ठन्' 'यः सर्वेषु भूतेषु तिष्ठन् इत्याद्येकविंशतिवाक्यैः प्रतिपादितस्य भेदस्य मिथ्यात्वं, तदत्यन्तमयुक्तम्। बहुबाधस्य अन्याय्यत्वात्। 'नान्योऽतोऽस्ति द्रष्टा इति श्रुतिरपि न भेदं निषेधतीति बाधिकैव भवितुं नार्हतीत्येष विचारः बहुस्थलेषु कृतः तत्रैव द्रष्टव्यः। पुनः पुनः शङ्कराचार्यैरुक्तमेव उच्यते तथा अस्माकमपि खण्डितस्यैव खण्डनमापद्यते इति नास्मिन् कर्मणि व्यापारयामः आत्मानमधिकम्। स्मृतेश्च। (१-२-६) इति सूत्रव्याख्याने किंचित्प्रदर्शितं तथा अन्यत्रापि।

किंच सर्वस्य कल्पितत्वाङ्गीकारेण ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते । तथा च श्रुतिः—'यत्र हि द्वैतमिव भवति तदितरः इतरं पश्यति इत्यविद्याविषये सर्वव्यवहारं दर्शयति । 'यत्रत्वस्य सर्व-मात्मैवाभूत् तत्केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहार वार-यति इति यदुक्तं तदप्यसमञ्जसम् । 'यत्र हि द्वैतमिव भवति' इति श्रुतिः शङ्कराचार्याद्यैरेव 'ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वम्'इत्यादिवाक्येन द्वैतस्य पारमार्थिकत्वं बोधयतीत्युक्त-त्वेन तस्या जगन्मिथ्यात्वबोधकत्वाभवात् । यत्र त्वस्य सर्वमात्मैवा-भूदित्युत्तरवाक्येऽपि जीवब्रह्मणोर्भेदबोधनाच्च । सर्वमेतदादिकं श्रुत्यर्थविचारे विवृतत्वेन नात्र पुनरुच्यते । १-२-२०

ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ

'अथ परा यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यमग्राह्यमगो-त्रमवर्णमचक्षुःश्रोत्र तदपाणिपादं । नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भू-तयोनिं परिपश्यंति धीराः' ( मुण्ड. १।१।५।६ ) इति वाक्ये श्रूय-माणः अदृश्यत्वादिगुणको भूतयोनिः प्रधानं स्यादुत शारीरः (जीवः) आहोस्वित् परमेश्वर इति संदिह्य, प्रधानमिति किं वा जीव इति पूर्व-पक्षयित्वा, 'अदृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव नान्यः प्रधानं जीवो वा, 'धर्मोक्तेः=सर्वज्ञत्वसर्ववित्वादिधर्मोक्तेः' इति व्याख्याततत्वेन ब्रह्मणः चेतनाचेतनात्मक (जीवजडात्मक) प्रपञ्चाद्भे-दप्रतिपादकमेवेदमपि सूत्रम् । १।२।२१

ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ

परमेश्वर एव भूतयोनिः नेतरः शारीरः, कुतः विशेषणभेदव्यप-देशाभ्यां—शारीरात् जीवात् विलक्षणत्वेन 'दिव्यो ह्यमूर्तः पुरुषः स

बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतःपरः' [मुं.२।१।२] इति दिव्यत्त्यादिविशेषणवत्वेन व्यपदेशात्' इति व्याख्याततया, जीवब्रह्मणोर्भेदं, 'परमेश्वर एव भूतयोनिः नेतरत् प्रधानं' अक्षरात्परतः पर इति प्रधानात् भेदेन व्यपदेशात्' इति च व्याख्याततया प्रधानब्रह्मणोर्भेदं च बोधयतीदं सूत्रम् । १।२।२२

ॐ रूपोपन्यासाच्च ॐ

इति सूत्रं, 'अदृश्यत्वादिगुणकः भूतयोनिः परमेश्वर एव, न जीवः नापि प्रकृतिः; अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ...... एष सर्वभूतान्तरात्मा' ( मुं. २।१।४ ) इति रूपोपन्यासात्' इति व्याख्यातत्वेन प्रधानजीवयोः ब्रह्मणा भेदं व्यपदिशति । १।२।२३

'आत्मानं वैश्वानरमुपास्ते' (छां. ५।११।१६ ) इति वाक्ये श्रूयमाणः वैश्वानरः जाठराग्निर्वा भूताग्निर्वा तदभिमानिनी देवता वा जीवो वा अथ परमेश्वर इति संदिह्य, जाठराग्निर्वा भूताग्निर्वा अग्न्यभिमानिनी देवता वा जीवो वा न परमेश्वर' इति पूर्वपक्षे प्राप्ते प्रवृत्तेन

ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ

इतिसूत्रेण, 'वैश्वानरः परमात्मैव न जीवादिः साधारणशब्दविशेषात् । वैश्वानरात्मशब्दौ जीवादिसाधारणौ । तथापि सर्वपापदाहकज्ञानविषयत्वादिविशेषाणां ( धर्माणां ) कथनात्' इति व्याख्याततया अग्न्यभिमानिदेवताजीवादिभिः ब्रह्मणः भेदः कथ्यते । १।२।२४

ॐ स्मर्यमाणमनुमानं स्यात् ॐ

इति सूत्रम्, 'इतश्च परमेश्वर एव वैश्वानरः ( न जीवः ) 'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं*

---

* चक्षोः सूर्यो अजायत मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत इति पुरुषसूक्तोक्त रीत्या लोकात्मने इत्यस्य लोककारणत्वमर्थः आत्मशब्दस्य कारणवाचित्वात् ।

तस्मै लोकात्मने नमः' इति स्मृतौ स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेऽनुमानं लिङ्गं स्यात् इति व्याख्याततया जीवब्रह्मणोर्भेदबोधकमेवेति । १।२।२५

ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ

अन्यत्र रूढवैश्वानरशब्दात् अग्निशब्दाच्च तथा प्राणाहुत्यधिकरणतादिसङ्कीर्तनात् 'पुरुषेऽन्तःप्रतिष्ठितं वेदेति' अंतःप्रतिष्ठानाच्च वैश्वानरः परमेश्वरो भवितुं नार्हति इत्याशङ्क्य तथोपासनार्थमुपदेशात् अन्यत्र मूर्धैव सुतेजा इत्याद्युक्तधर्मस्यासम्भवात् पुरुषत्वकथनाच्च वैश्वानरः परमात्मैवेति शङ्करेण व्याख्याततत्वेन जडजीवाभ्यां ब्रह्मणः भेदबोधकमेवेदं सूत्रम् । १।२।२६

उक्तकारणादेवाग्निर्वा तच्छरीरस्थदेवता वा न वैश्वानर इत्यर्थकतया व्याख्यातम् -

ॐ अत एव न देवता भूतं च ॐ

इति सूत्रमपि जीवजडाभ्यां ब्रह्मणः भेदबोधकमेव । १।२।२७

ॐ साक्षादप्यविरोधं जैमिनिः ॐ

ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ

ॐ अनुस्मृतेर्बादरिः ॐ

ॐ संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॐ

ॐ आमनंति चैनमस्मिन् ॐ

इमानि सूत्राण्यपि वैश्वानरस्य परमात्मत्वप्रतिपादकान्येवेति व्याख्याततया पूर्वसूत्रवदेव भेदपराण्येवेति । १।२।२८,२९,३०,३१

इति प्रथमाध्यायस्य द्वितीयः पादः

## अथ प्रथमाध्याये तृतीयः पादः

### ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ

'यस्मिन् द्यौः पृथिवी चांतरिक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' (मु. २।२।५) इत्यस्मिन्वाक्ये श्रूयमाणं द्युभ्वाद्यायतनं किं परब्रह्म ? किं वा सांख्यस्मृतिसिद्धं प्रधानं ? किं वा श्रुतिप्रसिद्धो वायुः ? किं वा शारीरः (जीवः)? किं हिरण्यगर्भो वा ? इति संशय्य, 'प्रधानं स्यात्, अथवा वायुः स्यात्, जीवो वा स्यात्, हिरण्यगर्भो वा स्यात्, इति पूर्वपक्षयित्वा, द्युभ्वाद्यायतनं परं ब्रह्मैव, न प्रधानाव्याकृतवायुशारीर (जीव) हिरण्यगर्भाः, स्वशब्दात्, 'तमेवैकं जानथ आत्मानं इति आत्मशब्दात्। आत्मशब्दश्च परमात्मपरिग्रह एव सम्यगवकल्पते न जीवादिपरिग्रहे' इति व्याख्यातत्वेन, प्रधान-वायुजीवहिरण्यगर्भादिभ्यो ब्रह्मणः भेदबोधकमेवेदं सूत्रम्। १।३।१

द्युभ्वाद्यायतनं परमेव ब्रह्म। कुतः ?

### ॐ मुक्तोपसृप्यव्यपदेशात् ॐ

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥' (मु. २।२।८) इत्युक्त्वा 'तथा 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' [मु. ३।२।८] इति मुक्तैः प्राप्यत्वव्यपदेशात्। मुक्तोपसृप्यत्वं च ब्रह्मणः तदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' [बृ. ४।४।७] इत्यादि शास्त्रे प्रसिद्धं, प्रधानवायु-जीवहिरण्यगर्भाणां न मुक्तैः प्राप्यत्वं क्वचिदपि शास्त्रे प्रसिद्धं' इति व्याख्यातत्वेन जीवादिभ्यः परब्रह्मणो भेदबोधकमेवेदं सूत्रम्।

तथा सूत्रगृहीता 'परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतिरपि भेदबोधिकैव प्राप्यप्राप्तृभावेनेति ३।२।२७ सूत्रभाष्ये शङ्कराचार्यैरुक्तम्। १।३।२

ॐ नानुमानमतच्छब्दात् ॐ

'यथा परब्रह्मणो द्युभ्वाद्यायतनत्वप्रतिपादकः शब्दोऽस्ति तथा सांख्यानुमानपरिकल्पितप्रधानस्य वायोर्वा प्रतिपादकशब्दस्याभावान्न प्रधानवायू द्युभ्वाद्यायतने' इति व्याख्यातत्वेनेदमपि सूत्रं भेदप्रतिपादकमेव। १।३।३

ॐ प्राणभृच्च ॐ

'यः सर्वज्ञः सर्ववित्' इति द्युभ्वाद्यायतने श्रुतसार्वज्ञादेर्जीवेऽसंभवान्न जीवो न द्युभ्वाद्यायतनं किंतु ब्रह्मैवेति व्याख्यातत्वेन इदमपि सूत्रं जीवब्रह्मणोर्भेदबोधकमेव। १।३।४

ॐ भेदव्यपदेशात् ॐ

तमेवैकं जानथात्मानं इति मुमुक्षोर्ज्ञातुर्जीवस्य द्युभ्वाद्यायतनेन आत्मशब्दवाच्येन ज्ञेयेन ब्रह्मणा ज्ञातृज्ञेयभावेन भेदव्यपदेशान्न द्युभ्वाद्यायतनं जीवः किंतु परब्रह्मैव इति व्याख्यातत्वेन जीवब्रह्मणोर्भेदः कथ्यतेऽनेन सूत्रेणापि। १।३।५

ॐ प्रकरणात् ॐ

'अस्य ब्रह्मप्रकरणत्वादेतत्प्रकरणोक्तं द्युभ्वाद्यायतनं ब्रह्मैव न तु प्राणभृत् (जीवः) इति व्याख्यातत्वेन' इदमपि सूत्रं जीवब्रह्मणोर्भेदबोधकमेव। १।३।६

ॐ स्थित्यदनाभ्यां च ॐ

'द्युभ्वाद्यायतनं च प्रकृत्य, 'द्वासुपर्णा सयुजा सखाया' (मु. ३।१।१) इत्यत्र स्थित्यदने निर्दिश्येते। 'तयोरन्यः पिप्पलं

स्वाद्वत्ति ' इति कर्मफलाशनं, ' अनश्नन्नन्योऽभिचाकशीति ' इति औदासीन्येनावस्थानं च। ताभ्यां स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्रगृह्येते। यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितस्ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते; अन्यथा ह्यप्रकृतवचनमाकस्मिकमसंबद्धं स्यात्। ........ तस्मात्परमेव ब्रह्म द्युभ्वाद्यायतनं ' इति व्याख्यातमिति इदमपि सूत्रं जीवब्रह्मणोर्भेदबाधकमेव। १।३।७

ॐ भूमा संप्रसादाद्ध्युपदेशात् ॐ

' भूमा त्वेव विजिज्ञासितव्यः ' (छां. ७।२।३।२४) इत्यादिवाक्योक्तो भूमा, प्राणो वा स्यादाहोस्वित् परमात्मेति संशये, प्राणो भूमेति पूर्वपक्षे, भूमा परमात्मैव न प्राणः, सम्प्रसादात्-प्राणात् अधि ऊर्ध्वं भूम्नः उपदिश्यमानत्वात्। यदि प्राणः भूमा स्यात् तदा प्राणादूर्ध्वं भूम्नः उपदेशो न स्यात्तस्मादस्ति प्राणादधि भूम्न उपदेश इति प्राणादन्यः परमात्मा भूमा भवितुमर्हति " इति व्याख्यातत्वेन, प्राणपरमात्मनोर्भेदबोधकमेवेदं सूत्रम्। १।३।८

ॐ धर्मोपपत्तेश्च ॐ

भूम्नि श्रुतानां सत्यत्वस्वमहिमप्रतिष्ठितत्वसर्वगतत्वादिधर्माणां परमात्मन्युपपत्तः अन्यत्र प्राणेऽनुपपत्तः भूमा परमात्मैव न प्राणः ' इति व्याख्यातत्वेन प्राणब्रह्मणोर्भेदबोधकमेवेदं सूत्रम्। १।३।९

ॐ अक्षरमम्बरांतधृतेः ॐ

' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति, स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवन्दत्यस्थूलमनणु ' (बृ. ३।८।७।८) इत्यत्र श्रूयमाणः अक्षरः वर्णो वा परमेश्वर इति संशय्य, वर्ण इति पूर्वपक्षे, 'अक्षरशब्दवाच्यः परमात्मैव, अंबरांतधृतेः = पृथिव्याद्याकाशांतस्य धारणात् " इति व्याख्याततया वर्णात्मकादक्षरात्परब्रह्मणः भेदप्रतिपादकमिदं सूत्रम्। एतत्सूत्रगृहीतायां ' एतस्मिन् खल्वक्षरे

गार्गि आकाश ओतश्च प्रोतश्च इति ' श्रुतौ पृथिव्याद्याकाशांतस्य धार्यत्वेन अक्षरनामकब्रह्मणः धारकत्वेन श्रवणात् धार्यस्य पृथिव्याद्यांकाशान्तस्य धारकेण परमात्मना भेद उक्तो भवति । १।३।१०

ॐ सा च प्रशासनात् ॐ

' सा च अंबरांतधृतिः परमेश्वरस्यैव कर्म, नान्यस्य; कुतः ' प्रशासनात् " = ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः " (बृ. ३।८।९) इति वाक्ये आज्ञया धारकत्वं श्रूयते । ' यतः न चाचेतनस्य प्रशासनं श्रूयत " इति व्याख्यातत्वेन वर्णब्रह्मणोर्भेदबोधकमेवेदं सूत्रम् । एतत्सूत्रगृहीतया एतस्य वा अक्षरस्येति श्रुत्या सूर्याचन्द्रमोभ्यां ब्रह्मणो (अक्षरस्य) भेद एवोक्तः।११

ॐ अन्यभावव्यावृत्तेश्च ॐ

ब्रह्मैवाक्षरशब्दवाच्यं अक्षरशब्दवाच्यतया शङ्कयमानवर्णादिभ्यो द्रष्टृत्वादिना अक्षरस्य व्यावर्तनात् इति व्याख्यततया इदमपि सूत्रं वर्णादिभ्यः परमात्मनो भेदबोधकमेव + । १।३।१२

ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ

' यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र. ५।२५) इति वाक्ये अभिध्यायीत इति अभिध्यातव्यत्वेनोपदिश्यमानं किमपरं ब्रह्म ? ( कार्यं ब्रह्म=चतुर्मुखः ) किं वा परब्रह्मेति संशये, अपरं ब्रह्मेति पूर्वपक्षे, परं ब्रह्मैवाभिध्यातव्यत्वेनोच्यते, ईक्षतिकर्मव्यपदेशात् , इति व्याख्याततया परापरब्रह्मणोर्भेदबोधकमेवेदं सूत्रम् । १।३।१३

---

+ तस्मात् वर्णप्रधानाव्याकृतजीवानामसम्भवात् सम्भवाच्च परमात्मनः परमात्मैवाक्षरमिति सिद्धमिति भामतीवाक्येनापि जीवपरमात्मनोर्भेदबोधकमिदंसूत्रमिति सिद्ध्यति ।

ॐ दहर उत्तरेभ्यः ॐ

' अथ यदिदमस्मिन् ब्रह्मपरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नंतराकाशः ' (८।१।१ ) इति वाक्ये पुण्डरीके श्रुत आकाशः, किं भूताकाशः ? किं वा विज्ञानात्मा ? (जीवः) अथवा परमात्मा ? इति संशये, दहराकाशः भूताकाशः स्यात् अथवा जीवः स्यात् इति पूर्वपक्षे प्राप्ते दहराकाशः परमेश्वर एव न जीवः नापि भूताकाशः; कुतः ? उत्तरेभ्यः –' एष आत्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः ' ( छां ६।८।१ ) इति उत्तरेभ्यः, आत्मत्वापहतपाप्मत्वसत्यसङ्कल्पत्वादिगुणेभ्यः । न ह्येते गुणाः भूताकाशे जीवे वा संभवन्ति ' इति व्याख्याततया, इदमपि सूत्रं जीवभूताकाशेभ्यो ब्रह्मणो भेदबोधकमेव । १।३।१४

ॐ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॐ

' किंच दहराकाशः परमेश्वर एव, गतेः सुप्तप्रजाप्राप्यत्व –कथनात् । सुप्तप्रजाप्राप्यत्वं हि ' सता सोम्य तदा संपन्नो भवति ' (छां. ६।८।१) इत्येवमादौ परमात्मधर्मतयाऽवगतं– तथा शब्दात् ' ब्रह्मलोकशब्दाच्च । ब्रह्मलोकशब्दो हि ब्रह्मैव लोकः ब्रह्मलोक इति व्युत्पत्त्या दहरस्य ब्रह्मत्वज्ञापकः । अहरहः ब्रह्मलोकगमनं ब्रह्मलोकशब्दस्य ब्रह्मैव लोक इति व्युत्पत्तिपरिग्रहे लिङ्गम् । नहि प्रजाः अहरहः कार्यब्रह्मणः लोकं सत्याख्यं गच्छन्ति, इति व्याख्याततया इदमपि सूत्रं भेदबोधकमेव । एतत्सूत्रगृहीता ' सता सोम्य तदा सम्पन्नो भवति इति श्रुतिरपि प्राप्यप्राप्तृभावेन जीवपरमात्मनोर्भेदं बोधयति । तथा व्याख्यातं शङ्कराचार्यैः (२।१।२२) सूत्रभाष्ये।१४

ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ

अयं दहरः परमेश्वर एव, धृतेः, अथ य आत्मा स सेतु-

विधृतिरेषां लोकानामसंभेदाय " (छां. ८।४।१) इति वाक्ये– यथोदकसन्तानस्य विधारयिता लोके सेतुः, क्षेत्रसम्पदामसम्भेदाय एवमयमात्मैषामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुरसम्भेदायासङ्करायेत्यवमिह प्रकृते दहरे विधारणलक्षणमहिम्नः श्रवणात् । अस्य महिम्नः धारणरूपमहिम्नः अस्मिन् परमात्मनि ' एतस्य अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' (बृ.) इति वाक्ये, तथा ' एष सर्वेश्वर एप भूताधिपतिरेष भूतपाल एष सेतुर्विधारणे एषां लोकानामसम्भेदाय ' इति वाक्ये च परमात्मधर्मतया उपलब्धेः ' इति भापितत्वेन जीवब्रह्मणोर्भेदबोधकमेवदं सूत्रम् । १।३।१६

ॐ प्रसिद्धेश्च ॐ

' आकाशशब्दस्य आकाशो ह वै नामरूपयोर्निर्वहिता [ छां ८।१४ ] सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ' [छां १। ९।१] इत्यादिषु परमात्मनि प्रयोगात् जीवे कुत्रापि आकाशशब्दस्य अप्रयोगात् दहराकाशः परमेश्वर एव न जीवः ' इति व्याख्याततया जीवब्रह्मणोर्भेदबोधकमेवदं सूत्रम् । १।३।१७

ॐ इतरपरामर्शादिति चेन्नासम्भवात् ॐ

यथा वाक्यशेषबलेन दहर इति परमेश्वरः गृह्यते तथा ' इतरपरामर्शात् ' इतरस्य जीवस्य ' अथ एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेतिहोवाच'(छां.८।३।४) इति सम्प्रसादशब्दवाच्यसुषुप्त्यवस्थावतः जीवस्य परामर्शात् दहराकाशः जीव एवेति चेन्न । असम्भवात् दहरे श्रुतधर्माणां जीवेऽसंभवात् परमात्मैव दहरः न जीवः ' इति व्याख्याततया सूत्रमिदं जीवब्रह्मणोर्भेदबोधकमेव । १।३।१८

ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ

इतरपरामर्शात् दहरः जीव इति या शङ्का दहरोक्तगुणानां जीवेऽसम्भवान्निराकृता अथेदानीं मृतस्येवामृतसेकात् पुनः समुत्थानं जीवाशङ्कायाः क्रियते । उत्तरस्मात् प्राजापत्यात् वाक्यात् । तत्र हि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मा' ( छां. ८।७।४) इति ब्रुवन् अक्षिस्थद्रष्टारं जीवमात्मानं निर्दिशति, तथा 'एष स्वप्ने महीयमानश्चरत्येष आत्मा' ( छां. ८।१०।१ ) इति वाक्यमपि जीवं निर्दिशति । अतः उत्तरवाक्ये जीवस्य कथनात् जीव एव दहराकाश इति चेन्न । आविर्भूतस्वरूपस्तु इत्यत्र तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः । नोत्तरस्मादपि वाक्यादिह जीवस्याशङ्का सम्भवतीत्यर्थः । कस्मात् ? यतः तत्रापि आविर्भूतस्वरूपो जीवो विवक्ष्यते इति व्याख्यातत्वेन दहरो न जीवः किंतु परमात्मैवेति जीवपरमात्मनोर्भेदबोधकमेवेदं सूत्रं । यद्यपि शङ्कराचार्यैः श्रुतिस्मृतिसूत्रानारूढा विषयाः उक्ताः ते तत्र तत्र खण्डिता इति नेहात्र खण्ड्यन्ते । 'स आत्मा तत्त्वमसि' 'परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यादिवाक्यानां भेदपरत्वं अभेदपरत्वाभावश्च तत्र तत्र प्रदर्शितो द्रष्टव्यः ।

आनन्दगिरि– ननु जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति किंतु सर्वत्र भेदमेवातो नैक्यमिष्टं तत्राह ।

रत्नप्रभा– अथवा सूत्रेष्वभेदो नोक्त इति भ्रांतिं निरस्यति प्रतिपाद्यं त्विति ।

भाष्यम्– प्रतिपाद्यं शास्त्रार्थमात्मैकत्वमेव दर्शयति 'शास्त्रदृष्ट्यातूपदेशो वामदेववत्' [ ब्र. सू. १।१।३० ] इत्यादिना । वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ।

आनन्दगिरि- आदिपदं आत्मेति तूपगच्छन्ति इत्यादिसंग्राहकमिति [ ब्र. सू. ४।१।३ ] आनन्दगिरिरत्नप्रभाव्याख्यानसहितेन

भाष्येण शङ्कराचार्यैरपि द्वित्रसूत्राणि विहाय सर्वेषां सूत्राणां जीवेश्वरभेदपरत्वं वर्णितम् । तेषामपि सूत्राणां अभेदपरत्वं नास्तीति उक्तमेव प्राक् इति । भेदबाधकानामभेदबोधकानां श्रुतिसूत्रगीतावाक्यानामभावात् भेदबोधकोपनिषदां कर्मकांडवाक्यानां कल्पितभेदकर्मप्रति-पादकत्वरूपाप्रामाण्यकल्पनमवैदिकानां नास्तिकानामेव शोभावहं न तु वैदिकानामिति । १।३।१९

ॐ अन्यार्थश्च परामर्शः ॐ

'अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः- 'अथ य एष संप्रसादः' [ छां. ८।३।४ ] इत्यादिः; स दहरे परमेश्वरे व्याख्यायमाने.... अनर्थकत्वं प्राप्नोति इति । अत आह अन्यार्थोऽयं जीवपरामर्शः न स्वरूपपर्यवसायी, किं तर्हि परमेश्वरस्वरूपपर्यवसायी । कथं? संप्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेंद्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान् नाडीचरोऽनुभूय श्रांतः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात् समुत्थाय सुषुप्त्यवस्थायां परंज्योतिराकाशशब्दितं परं ब्रह्म उपसंपद्य (प्राप्य) विशेषविज्ञानवत्त्वं च परित्यज्य स्वेन रूपेणाभिनिष्पद्यते । यदस्य उपसंपत्तव्यं प्राप्यं (परंज्योतिः ) येन रूपेण अयं अभिनिष्पद्यते स एष आत्माऽपहतपाप्मत्वादिगुणः उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते' इति व्याख्याततया, शरणं प्रेप्सुरिति १ शरण्यशरणयितृभावेन २ परं ब्रह्म उपसम्पद्य इति यदस्य उपसम्पत्तव्यं (प्राप्यं) परंज्योतिरिति च प्राप्यप्राप्तृभावेन ३ येन स्वरूपेण अभिनिष्पद्यते सः इति स्वरूपाभिव्यक्तिकारणत्वस्वरूपाभिव्यक्तयाश्रयत्वाभ्यां जीवब्रह्मणो भेद एवोक्तः ।.तथा परमेश्वर एवात्र दहराकाशो भवितुमर्हति न भूताकाशः जीवो वा इति सिद्धांतस्यैव दृढीकरणात् भूताकाशजीवयोर्ब्रह्मणा भेदबोधकमेवेदं सूत्रमिति । १।३।२०

ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ

'दहर आकाश' इति आकाशस्योक्तं दहरत्वं परमात्मनि नोपपद्यते; जीवे तूपपद्यते, अतो जीव एव दहराकाश इति चेत् न। तदुक्तं अर्भकौकस्त्वाधिकरणे आपेक्षिकाल्पत्वं परमात्मनि सम्भवतीत्युक्तम्। तस्मात् दहराकाशः परमात्मैव' इति व्याख्याततया इदं सूत्रमपि जीवब्रह्मणोर्भेदबोधकम्। १।३।२१

ॐ अनुकृतेस्तस्य च ॐ

इति सूत्रेण, 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः। तमेव भांतं अनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (मु. २।२।१०) इति वाक्ये सर्वभासकः इतराभास्यश्च किं तेजोधातुः ? उत प्राज्ञः आत्मा' (परमात्मा) इति संशये तेजोधातुरिति पूर्वपक्षे सर्वभासक इतराभास्यश्च प्राज्ञ एवात्मा भवति। कुतः ? अनुकृतेः-सूर्यादीनामनुभानश्रवणात्" इति व्याख्याततया तेजोधातोः परमात्मना भेद एव कथ्यत इति। १।३ २२

ॐ अपि च स्मर्यते ॐ

'अपिच ईदृग्रूपत्वं=सर्वभासकत्वं इतराभास्यत्वं च परमात्मनः एव स्मर्यते भगवद्गीतासु 'न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' (गी.) इति इतराभास्यत्वं 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (गी.) इति इतरभासकत्वं च प्रतिपादयति' इति व्याख्याततया पूर्वोक्तभेदबोधकमेवेदं सूत्रम्। १।३।२३

ॐ शब्दादेव प्रमितः ॐ

'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" [का २।४।१२] तथा अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स

एवाद्य स उ श्वः एतद्वैतत्' (२।४।१३) इति श्रूयमाणः पुरुषः किं जीवात्मा ? उत परमात्मा ? इति संशये जीवात्मा इति पूर्वपक्षे अंगुष्ठमात्रः पुरुषः परमात्मैव, न तु जीवः। कुतः शब्दात् ईशानो भूतभव्यस्येति, भूतभव्येशितृत्वश्रुतेः। न हि परमेश्वरादन्यस्य भूतभव्यपदार्थेशितृत्वं घटत इति व्याख्याततया जीवपरमात्मनोर्भेदबोधकमेवेदं सूत्रम्। १।३।२४

ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ

'सर्वगतस्यापि परमात्मनः हृदये अवस्थानमपेक्ष्य अंगुष्ठमात्रत्वमिदमुच्यते। ननुप्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यंगुष्ठमात्रत्वं नोपपद्यते इति शङ्कायां, मनुष्याधिकारत्वात्' इति व्याख्याततया पूर्वोक्तार्थस्यैव स्थापनात् पूर्वसूत्रवत् इदमपि सूत्रं जीवपरमात्मनोर्भेदबोधकमेव। १।३।२५

ॐ तदुपर्यपि बादरायणः संभवात् ॐ

इत्याद्यष्टसूत्रात्मकमिदमधिकरणं देवादीनामपि वेदविद्यायामधिकारसत्त्वं ज्ञापयति।

'मनुष्यानधिकरोति शास्त्रं न तु मनुष्यानेवेतीह इह ब्रह्मज्ञाने नियमोऽस्ति। 'तदुपरि'-तेषां मनुष्याणामुपरिष्टात् ये देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायणाचार्यो मन्यते। कस्मात्? सम्भवात्- अधिकारकारणीभूतार्थित्वस्य विग्रहवत्त्वेन सामर्थ्यादीनां सम्भवात्' इत्यर्थकतया व्याख्यातं तदुपर्यपीति सूत्रं, देवमनुष्यादिभेदबोधनद्वाराऽनेकजीवानामेकेन ब्रह्मणा भेदबोधकमेव। १।३।२६

ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ

'यदि विग्रहवत्त्वेन इंद्रादिदेवानां वेदविद्याधिकारो वर्ण्येत विग्रहवत्वात् ऋत्विगादिवत् देवादीनामपि स्वरूपसन्निधानेन कर्माङ्ग-

भावोऽभ्युपगम्येत तदा कर्मणि विरोधः स्यात् । नहींद्रादीनां स्वरूप-सन्निधानेन यागेऽङ्गभावो दृश्यते । न च संभवति । बहुषु यागेषु युग-पदेकस्येंद्रस्य स्वरूपसन्निधानानुपपत्तेरिति चेत् नायमस्ति विरोधः । 'अनेकप्रतिपत्तेः' एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिप-त्तिः संभवति । देवतानामनेकस्वरूपप्रतिपत्तेर्दर्शनात् । 'महिमान एवै षामेते त्रयस्त्रिंशत्वेव देवताः' (बृ. ३।९।१।२) इति ब्रुवंती श्रुतिः एकैकस्य देवतात्मनो युगपदनेकस्वरूपतां दर्शयति ' इति व्याख्या-ततया इदमपि गुणसूत्रं पूर्वोक्तार्थस्यैव व्यवस्थापकमिति पूर्वसूत्रवदेव भेदबोधकम् । १।३।२७

ॐ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ

'देवादीनां विग्रहवत्त्वेनास्मदादिवदनित्यत्वप्राप्त्या अनित्यानां देवादीनां वेदशब्दैः सह नित्यसंबंधासंभवात् । शब्दार्थयोर्नित्य-संबन्धमाश्रित्य वेदस्य यत्प्रामाण्यमुपपादितं तस्य विरोधः स्यात्तस्मा-न्न देवानामधिकारः स्यादिति चेत् न । 'अतः प्रभवात्' वेदादेव देवादीनामुत्पत्तेः । वेदादेव देवादीनामुत्पत्तिस्तु प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामवगम्यते ' इति व्याख्याततया पूर्वोक्तस्यैवार्थस्य प्रतिपादकत्वात्पूर्वसूत्रवदेव भेदबोधकमिदं सूत्रम् । १।३।२८

ॐ अत एव च नित्यत्वम् ॐ

'अत एव नियताकृतेर्देवादेर्जगतः वेदशब्दप्रभवत्वात् वेदशब्द नित्यत्वमपि प्रत्येतव्यं इति व्याख्याततया पूर्वोक्तार्थव्यवस्थापकमे-वेदं सूत्रम् । १।३।२९

ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ

'यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि संतत्यैवोत्पद्येरन्नि-रुध्येरंश्च ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात्सम्बन्ध-

नित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति। तदा कथमविरोध इति प्राप्ते अभिधीयते – समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च इति। अत्र सूत्रे पूर्वकल्पे विद्यमानानामुत्तरकल्पे जायमानानां देवादीनां समाननामरूपत्वात्प्रळये अवृत्तावपि देवादीनां स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवत् उत्तरप्रबोधेऽपि व्यवहारवत् कल्पांतरप्रभवप्रलययोरपि व्यवहारसम्भवात् शब्दस्याप्रामाण्याख्यविरोधो नास्ति। स्यादेतत्। स्वापे पुरुषाणां व्यवहाराविच्छेदात् स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोध-व्यवहारानुसन्धानसम्भवादविरुद्धम्। महाप्रलये तु सर्वव्यवहारोच्छेदात् जन्मांतरव्यवहारवच्च कल्पांतरव्यवहारस्यानुसन्धातुमशक्यत्वात् वैषम्यमिति। नैष दोषः। सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रळये परमेश्वरानुग्रहात् ईश्वराणां हिरण्यगर्भादीनां कल्पांतरव्यवहारानुसं-धानोपपत्तेः ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणां ईश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रबुद्धवत् कल्पांतरव्यवहारोपपत्तिः। समाननामरूपत्वं च। दर्शनात् 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' (ऋ. सं. १०।१९०।३) इत्यादिश्रुतेः स्मृतेश्च= 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः' इतिस्मृतेश्च सिद्धम्' इति व्याख्याततया जनकदेवानां तेषु परमेश्वरानुग्रहस्य च कथनेन देवादिजीवानां परमेश्वरेण भेद एव कथित इति। १।३।३०

ॐ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॐ

देवादीनां ब्रह्मविद्यायामनधिकारं जैमिनिर्मन्यते। कुतः? मध्वादिष्वसम्भवात् ब्रह्मविद्यायामधिकाराभ्युपगमे विद्यात्वाविशेषात् मध्वादिविद्यास्वपि अधिकाराभ्युपगमः प्रसज्येत। तच्च न

संभवति। ' असौ वाव आदित्यो देवमधु ' (छां.३।१।१ ) इत्यत्रादित्योपासनं विधीयते । नहि आदित्याख्यो देवः आदित्यमुपास्ते इति युज्यत इत्यादि ।

ॐ ज्योतिषि भावाच्च ॐ

'ज्योतिर्मण्डले आदित्यादिशब्दाः प्रयुज्यन्ते । तस्य च ज्योतिर्मंडलस्याचेतनत्वात् ज्योतिर्मंडलरूपाणां आदित्यादीनां न ब्रह्मविद्यायामधिकार ' इति द्वाभ्यां ब्रह्मविद्यायामधिकाराभाव इति पूर्वपक्षे प्राप्त आह-

ॐ भावं तु बादरायणोऽस्ति हि ॐ

' बादरायणस्त्वाचार्यः देवादीनामप्यधिकारभावं मन्यते । मध्वादिविद्यासु अधिकारासम्भवेऽपि अस्ति हि ब्रह्मविद्यायामधिकारः अर्थित्वसामर्थ्यादीनां सत्वात्' इत्यमीभिः त्रिभिः सूत्रैरपि देवादीनां ब्रह्मविद्यायामधिकाराभावे पूर्वपक्षिते, देवादीनां ब्रह्मविद्यायामधिकार इति सिद्धांत इति व्याख्याततत्वेन, देवादीनां परस्परं भेदः ज्ञातृज्ञेयभावादिना तैर्ब्रह्मणो भेदश्च उक्तो भवति । १।३।३१-३२-३३

ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ

इत्यादिपञ्चसूत्रात्मके अस्मिन्नधिकरणे शूद्रस्य वेदविद्याधिकारो निरस्यते । शूद्रोऽपि वेदविद्यायामधिकारी अर्थित्वसामर्थ्ययोः सत्वात् । ' तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः ' ( तै.सं. ७।१।१ ) इतिवत् शूद्रो विद्यायामनवक्लृप्त इति निषेधाश्रवणात् । अहहारेत्वाशूद्र तवैव सह गोभिरस्तु ' ( छां. ४.२।३ ) इति शूद्रेति सम्बोधितं पौत्रायणंप्रति रैक्केण संवर्ग ( प्राण ) विद्याया उपदिष्टत्वादिति प्राप्ते न शूद्रस्याधिकारः वेदाध्ययनाभावात् । वेदाध्ययनाभावश्च उपनयनाभावात् । उपनयनस्य च वर्णत्रयविषयत्वात् । पौत्रायणस्य शूद्रेति सम्बोधनं न

शूद्रत्वजातिनिमित्तं किंतु शुचा शोकेन रैक्वं प्रति आद्रवणं=प्राप्तिः तन्निमित्तमित्याह सूत्रकारः शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि इति ।

'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' (छां.४।१।३) इत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे । तं शोकं ऋषी रैक्वः शूद्रशब्देन सूचयांबभूव आत्मनः परोक्षज्ञताख्यापनाय शुचा अभिदुद्रुवे इति शूद्रशब्देन शुचा द्रवणं सूच्यते इति ।

ॐ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ

जानश्रुतिः पौत्रायणः न जात्या शूद्रशब्दवाच्यः किंतु शुचा द्रवणनिमित्तेन शूद्रशब्दवाच्यः चैत्ररथेन अभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गात् क्षत्रियत्वमस्योत्तरवाक्येन गम्यते । अतः, तथा

ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ

उपनयनरूपसंस्कारवत एव विद्यायामधिकारकथनात् शूद्राणामुपनयननिषेधात् न शूद्रस्य विद्यायामधिकार इति ।

ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ

जाबालस्य ( सत्यकामस्य ) सत्यवचनेन शूद्रत्वाभावनिर्धारणे सति गौतमस्य जाबालोपनयने प्रवृत्तेः शूद्राणामुपनयनसंस्काराभावः ।

ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ

स्मृतौ शूद्राणां वेदश्रवणनिषेधात् वेदाध्ययननिषेधात् वेदार्थज्ञानादीनां निषेधात् न शूद्राणां वेदविद्याधिकारः इति व्याख्याततया विधिनिषेधयोः ब्रह्मणः असंभवात्, निषेधान्यथानुपपत्त्या पञ्चसूत्रात्मकेनानेनाधिकरणेन ब्रह्मजीवयोर्भेदसिद्धिः । (१० अ) १।३।३४ ३५-३६-३७ ३८

ॐ कम्पनात् ॐ

'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ' (का. २।६।२) इति वाक्ये सर्वजगतः स्पंदकः प्राणः श्रूयते स वायुरिति पूर्वपक्षे प्राप्ते

प्राणः परमात्मैव जगतः कंपनात् (जगत्कंपकत्वात्) न वायुः। 'न प्राणेन न अपानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवंति यस्मिन्नेतावुपाश्रितौ ' ( २।५।५ ) इति वाक्यं, प्राणस्य जगत्कंपकत्वं ( जगज्जीवनकारणत्वं ) निषिध्य, परमात्मन एव दर्शयति । ' तदेव शुक्रं तद्ब्रह्मेति ' पूर्ववाक्ये ' भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिंद्रश्च वायुश्च मृत्युर्धावति पञ्चमः ( का. २।६।३ ) इत्युत्तरवाक्येऽपि ब्रह्मण उक्तत्वात् मध्ये उक्तः प्राणोऽपि ब्रह्मैव ।

' तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. ६।१५) इति मोक्षजनकज्ञानविषयत्वस्य ब्रह्मलिङ्गत्वेन तस्य च 'य एतद्विदुरमृतास्ते भवन्ति इति प्राणे श्रवणात् प्राणो ब्रह्मैवेति सिद्धांतितत्वेन इदमपि सूत्रं ब्रह्मणः मोक्षजनकज्ञानविषयत्वेन जीवस्य ज्ञातृत्वेन जडप्राणस्योभयाभावेन जडजीवेभ्यो ब्रह्मणो भेदबोधकमेवेति १।३ ३९

ॐ ज्योतिर्दर्शनात् ॐ

' एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ' (छां.८।१२।३) इति वाक्ये श्रुतं ज्योतिः, किं तेजः ? किं वा परं ब्रह्मेति संशये, ज्योतिः प्रसिद्धतेज एवेति पूर्वपक्षे, परमेव ब्रह्म ज्योतिःशब्दबोध्यं,' दर्शनात् परब्रह्मण एवास्मिन् प्रकरणे वक्तव्यत्वेनानुवृत्तिदर्शनात् ' इति व्याख्यातत्वेन सूत्रेणानेन जडतेजसः ब्रह्मणा भेदसिद्धिः । १।३।४०

ॐ आकाशोऽर्थांतरत्वादिव्यपदेशात् ॐ

आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा (छां.८।१४।१) इति वाक्ये उक्तः आकाशः किं प्रसिद्धभूताकाशः ? किं वा परं ब्रह्मेति संशये, भूताकाश इति पूर्वपक्षे च, आकाशः परमेव ब्रह्म अर्थान्तरत्वादिव्यपदेशात् - नामरूपविलक्षणत्वादिव्यपदेशात् । नामरूपांतःपातिनो भूताकाशस्य तद्भिन्नत्वं तत्कर्तृत्वं च न युक्तम् ' इति व्याख्याततया, अनेन सूत्रेण भूताकाशात् नामरूपात्मकात् प्रपञ्चाच्च ब्रह्मणः भेदः कथ्यत इति । १।३।४१

ॐ सुषुप्त्युत्क्रांत्योर्भेदेन ॐ

' कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः ( बृ. ४ ३।७ ) इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः । तद्वाक्यं किं संसारिजीवप्रतिपादकम् ? उतासंसारिपरमात्मप्रतिपादकमिति संशये, संसारिजीवप्रतिपादकमिति पूर्वपक्षे, सिद्धांतितम्— परमेश्वरोपदेशपरमेवेदं वाक्यं, सुषुप्तौ उत्क्रांतौ च शारीराद्भेदेन (जीवाद्भेदेन) परमेश्वरस्योपदेशात् । सुषुप्तौ तावत् प्राज्ञेनात्मना संपरिष्वक्तः न बाह्यं किंचन वेद नांतरम् [बृ.४।३।२१] इति शारीराद्भेदेन परमेश्वरं व्यपदिशति, तथोत्क्रांतावपि ' अयं शारीर आत्मा प्राज्ञेनान्वारूढः उत्सर्जद्याति, ( बृ. ४।३।३५ ) इति जीवाद्भेदेन परमेश्वरं व्यपदिशति तस्मात्सुषुप्त्युत्क्रांत्योर्भेदेन व्यपदेशात्परमेश्वर एवात्र विवक्षित इति गम्यते ' इति व्याख्याततया, अनेन सूत्रेण जीवपरमात्मनोर्भेदः उच्यते ।१।३।४२

ॐ पत्यादिशब्देभ्यः ॐ

इति सूत्रेऽपि ' सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ' इत्यसंसारिस्वरूपप्रतिपादनपराणां पत्यादिशब्दानां सत्वात् तथा ' स

न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् इति संसारिस्वभाव-प्रतिषेधकानां शब्दानां सत्वात् असंसारी परमेश्वर इहोक्तः ' इति व्याख्याततया, सर्वाधिपतित्वादिना जीवपरमात्मनोर्भेद उक्तः । १।३।४३

॥ प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

॥ अथ प्रथमाध्याये चतुर्थः पादः ॥ ॐ

आनुमानिकमप्येकेषामितिचेन्नशरीररूपकविन्यस्तगृहीतेर्दर्शयतिच ॐ

इत्यादिसूत्रसप्तकात्मकमधिकरणं सांख्याभिमतप्रधानस्य अशब्दत्वं=जगत्कारणत्वबोधकशब्दाप्रतिपाद्यत्वं प्रतिपादयितुं प्रवृत्तम् । ईक्षतेर्नाशब्दमिति सूत्रे यत्प्रधानस्याशब्दत्वमुक्तं तन्न युक्तम् । आनुमानिकमपि अनुमाननिरूपितमपि प्रधानं ' महतः परमव्यक्तमव्यक्तात्पुरुषः परः ' ( का. १।३।११ ) इति एकेषां शाखिनां शब्दवदुपलभ्यते । तदेव जगतः कारणमिति चेत् न । ' शरीररूपकविन्यस्तगृहीतेः ' न प्रधानं अव्यक्तशब्दप्रतिपाद्यं किं तु ' आत्मानं रथिनं विद्धि शरीरं रथमेव च ( का. १।३।३।४ ) इति रथरूपकतया विन्यस्तस्य शरीरस्य, न व्यक्तं अव्यक्तमिति व्युत्पत्त्या ग्रहणात् ; ' आत्मानं रथिनं विद्धि शरीरं रथमेव च इत्युक्तशरीरस्थाने ' महतः परमव्यक्तमव्यक्तात्पुरुषः परः ' इति अव्यक्तपदं प्रयुञ्जती श्रुतिः शरीरस्यैवाव्यक्तत्वं दर्शयतीति न सांख्याभिमतं प्रधानं अव्यक्तशब्द वाच्यं किंतु शरीरमेवेति शब्दाप्रतिपाद्यमानं प्रधानं न जगत्कारणं किंतु ब्रह्मैवेति व्याख्याततत्वेन प्रधानब्रह्मणोर्भेदाभिधायकमिदं सूत्रम् । १।४।१

यदुक्तं शरीरं अव्यक्तशब्दवाच्यमिति न तद्युक्तम् । शरीरस्य व्यक्तत्वेन ( स्पष्टत्वेन ) अस्पष्टवाचकाव्यक्तशब्दानर्हत्वादिति शङ्कायां प्रवृत्तं सूत्रम् ।

ॐ सूक्ष्मं तु तदर्हत्वात् ॐ

नात्र स्पष्टं ( दर्शनयोग्यं ) शरीमव्यक्तशब्देन गृह्यते । सूक्ष्मं तु शरीरकारणमव्यक्तशब्देन गृह्यते । तस्य शरीरकारणस्य सूक्ष्मस्य तदर्हत्वात् अव्यक्तशब्दार्हत्वादिति । १।४।२

यदुक्तं सूक्ष्मं शरीरकारणं अव्यक्तशब्दवाच्यं न प्रधानमिति न तद्युक्तम् । तस्यैव शरीरकारणस्य सूक्ष्मस्य प्रधानतया अभ्युपगमादिति शङ्कायां प्रवृत्तं सूत्रम् ।

ॐ तदधीनत्वादर्थवत् ॐ

अस्माभिरङ्गीकृतस्य भूतसूक्ष्मस्य 'तदधीनत्वात्' परमेश्वराधीनत्वात् न तत् सांख्याभिमतं स्वतंत्रं प्रधानं भवितुमर्हति किंतु ततोऽन्यदेव भूतसूक्ष्ममर्थवत् सृष्ट्याद्यर्थमवश्यं प्रयोजनवत् इति ।१।४।३

ॐ ज्ञेयत्वावचनाच्च ॐ

सांख्यैः स्वाभ्युपगतप्रधानस्य ज्ञेयत्वमुच्यते । अस्मदभिमत-भूतसूक्ष्मस्य ज्ञेयत्वावचनाच्च ज्ञेयत्वकथनाकथनाभ्यां विरुद्धत्वात् ज्ञेयतयाऽनुक्तमस्मदीयं भूतसूक्ष्मं न सांख्याभिमतं प्रधानमिति । १।४ ४

ॐ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॐ

'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ( का. २।३।१५ ) इति महतः परस्य (अव्यक्तस्य) निचाय्येति ज्ञेय-त्वं वदतीति, पूर्वमुक्तं ज्ञेयत्वावचनमसिद्धमिति चेत् न । प्राज्ञो हि परमात्मा तत्र निचाय्यत्वेन ( ज्ञेयत्वेन ) निर्दिष्टः । कुतः । प्रकरणात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परागतिः' इति परमेश्वरप्रकरणात्' तस्मात् न प्रधानस्यात्र ज्ञेयत्वं अव्यक्तशब्दनिर्दिष्टत्वं वा' इति व्याख्याततया इमानि चत्वारि सूत्राणि पूर्वोक्तार्थव्यवस्थापकत्वेन पूर्ववदेव प्रधानब्रह्मणोर्भेदबोधकानीति । १।४।५

ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ

अस्मिन्ग्रन्थे कठवल्लीषु अग्निजीवपरमात्मनां उपन्यासः, अग्नि-जीवपरमात्मविषयक एव प्रश्नः नातोऽन्यस्य प्रश्न उपन्यासो वा अस्ति। अतः न सांख्याभिमतं प्रधानं 'महतः परमव्यक्तं इति वाक्यघटका-व्यक्तशब्दवाच्यम् इति प्रधानस्य शब्दाप्रतिपाद्यत्वात् ब्रह्मैव जगत्का-रणम्' इति व्याख्याततया प्रधानब्रह्मणोर्भेदः जीवविषकप्रश्नोत्तरयोः ब्रह्मविषयप्रश्नोत्तरयोश्च पृथक्पृथग्विद्यमानत्वेन जीवब्रह्मणोरपि भेदः सिध्यति। सूत्रं तु अविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यम् इति शङ्करभाष्ये उक्तत्वेन अस्य सूत्रस्य भेदप्रतिपादकत्वे न विवादः। श्रुतिसूत्रप्रतिपादितभेदस्य मिथ्यात्वकथनमयुक्तमिति तत्र तत्र वर्णित-मनुसन्धेयम्। १।४।६

ॐ महद्वच्च ॐ

'यथा सांख्यैःमहच्छब्दस्य महत्तत्वे प्रयुज्यमानत्वेऽपि न वैदि-कैस्तस्मिन्प्रयुज्यते। किं तु 'बुद्धेरात्मा महान्परः' (का. १।३।१०) महांतं विभुमात्मानं (का १।२।२२) इत्यादावात्मशब्दसामानाधिक-रण्येनान्यत्र प्रयुज्यते तथाऽव्यक्तशब्दोऽपि वैदिके प्रयोगे प्रधानान्य-स्मिन्नेव प्रयोक्तुमर्हतीति न प्रधानस्य शाब्दत्वमिति न प्रधानं जग-त्कारणं किंतु ब्रह्मैव' इति व्याख्याततया इदमपि सूत्रं भेदबोधकमेव। एवं च इदमधिकरणं चेतनाचेतनात्मकप्रपञ्चाद्ब्रह्मणः भेदाभिधायक-मेवेति।१।४।७

ॐ चमसवदविशेषात् ॐ

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानाः सरू-पाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः (श्वे. ४।५) इति मंत्रे लोहितशुक्लकृष्णात्मिका अजा उत्पत्तिरहिता

श्रूयते । सा च सांख्याभिमता सत्वरजस्तमोगुणात्मिका उत्पत्तिरहिता प्रकृतिरेव भवितुमर्हति । सत्वगुणस्य शुक्लात्मकत्वेन रजोगुणस्य रक्तात्मकत्वेन तमोगुणस्य कृष्णात्मकत्वेन प्रकृतेः लोहितशुक्लकृष्ण-रूपत्वसंभवात् उत्पत्तिराहितत्वेन निमित्तेन अजाशब्दवाच्यत्वाच्च न प्रधानस्याशब्दत्वमिति प्राप्ते आह– चमसवदविशेषात् इति ।

'चमसवत्' 'यथा ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः (बृ.२।२।३) इत्यस्मिन्मंत्रे स्वातंत्र्येणायं नामा असौ चमसोऽभिप्रेत इति न शक्यते निरूपयितुं । सर्वत्रापि यथाकथंचित् अर्वाग्बिलत्वादिकल्पनोपपत्तेः। एवमिहाप्यविशेषोऽजामेकामित्यस्य मंत्रस्य । नास्मिन्मंत्रे प्रधानमेवाजाऽभिप्रेतेति शक्यते नियन्तुम् । सर्वत्रापि यया कयाचित्कल्पनया अजादित्वसंपादनोपपत्तेः सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात् इति । १।४।८

केयमजा प्रतिपत्तव्येति ? अत्र ब्रूमः–

ॐ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॐ

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधभूत-ग्रामस्य प्रकृतिभूतेयमजैव प्रतिपत्तव्या न गुणत्रयलक्षणा सांख्याभिमता प्रकृतिः । कुतः तथा ह्येके शाखिनस्तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनंति 'यदग्ने रोहितं रूपमित्यादि । १।४।९

कथं तेजोबन्नानां अजाशब्दवाच्यत्वं ? न तावद्रूढ्या, अजाकृत्यभावत् । नापि न जायत इत्यजा इति योगेन, उत्पत्तिमत्वात् इति प्राप्ते आह ।

ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ

'मध्वादिवत्' यथा आदित्यस्यामधुनो मधुत्वं (छां. ३।१) .

वाचश्चाधेनोर्धेनुत्वं कल्प्यते तथा अनजाया अपि तेजोबन्नलक्षणायाः अजात्वं कल्प्यते। तस्मादविरोधस्तेजोबन्नेष्वजाशब्दप्रयोगस्येति व्याख्याततया इमानि सूत्राणि 'अजामेकामिति श्रुत्युक्ता अजा परमेश्वरादुत्पन्ना तेजोबन्नलक्षणैव। न तु सांख्याभिमताप्रकृतिः इति अभिदधति संति, उत्पाद्योत्पादकभावेन तेजोबन्नानां परमात्मना च भेदं बोधयन्ति तथा एतत्सूत्रनिर्णयाश्रुतिश्च, एकः क्षेत्रज्ञः अनुशेते अन्यो जहातीति जीवानामपि भेदं बोधयन्ती, भिन्नबहुजीवानां एकेन परमात्मना भेदं बोधयति। शङ्कराचार्यैरपि 'एकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषां (द्वैतिनां) इष्टः प्राप्नोति इति अजामेकामिति श्रुतेः भेदबोधकत्वमुक्तम्। न च तैरेव 'न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा किंतु बंधमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा। प्रसिद्धं भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते। भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः। 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा' इत्यादि श्रुतिभ्यः इति श्रुतिप्रतिपादितस्य भेदस्य मिथ्यात्वमुक्तमिति वाच्यम्। श्रुतिप्रतिपादिस्य भेदस्य मिथ्यात्वकल्पने वेदस्य अप्रामाण्यस्वीकारापत्या अवैदिकत्व - प्राप्तेः। 'एको देवः' इति श्रुतौ अभेदबोधकपदाभावात्। प्रत्युत भेदबोधकानां अनेकेषां पदानां सत्वात्। एके मुख्यान्यकेवला इति प्रमाणात् एक इति पदं अन्यत्वं (भेदं) बोधयति। देव इति पदं क्रीडादिगुणविशिष्ट इति भेदकधर्मकथनेन भेदं बोधयति। सर्वभूतेषु गूढः इति पदं सर्वप्राणिषु गूढः अदृश्यः सन् विद्यमान इति सर्वजीवांतर्गतत्वोक्त्या आधाराधेयभावेन भेदं बोधयति। सर्वव्यापीति पदं न केवलं जीवांतस्थः किंतु सर्वान्तस्थ इति सर्वपदार्थानां ब्रह्मनिरूपिताधेयत्वोक्त्या भेदं बोधयति। सर्वभूतांतरात्मा इति पदं नियम्य-नियामकभावोक्त्या भेदं बोधयति। कर्माध्यक्ष इति पदं सर्वप्राणिभिः

क्रियमाणकर्मणां स्वामित्वोक्त्या ( फलदातृत्वोक्त्या ) कर्मफलदातृत्व-ग्रहीतृत्वोक्त्या भेदं बोधयति । सर्वभूताधिवास इति पदं सर्वभूता-श्रयत्वोक्त्या भेदं बोधयति। साक्षीति पदं सर्वद्रष्टृत्वोक्त्या दर्शनकर्म-त्वदर्शनकर्तृत्वोक्त्या भेदं बोधयति । निर्गुण इति पदं सत्वरजस्त-मोगुणराहित्योक्त्या ' न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ' ( गी. १८।४० ) इति गीतोक्तरीत्या सत्वरजस्तमोगुणसंबद्धजीवात् भेदं बोधयति इति भेदाभावे एतत्श्रुत्युदाहरणमासुरजनवञ्चनार्थमेवेति । १।४।१०

ॐ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॐ

ॐ प्राणादयो वाक्यशेषात् ॐ

ॐ ज्योतिषैकेषामसत्यन्ने ॐ

' यस्मिन्पंच पंच जना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ' ( बृ. ४.४।१७ ) इति श्रुतौ पंच-विंशतिपदार्थानां कथितत्वात् सांख्यैरपि पंचविंशतिसंख्याकतत्त्वा-नामुपसंग्रहात् सांख्योक्तप्रधानादीनां श्रुतिप्रतिपाद्यत्वं ' इत्याशंक्य, नानाभावात्-श्रुतौ पंचविंशतिपदर्थानां मध्ये केषांचित्पदार्थानां पंच-त्वपंचत्वसंख्यया ग्रहीतुं कारणाभावात् । [ पंचपंचतया ग्रहणे पंचसु एकधर्मस्याभावात् ] । किंच अतिरेकाच्च-श्रुतौ पंचत्रिंशतितत्त्वापेक्षया आत्माकाशयोः प्रत्येकं ग्रहणाच्च न सांख्याभिमतानां प्रधाना-दीनां श्रुतिप्रतिपाद्यत्वम् । ( शाब्दत्वं ) ( ११ ) किंतु प्राणस्य प्राणं चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम् अन्नस्यान्नं मनसो ये मनो विदुः ' इति वाक्यशेषोक्तप्राणचक्षुःश्रोत्रान्नमनांस्येव पंचत्वसंख्याविशिष्टाः पंचजनाः इति [१२] काण्वशाखायां प्राणादिष्वन्नस्याग्रहणात् कथं प्राणादीनां

पंचत्वमित्याशंक्य काण्वानां पाठे अन्नस्य ग्रहणाभावेऽपि ज्योतिषा सह पंचत्वं वक्तव्यम् इति [ १३ ] व्याख्याततया इमान्यपि सूत्राणि सांख्याभिमतप्रधानस्याशाब्दत्वप्रतिपादनद्वारा ब्रह्मण एव जगत्कारणत्वव्यवस्थापकानि संति, जगत्कारणत्वरहितेन चेतनाचेतनात्मकजगता भेदमेव कथयन्ति । १।४।११-१२-१३

न जगज्जन्मादिकारणत्वं ब्रह्मणः प्रतिपत्तुं शक्यं, न वा वेदांतवाक्यानां ब्रह्मविषयं गतिसामान्यं प्रतिपत्तुं शक्यम् , प्रतिवेदांतं विगानदर्शनात् , प्रतिवेदांतं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात् । ताथहि, क्वचिदात्मन आकाशः सम्भूतः (तै. २।१) इत्याकाशादिका सृष्टिराम्नायते, क्वचित्तेजआदिका 'तत्तेजोऽसृजत (छां.६।२।३) इति क्वचित् प्राणादिका 'स प्राणमसृजत प्राणाच्छ्रद्ध (प्र. ६।४) इति क्वचिदक्रमेणैव लोकानामुत्पत्तिरामाम्नायते 'स इमांल्लोकानसृजत । अंभोमरीचिर्मरमापः' (ऐ. ४।१।२) इति, तथा क्वचिदसत्पूर्विका सृष्टिः पठ्यते 'असद्वा इदग्र आसीत् ततो वै सदजायत' (तै. २।७) इति, असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत् (छां. ३।१९।१) इति च क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्युपक्रम्य 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्' (छां. ६।२।१।२) इति, क्वचित्स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नारूपाभ्यां व्याक्रियत' (बृ. १।४।७) इति । एवमनेकधा विप्रतिपत्ते र्वस्तुनि विकल्पस्यानुपपत्तेर्न वेदांतवाक्यानां जगत्कारणावधारणपरता न्याय्या । स्मृतिन्यायप्रसिद्धिभ्यां तु कारणांतरपरिग्रहो न्याय्य इति एवं प्राप्ते ब्रूमः -

ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ

सत्यपि प्रतिवेदांतं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने, न स्रष्टरि किंचिद्विगानमस्ति। कुतः? यथाव्यपदिष्टोक्तेः यथाभूतो ह्यस्मिन्वेदांते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टस्तथाभूत एव वेदांतांतरेष्वपि व्यपदिश्यते। तद्यथा 'सत्यं ज्ञानमनंतं ब्रह्म' [तै. २।१] इत्यादि। १।४।१४

ॐ समाकर्षात् ॐ

'असद्वा इदमग्र आसीत् (तै. २।७) इति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते। यतः 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद संन्तमेनं ततो विदुः' इत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्म निर्धार्य, 'सो कामयत इति तमेवं प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा, 'तत्सत्यमित्याचक्षते इति चोपसंहृत्य 'तदप्येषश्लोको भवति इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरंति 'असद्वा इदमग्र आसीदिति। यदि त्वसन्निरात्मकमस्मिन्श्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसंबद्धं वाक्यमापद्येत। तस्मात्प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते। एषैव 'असदेवेदमग्र आसीत् (छां. ३।१९।१) इत्यत्रापि योजना। 'तत्सदासीत् इति समाकर्षणात् इति व्याख्याततत्वेन द्वे सूत्रे अपि सर्वज्ञस्य सर्वेश्वरस्य परमात्मनः जगत्कारणत्वं व्यवस्थापयती असर्वज्ञात् जीवात् जन्याज्जगतश्च भेदमेव दर्शयतः। १।४।१५

ॐ जगद्वाचित्वात् ॐ

'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्यः' (कौ. ब्रा ४।१९) इति वाक्ये वेदितव्यत्वेनोपदिष्टः पुरुषाणां कर्ता किं मुख्यप्राण उत जीवः उत परमात्मेति संशये,

मुख्यप्राणलिङ्गान्मुख्यप्राण इति, 'यस्यैवेतत्कर्मेति जीवलिङ्गात् जीवो वा स्यात्, न परमेश्वरः, तल्लिङ्गानवगमात्; इति पूर्वपक्षे प्राप्ते वेदितव्यत्वेनोपदिष्टः परमेश्वर एव। इह हि बालाकिः अजातशत्रुणा सह 'ब्रह्म ते ब्रवाणि इति संवदितुमुपचक्रम इत्युपक्रमात्, परमेश्वरादन्यस्य स्वातंत्र्येण पुरुषकर्तृत्वानुपपत्तेश्च। तर्हि कथं 'यस्यैवैतत्कर्म' इति जीवलिङ्गव्यपदेश इति शङ्कानिरासाय प्रवृत्तं जगद्वाचित्वादिति सूत्रं। एतत्कर्मेति पदं न जीवकर्मबोधकं, क्रियते इति कर्म इति व्युत्पत्त्या एतत्प्रत्यक्षसन्निहितं कर्म जगदिति जगद्वाचि। तस्मात्, (जगद्वाचित्वात्) सर्वजगतः कर्ता परमेश्वरः वेदितव्यतयोपदिश्यते' इति शङ्करेण व्याख्यातमिदं सूत्रं, जीवस्य प्राणस्य च ब्रह्मणा भेदप्रतिपादकमेव। १ ४।१६

ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ

इति सूत्रमपि 'जीवलिङ्गात् जीवो वा मुख्यप्राणलिङ्गान्मुख्यप्राणो वा इति शङ्कायामुपासात्रैविध्यप्रसङ्गादिना पूर्वमेव निराकृतमिति जीवो वा मुख्यप्राणो वा वेदितव्यत्वेन न उपदिष्टः किंतु परमेश्वर एव, इति शङ्कराचार्यैः सिद्धांतितत्वेन जीवब्रह्मणोर्भेदबोधकमेव। १।४।१७

ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ

अपि च नैवात्र विवदितव्यम् जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति। यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते। कस्मात्? प्रश्नव्याख्यानाभ्याम्। प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते। 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदगात्' (कौ. ४।१९) इति, प्रतिवचनमपि 'यदा

सुप्तः । स्वप्नं न कश्चन पश्यति अथास्मिन्प्राण एवैकधा भवति ' इत्यादि । तस्मात्सोऽत्र परमात्मा वेदितव्यतया बोधित इति । अपि-चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं (जीवभिन्नं) परमा-त्मानमामनन्ति । ' य एष विज्ञानमयः पुरुषः क्वैष ' तदाभूत् कुत आगात् ' (बृ. २।१६) इति प्रश्ने प्रतिवचनेऽपि ' य एषोऽन्तर्हृदय आकाशः तस्मिन्शेते' इति । आकाशशब्दश्च परमात्मनि प्रयुक्तः ' दहरोऽस्मिन्नंतराकाशः ' (छां. ८।१।१) इत्यर्थकतया व्याख्यात-त्वेन, जीवब्रह्मणोर्भेदबोधकमेव । तथा एतत्सूत्रगृहीतश्रुतिरपि जीव-ब्रह्मणोर्भेदबोधिकैवेति । १।४।१९

ॐ वाक्यान्वयात् ॐ

इदं सूत्रं ' न वा अरे पत्युः कामाय इत्युपक्रम्य, ' न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' [बृ.४।५।६] इति वाक्ये द्रष्टव्यश्रोतव्यत्वादिरूपेण उपादिश्यमानः किं विज्ञानात्मा (जीवः) आहोस्वित् परमात्मेति संशये, उपक्रमसामर्थ्यात् विज्ञानात्मा (जीवः) इति पूर्वपक्षे च प्राप्ते, सिद्धांतः– श्रोतव्यत्वा-दिना व्यपदिष्टः परमात्मैव, कुतः ? वाक्यान्वयात् । वाक्यं हि पौ-र्वापर्येणावेक्ष्यमाणं परमात्मानं प्रति अन्विताऽवयवं लक्ष्यते, तस्मात् परमात्मन एवायं दर्शनाद्युपदेश ' इति व्याख्याततत्वेन जीवब्रह्मणो-र्भेदबोधकमेवेति

यत्पुनरुक्तं ' प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शना-द्युपदेशः ' इति, तत्र ब्रूमः ।

ॐ प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॐ

अस्त्यत्र प्रतिज्ञा ' अत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति '

'इदं सर्वं यदयमात्मा' इति च तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसङ्कीर्तनं यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत तस्मात्प्रतिज्ञासिध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्यः आचार्यो मन्यते

ॐ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॐ

विज्ञानात्मन एव देहेंद्रियमनोबुद्धिसंघातोपाधिसंपर्कात्कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेः इदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते। श्रुतिश्चैवं भवति, 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यते' (छां. ८।१२।३) इति

ॐ अवस्थितेरिति काशकृत्स्नः ॐ

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्नाचार्यो मन्यते। तथा च ब्राह्मणम् 'अनेनजीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्येवंजातीयकं, परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति। मन्त्रवर्णश्च 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' (तै आ. ३।१२।७) इत्येवंजातीयकः, काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो जीवो नान्य इति मतम्। आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते। औडुलोमिपक्षे पुनः स्पष्टमेवावस्थांतरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते प्रतिपिपादयिषितार्थानुसारात् 'तत्त्वमसि'

इत्यादि श्रुतिभ्यः ........ अपि च ‘ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति ’ ( बृ. २।४।१३ ) इत्यारभ्य अविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपंच्य ‘ यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् ’ इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावमभिदधाति । पुनश्च विषयाभावेऽपि ‘ आत्मानं विजानीयात् ’ इत्याशंक्य ‘ विज्ञातारमरे केन विजानीयात् ’ इत्याह । ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन् भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते । दर्शितं तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् । अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक इत्येषोऽर्थः सर्ववेदांतवादिभिरभ्युपगन्तव्यः । ‘ सदेव सोम्येदमग्र आसीत् ’ ‘ एकमेवाद्वितीयम् ’ (छां. ६।२।१) ‘ आत्मैवेदं सर्वम् ’ ( छां. ७।२५।२ ) ‘ ब्रह्मैवेदं सर्वम् ’ ( मु. २।२।११ ) ‘ इदं सर्वं यदयमात्मा ’ ( बृ. २।४।६ ) ‘ नान्योऽतोऽस्ति द्रष्टा ’ (बृ. ३।७।२३) नान्यदतोऽस्ति द्रष्टृ ( बृ. ३।८।११ ) इत्येवंरूपाभ्यः श्रुतिभ्यश्च ‘ वासुदेवः सर्वमिति ’ ( गी. ७।१९ ) ‘ क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ’ (गी. १३।२) ‘ समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम् ’ (गी. १३।२७) इत्येवंरूपाभ्यः, स्मृतिभ्यः भेददर्शनापवादाच्च ‘ अन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः ’ ( बृ. १।४।१० ) ‘ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ’ [ बृ. ४।४।१९ ] इत्येवंजातीयकात् , ‘ स वा एष महानज आत्माऽजरोऽमृतोऽभयो ब्रह्म ’ (बृ. ४।४।२५) इति चात्मनि सर्वविक्रियाप्रतिषेधात् । अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः सुनिश्चितार्थत्वानुपपत्तेश्च । निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकं आत्मविषयमिष्यते ‘ वेदांतविज्ञानसुनिश्चितार्थाः ’ (मु. ३।२।६ ) इति च श्रुतेः ‘ तत्र को मोहः

कः शोकः एकत्वमनुपश्यतः '(ई. ।७) स्थितप्रज्ञलक्षणस्मृतेश्चेति।... नहि सत्यं ज्ञानमनंतं ब्रह्म यो वेद निहितं गुहायां ( तै. २।१ ) इति काश्चिदेवैकां गुहां अधिकृत्यैतदुक्तम् । न च ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति तत्सृष्ट्वा तदेवानुप्राविशत् इति स्रष्टुरेव प्रवेशश्रवणात्' इत्यादि शङ्कराचार्याणां यत् त्रिसूत्रीव्याख्यानं, तदयुक्तम् ।' श्रुति-सूत्रपदैः अस्यार्थस्याकथनात् इति ज्ञातुं शक्यते सुप्रज्ञैः सात्त्विकैः, तथापि मन्दमतीनां सात्त्विकानामयमेव श्रुतिसूत्रार्थ इति भ्रांतिर्माभूत् इत्येतदर्थं तद्व्याख्यानस्य श्रुतिसूत्रानारूढतां लेशतो दर्शयिष्यामः ।

प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः

इति सूत्रं प्रतिज्ञासिद्धेर्लिङ्गं ज्ञापकं इत्याश्मरथ्यो मन्यते इत्यर्थकम् ।

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः

इदं सूत्रं उत्क्रमिष्यतः देहादुत्क्रमिष्यतः मुमुक्षोः एवंभावात् एवंप्रकारेण विद्यमानत्वात् इत्यौडुलोमिराचार्यो मन्यते इत्यर्थकम् ।

अवस्थितेरिति काशकृत्स्नः

इदं सूत्रं अवस्थितिसद्भावादिति काशकृत्स्नाचार्यो मन्यते इत्य-र्थकम्। तथा च एवं सम्मुग्धार्थकानि इमानि सूत्राणि गुणसूत्राणीति प्रधानसूत्रानुसारेण नेयानि ।

' वाक्यान्वयात् ' इति प्रधानसूत्रं तु भेदबोधकतया व्या-ख्यातमिति तदनुसारेण जीवब्रह्मणोर्भेदबोधकान्येव नत्वभेदबोधका-नीति नात्रास्माकं वक्तव्यमस्ति । ' प्रतिज्ञासिद्धे ' रिति सूत्रव्या-ख्यावसरे जीवब्रह्मणोरभेदविषये अस्त्यत्र प्रतिज्ञा ' आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति ' ' इदं सर्वं यदयमात्मा ' इति च इति श्रुत्योर्ग्रहणम् ।

'उत्क्रमिष्यत' इति सूत्रव्याख्यावसरे जीवस्य परमात्मैक्यविषये 'एष संप्रसाद' इति श्रुत्युदाहरणम् ।

'अवस्थितेः इति सूत्रव्याख्यावसरे' अनेन जीवेनेत्याद्यनेकश्रुतिस्मृत्युदाहरणं न युक्तम् । ताः श्रुतयः स्मृतयश्च नाभेदबोधिकाः न वा भेदनिषेधिकाः । किंतु भेदबोधिका इत्युक्तं वेदाद्यर्थनिरूपणावसरे इति नेदं पुनः विशेषतो विचार्यते; किंतु, उक्तस्मरणार्थं यथा इमाः श्रुतिस्मृतयः जीवब्रह्मणोरभेदबोधिकाः प्रत्युत भेदबोधिकाः तथा किंचित् प्रदर्श्यते ।

प्रतिज्ञासिद्धेरितिसूत्रव्याख्यावसरे यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात् ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञातेन सर्वविज्ञानं यत्प्रतिज्ञातं तत् हीयेत इति एकविज्ञाने न सर्वविज्ञानान्यथानुपपत्त्या जीवपरमात्मनोरभेदसिद्धिरिति यदुक्तं तदयुक्तम् । शङ्कराचार्यैरेव येनाश्रुतं श्रुतं इत्यादिवाक्यव्याख्यावसरे 'सर्वान् वेदान् अधीत्य सर्वं च अन्यत् वेद्यं अधिगम्यापि अकृतार्थ एव यावदात्मतत्त्वं न विजानाति' इत्यादिवाक्येन, सर्वस्मिन् जगति ज्ञातेऽपि ब्रह्म ( परमात्म ) ज्ञानं यावन्न भवति तावत्पर्यंतं जगज्ज्ञानं व्यर्थमेव । परमात्मनि ज्ञात एव जगज्ज्ञानं सफलं भवति इति ब्रह्मज्ञानं जगज्ज्ञानस्य फलं भवति इत्युक्तत्वेन, तथा– कृतकृत्यश्च भारतेति गीताश्लोकव्याख्यावसरे च एवमेवोक्तत्वेन जगत् ब्रह्मणि कल्पितमिति वदतां अद्वैतिनां मतरीत्या अधिष्ठानज्ञानेन अध्यस्तस्य ज्ञानासम्भवाच्च ब्रह्मज्ञानेन जगतः ज्ञानं भवतीति प्रतिज्ञैव अयुक्तेति श्रुतौ तथा प्रतिज्ञायाः भावात् तदन्यथानुपपत्त्या जीवब्रह्मणोरैक्यकथनमयुक्तम् । 'इदं सर्वं यदयमात्मा' इति श्रुतिरपि न जीवब्रह्मणोरैक्यं वक्ति । उभयश्रुतिविशेषविचारस्तु अवस्थितेरिति सूत्रोदाहृतश्रुत्यर्थविचारावसरे द्रष्टव्यः ।

"उत्क्रमिष्यत" इतिसूत्रव्याख्यावसरे विज्ञानात्मन एव... देहादिसङ्घातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेः इदमभेदेनोपक्रमण-मित्यौडुलोमिराचार्यो मन्यते, श्रुतिश्चैवं भवति, 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां. ८।१२।३) इति विज्ञानात्मनः (जीवस्य) परमात्मैक्यविषये 'एष संप्रसाद' इति श्रुत्युदाहरणं यत्, तदत्यन्तमनुक्तम् स्ववाक्यविरुद्धत्वात्। परमात्मैक्यस्य तादृशश्रुतौ अप्रतिपादनाच्च। तथाहि परं-ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, यःस किं परस्मादात्मनः पृथगेव भवत्युत अविभागेनैवावतिष्ठते इति वीक्षायां 'स तत्र पर्येति' इति अधिकरणाधिकर्तव्यनिर्देशात् 'ज्योतिरुपसंपद्य' इति च कर्तृ-कर्मनिर्देशात् भेदेनैवावस्थानमिति (बृ. शां. भा. ४।४।४) भाष्ये, परं ज्योतिरुपसंपद्य... स तत्र पर्येति इति श्रुतेः मुक्तावपि भेदबोधकत्वस्य उक्तत्वेन, विज्ञानात्मनः (जीवस्य) परमात्मैक्यविषये उदाहरणस्य स्ववाक्यविरुद्धत्वात्।

न च शङ्कराचार्यैः पूर्वपक्ष एव 'एष संप्रसाद' इत्यस्य भेदपरत्वमुक्तं न तु सिद्धांते इति नैतस्य वाक्यस्य अभेदविषये उदाहरणस्य स्वव्याहतिरिति वाच्यम्। सिद्धांतेऽपि 'भेदनिर्देशस्तु अभेदेऽप्युपचर्यते' इति वाक्येन भेदबोधकत्वमङ्गीकृत्य तस्य गौणत्वमुक्तमिति, अस्य वाक्यस्य अभेदबोधकत्वाभावस्य स्वीकारात्। अभेदविषये उदाहरणे स्वव्याहतेर्दुर्वारत्वात्।

एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा (छां ८।१२।३) इति श्रुत्यर्थस्तु एषः- संप्रसादः=जीवः, अस्माच्छरीरात् समुत्थाय परं-ज्योतिः = परमात्मानं, उपसपद्य = प्राप्य स्वेन रूपेण = स्वस्वरूपेण

अभिनिष्पद्यते व्यक्तो भवति, सः = प्राप्यः परमात्मा उत्तमपुरुषः सः=प्राप्तो जीवः, तत्र पर्येति=संचारं करोति, जक्षन्=भक्षणं कुर्वन्, क्रीडन् स्त्रीभिः, यानैः ज्ञातिभिर्वा रममाण आस्ते इति मुक्तो भूत्वा परमात्मना भिन्नः सन् क्रीडादिकं करोतीति स्पष्टं परमात्मना भेदः स्त्रीजनैर्ज्ञातिभिश्च भेदः जक्षणक्रीडाकर्मभूतैः तत्तत्पदार्थैः भेदः कथ्यते इति, अस्य वाक्यस्य ऐक्यविषये उदाहरणमत्यन्तमयुक्तम् । विशेषविचारस्त्वन्यत्र कृतो द्रष्टव्यः ।

अवस्थितेरिति सूत्रव्याख्यावसरे- परमात्मनो विज्ञानात्मभावेन (जीवभावेन) अवस्थानमित्यस्मिन् विषये अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ( छां. ६.६।२ ) इत्येवंजातीयकं परस्यैव आत्मनो जीवभावेनावस्थानं दर्शयति इत्युक्तिस्तावदसङ्गता ।

' अनेन जीवेन ' इतिवाक्यं पूर्वभागेन सहितं तु इत्थम् । ' सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' इति । (छां. ६।३।२) तस्यार्थः सा=पूर्वोक्ता, इयं प्रमाणसिद्धा, देवता=सन्नाम्नी परमात्मरूपा, ऐक्षत=ईक्षितवती, अहं इमाः तिस्रः=तेजोऽप्पृथिव्यभिमानिन्यः देवताः चेतनभूताः, अनेन जीवेन आत्मना=चेष्टकरूपेण(व्यापारप्रवर्तकरूपेण) प्रविश्य, नामरूपे=नामरूपात्मकं जगत् व्याकरवाणि=व्याकुर्याम् ' इति । न च इमास्तिस्रो देवताः इत्यत्र देवताशब्देन चेतनग्रहणं अयुक्तमिति वाच्यम् देवताशब्दस्य चेतनवाचकत्वात् । उक्तंहि शङ्कराचार्यैः ब्रह्मसूत्र (२।१।५) भाष्ये ' अपि च कौषीतकिनः प्राणसंवादे करणमात्राशङ्कानिवृत्तयेऽधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति ' एता ह वै देवता अहं श्रेयसे विवदमाना इति ' ' ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा ( २।१४ ) इति च ' इति वाक्येन देवताशब्दस्य अधिष्ठातृपरत्वमिति । तथा च ' योऽसौ

तिष्ठन्' 'योऽप्सु तिष्ठन्' 'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठन्' इति तेजोऽप्पृथिव्याद्यभिमानिदेवतासु (चेतनेषु) जीवेन=भागवतोक्तरीत्या 'अहं हि जीवसंज्ञो वै मयि जीवः समीहित' इति भारतोक्तरीत्या च जीवसंज्ञकेन प्राणधारकरूपेण, (अंतर्यामिरूपेण) प्रविश्य नामरूपात्मकप्रपञ्चनिर्माणोक्त्या प्रवेश्यदेवताचेतनेभ्यः प्रविष्टजीवनामकपरमात्मनः भेद एव कथ्यते । शङ्कराचार्यैरपि 'अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इति सूत्रव्याख्यानावसरे पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति' (शां. भा. १।२।१८) इति स्पष्टं प्रवेश्यपृथिवीदेवतायाः तदन्तःप्रविष्टेन अंतर्यामिपरमात्मना भेद उक्तः ।

एवं 'भेदव्यपदेशाच्चान्यः' (ब्र. १।१।२१) इति सूत्रीयशाङ्करभाष्ये 'अस्ति चादित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्यः ईश्वरोऽन्तर्यामी, य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मांतर्याम्यमृतः' (बृ ३।७।९) इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र हि 'आदित्यादन्तरो यमादित्यो न वेद इति' वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामी स्पष्टं निर्दिश्यते' इति आदित्यदेवताया तदन्तःप्रविष्टेन परमात्मना भेद उक्तः ।

अपि च 'शारीरश्चोभयेपि हि भेदेनैनमधीयते' (ब्र.१।२।२०) इतिसूत्रीयशाङ्करभाष्ये 'अपिचोभयेऽपि हि शाखिनः काण्वा माध्यंदिनाश्च अंतर्यामिणो भेदेनैनं शारीरं (जीवं) पृथिव्यादिवत् अधिष्ठानत्वेन नियम्यत्वेन चाधीयते... तस्माच्छारीरादन्यः ईश्वरोन्तर्यामीति सिद्धम्' इति स्पष्टं अधिष्ठानाधिष्ठेययोः नियम्यनियामकयोर्जीवब्रह्मणोः भेद उक्त इति । न च स च भेदः अविद्यामूलकः (भ्रममूलकः इत्यपि तत्रैवोक्तमिति वाच्यम् । अविद्या (भ्रम) मूलकत्वोक्ते-

रेव अद्वैतमते भ्रमकारणानां असंभवात् भ्रममूलकत्वं प्रदर्शितं, प्रदर्शयिष्यते च इति । तथाच तद्वदेव ‘ इमास्तिस्रा देवताः अनेन जीवेन आत्मनानुप्रविश्य ’ इति प्रवेश्य तेजोऽबादिदेवतायाः प्रवेष्टृब्रह्मणा भेद एवोक्तः न तु पृथिव्यादिषु ब्रह्मणो जीवरूपेण प्रवेशोक्त्या पृथिव्याद्यभिमानिचेतनस्य ब्रह्मणा अभेदः ।

न च ‘ जीवेनात्मना ’ इति ब्रह्मणो जीवभावस्योक्तत्वात् , अनेन वाक्येन जीवब्रह्मणोरभेदो बोध्यते, इति वाच्यम् । जीवशब्दस्य ‘ जीवो जीवमजीजनत् ’ ‘ अहं हि जीवसंज्ञो वै इत्यादिप्रमाणैः चेष्टकत्वादिप्रवृत्तिनिमित्तवत्वेन च ब्रह्मणो जीवशब्दवाच्यत्वसिद्धेः नेदं वाक्यं ब्रह्मणो जीवभावेन अल्पज्ञेन संसारिरूपेण अवस्थानबोधकमिति ।

सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते’ ( तै. आ. ३।१२।७ ) इति वाक्यस्यापि जीवब्रह्मणोरभेदे प्रमाणतया उदाहरणम् अयुक्तम् । तत्र जीवब्रह्मणोरैक्यबोधकपदाभावात् । मन्त्रवर्णार्थस्तु यत्=यः, धीरः=सर्वज्ञः, सर्वाणि रूपाणि=सर्वान् पदार्थान्, ( रूपात्मकं समस्तं जगत् ) विचित्य=निर्माय, नामानि शब्दात्मकप्रपञ्चं च, कृत्वा=निर्माय, अभिवदन्=अभिवदनादिकुर्वन् , आस्ते इति । अस्य च तद्विद्वान् अमृतो भवति इत्युत्तरवाक्यार्थेनान्वयः । तथा चैतस्मिन्वाक्ये जीवपरमात्मनोरभेदबोधकपदाभावात् प्रत्युत कार्यकारणभावोक्त्या ज्ञातृज्ञेयभावोक्त्या च भेद एव बोध्यते । न च स्वयं तत्र प्रविश्य इति पदानां मंत्रे संयोजने कृते सृष्टपदार्थेषु प्रवेशसिध्या जीवब्रह्मणोरैक्यसिद्धिरिति वाच्यम् । अविद्यमानपदसंयोजनेन क्रियमाणस्यार्थस्य वेदार्थत्वाभावात् तथाङ्गीकारे अयमेवार्थोऽस्य नान्य इति नियमाभावापत्तेः ।

अविद्यमानपदसंयोजनेन सर्वस्याप्यर्थस्य सर्वैरपि वाक्यैः प्राप्तिरिति दोषस्य पूर्वमेवोक्तत्वात् प्रविश्येत्यादिपदसंयोजनेऽपि पूर्वोक्तरीत्या अभेदासिद्धेश्च ।

यच्चाप्युक्तम् ' तत्र काशकृत्स्नीयं मतं ( अविकृतः परमेश्वरो जीवो नान्य इति ) श्रुत्यनुसारीति गम्यते प्रतिपिपादयिषितार्थानुसारात् । तत्त्वमसीत्यादि श्रुतिभ्यः ' इति तदपि हेयम् ।

शङ्कराचार्यादिभिः ' ज्ञानं च तस्मिन् परात्मभावनिवृत्तिरेव ...... अन्यात्मभावनिवृत्तौ आत्मभावः स्वात्मनि स्वाभाविकः यः स केवलो भवति इति ' आत्मा ज्ञायते ' इत्युच्यते इति, ( बृ शां. भा. ४ ४.२० ) भाष्ये तथा ' न च महावाक्याज्जायमानं ज्ञानमेव ब्रह्मेत्यक्तम् । तथा सति ज्ञानरूपस्य ब्रह्मण उत्पत्तिः स्वीकार्या स्यादिति वाच्यम् । तज्ज्ञानं नैव जायते । किं तु तदानीं केवलं तदावरकाज्ञाननिरास एव जायते, तन्मूलक एव तदानीं ज्ञानं जायत इति व्यवहारः । तच्च ब्रह्मरूपं ज्ञानं निर्विषयकमित्यादि सिद्धांतबिन्दुव्याख्यायां –

तत्त्वमस्यादिवाक्यस्य बोधजनकत्वमेव नास्ति इति कथितत्वेन बोधजनकत्वाङ्गीकारेऽपि अखण्डार्थबोधकत्वस्वीकारेण ' चित् ' इत्येतन्मात्रबोधजनकत्वोक्तेः न तत्त्वमस्यादिवाक्यैर्जीवब्रह्मणोरैक्यं बोध्यते इति न काशकृत्स्नीयस्याभेदमतस्य तत्त्वमस्यादिश्रुतिप्रतिपिपादयिषितार्थानुसारित्वमिति–

तथा– ' यत्रहि इत्युपक्रम्य सर्ववेदांतवादिभिरभ्युपगन्तव्य इत्यन्तं यदुक्तं तदपि अनुपपन्नम् । ' यत्र हि 'इति वाक्यस्य द्वैतपारमार्थिकत्वबोधकत्वेन द्वैतमिथ्यात्वे प्रमाणतया उदाहर्तुमशक्यत्वात् । तथाहि ' ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वमिति ' (बृ. शां. २.४।१४) इति शाङ्करभाष्येण तथा ' द्वैतेन द्वैतस्योपमीयमानत्वात् दृष्टांतस्य दार्ष्टांतिकस्य च तस्य वस्तुत्वं स्यात् उपमानोपमे-

ययोः चन्द्रमुखयोर्वस्तुत्वोपलम्भादित्यर्थः ' इत्यानंदगिरिटीकया ' ननु द्वैतमिवेत्येतदुपमानं कथं भवेत् , द्वैतं वस्तु न चेदस्ति ' इति सुरेश्वराचार्यवार्तिकेन च ' यत्र हि द्वैतमिव भवति ' इति वाक्यं उपमावाचकेन इव शब्देन द्वैतस्य पारमार्थिकत्वं बोधयतीत्युक्तत्वात् । तथा 'न हि विष्णुमित्रो वंध्यापुत्रवत् अवभासते इति कश्चिदाचक्षीत तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासते इति युक्तमभ्युपगन्तुं न तु बहिर्वत् अवभासत ' इति ( ब्र.सू.शां.भा. २।१।१८ ) भाष्येण इवशब्दसमानार्थकवत्प्रत्ययांतबहिर्वत् इति शब्देन बाह्यपदार्थस्य सत्यत्वं सिध्यतीत्युक्त्या वत्प्रत्ययसमानार्थकेन इवशब्देन युक्तेन द्वैतशब्देनापि द्वैतस्य पारमार्थिकसत्यत्वसिद्धेश्च । अविद्याकल्पित(मिथ्या) भेदविषये एतद्वाक्योदाहरणस्यायुक्तत्वात् ।

ननु ' कश्चित्कांता ' इति वाक्यं श्रुत्वा तदुत्तरवाक्यमश्रुत्वैव कश्चित् इत्यस्य पुल्लिङ्गत्वेन, कांता इत्यस्य स्त्रीलिङ्गत्वेन कथमन्वयः इत्याक्षेप्तेव द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वमिति पूर्वपक्षवाक्यमात्रं संगृह्य तदुत्तरं विद्यमानं द्वैतस्य पारमार्थिकत्वनिषेधकं ' न वाचारंभणं विकारो नामधेयम् ' इति श्रुत्यन्तरात् ' एकमेवाद्वितीयं' ' आत्मैवेदं सर्वम् ' इति च इति शाङ्करभाष्यीयसिद्धांतवाक्यं तथा द्वैतप्रपञ्चस्य मिथ्यात्ववादिश्रुतिविरोधान्न तस्य सत्यतेति परिहरति न वाचारंभणमिति आनन्दगिरिवाक्यं च अज्ञात्वैव वा ज्ञात्वापि परप्रतारणार्थं संगोप्य वा ' यत्र हि द्वैतमिव ' इति वाक्यं द्वैतस्य पारमार्थिकत्वं कथयति इति शङ्कराचार्याः वदन्तीति कथमस्य वाक्यस्य द्वैतमिथ्यात्वबोधकत्वमित्याक्षेप्ता भवानपि हास्यास्पदं एवेति चेत् न। अस्मदभिप्रायानवबोधात् ।

तथाहि - ' यत्र हि द्वैतमिव भवति ' इति वाक्यं द्वैतेन उपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वं कथयतीत्युक्त्वा उत्तरत्र 'वाचा-

रम्भणं विकारो नामधेयं' इत्यादि द्वैतमिथ्यात्वबोधकश्रुतिविरोधात् द्वैतस्य पारमार्थिकत्वं न संभवतीति निराकृतम् शङ्कराचार्यैरित्येतत् सत्यम् तथापि 'यत्र हि द्वैतमिव भवति इति वाक्यस्य द्वैतमिथ्यात्वे ( अविद्याकल्पितत्वे ) प्रमाणतया उदाहरणमयुक्तमित्यभिप्रायोऽस्माकमिति—

तथा च- 'यत्र हि इति वाक्येन बोधितं द्वैतस्य पारमार्थिकत्वं बाध्यते इत्यद्वैतिनः, न बाध्यते बाधकप्रमाणाभावात् इति द्वैतिनः। आस्तां स विचारः।' यत्र हि 'इति वाक्यं द्वैतस्य पारमार्थिकत्वं बोधयतीत्यस्मिन् विषये न विवादः अद्वैतिनामिति।

शङ्कराचार्यैर्यच्च निराकृतं 'न वाचारंभणं विकारो नामधेयं इति श्रुत्यन्तरात् 'एकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' इति च इति भाष्यवाक्येन श्रुतिभिः द्वैतस्य मिथ्यात्वसिद्धेः, ताभिः श्रुतिभिर्बाधात् 'यत्र हि द्वैतमिव भवति' इति वाक्येन बोधितमपि द्वैतस्य पारमार्थिकत्वं न ग्राह्यं' इति, तदप्यतिहेयम्। तथाहि—

'वाचारंभणं विकारो नामधेयं इति श्रुतौ जगतः ( द्वैतस्य ) मिथ्यात्वबोधकपदाभावात्। न च वाचारंभणं नामधेयं इति पदे एव मिथ्यात्वबोधके इति वाच्यम्। वाचारंभणशब्दस्य वाग्जन्यव्यवहारविषय इत्यर्थकत्वेन नामधेयपदस्य च नामार्थकत्वेन मिथ्यात्वबोधकत्वाभावात्। तदर्थकत्वमात्रेण मिथ्यात्वसिद्धौ ब्रह्मणोऽपि वाग्जन्य व्यवहारविषयत्वेन नामवत्त्वेन च मिथ्यात्वापत्तेः।

न च वाचारंभणमात्रं नामधेयमात्रं इति मात्रपदसंयोजनेन केवलवाग्जन्यव्यवहारविषयः केवलनामैव, वस्तुसत्ता नास्ति इत्यर्थकत्वप्राप्त्या मिथ्यात्वं सिध्यतीति वाच्यम्। अविद्यमानपदसंयोजनेन भवतोऽर्थस्य श्रुत्यर्थत्वाभावात्। तथाभूतस्यापि श्रुत्यर्थत्वे 'सत्यं-ज्ञानमनन्तं ब्रह्म' इति वाक्ये अविद्यमानानि नेति नेति नेति पदानि

संयोज्य भवतः ब्रह्म सत्यं न, ज्ञानं न, अनंतं न इत्यादेरपि श्रुत्यर्थत्वप्राप्त्या ब्रह्मणोऽपि मिथ्यात्वापत्तेः।

तुष्यत्विति न्यायेन वाचारंभणशब्दस्य मिथ्यार्थकत्वाङ्गीकारेऽपि विकारभूतघटशरावादीनां मिथ्यात्वं, मृत्तिकेत्येव सत्यमित्युक्तमृत्तिकायाः सत्यत्वं अद्वैतमतरीत्याऽपि न संभवति। अद्वैतमते ब्रह्मातिरिक्तयोर्घटमृत्तिकयोरुभयोरपि मिथ्यात्वेन एकस्य सत्यत्वकथनस्य अपरस्य मिथ्यात्वकथनस्य चासंभवात्।

भवतु कार्यस्य घटादेर्मिथ्यात्वं कारणीभूताया मृदः सत्यत्वं, प्रकृते ब्रह्मणः एव सत्यत्वं, जगतः मिथ्यात्वं च न सिध्यत्येव। नच, ब्रह्म सत्यं कारणत्वात् मृद्वत् 'जगन्मिथ्या कार्यत्वात् घटवत्' इत्यनुमानसूचनद्वारा 'वाचारंभण'मिति वाक्यं ब्रह्मजगतोर्मिथ्यात्वसत्यत्वे बोधयतीति वाच्यम्। अनेकदोषदुष्टत्वात्। तथाहि – 'ब्रह्म सत्यं कारणत्वात् मृद्वत् इति प्रथमानुमाने पक्षीकृतं ब्रह्म, निर्गुणं वा सगुणं वा। न तावन्निर्गुणं तस्य अद्वैतमतरीत्या निर्धर्मकत्वेन कारणत्वरूपहेत्वभावेन हेतोरसिद्धेः। सत्यत्वरूपसाध्यधर्माभावेन बाधाच्च। नापि सगुणं। सगुणब्रह्मणः पक्षीकरणपक्षे साध्यभूतं सत्यत्वं पारमार्थिकं वा व्यावहारिकं वा। पारमार्थिकसत्यत्वसाधनपक्षे तस्मिन् अद्वैतमतरीत्या पारमार्थिकसत्यत्वाभावेन बाधात्। अद्वैतमतरीत्या मृदि पारमार्थिकसत्यत्वाभावेन दृष्टांते साध्यवैकल्याच्च। सगुणब्रह्मणो व्यावहारिकसत्यत्वसाधनं तु प्रकृतानुपयुक्तमित्यादि।

एवं जगन्मिथ्या कार्यत्वात् घटवदिति द्वितीयानुमानेऽपि साध्यभूतं मिथ्यात्वं हि नास्ति नासीन्न भविष्यति इति प्रतीयमानत्रैकालिकनिषेधप्रतियोगित्वरूपं, कार्यत्वं च प्रागभावप्रतियोगित्वरूपं प्रागभाव ( पूर्वकालमात्रवृत्त्यभाव ) प्रतियोगित्वरूपकार्यत्ववतः पदार्थस्य त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाभाव एव संभवेन

विरुद्धो हेतुः ( साध्याभावव्याप्तो हेतुः ) अद्वैतमतरीत्या कल्पितस्य जगतः कार्यत्वमसिद्धं चेति हेतुः स्वरूपासिद्धः इत्याद्यनेके दोषाः ।

किंच एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् ‘ वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् , इति वाक्यस्य त्वदुक्तार्थकत्वे अद्वैतमतरीत्या पूर्ववाक्येन संबंध एव न संभवति ।

न च येनाश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातमिति वाक्येन ब्रह्मज्ञानेन सर्वज्ञानं भवतीत्युक्तौ कथं नु एतत् अप्रसिद्धम् अन्यविज्ञानेन अन्यज्ञानं भवतीति पृष्टे प्रवृत्तेन ‘ यथा सोम्यैकेन ’ इत्यादिवाक्येन, यथा एकमृत्पिण्डज्ञानेन सर्वमृण्मयघटादिज्ञानं भवति तथा एकब्रह्मज्ञानेन सर्वजगज्ज्ञानं भवति इत्युत्तरे दत्ते, घटमृत्तिकयोर्भेदो वा अभेदो वा । भेदे कथं मृज्ज्ञानेन घटज्ञानं स्यात् । अभेदे च मृत्कारणं घटादिः कार्यमिति व्यवहारः कथमित्याशङ्कायां ‘ वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं ’ इति वाक्यं प्रवृत्तम् । तस्य चायमर्थः घटशरावादिकं वाचारंभणमात्रं नामधेयमात्रं वस्तुतो नास्त्येव । मृत्तिकैव सत्यमिति उत्तरदानाय एकेन मृत्पिण्डेनेत्यादिवाक्यस्य प्रवृत्तिरिति वाच्यम् । एवं सङ्गतिकथनस्य अनेकदोषयुक्तत्वात् । के दोषा ? इति चेत् श्रुणु सावधानमेकैकम् । तथाहि- ‘येनाश्रुतं श्रुतंभवतीति वाक्यं ब्रह्मज्ञानेन जगज्ज्ञानं भवति इत्यर्थप्रतिपादकं यदा स्यात् तदा कथंचित् अद्वैत्युक्तेयं सङ्गतिर्युक्ता स्यात् । नचैवं । न तथा प्रतिपादयत्यर्थमिति शङ्कराचार्यैरेवोक्तत्वात् अद्वैतमतरीत्यासम्भवाच्च ।

शङ्कराचार्या हि ‘तमादेशं विशिनष्टि येनादेशेन श्रुतेन अश्रुतमप्यन्यत् श्रुतं भवति । ........ अनिश्चितं निश्चितं भवति सर्वानपि वेदानधीत्य सर्वं च अन्यत् वेद्यमधिगम्यापि अकृतार्थ एव । भवति । यावदात्मतत्त्वं न विजानाति इत्याख्यायिकातोऽवगम्यते’ इत्युपनिषद्भाष्येण सर्ववेदे अधीते वेदार्थभूतब्रह्मान्यजगति ज्ञातेऽपि न पुरुषः

कृतार्थो भवति आत्मतत्त्वज्ञानं विनेति वेदाध्ययनस्य ब्रह्मान्यवेदार्थ-भूतजगज्ज्ञानस्य च ब्रह्मज्ञानमेव फलं इति जगज्ज्ञानं कारणं ब्रह्मज्ञानं फल ( कार्य ) मिति, कार्यकारणभूतभिन्नज्ञानविषयत्वेन भिन्नत्वमेवाहुः ÷ न तु ब्रह्मव्यतिरेकेणासत्त्वरूपं मिथ्यात्वं (अभिन्नत्वं) इति ।

तथा 'कृतकृत्यश्च भारत' कृतं कृत्यं कर्तव्यं येन स कृत-कृत्यः सत्कुलप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं... न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः... सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ' इति चोक्तम् ।

' एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत् कृत-कृत्यो हि द्विजो भवति नान्यथा ॥' इति च मानववचनम् । य एतत् परमार्थतत्त्वं मत्तः श्रुतवानसि ततः कृतार्थस्त्वं भारतेति ( गी. १५ २० ) एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत इति श्लोकव्या-ख्यानरूपेण शङ्करगीताभाष्येण सर्ववेदाध्ययनवेदार्थज्ञानादिरूपकर्म-णः ब्रह्मज्ञानमेव फलं । ब्रह्मज्ञानसंपादनेनैव पुरुषस्य कृतार्थत्वमाहुः । तेन च ' येनाश्रुतं श्रुतं भवति ' इति वाक्यमपि जगज्ज्ञानस्य ब्रह्मज्ञानं फलं (कार्यं) न तु ब्रह्मज्ञानेन जगतः ज्ञानं भवतीत्येतत्परमिति सिध्यति।

अद्वैतमतरीत्या असंभवश्च । अद्वैतमते जगतः ब्रह्मणि कल्पि-तत्वेन यथा शुक्तिकायामारोपितं रजतं अधिष्ठानीभूतशुक्तिज्ञाने सति न प्रतीयते तथा अधिष्ठानभूते ब्रह्मणि ज्ञाते तत्राध्यस्तं जगत् न प्रती-यते इति ब्रह्मज्ञाने सति जगज्ज्ञानमसंभवि च । एवमेवोक्तं केनोपनिष-द्भाष्यतट्टीकयोः - अथवा हेत्वर्थं इति ( के.भा. २।२।११ ) लोके तु

---

÷ किमित्यधीत्य सर्वं वेदं अधिगततदर्थं च पुत्रं आत्मविद्यामधि-कृत्य पिता पृच्छति । तस्य वेदाध्ययनादिनैव कृतार्थत्वादित्याशंक्य आह सर्वानपीति इत्यानन्दगिर्यवतरणमपि इममेवार्थं गमयति ।

शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तं रूप्यादि अविज्ञातं भवति अजानतां एव त्वध्यस्तं विज्ञातं भवतीति प्रसिद्धं तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यन्तीत्यर्थः ' इति ग्रन्थेन अधिष्ठानज्ञाने अध्यस्तवस्तुनः ज्ञानं न संभवति इत्यादयोऽनेके दोषाः प्रादुर्भवन्ति ग्रंथगौरवभयादुपरम्यते , प्रसङ्गे तानपि वक्ष्यामः ।

तथाच– ' येनाश्रुतं श्रुत भवति ' इति वाक्यं ब्रह्मज्ञानेन सर्वविज्ञानं भवतीति न प्रतिपादयति ।

यत्तूक्तं शङ्कराचार्यैः 'अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक ' इत्येषोऽर्थः सर्वैर्वेदांतवादिभिरभ्युपगन्तव्यः । ' सदेव सोम्येदमग्र आसीत् ' ' एकमेवाद्वितीयम् ' ( छां. ६।२।१ ) .........इत्येवंरूपाभ्यः श्रुतिभ्यः स्मृतिभ्यश्च ' वासुदेवः सर्वमिति ' (गी.७।१९) इत्येवंरूपाभ्यः' भेददर्शनापवादाच्च ' अन्योसावन्योहमस्मि ' .... इत्येवंजातीयकात् इति तदप्ययुक्तम् । कस्यामपि श्रुतौ स्मृतौ वा जीवब्रह्मणोर्भेदः देहाद्युपाधिनिमित्तः न पारमार्थिक इत्यनुक्तेः । प्रत्युत अबाधितैः ( बाधकप्रमाणशून्यैः ) स्वतः प्रमाणभूतैः अपौरुषेयैः श्रुतिवाक्यैः तदनुसारिस्मृतिवाक्यैश्च बोधितस्य अबाध्यस्य भेदस्य पारमार्थिकत्वस्यैव सिद्धेश्च ।

शाङ्करभाष्यभामतीकारादिभिः 'लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति। तथाच सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते । यद्युच्यते तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यवहारिकम् । तथा च भिन्नविषयत्वान्न सर्वप्रमाण-

प्रतिषेध इत्यत आह– नह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् । प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते- अतात्त्विकत्वन्तुतद्गोचरस्यान्यतो बाधकादवगन्तव्यम् । न पुनः सांव्यवहारिकं नः प्रामाण्यं, न तु तात्त्विकमित्येव प्रवर्तते- बाधकं चातात्त्विकमेतेषां तद्गोचरविपरीततत्त्वोपदर्शनेन दर्शयेत् । यथा शुक्तिकेयं न रजतं मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि, तद्वदिहापि समस्तप्रमाणगोचरविपरीततत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेतेषां प्रमाणानां बाधकेन दर्शनीयं, नतु अव्यवस्थापिततत्वांतरेण प्रमाणानि शक्यानि बाधितुमित्यादिवाक्येन प्रमाणानि तात्त्विकत्वमेव ( पारमार्थिकत्वमेव ) पदार्थानां बोधयंति न तु व्यावहारिकत्वम् ( मिथ्यात्वम् ) । बाधकप्रमाणसत्त्वे तु तस्याप्रामाणिकत्वमिति कथितत्वेन प्रकृते च भेदग्राहकाणि भेदग्राहकतया शङ्कराद्यङ्गीकृतानि प्रमाणानि अभेदग्राहकस्य बाधकप्रमाणस्याभावात् भेदस्य पारमार्थिकत्वमेव गृह्णन्ति ।

अनेकासु श्रुतिषु स्मृतिषु च अभेदस्य भेदपारमार्थिकत्वाभावस्य च कथनात् उत्तयभावः कथमिति चेत् तर्हि का श्रुतिः अभेदबोधिका भेदपारमार्थिकत्वनिषेधिका ? तां कथय ।

'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम् इति (छां. ६।२।१) श्रुतिरिति चेन्न । अस्यां श्रुतौ जीवब्रह्मणोरभेदबोधकस्य वा भेदपारमार्थिकत्वाभावबोधकस्य वा पदस्याभावात्- तथाहि- अद्वितीयं=सहायरहितं अथवा सजातीयवस्तुरहितं एकं=प्रधानं किं वा अन्यत् ( जीवजडात्मकात्प्रपञ्चाद्भिन्नं ) सदेव=सन्नामकपरमात्मैव, हे सोम्य, इदमग्रे=अस्य जगतोऽग्रे ( पूर्वकाले ) आसीत् इति प्रधानस्य (श्रेष्ठस्य) सहायरहितस्य जीवादेर्भिन्नस्य सन्नामकपरमात्मनः स्थितिः कथ्यते न त्वभेदः न वा भेदपारमार्थिकत्वाभाव इति ।

न च एकमित्यनेन विजातीय (जड) राहित्यस्य अद्वितीयमित्यनेन सजातीय (चेतन) राहित्यस्य चोक्त्या भेदो नास्तीति भेदस्य मिथ्यात्वं (पारमार्थिकत्वाभावो) गम्यत इति वाच्यम् । द्वितीयशब्दस्य सहायार्थकत्वेन अद्वितीयशब्देन सहायराहित्यार्थकत्वोक्तेः । अद्वितीशब्दस्य सजातीयवस्तुराहित्यार्थकत्वोक्तावपि ' न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः ' इति गीतानुसारेण परमात्मसजतीय ( समान ) वस्त्वभावसिद्धावपि द्वितीयवस्तुसामान्याभावासिध्या अभेदस्य भेदपारमार्थिकत्वाभावस्य चासिद्धेश्च ।

' एकः सुपर्ण ' इत्यत्र एकशब्दस्य असहाय इति विद्यारण्योक्तेः । एकं असहायं इति वा—' एके मुख्यान्यकेवलाः ' इति कोशानुसारेण एकः=मुख्य इति वा, अन्यः ( जीवादिभ्यो अन्यः ) इति वेत्याद्यनेकार्थत्वसंभवेन एकपदेन विजातीयवस्त्वभावासिद्धेः । शङ्कराचार्यैः ' एकं=स्वकार्यपतितं अन्यत् नास्तीति एकमेवेत्युच्यत इति एकपदेन सृष्टेः पूर्वं परमात्मजन्य ( कार्य ) वस्त्वभावस्य, अद्वितीयपदेन सहायभूतद्वितीयवस्त्वभावस्य कथनेन, एकाद्वितीयपदाभ्यां ब्रह्मातिरिक्तवस्त्वभावकथनेन, अभेदस्य, भेदपारमार्थिकत्वाभावस्य च असिद्धेः । प्रत्युत ' तम आसीत् तमसा गूळ्हमग्रे ' इति श्रुत्या प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि इति स्मृत्या च ब्रह्मातिरिक्तस्य तमसः ( प्रकृतेः ) स्थितिसिद्धेश्च ।

' जीव ईशो विशुद्धा चिद्भेदस्तस्यास्तयोर्द्वयोः । अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥ ' इत्यद्वैतिभिः अनादीनां जीवेशादीनां विद्यमानत्वकथनेन एकाद्वितीयपदाभ्यां द्वितीयवस्त्वभावकथनस्य स्वव्याहतत्वाच्च । ' नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत् ' ( बृ १।२।१ ) इति श्रुतिव्याख्यावसरे शङ्कराचार्यैरेव ' अनुपलब्धिश्चेदभावहेतुः सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं वोपलभ्यते

तस्मात्सर्वस्यैवाभावोऽस्तु-न ' ' मृत्युनैवेदमावृतमासीत् ' इति श्रुतेः। यदि हि किंचिदपि नासीद्येनाव्रियते यच्चाव्रियते तदा नावक्ष्यन्मृत्युनैवेदमावृतमिति–न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति-ब्रवीति च मृत्युनैवेदमावृतमासीदिति। तस्माद्येनावृतं कारणेन यच्चावृतं कार्यं प्रागुत्पत्तेस्तदुभयमासीत् श्रुतेः प्रामाण्यादनुमेयत्वाच्च ' इति वाक्येन द्वितीयवस्तुसत्वकथनात् , शङ्करभाष्यविरुद्धं द्वितीयवस्त्वभावकथनद्वारा भेदपारमार्थिकत्वाभावबोधनं , इत्याद्यनेकदोषयुक्तत्वेन नेदं वाक्यं भेदपारमार्थिकत्वाभावादौ प्रमाणं भवितुमर्हति।

' आत्मैवेदं सर्वम् ' (छां. ७।२५।२) इति वाक्यमपि न जीवब्रह्मणोरभेदं वा जीवब्रह्मणोर्भेदस्य पारमार्थिकत्वाभावं वा बोधयति तत्र तद्बोधकपदानामभावात् ।

न च इदं सर्वं वस्तुजातं आत्मैव=आत्मनि कल्पितं आत्मव्यतिरेकेण नास्ति इत्यर्थकतया सर्वस्य वस्तुजातस्य आत्मव्यतिरेकेण नास्तित्वरूपं मिथ्यात्वं बोधयतीति वाच्यम् । एवमर्थकथनस्य गीतातच्छङ्करभाष्यविरुद्धत्वात् पूर्वोत्तरवाक्यविरुद्धत्वात् असंभवाच्च ।

तथाहि ' नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व। अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ' ( गी. ११.४० )

अस्य शङ्करभाष्यम्– नमः पुरस्तात् पूर्वस्यां दिशि तुभ्यं अथ पृष्ठतस्ते पृष्ठतोऽपि च ते नमोऽस्तु। ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय, हे सर्व ! अनन्तवीर्यामितविक्रमः अनन्तं वीर्यं अस्य अमितो विक्रमोऽस्य वीर्यं सामर्थ्यं विक्रमः पराक्रमः। वीर्यवानपि कश्चिच्छस्त्रादिविषये न पराक्रमते मन्दं पराक्रमते वा त्वं त्वनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्यामितविक्रमः । सर्वं समस्तं जगत् समाप्नोषि सम्यगेकेनात्मना व्याप्नोषि यतः तस्मादसि भवसि सर्वः

त्वया विनाभूतं न किंचिदस्ति इत्यर्थ इति ।

तथा च एतद्गीतातच्छङ्करभाष्याभ्यां परमात्मनः पूर्वपश्चिमादिसर्वदिग्वृत्तित्वं, सर्वजगद्व्याप्तत्वनिमित्तेनैव सर्वशब्दवाच्यत्वं अंतर्यामितया परमात्मना विरहितं जगत् नास्तीत्यपि सिध्यति । न तु जगतः परमात्मस्वरूपत्वं परमात्मव्यतिरेकेणाभावो वा सिध्यति । तद्विरुद्धत्वादिति ।

'आत्मैवेदं सर्वमित्यस्य इदं सर्वं जगत् आत्मव्यतिरेकेण नास्ति इत्यर्थो न स्वीकार्यः । किंतु गीतातच्छङ्करभाष्यानुसारेण आत्मा इदं सर्वं एतत्समस्तं जगद्व्याप्तमित्यर्थकरणमेवोचितम् । इदं सर्वं आत्मनि कल्पितं आत्मव्यतिरेकेण नास्तीत्यर्थकरणं पूर्वोत्तरवाक्यविरुद्धं च । आत्मैवेदं सर्वमित्येतद्घटितं वाक्यं इत्थम् 'आत्मैवाधस्तात् आत्मा उपरिष्टात् आत्मा पश्चात् आत्मा पुरस्तात् आत्मा दक्षिणतः आत्मा उत्तरतः आत्मैवेदं सर्वं स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीडः आत्ममिथुन आत्मानंदः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु अकामचारो भवति' ( छां ७.२५।२ ) इति अत्र पूर्ववाक्येन आत्मा=परमात्मा, अधस्तात्=अधोदेशे वर्तते, उपरिष्टात्=उपरिदेशे, पश्चात्=पश्चाद्भागे, पुरस्तात्=पुरोभागे, दक्षिणतः=दक्षिणभागे, उत्तरतः=उत्तरभागे इति कथनात् दक्षिणोत्तरादिदिशाः सिध्यन्ति ।

उत्तरवाक्येनापि 'स वा एष एवं पश्यन् एवं मन्वानः एवं विजानन्' इति जीवपरमात्मनोर्द्रष्टृद्रष्टव्यभावमंतृमन्तव्यभावज्ञातृज्ञेयभावाद्युक्तया भेदः सिध्यति । स्वतः प्रमाणीभूतेन अबाधितेन वेदेनोक्तभेदस्य पारमार्थिकत्वं च सिध्यति ।

तथा तस्य सर्वेषु लोकेषु कामचारो भवति इति ज्ञानिनः

सर्वलोकेषु यथेष्टसञ्चरणोक्त्या लोकज्ञानेच्छासञ्चारादिपदार्थाः सिध्यन्तीति आत्मैवेदं सर्वमित्यस्य आत्मव्यतिरेकेण द्वितीयवस्त्वभाव-भेदमिथ्यात्वबोधकत्वोक्तौ पूर्वोत्तरवाक्यविरोधः। तथार्थो न संभवति च। आत्मैवेदं सर्वमिति आत्मेदंपदयोः सामानाधिकरण्यं (सजातीयविभक्तिमत्त्वं) प्रतीयते, तेन च आत्मपदार्थचेतनस्य इदंपदबोध्य-जडरूपजगता अभेदो भासते। परंतु जडचेतनयोरभेदस्य बाधितत्वेन इदं सर्वं आत्मैव आत्माधीनमेवेत्यर्थस्यैव वक्तव्यत्वात् उक्तं च शङ्कराचार्याद्यद्वैतिभिः-बाधायां सामानाधिकरण्यस्थले तदधीनत्वं - तथाहि- छांदोग्योपनिषच्छांकरभाष्ये-न कामस्य (जडस्य) कर्तव्यत्वात् शब्दादिवत् पारार्थ्यप्रसङ्गाच्च देवस्य तस्माद्यथेह सर्वकाम इति बहुव्रीहिस्तथा कामोऽस्मीति स्मृत्यर्थो वाच्यः (छां.शां.भा.३।१४।२) इति वाक्येन, तद्भाष्यव्याख्यानभूतानन्दगिरिटीकायां च 'कामसामानाधिकरण्ये बाधकोपलम्भाद्बहुव्रीहिरेवेति परिहरति न कामस्येति। तस्य कार्यत्वात्तदैक्ये ब्रह्मणोऽनादित्वं बाध्येत, चेतनशेषत्वाच्च कामस्य तदैक्ये ब्रह्मणः स्वातन्त्र्यं हीयेत। तथा च सर्वकाम इत्यत्र कर्मधारयासंभवात् बहुव्रीहिरेवेत्यर्थः। कथं तर्हि कामोऽस्मीति तादात्म्यस्मृतिरित्याशंक्याह तस्मादिति। कामेश्वरयोः सामानाधिकरण्यासंभवात् प्रकृतश्रुतौ बहुव्रीहिर्यथेष्टस्तथा स्मृतावपि ब्रह्मपारतन्त्र्यमात्रं कामस्य विवक्षितं, श्रुत्यनुसारेण स्मृतेर्नेतव्यत्वादित्यर्थः इति वाक्येन जडचेतनयोरैक्यासंभवमुक्त्वा कामादीनां परमात्माधीनत्वमुक्तम्।

तथा शाङ्करब्रह्मसूत्रभाष्ये।

एवं हन्तास्यैव सर्वे रूपं असामेति त एतस्यैव सर्वे रूपमभवन्। (बृ.१।५।२१) इति श्रुतौ वागादीनां प्राणाभेदोक्तेः वागादेः प्राणेनाभेद इति पूर्वपक्षं कृत्वा प्राणस्य इन्द्रियैः भेदश्रुतेः वैलक्षण्याच्च तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वं तद्रूपभवनं वागा-

दीनामिति मन्तव्यं न तादात्म्यम् । (बृ.शां.भा. २।४।१७।१८।१९ ) इति तादात्म्यं निषिध्य तदधीनव्यापारवत्वेन सामानाधिकरण्यस्य गतिरुक्ता ।

तथा भामत्यामपि यापि च प्राणरूपतामिन्द्रियाणामभिदधाति श्रुतिः-तत्रापि पौर्वापर्यालोचनायां भेद एव प्रतीयत इत्युक्तं भाष्यकृता। तस्माद्बहुश्रुतिविरोधात् पूर्वापरविरोधाच्च प्राणरूपताभिधानं इन्द्रियाणां प्राणायत्ततया भाक्तं गमयितव्यम् ' इति सामानाधिकरण्यस्थले अभेदे बाधिते तदधीनता उक्ता इति ।

किं च अद्वैतमतरीत्या निर्विशेषे अद्वितीये स्वप्रकाशे (इतरावेद्ये ) ब्रह्मणि भ्रमासंभवस्य ब्र. सू. शां. भाष्यभामतीग्रन्थे उक्तत्वेन आत्मनि ( ब्रह्मणि ) कल्पितमित्यर्थः असंभावितः । विशेषस्तु अध्यासवादनिराकरणप्रकरणे तत्र तत्र उक्तो द्रष्टव्यः ।

अपि च आत्मव्यतिरेकेणाभाव इत्यनेन शशविषाणवत् जगतः असत्वमेवाभिप्रेतं वा, विशिष्टनिषेधः विशेषणे पर्यवस्यतीति न्यायेन विशेषणीभूते व्यतिरेके (भेदे) पर्यवसानेन जगतः आत्मरूपत्वमेव ( आत्माभेद एव ) न तु भेद इति-नाद्यः-अपसिद्धांतात् , अर्थक्रियाकारित्वानुपपत्तेश्च-न द्वितीयः, जडस्य जगतः पूर्वोक्तरीत्या चेतनब्रह्मरूपत्वानुपपत्तेः इत्याद्यनेकदूषणग्रस्तत्वेन आत्मैवेदं सर्वमिति वाक्यं भेदस्य पारमार्थिकत्वं निषेधति अभेदं बोधयतीति शाङ्करोक्तिरयुक्तैव ।

ब्रह्मैवेदं सर्वं (विश्वं) इति वाक्यमपि 'नमः पुरस्तात्' (गी.) इति गीतातच्छाङ्करभाष्यानुसारेण ' आत्मैवेदं सर्वं ' इति वाक्यवत्। विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधि - निमित्तो भेदो न पारमार्थिक इत्यस्मिन्नर्थे ' ब्रह्मैवेदं सर्वं ' ( मुण्डक २।२।११ ) इति श्रुत्युदाहरणमयुक्तम् । तथाहि—

| | |
|---|---|
| ' ब्रह्मैवेदममृतं पुरस्तात् | इदं=उक्तलक्षणं, अमृतं=नाशरहितं ब्रह्म, पुरस्तात्=पूर्वभागे वर्तते- |
| ब्रह्म पश्चात् | ब्रह्म, पश्चात्=पश्चाद्भागे वर्तते- |
| ब्रह्म दक्षिणतश्चोत्तरेण अध- श्चोर्ध्वं च प्रसृतं | ब्रह्म, दक्षिणतः=दक्षिणदिग्भागे,उत्तर- दिशि, अधः, ऊर्ध्वं च प्रसृतं=प्रगतम् |
| ब्रह्मैवेदं विश्व- (सर्वं) इद | ब्रह्मैव इदं विश्वं=सर्वव्याप्तं इदं=ब्रह्म, वरिष्ठं=अतिशयेन श्रेष्ठं |
| वरिष्ठम् ' | ( सर्वोत्तमं ) |

(मु.२।२।११ ) इति श्रुतिः)

इति ब्रह्मणः सर्वजगद्व्याप्तत्वं सर्वोत्तमत्वं च कथयंती श्रुतिः जीवब्रह्मणोर्भेदमेव कथयति न तु भेदस्य पारमार्थिकत्वाभावं वा अभेदं वा कथयति इति ।

बल्लारिस्थेन वेंकटरामशास्त्रिणा ' मुण्डके ' ब्रह्मैवेदं विश्व ' मिति पाठस्य सत्वेन ब्रह्मैवेदं सर्वमिति पाठः कस्माद्ग्रन्थात्संगृहीतः इत्येतन्न ज्ञायते ' इति यदुक्तं तत् स्वाचार्यभाष्यग्रन्थानवलोकनिबन्धनम्।

तथाहि- ' आरंभणशब्दादिभ्यः इत्यादिशब्दात् .... ' तत्त्वमसि ' ' इदं सर्वं यदयमात्मा ' ब्रह्मैवेदं सर्वम् ( मु. २।२।११ ) ' आत्मैवेदं सर्वम् ' इति ( ब्र.सू भा.२।१।१४ ) सूत्रभाष्ये तथा ( १।४।२२ ) ब्र.सू.शाङ्करभाष्ये तथा गौडपादकारिकाव्याख्याने च ब्रह्मैवेदं सर्वमिति पाठस्य ग्रहणात् तच्छाङ्करभाष्यादेव संगृहीत इति ज्ञातव्यमासीत् । तद्भाष्यानवलोकननिमित्तोऽयमाक्षेप इति निर्णायक ( जड्जमेंट ) वाक्ये तथा ग्रहणेऽपि विचारपरवाक्ये ' ब्रह्मैवेदं विश्वमिदं वरिष्ठं ' इति वाक्यस्यापि ग्रहणात् तथाग्रहणं नाज्ञानकल्पकं किंतु पाठद्वययुक्तं मुण्डकवाक्यमित्यस्य कल्पकम् ।

यच्चाप्युक्तं तेनैव—

| | |
|---|---|
| ब्रह्मैवेदममृतं पुरस्तात् | पुरस्तात्=पूर्वदिशि विद्यमानं इदं वस्तु जातं, अमृतं=नित्यं ब्रह्मैव |
| ब्रह्म पश्चात् | पश्चिमदिशि |
| ब्रह्म दक्षिणतश्चोत्तरेण | दक्षिणदिशि उत्तरदिशि |
| अधश्चोर्ध्वं च प्रसृतं | अधोभागे ऊर्ध्वभागे प्रसृतं सर्वं ब्रह्मैव |
| ब्रह्मैवेदं विश्वं | इदं विश्वं=प्रमाणसिद्धं समस्तं जगत्, वरिष्ठं=अत्युत्तमं |
| इदं वरिष्ठं इति श्रुतेः | इदं ब्रह्मैव इति |

अभेदबोधकत्वेन जगद् ब्रह्मणोर्भेदाङ्गीकारे श्रुतेः स्वारस्यं न संभवति। द्वैतिभिः ' इदं सर्वं ब्रह्मैव, इत्यस्य ब्रह्माधीनमेवेत्यर्थकरणं निश्चयेनासङ्गतम्। तदा ब्रह्मैवेदमिति अवधारणं ( एवकारः ) व्यर्थं भवति। तस्मात् अस्मिन् वाक्ये जगद्ब्रह्मणोर्नियम्यनियामकत्वादि – रूपभेदसंबंधकथनपक्षे श्रुत्यर्थो ध्वंसं प्राप्नुयात्–तथाच-यश्चोरः स स्थाणुरिति वाक्ये यथा यश्चोरत्वेन प्रतीतः स स्थाणुरितिवत् ब्रह्मैवेदं सर्वमित्यस्यापि यत् सर्वत्वेन प्रतीतं तद्ब्रह्म ( ब्रह्मणि कल्पितं–न तु जगदस्ति ) इत्यर्थकरणं युक्तमिति। तदतीव मन्दम्।

तथाहि- पूर्वोदाहृताभ्यां ' नमः पुरस्तादथ पृष्ठतस्ते ' (गी.) इति गीतातच्छाङ्करभाष्याभ्यां सर्वदिग्व्याप्तिसर्वजगद्व्याप्तिकथनेन जगद्ब्रह्मणोर्भेदस्यैव कथितत्वेन तद्विरोधात्, ' अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ' इति श्रुतौ स्पष्टं जगद्ब्रह्मणोर्व्याप्यव्यापकभावोक्त्या भेदस्यैव कथनात्। जगद्ब्रह्मणोरभेदाङ्गीकारे ब्रह्म जगद् व्याप्नोतीत्यस्य मल्लो मल्लं ( स्वं ) गच्छति इतिवत् अयोगेन व्याप्य-व्यापकभावस्य अस्वरसतमत्वात् इदं सर्वं ब्रह्मैवेत्यस्य ब्रह्माधीनमेवेत्य-

र्थंकरणं ' कामोऽस्मि ' ( गी. ) ' एतस्यैव सर्वे रूपमभवन् ' ( बृ. १.५।२१ ) इत्याद्यभेदबोधकतया भासमानवाक्यानां शङ्कराचार्यादिभिः स्वभाष्ये तदधीनत्वाद्यर्थस्य कथितत्वेन अत्यन्तं सङ्गतत्वात् , अभेदबोधकतया भासमाने एतस्यैवेति एवकारघटितवाक्येऽपि तदधीनत्वाद्यर्थस्य कथनात् ' ब्रह्मैवेदं सर्वम् ' इत्यस्य तदधीनत्वाद्यर्थकरणे एव एवकारस्य इदं सर्वं तदधीनमेव न तु तदनधीनं इति अनधीनत्वव्यावर्तकतया सार्थकत्वात् । तथा च जगद्ब्रह्मणोः भेदव्याप्ततदधीनत्वाद्यर्थाङ्गीकारे श्रुत्यर्थः समीचीनो भवति न तु ध्वस्तो भवति । प्रत्युत यः स्थाणुः स चोर इतिवत् यत् प्रतीतं सर्वं ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमस्नानसन्ध्यादानतपोवेददेवयज्ञगङ्गादि-तीर्थपरलोकैतल्लोकेश्वरादिकं तद् ब्रह्मैव ब्रह्मणि कल्पितम् इत्यद्वैतिरीत्याऽर्थाङ्गीकारे तु न केवलं श्रुत्यर्थो ध्वंसं प्राप्नुयात किं तु श्रुतः ( वेदः ) ईश्वरः, देवाः, यज्ञः, ब्राह्मणादिसर्वं जगत् , वक्ता त्वं, श्रोतारः सर्वेऽपि ध्वंसमाप्नुयुः इति महत् कष्टमापद्येत ।

ननु अस्माकं सर्वस्याभाव इष्ट एव । अद्वैतिभिः विवर्तवादादिकथनं मध्यमाधिकारिणं प्रत्येव न तूत्तमाधिकारिणं प्रति । उक्तं हि संक्षेपशारीरके तद्व्याख्यानभूतेऽद्वैतसिद्धिकृन्मधुसूदनसरस्वतीभिः रचिते व्याख्याने च–

तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा ।
तत्त्वप्रच्युतिविभ्रमक्षतिकरी तत्रान्त्यदृष्टिर्मता ॥ सं.शा. २ ४३

प्रत्यक्षादेस्तत्त्वावेदकमानत्वदृष्टिरधमा भवति, अविवेकादिमत्पुरुषसाधारणत्वात् पुरुषार्थानुपयोगित्वात् अनर्थहेतुत्वात् अनात्मसत्यत्वविषयत्वाच्च साऽधमेत्यर्थः ।

तत्त्वक्षतिः– प्रपञ्चसत्यत्वक्षतिकरी या विवर्तदृष्टिः सा मध्यमा, ब्रह्मविचाराद्यधीनविवर्तदृष्टेर्विवेकादिमत्पुरुषाश्रयत्वात् परंपरया

मोक्षोपयोगित्वादात्मतत्वविषयत्वाच्च सा पूर्वदृष्ट्यपेक्षयोत्तमा, तावत्या द्वैतोपशांत्यसंभवात् द्वैतोपशांत्यपेक्षया जघन्येति मध्यमेत्यर्थः। या पुनरन्त्या दृष्टिः सा तत्त्वप्रच्युतिविभ्रमक्षतिकरी, प्रपञ्चतत्वविरोधिनी प्रपञ्चभ्रमत्वगोचरा या विवर्तदृष्टिस्तस्याः क्षतिकरी, अतः सोत्तमपुरुषाश्रयत्वात् सकलद्वैतभ्रमनिवर्तकतया साक्षान्मोक्षसाधनत्वान्निरतिशयानन्दात्ममात्रविषयत्वाच्च सर्वोत्तमा मतेत्यर्थः इति। तर्हि देवानां प्रियोऽसि सर्वस्याप्यभावे वक्ता नास्ति, वदनसाधनं नास्ति, वक्तव्यं नास्ति, श्रोता नास्ति, श्रवणसाधनं नास्ति इति वदन् पुनः वदनादिव्यापारं कुर्वन् भ्रांतौषधालये निवेशयितुं योग्यः न संभाषणीय इत्यलमेतादृशैः सह विवादेन।

अपि च यश्चोरः स स्थाणुरिति वाक्यं चोरत्वेन प्रतीतस्य स्थाणुत्वं मुख्यया वृत्त्या बोधयति अमुख्यवृत्त्या वा? नाद्यः चोरपदस्य चोरत्वेन प्रतीत इत्यर्थस्य मुख्यार्थकत्वाभावात् - अमुख्यवृत्त्या बोध्यते इति द्वितीयपक्षे 'ब्रह्मैवेदं सर्वमित्यत्र सर्वपदस्य सर्वत्वेन प्रतीतं इत्यर्थकरणमप्यमुख्यमेव ( लक्षणावृत्त्यैव ) स्वीकरणीयमिति ब्रह्मशब्दस्य ब्रह्माधीनमित्यर्थकर्तुः सकाशात् को विशेष आचरितो लोकोत्तरप्रज्ञेन?। हा! विशेषः आचरितः। ब्रह्माधीनत्वादिरूपोऽर्थः शङ्कराचार्यादिभिरुक्तः श्रुत्याद्यनुसारी च। तमेतं प्रमितमर्थं परित्यज्य सर्वं सर्वत्वेन प्रतीतं ब्रह्म ब्रह्मणि कल्पितमिति प्रमाणविरुद्धस्य सर्वजगद्व्यवहारनाशकस्य चार्थस्य कथनेन।

अपि च ' किं बहुना ब्रह्मैवेदं विश्वं-समस्तं, इदं जगत् वरिष्ठं वरतमं ' इति शाङ्करभाष्यम्। अत्र हि ब्रह्मैव इदं विश्वं-समस्तं इत्येकं वाक्यम्। इदं जगत् वरिष्ठं वरतमं इति द्वितीयं वाक्यम् ' इति वाक्यभेदः स्पष्टं प्रतीयते। इदंपदद्वयघटितत्वात्। प्रथमवाक्ये तावत् शाङ्करमतरीत्या इदं विश्वं समस्तं ब्रह्मैव इति विश्वमुद्दिश्य

ब्रह्मत्वं विधीयते, द्वितीयवाक्ये इदं जगत् इति जगदुद्दिश्य वरिष्ठं वरतममिति वरतमत्वं विधीयते, इति जगतः उत्तमत्वं स्पष्टं बोध्यते। एवंरीत्या स्पष्टं प्रतीयमानमर्थं स्वीकृत्य शङ्कराचार्येण जगत उत्तमत्वमुक्तम्। मिथ्यात्वे उत्तमत्वं कथं घटेत । तदन्यथानुपपत्याऽपि जगतः सत्यत्वं सिध्यति इति न मिथ्यात्वं जगत इत्युक्तं सिविलप्लूट नामके पुस्तके।

जगतो वरिष्ठत्वं शङ्करेण नोक्तम्। शाङ्करवाक्यान्वयाज्ञान—मूलकैव जगतो वरिष्ठत्वं शङ्करेणोक्तमित्युक्तिः -वरिष्ठशब्दस्तु विधेयवाचकब्रह्मशब्देनैवान्वेति न तु उद्देश्यवाचकविश्वशब्देन इति यदुक्तं स्वमताग्रहपिशाचाविष्टेन शास्त्रिणा, तदयुक्तम्।

शङ्करभाष्ये इदंपदद्वयोपेतं महावाक्यं ब्रह्मैवेदं विश्वं=समस्तं इति प्रथमवाक्यमिदं विश्वमुद्दिश्य ब्रह्मत्वविधायकं, । इदं जगत् वरिष्ठं वरतमं इति द्वितीयं वाक्यं जगदुद्दिश्य वरिष्ठत्वं (वरतमत्वं) विधायकमित्यवांतरवाक्यद्वयघटितमिति स्पष्टं बालानामपि प्रतीयते।

श्रुतावपि ब्रह्मैवेदं विश्वमिदं वरिष्ठं ' इति वाक्यं इदंपदद्वयघटितत्वेन ' इदं विश्वं ब्रह्मैव ' इत्येकं वाक्यम् , ' इदं वरिष्ठं ' इत्यपरं वाक्यमिति स्पष्टं प्रतीयते। श्रुतौ शाङ्करभाष्ये च विद्यमानं वाक्यं यद्येकवाक्यं स्यात् तर्हि इदमिति पदद्वयमनन्वितं स्यात् । यदि इदं विश्वं समस्तं इदं जगत् वरिष्ठं वरतम ब्रह्मैव इति जगदुद्दिश्य वरिष्ठतमब्रह्मत्वं विहितमिति शङ्करेणोक्तमित्युक्तं भवेत् तदा शङ्करभाष्येइदंपदद्वयं व्यर्थं स्यात्। इदं विश्वं समस्तं....जगत् वरिष्ठं ब्रह्मैवेत्यनेनैव निर्वाहात् समस्त...... जगच्छब्दयोर्मध्ये पुनः इदंशब्दप्रयोगो न स्यात्।

श्रुतावपि ब्रह्मैवेदं विश्वं ... वरिष्ठं इत्येवोच्येत न तु ब्रह्मैवेदं विश्वमिदं वरिष्ठमिति विश्व... वरिष्ठशब्दयोर्मध्ये इदंशब्दो न स्यात्।

अस्ति च श्रुतौ शाङ्करभाष्ये च मध्ये इदंशब्द इत्यतः श्रुतौ शाङ्कर-भाष्ये च वाक्यद्वयं अभिप्रेतमिति प्रतीयते। एवं स्पष्टं प्रतीयमान-वाक्यद्वयत्वापलापः वरिष्ठशब्दस्य पूर्ववाक्ये अद्वैतमतरीत्या विधेय-ब्रह्मणा अन्वयः इत्याद्युक्तिः, द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च इति गीतोक्तासुरस्वभावनिबन्धना। 'असत्यमप्रतिष्ठं ते जग-दाहुरनीश्वरम्' 'ईश्वरोऽहं' इत्यादि मिथ्याज्ञानेन 'मामप्राप्यैव-कौन्तेय ततो यांत्यधमां गतिम्' इत्युक्ताधमगतिप्राप्तिसाधनं चेति। याऽपि शास्त्रिणा 'वरिष्ठमिति अतिशयार्थके ष्ठन्प्रत्ययांतशब्दस्य अत्युत्तमार्थकत्वेन जगतः अत्युत्तमत्वं कैरपि शास्त्रकारैर्नोच्यते। सन्त्वितरे शास्त्रकाराः, माध्वा अपि सर्वोत्तमत्वादिकं विष्णोरेव वदंति न जगत इति स्थिते जगतः अत्युत्तमत्वं शङ्करेणोक्तमिति व्याजेन अविद्यमानं जगतः अत्युत्तमत्वं कथयतां एतद्ग्रन्थकर्तृतीर्थानां स्वसि-द्धांतविरोध आयास्यतीत्युक्तिः, स्वमतसाधनपरमतनिराकरणासामर्थ्य-निमित्तजातकोपावेशजनितबुद्धिभ्रांतिप्रयोज्यैव। नहीदं सिविलसूटग्रं-थकर्त्रा जगतः अत्युत्तमत्वं स्वसिद्धांतत्वेनोक्तम्। शङ्कराचार्याः जगतः उत्तमत्वं कथयन्ति। कथं जगतो मिथ्यात्वे उत्तमत्वं स्यादित्यापादित-मेव। द्वैतसिद्धांते तु श्रुत्यर्थ उपक्रम एव निरूपितः 'ब्रह्म उद्दिश्य पुरोदेशवृत्तित्वपश्चिमदेशवृत्तित्वविश्वव्याप्तत्वादिकं कथयित्वा इदं वरिष्ठमिति वाक्येन ब्रह्मणः सर्वोत्तमत्वं विधीयत इति, न तु जगतः अत्युत्तमत्वं बोध्यते' इति।

उत्तमत्वमेव द्वितीयाधमवस्तुसापेक्षं, अत्युत्तमत्वं तु नितरां द्वितीयानेकाधमवस्तुसापेक्षमिति अद्वैतमतरीत्याऽपि अङ्गीकृत्य अद्वि-तीयब्रह्मणोऽपि वरिष्ठशब्दबोध्यात्युत्तमत्वं कथं घटते इत्येतच्छास्त्रि-भिरपि पर्यालोचितव्यमासीत्। हा! न तेषामपराधः! न ते पर्य-नुयोज्याः। आग्रहेण बुद्धौ पर्यालोचनशक्तेः कुण्ठितत्वात् इति।

इदं सर्वं यदयमात्मा ( बृ.२।४।६ ) इति श्रुतिरपि जीवब्रह्मणोर्भेदस्य पारमार्थिकत्वाभावं वा अभेदं वा यथा न वक्ति तथा प्रदर्शितं आत्मेति ( ब्र.सू ४।१।३ ) सूत्रविचारावसरे तत्रैव द्रष्टव्यं।

नान्यदतोऽस्ति द्रष्टृ इति वाक्यमपि ब्रह्मान्यजीवनिषेधद्वारा नैक्यबोधकम् । एतत्पूर्ववाक्येषु सूर्यचन्द्रादिदेवानां अक्षरनामकब्रह्मणा, भेदस्यैव कथितत्वात् अस्मिन् वाक्ये भेदनिषेधकपदाभावाच्च । तथा हि एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः इति वाक्येन जगद्व्यवस्था प्रशास्तृपूर्विका व्यवस्थात्वात् राज्यव्यवस्थावत् ( यथा राज्यव्यवस्थाया एकः प्रशास्ता वर्तते तथा जगद्व्यवस्थाया अपि एकः प्रशासक आवश्यक इति प्रशास्त्रक्षरसिद्धिः ) इति अक्षरसद्भावे एकमनुमानं, विमतौ सूर्याचन्द्रमसौ विशिष्टज्ञानवता निर्मितौ प्रकाशकत्वात् प्रदीपवत् इति ( यथा प्रकाशको दीपः ज्ञानविशेषवता निर्मितः तथा प्रकाशकौ सूर्याचन्द्रमसावपि ज्ञानविशेषवता निर्मितौ ) सूर्याचन्द्रमसोर्निर्मातृज्ञानविशेषवदक्षरसद्भावे अपरमनुमानं, विमतौ नियंतृपूर्वकौ विशिष्टचेष्टावत्त्वात् भृत्यादिवत् इति ( यथा चेष्टाविशेषवतो भृत्यादेः कश्चिन्नियन्ता वर्तते तथा गमनागमनप्रकाशनादिव्यापारविशेषवतोः सूर्याचन्द्रमसोरपि एकः नियंता आवश्यक इति) सूर्याचन्द्रनियन्त्रक्षरसद्भावे अन्यदनुमानं च सूचयित्वा ×

'एतस्याक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ तिष्ठतः'इत्यनेन विमते द्यावापृथिव्यौ प्रयत्नवता विधृते सावयवत्वेऽपि अस्फुटितत्वात् गुरुत्वेऽपि अपातित्वात् संयुक्तत्वे सति वियुक्तत्वात् । इत्यादि

---

× शङ्कराचार्यैरपि एतानि वाक्यानि उक्तानुमानसूचनद्वारा शास्यशासकभावादिना सूर्यादिजीवानां ब्रह्मरूपाक्षरेण भेदबोधकानि भवंति इति एवमेव व्याख्यातम् ।

( यथा हस्तन्यस्तपाषाणादि गुरुत्वेऽपि अपातित्वादिना केनचित् प्रयत्नवता पुरुषेण धृतं तथा द्यावापृथिव्योरपि एकः प्रयत्नपूर्वकं धर्ता आवश्यक इति द्यावापृथिव्यभिमानिदेवताधारक एव अक्षरमिति ) अक्षरसद्भावे अनुमानं सूचयित्वा –

'एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति ' इति वाक्येन च निमेषादयः नियन्तृपूर्वकाः कलयितृत्वात् संप्रतिपन्नवत् इति ( निमेषादिनियन्तृतया अक्षरं सिध्यति इति ) अक्षरसद्भावे अनुमानं सूचयित्वा -

'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्याः नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु ' इति वाक्येन विमता गङ्गाद्याः नियन्तृपूर्विकाः नियतप्रवृत्तिमत्वात् भृत्यादि'प्रवृत्ति'वत् (यथा अन्यथा प्रवर्तितुं उत्साहवन्तोऽपि भृत्याः तथा अकृत्वा नियतप्रवृत्तिमत्वेन केनचिन्नियताः, तथा गङ्गाद्याः नद्यभिमानिदेवता अपि अन्यथा प्रवर्तितुमुत्साहवंतोऽपि नियमेनैव प्रवर्तन्ते इति तासां देवतानामपि एको नियन्ता आवश्यकः ) इत्याद्यनेकान्यनुमानानि सूचयित्वा शास्यशासकभाव-धार्यधारकभाव-जन्यजनकभावादिना ' चन्द्रसूर्यनद्याद्यभिमानिजीवानां अक्षरनामकपरब्रह्मणा भेदस्य बोधितत्वेन इमानि वाक्यानि सूर्यादिजीवानां ब्रह्मणा भेदबोधकान्येवेति पूर्ववाक्यविरुद्धत्वादुत्तरं नान्यदतोऽस्ति द्रष्टृ इति वाक्यं न भेदनिषेधकम् । ननु तर्हि एतद्वाक्यस्य कोऽसावर्थ इति चेत् शृणु सूर्यादिप्रशास्तृत्वादिना अक्षरं (ब्रह्म) अङ्गीकरणीयमिति यदुक्तं तन्न युक्तम् । अग्नेर्दहनप्रकाशकत्ववत् प्रकृत्यादेरचेतनस्यैव प्रशास्तृत्वसंभवेन न प्रशास्तृत्वेन प्रधानाद्यतिरिक्तं ब्रह्म अङ्गीकर्तुं शक्यमिति सांख्येन आक्षेपे कृते तत्परिहारार्थम् -

'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मंतृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति वाक्यं प्रवृत्तम् ।

हे गार्गि ! शासकत्वादिना सिध्यत् अक्षरं अदृष्टं ÷ दर्शन-विषयत्वयोग्यत्वाभाववत् स्वयं च द्रष्टृ, एवं श्रवणाविषयः स्वयं श्रोतृ, एवं मननाविषयः स्वयं मंतृ, एवं ज्ञानाविषयः स्वयं विज्ञातृ 'अतः' दर्शनायोग्यत्वात् 'अतः' श्रवणायोग्यत्वात् 'अतः' मननाविषयत्वात् 'अतः' ज्ञानाविषयत्वात् 'अतः' एतस्मात् शासकात् अन्यत् प्रधानं वा अव्याकृताकाशादिपृथिव्यंतं वा न द्रष्टृ न श्रोतृ न मंतृ न विज्ञातृ इति शासकतया सिध्यद्वस्तुनि विद्यमानद्रष्टृत्वश्रोतृत्वमन्तृत्वादीनां जडेषु प्रधानादिष्वसंभवेन न शासकं प्रधानादिजडं भवितुमर्हति। किंतु अक्षरं ब्रह्मैवेति, एतस्मिन् खल्वक्षरे गार्गि आकाश ओतप्रोतः आश्रयतया सम्बद्धः, इति प्रधानवादिमतनिराकरणार्थं प्रवृत्तं न तु अक्षरात् ब्रह्मणोऽन्यत् द्रष्टृ श्रोतृ मंतृ विज्ञातृ वस्त्वेव नास्तीति कथनद्वारा ब्रह्मान्यजीवनिषेधार्थमिति ।

एवमेव व्याख्यातं शङ्कराचार्येणापि एतदुपनिषद्भाष्ये ।

---

÷ एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः । इमं देशमनुप्राप्ताः मम दर्शनलालसाः ॥ न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन । ऋते ह्यैकांतिकश्रेष्ठात्त्वं चैवैकांतिकोत्तम ॥ एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते । इच्छन् मुहूर्तान्नश्येयं ईशोऽहं जगतां गुरुः ॥ इत्यादिना स्वस्मिन् भक्तितत्प्रयोज्यानुग्रह- (दर्शनदानेच्छा) मन्तरा दर्शनाविषय इति, अथवा साकल्येन दर्शनाविषय इति अर्थः, ततो न दर्शनश्रुतिविरोधः ।

किं च नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मंतृ नान्यदऽतोऽस्ति विज्ञातृ, इति वाक्यस्य अक्षरात् अन्यत् द्रष्टृ श्रोतृ मन्तृ विज्ञातृ नास्ति इति द्रष्टृ श्रोतृ मंतृ विज्ञातृ चेतनस्य निषेध द्वारा ब्रह्मणः अन्यः जीवो नास्तीति व्याख्यानकरणं, ब्रह्मान्यस्य श्रोतृत्वमंतृत्वविज्ञातृत्वादिबोधकैः तत एव भेदबोधकैः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'येनाश्रुतं श्रुतं भवति' 'तमेवं विद्वानमृत इह भवति' 'यया तदक्षरमधिगम्यते' इत्यादिवाक्यैर्विरुद्धं, 'यो वा एतदक्षरं गार्ग्यविदित्वा अस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यंतवदेवास्य तद्भवति... अथ य एतदक्षरं गार्गि विदित्वा अस्माल्लोकात्प्रैति स ब्राह्मणः' इति अव्यवहितपूर्ववाक्येन विरुद्धं च ।

यथापूर्ववाक्ये शासकत्वादिना अक्षरं ब्रह्म अस्तीति साधितं तथा अस्मिन् वाक्येऽपि ।

यदज्ञानात् संसारः तद्ज्ञानान्निवर्तते इति न्यायात् अक्षरा-( ब्रह्मा ) ज्ञानमूलकत्वात्संसारस्य तन्निवर्तकज्ञानविषयेण अक्षरेणैव भाव्यं नान्येनेति संसारनिवर्तकज्ञानविषयतया अक्षरमङ्गीकरणीयमिति । एवमेव व्याख्यातं शाङ्करभाष्ये ।

य एतदक्षरं गार्गि विदित्वेत्यनेनापि अक्षरब्रह्मज्ञातृत्वं स्पष्टं जीवस्योक्तमिति तद्विरोधात् ज्ञातृत्वद्रष्टृत्वादीनां निषेधासंभव एव ।

न च आत्मा वाऽरे द्रष्टव्य इत्यादिश्रुतिभिः जीवब्रह्मणोर्व्यावहारिकभेदेन व्यावहारिकं ( कल्पितं ) द्रष्टृत्वमुच्यते । अस्मिन्वाक्ये जीवस्य वस्तुतः परब्रह्मरूपत्वेन पारमार्थिकभेदाभावेन तद्विवक्षया — 'अतः अन्यत्' परब्रह्मणः ( अक्षरात् ) अन्यत् पारमार्थिकद्रष्टृ नास्ति इति निषिध्यत इति वाच्यम् । यथा नीलघटसद्भावकाले सामान्यतः घटो नास्ति इति निषेधः कर्तुं नैव शक्यते तथा त्वन्मत-

रीत्या व्यावहारिकद्रष्टुः सद्भावेन नान्यदतोऽस्ति द्रष्टृ इति सामान्यतः द्रष्टुः निषेधायोगात् ।

न च अत एव अतः अन्यत् परमार्थतः द्रष्टृ नास्ति इति परमार्थतः इति विशेषणं दत्तमिति वाच्यम् । श्रुतौ परमार्थत इति पदाभावात् । अश्रुतपदस्याध्याहारे च स्वातन्त्र्येणेति पदाध्याहारेण स्वातन्त्र्येण द्रष्टृ नास्ति इति जीवस्य परमात्मदर्शने स्वातन्त्र्यनिषेधाङ्गीकारेण वा साकल्येनेति पदाध्याहारेण ब्रह्मगतसकलधर्मज्ञाननिषेधाङ्गीकारेण वा उपपत्तौ ब्रह्मान्यजीवस्य निषेधासिद्धेः ब्रह्मान्यजीवनिषेधस्य पूर्वोत्तरवाक्यबहुप्रमाणविरुद्धत्वेन असम्भवाच्च ।

' किंच शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियत ' इति ( ब्रह्मसूत्रभाष्यव्याख्यानसमये वाचस्पतिना भामतीकारेण ' लौकिकानि हि प्रमाणानि सदसत्वगोचराणि । तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं व्यवस्थाप्यते असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं व्यवस्थाप्यते । सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति । तथा च सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते । यद्युच्येत तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यावहारिकम् । तथा च भिन्नविषयत्वान्न सर्वप्रमाणविप्रतिषेध इत्यत आह, ' नह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यते अपह्नोतुम् ' ( भाष्ये ) ' प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तंते । अतात्त्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यं न पुनः सांव्यावहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तंते ' इति वाक्येन , बौद्धेन जगतः सत्त्वं नास्ति इति कथिते, प्रमाणैः जगतः सत्यत्वावधारणात् सत्यत्वं नास्तीति कथनं प्रमाणविरुद्धमिति मायावादिना प्रत्युत्तरे दत्ते, पुनः सत्वं द्विविधं व्यावहा-

रिकं पारमार्थिकं इति प्रमाणानि व्यावहारिकसत्त्वं विषयीकुर्वन्ति। मया तु प्रमाणसिद्धं व्यावहारिकसत्त्वमङ्गीकृत्य पारमार्थिकसत्त्वं निषिध्यते इति जगतः सत्त्वानङ्गीकर्तुर्मम न प्रमाणविरोध इति उत्तरे दत्ते, तस्य समाधानार्थं प्रवृत्तस्य 'न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारः अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतु'मिति भाष्यस्य व्याख्यानं कुर्वता भामतीकृता वाचस्पतिमिश्रेण ( प्रमाणानि स्वस्वविषयाणि तात्त्विकानि ( पारमार्थिकानि ) एवेति गृह्णन्ति न तु व्यावहारिकाणि इति ) प्रमाणैः स्वस्वविषयाणां पारमार्थिकत्वस्यैव ग्रहणात्, व्यावहारिकत्वस्याग्रहणात् पारमार्थिकत्वनिषेधे प्रमाणविरोधः त्वन्मतस्य वज्रलेपायित इति बौद्धं प्रति उक्तत्वेन, अहंप्रत्ययस्य कर्तृत्व - भोक्तृत्वादि विषयस्यात्मनि अद्वैतवाक्यजातेन बाधे तु तन्मूलस्य प्रमाणस्य न क्वचिदपि चारितार्थ्यम्। न च व्यावहारिकविषयालंबनतया तत्रैव चारितार्थ्यं स्यादिति वाच्यम्। व्यावहारिकविषयस्य शुक्तिरूप्यादिवत् कदाचिद्बाध्यत्वाभ्युपगमात् बाध्यविषये च व्यावहारिकप्रामाण्यमिति व्यवहारस्य अद्वैतपरिभाषामात्रसिद्धत्वादित्या - शंक्य निर्दोषत्वेन कल्पशास्त्रस्यैव विषयांतरप्रदर्शनेन चारितार्थ्यमुपपादनीयं न तु दोषमूलस्य अहंप्रत्ययस्य, तस्य भ्रांतित्वोपपत्तेरिति विवेचनाय तस्य दोषमूलत्वं दर्शयितुं प्रवृत्तमुत्तरग्रन्थमवतारयति। एवं तावदिति इति कल्पतरुपरिमलवाक्यैरपि व्यावहारिकविषयस्य कदाचिद्बाध्यत्वेन बाध्यस्य त्रिकालावृत्तित्वात् बाध्यविषये च व्यावहारिकप्रामाण्यमिति व्यवहारस्याद्वैतिपरिभाषामात्रसिद्धत्वादित्यादिना विषयस्य व्यावहारिकत्वं त्रिकालावृत्यसत्त्वपर्यायं व्यावहारिकप्रामाण्यं च अप्रामाण्यपर्यवसायि इति उक्तत्वेन च, 'न च व्यावहारिकप्रामाण्ये सावकाशं एतत्परिभाषाया अद्वैतिपरिकल्पिताया वस्तुव्यवस्थापकत्वासंभवादिति, ब्रह्मविद्याभरणे चोक्तत्वेन एतस्यवा अक्षरस्येत्यादि-

प्रमाणानां व्यावहारिकशास्त्रतत्त्वभेदादिविषयत्वाङ्गीकारस्य स्वव्याहत्यापत्त्याऽयोगात् इति ।

सत्यं चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ।
सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः ॥
तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थमुपन्यासः लालावक्तासवादिवत् ॥
नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।
तस्माद्यन्नास्ति नास्त्येव यद्यस्ति परमार्थतः ॥
तत्सत्यमन्यन् मिथ्येति न सत्यद्वयकल्पना ।
न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ॥

इति भट्टेन बौद्धमतनिराकरणावसरे व्यावहारिकसत्यतायाः असत्त्वस्यैवोक्तेः, व्यवहारे भट्टनय इति भट्टमतानुयायित्वं स्वीकुर्वता त्वया बौद्धवत् व्यावहारिकसत्यताङ्गीकारायोगात् । अङ्गीकारे च भट्टोक्तरीत्या नास्तिक्यपरिहारार्थं वञ्चकताप्राप्तेः ।

यः पृथिव्यां तिष्ठन् पृथिवीमंतरो यमयति यं पृथिवी न वेद इति पृथिव्याद्यभिमानिनो देवा महानुभावाः कथं स्वांतर्गतं स्वनियामकं भगवन्तं न पश्यन्ति इति शङ्कायां ‘ एष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मंताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मंता नान्योऽतोऽस्ति विज्ञाता ’ इति वाक्येन अंतर्यामी दर्शनायोग्यः श्रवणायोग्यः मननायोग्यः विज्ञानायोग्यः इति कथयित्वा अतः दर्शनयोग्यत्वात् अन्यः ( पृथिव्यादिदेवतांतर्यामिणः ) द्रष्टा नास्ति, अतः श्रवणायोग्यत्वात् अतः मननायोग्यत्वात् अतः विज्ञानायोग्यत्वात् ‘अन्यः’ (अंतर्यामिणः) श्रोता मन्ता विज्ञाता नास्ति इति पृथिव्याद्यभिमानिदेवताः स्वांतर्यामिणं न पश्यन्ति न श्रुण्वन्ति न मन्वते न विजानन्ति इति उक्तं,

तथा अक्षरस्य अतः दर्शनायोग्यत्वात् अतः मननायोग्यत्वात् अतः श्रवणायोग्यत्वात् अतः विज्ञानायोग्यत्वात् अन्यत् ब्रह्मणः (अक्षरात्) द्रष्टृश्रोतृमन्तृविज्ञातृ नास्तीति अक्षरद्रष्टृत्वमेव निषिध्यते न तु सामान्यतः द्रष्टृनिषेधः क्रियते इत्यर्थस्यापि सुसाधत्वेन, नेदं वाक्यं द्रष्ट्रन्तरनिषेधद्वारा जीवब्रह्मैक्यबोधकम् ।

( बृ. ) नान्योऽतोऽस्ति द्रष्टेति वाक्यमपि जीवब्रह्मणोर्भेदनिषेधद्वारा ऐक्यबोधकमिति यत् तत्तुच्छम् । एतत्पूर्ववाक्येषु पृथिव्याद्यभिमानिदेवानां जीवानां च परब्रह्मणा भेदस्य भेदकधर्माणां च कथितत्वात् अस्मिन्वाक्ये भेदनिषेधकपदाभावाच्च । तथा हि याज्ञवल्क्यांतर्यामिणं ब्रूहीति यः पृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मांतर्याम्यमृतः ( बृ.३ ७।३ ) योऽप्सु तिष्ठन् ...... अमृतः ( बृ.३।७।४ ) योऽग्नौ तिष्ठन्... अमृतः ५ योऽन्तरिक्षे तिष्ठन्.... ... अमृतः ६ यो वायौ तिष्ठन् ....अमृतः ७ यो दिवि .... अमृतः ८ य आदित्ये ... अमृतः ९ यो दिक्षु ... अमृतः १० यश्चन्द्रतारके तिष्ठन् .... अमृतः ११ य आकाशे .... अमृतः १२ यस्तमसि ... अमृतः १३ यस्तेजसि ... अमृतः १४ यः सर्वेषु भूतेषु ... अमृतः १५ यः प्राणे ... अमृतः १६ ....... १७।१८।१९।२०।२१ जीवे यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं ... अमृतः २२ । यो रेतसि तिष्ठन्.... रेतोंतरो यमयत्येष त आत्मांतर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मंता नान्योऽतोऽस्ति विज्ञाता एष त आत्माऽन्तर्याम्यमृतः अतोऽन्यदार्तं (बृ.३।७।२३) (अस्य तात्पर्यार्थः)

यः नारायणः पृथिव्यादिषु पृथिव्याद्यभिमानिदेवेषु अंतः विद्यमानः पृथिव्याद्यभिमानिदेवेन अविज्ञेयः पृथिवीशरीरकः

÷ पृथिव्याद्यभिमानिदेवात् भिन्नः पृथिव्याद्यभिमानिदेवं नियमयति ( स्वस्वव्यापारेषु प्रवर्तयति ) एष आत्मा नारायणः तव मम च अंतर्यामी अंतः स्थित्वा नियामकः अमृतः × पृथिवीनाशेन नाशरहितः एवं यो नारायणः जले जलाभिमानिदेवतायां, अग्नौ अग्न्यभिमानिदेवतायां, अंतरिक्षे अन्तरिक्षाभिमानिदेवतायां, वायौ वाय्वभिमानिदेवतायां, दिवि द्युलोकाभिमानिदेवतायां, आदित्ये, दिक्षु दिगभिमानिदेवतासु, चन्द्रतारकयोः आकाशे आकाशाभिमानिदेवतायां, तमसि तमोभिमानिदेवतायां, तेजसि तेजोभिमानिदेवतायां, सर्वेषु भूतेषु, प्राणे वाचि वागभिमानिदेवतायां, चक्षुषि चक्षुरभिमानिदेवतायां, श्रोत्रे श्रोत्राभिमानिदेवतायां, मनसि मनोभिमानिदेवतायां, त्वचि त्वगभिमानिदेवतायां, विज्ञाने ( जीवे ) रेतसि रेतोभिमानिदततायां, अन्तर्विद्यमानः तैस्तैरविज्ञेयः तत्तच्छरीरकः जलादिजडतदभिमानिदेवेभ्यः भिन्नः जलादिजडान् जलाद्यभिमानिदेवांश्च चेतनान् नियमयन् तत्तद्व्यापारेषु प्रवतयन् , यो नारायणः आस्ते स एव नारायणः तव मम चांतः स्थित्वा नियामकः पृथिवीजलादिनाशेऽपि नाशरहित इति ।

अन्तर्यामिणो नारायणस्य ( परब्रह्मणः ) पृथिव्यादिजडैः तदभिमानिदेवैः सर्वजीवैश्च नियम्यनियामकभावः आधाराधेयभावः

---

÷ यथा शरीरं शरीरिनियम्यं तथा पृथिव्यादिदेवता अपि नियम्या इति पृथिव्याद्यभिमानिदेवताः शरीरस्थानीया इति अभिप्रायः ।

× यथा गृहांतर्वर्तिनः पुरुषस्य दाहादिना नाशे नाशः तथा पृथिव्याद्यन्तर्गतस्य पृथिव्यादिनाशे नाश इति शङ्कानिवारणार्थं अमृत इत्युक्तम् ।

(१) भेदश्चोक्त इति एतद्वाक्यविरुद्धत्वात् अनेकभेदभेदकधर्मबोधक-प्रमाणैश्च विरुद्धत्वात् 'अमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता' इति वाक्यं न जीवब्रह्मणोर्भेदनिषेधकं इति नानेनापि अद्वैतस्य वैदिकत्वसिद्धिः। न च तर्हि अमृतोऽदृष्टो द्रष्टा इत्यादिवाक्यं किमर्थंप्रवृत्तमिति वाच्यं। (२) पृथिव्यादिदेवताः महाभागाः सत्यः मनुष्यादिवत् आत्मनि तिष्ठन्तं आत्मनो नियन्तारं अन्तर्यामिणं कस्मान्न विदुरित्याशङ्कायां, यतः नारायणः (परब्रह्म) अदृष्टः अन्यकर्तृकदर्शनायोग्यः, श्रवणा-योग्यः, मननायोग्यः, विज्ञानायोग्यः, स्वयं द्रष्टा श्रोता मंता विज्ञाता अतः अन्यकर्तृकदर्शनायोग्यत्वात्, अन्यः परमात्मद्रष्टा नास्ति, अतः अन्यकर्तृकश्रवणायोग्यत्वात् अन्यः परमात्मश्रोता नास्ति, अतः अन्यकर्तृकमननायोग्यत्वात् अन्यः परमात्ममननकर्ता नास्ति, अतः अन्यकर्तृकविज्ञानायोग्यत्वात् अन्यः विज्ञाता नास्ति इति कथनार्थं प्रवृत्तत्वात्। तेन च यथा धर्मादिद्रष्टा नास्ति इत्युक्ते सामान्यतः द्रष्टृनिषेधो न ज्ञायते, किंतु धर्मादीनां अतींद्रियत्वेन (दर्शनायोग्य-त्वेन) तेषां द्रष्टा नास्तीत्येव, तथा ब्रह्मणः दर्शनायोग्यत्वादिना ब्रह्मणो द्रष्टा श्रोता मंता विज्ञाता नास्तीत्येव सिध्यति। न तु सामा-

---

(१) शारीरश्चोभयेऽपि हि भेदेनैनमधीयते (ब्र.सू. १।२।२०) भगवता बादरायणेन तद्भाष्यकृता शङ्कराचार्येणापि एतानि वाक्यानि जीवेश्वरयोर्भेदभेदकधर्मबोधकानीत्युक्तम्।

(२) एवमेव भाष्ये शङ्कराचार्यैरपि आशङ्क्य समाहितम्। अदृष्टोऽश्रुत इत्याह काणं तदवेदने......मागोचरातिवर्तित्वात्...... न ते पश्यन्ति देवताः इति विद्यारण्येन वार्तिकसारेऽपि उक्तम्।

न्यतः द्रष्टैव नास्ति श्रोतैव नास्ति मंतैव नास्ति विज्ञातैव नास्तीति, अतो नेदं वाक्यं सामान्यतः द्रष्टृश्रोतृमंतृविज्ञातृनिषेधबोधनद्वारा ब्रह्मान्यद्रष्टृजीवस्य निषेधकं, किंतु नियम्यनियामकभावाधाराधेयभावादिना साक्षाच्च जीवब्रह्मणोर्भेदस्यैव बोधकम् । किंच अहं द्रष्टा श्रोता मंता विज्ञाता इति सर्वेषां अनुभवेन आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्य इत्याद्यनेकश्रुतिवाक्यैः जीवस्य द्रष्टृत्वश्रोतृत्वमंतृत्वध्यातृत्वादिसिद्ध्या सामान्यतः द्रष्टैव नास्ति श्रोतैव नास्ति इति वक्तुमशक्यत्वान्नानेनापि वाक्येन जीवब्रह्मणोरैक्यसिद्धिः ।

'स्मृतिभ्यश्च,— 'वासुदेवः सर्वमिति' ( गी. ७।१९ ) 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ( गी. १३ २ ) 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' ( गी. १३।२७ ) इत्येवंरूपाभ्यः, विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक' इति यदुक्तं तदप्ययुक्तम् ।

'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥'

इति गीताश्लोकार्थस्तु—बहूनां जन्मनां=ज्ञानार्थसंस्काराश्रयाणां, अन्ते वासुदेवः सर्वमिति=सर्वव्याप्तमिति ज्ञानवान् सन् , मां=कृष्णं, प्रपद्यते=प्राप्नोति , सः=एतादृशः महात्मा दुर्लभः ।—

'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ इत्युक्तेः ।

अस्मिन् श्लोके 'ज्ञानवान्' इति ज्ञातृज्ञेयभावेन, 'प्रपद्यते' इति प्राप्यप्रापकभावेन भेद एवोक्तः। गीतायाः स्वतः प्रमाणत्वात् तया च सिध्यन् भेदः पारमार्थिक इत्येव सिध्यति ।

न च 'वासुदेवः सर्व' मिति सामानाधिकरण्यस्य बाधितत्वात् 'यश्चोरः स स्थाणु' रितिवत् 'यत् सर्वत्वेन प्रतीतं स वासुदेवः

वासुदेवे कल्पितं वासुदेवव्यतिरेकेण नास्ति ' इत्यर्थः सिध्यतीति वाच्यम् ।

' नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।

अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ '

( गी. ११।४० ) इति गीतायामेव सर्वव्याप्तत्वेन सर्वशब्दवाच्यत्वोक्त्या शङ्कराचार्यैरपि तथा व्याख्यातत्वेन तदनुसारेण वासुदेवः सर्वं सर्वव्याप्तमित्यर्थस्यैव युक्तत्वात्, नेयं स्मृतिः जीवपरमात्मनोरभेदबोधिका भेदनिषेधिका चेति ।

' क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत '

इति वाक्यमपि यथा विज्ञानात्म (जीव) परमात्मनोरभेदाबोधकं भेदबोधकं च तथा पूर्वोक्तमेव द्रष्टव्यम् ।

' समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।

विनश्यत्स्वविनश्यंतं यः पश्यति स पश्यति ॥' (गी.१३ २७)

इति श्लोकोऽपि, सर्वेषु भूतेषु (१) ब्रह्मादिस्थावरांतेषु प्राणिषु, ' निर्दोषं हि समं ब्रह्म ' इत्युक्तप्रकारेण समं=निर्दोषं यथा स्यात्तथा तिष्ठन्तं, भूतेषु नष्टेष्वपि अविनश्यन्तं=नाशरहितं, परमेश्वरं =परमात्मानं यः पश्यति, स पश्यति-स एव ज्ञानी ' इत्यर्थकतया ब्रह्मादिस्थावरांतप्राणिनामाधारत्वेन परमात्मनः आधेयत्वेन जगतः, ज्ञातृज्ञेयभावेन विनाशवत्वाविनाशवत्वरूपविरुद्धधर्माधिकरणत्वेन च ब्रह्मादिजीवानां परमात्मना भेदबोधक एव न त्वभेदबोधकः, अभेदबोधकपदाभावात् ।

एतच्छ्लोकस्य कथं भेदमिथ्यात्वविषये उदाहरणं कृतमित्येतत् शङ्कराचार्या एव प्रष्टव्याः ।

---

(१) शङ्कराचार्यैरपि एवमेवार्थः कृतः ।

'भेददर्शनापवादाच्च 'अन्योऽसावन्योऽहमस्मीति नस वेद यथा पशुः' ( बृ. १।४।१० ) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ( बृ ४।४।१९ ) इत्येवंजातीयकात्' इति वाक्येन भेद-दर्शननिषेधः क्रियते इति यदुक्तं शङ्कराचार्येण तदप्ययुक्तम्। तत्र जीवब्रह्मणोर्भेदनिन्दनस्याभावात्। प्रत्युत ताभ्यां जीवब्रह्मणोर्भेदस्यै-व कथितत्वाच्च 'आत्मेति तूपगच्छन्ति' इति सूत्रव्याख्यानावसरे यथा तयोर्जीवब्रह्मणोर्भेदनिन्दनस्याभावः भेदबोधकत्वं च तथोक्त-मनुसंधेयम्।

यदपि जीवब्रह्मणोरैक्यविषये 'तत्र को मोहः' इति श्रुत्यु-दाहरणं तदप्यसङ्गतम्। तथाहि 'यस्तु सर्वाणि भूतान्यात्मन्येवानु-पश्यति। सर्वभूतेषु चात्मानं ततो न विजिगुप्सते॥' ( ई. ६ ) इतीशावास्यवाक्यस्य यः=अधिकारी सर्वाणि भूतानि ब्रह्मादिस्तम्ब-पर्यन्तानि आत्मनि=परमात्मनि एव (परमात्माधारतयैव स्थितानि) अनुपश्यति, नत्वन्याधारतया, तथा सर्वभूतेषु=ब्रह्मादि (चतुर्मुखादि) स्थावरांतेषु आत्मानं=परमात्मानं, पश्यति, ततः तादृशज्ञानात् ( यो लोकत्रयमाविश्य बिभर्ति' (गी. १५।१७) इति गीतोक्तरीत्या परमात्मा सर्वभूतेषु रक्षकतया स्थितः इति ज्ञानात्) न विजिगुप्सते =स्वं अन्यस्माद्रक्षितुं नेच्छति इत्यर्थः।

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ ( ई. ७ )

इति द्वितीयमन्त्रोऽपि पूर्वमन्त्रार्थमनूद्य तस्य फलं वक्ति। यस्मिन्=परमात्मनि, सर्वाणि भूतानि=ब्रह्मादिस्थावरांतानि(तिष्ठंति) तत्र=ब्रह्मादिस्थावरांतेषु आत्मा=परमात्मा अभूत्=स्थितः ( इति ) विजानतः=ज्ञानिनः ( तथा ) एकत्वं=ब्रह्मादिस्थावरांतेषु स्थितस्य परमात्मनः एकत्वं यदेवेह तदमुत्र यदमुत्र तदन्विह

( का. ) इत्युक्तरीत्या सर्वत्र नियामकः परमात्मा एक एव न तु स्थानभेदेन भिन्नः इति एकत्वं अनुपश्यतः शोकः कः? मोहः कः? इति शोकमोहौ आक्षिप्य, शोकमोहौ न स्तः, मुक्त एव भवतीति। तथा चेमौ मन्त्रौ जीवब्रह्मणोराधाराधेयभावेन ज्ञातृज्ञेयभावेन भेदमेव कथयतः नत्वभेदमिति ब्रह्मणः द्वितीयवस्तुराहित्यरूपैकत्वविषये ( जीवब्रह्मणोरभेदविषये ) एतन्मन्त्रोदाहरणमद्वैतिनामयुक्तम्।

ननुः यः परिव्राट् मुमुक्षुः सर्वाणि भूतानि=अव्यक्तादीनि स्थावरांतानि, आत्मन्येवानुपश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः सर्वभूतेषु च तेष्वेव च आत्मानं तेषामपि भूतानां स्वं आत्मानं आत्मत्वेन, यथाऽस्य देहस्य कार्यकारणसङ्घातस्याऽऽत्माऽहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीनां स्थावरांतानामहमेवाऽऽत्मेति सर्वभूतेषु चात्मानं निर्विशेषं यस्तु अनुपश्यतीति वाक्येन, शङ्कराचार्यैः सर्वभूतानामात्मव्यतिरेकेणाभावः सर्वभूतानामहमेवात्मेत्यर्थकतया प्रथममन्त्रो व्याख्यात इति कथमस्य वाक्यस्य भेदपरत्वं अभेदपरत्वाभावश्चेति चेत् न। अस्यार्थस्य मन्त्रपदैरबोधनात्। श्रुतिगीतासूत्रप्रमाणविरुद्धत्वाच्च।

तथाहि- सर्वाणि भूतानि आत्मनि पश्यति इति स्पष्टं आत्मनः सप्तम्या आधारतया भूतानामाधेयतया दर्शनं कथयति मन्त्रे, आत्मन्येव पश्यतीत्यस्य आत्मव्यतिरिक्तानि न पश्यति इत्यर्थकथनमलौकिकव्युत्पत्तिमतां शङ्कराचार्याणामेव शोभते न तु परीक्षकाणां लौकिकव्युत्पत्तिमताम्। तुष्यत्विति न्यायेन आत्मव्यतिरिक्तानि न पश्यतीति व्याख्यानाङ्गीकारेऽपि आत्मव्यतिरिक्तानि न पश्यतीत्यस्य यद्यपि भूतानि आत्मव्यतिरिक्तानि संति तथाऽपि व्यतिरिक्ततया न पश्यति इति व्यतिरिक्ततया ज्ञाननिषेधः, आहोस्वित् आत्मव्यतिरिक्ततया न सन्तीति आत्मव्यतिरिक्ततया दर्शन ( ज्ञान ) निषेधः।

(१) आत्मव्यतिरिक्तानि संति परंतु आत्मव्यतिरिक्ततया न जानातीत्युक्तौ पदार्थेषु आत्मभेदसिद्धिः [द्वैतसिद्धिः] भवत्येव। भूतानां भिन्नतया दर्शनाभावे तु परिव्राट् अज्ञानी स्यात् भ्रांतो वा स्यात्। न तेन अद्वैतसिद्धिः।

(२) परमात्मव्यतिरिक्ततया न संतीति द्वितीयपक्षेऽपि भूतानामभावादेव परमात्मव्यतिरिक्तानि न संति इति, किंवा विशिष्टनिषेधः विशेषणमुपसंक्रामतीति न्यायेन परमात्मव्यतिरिक्तत्वं भूतेषु नास्ति ( भूतानि परमात्मस्वरूपाण्येवेति )

नाद्यः। सर्वप्रमाणैः प्रपञ्चे उपलभ्यमाने तदभाव इति वक्तुमशक्यत्वात्। उक्तं हि 'शून्यवादिपक्षस्तु सर्वप्रमाणप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते इति शङ्कराचार्यभाष्यव्याख्यानकर्त्रा ब्रह्मविद्याभरणकारेण- 'शून्यपदेन सर्वप्रपञ्चातीतं भावरूपं किंचित् तत्त्वं विवक्षितम्, उताभावरूपं। नाद्यः तथा सति वाचोयुक्त्यन्तरेण ब्रह्मवाद एवाश्रितः। यदि द्वितीयः पक्षस्तदा सर्वप्रमाणविरोधः। सर्वप्रमाणैः प्रपंचे उपलभ्यमाने तदभाव एव तत्त्वमिति निरूपयितुमशक्यमिति दूषणस्य स्फुटतया तन्निराकरणाय न सूत्रकृता सूत्राण्यारचितानि' इति शून्यस्य भावरूपत्वे शून्यवादब्रह्मवादयोः साम्यं, अभावरूपत्वे सर्वप्रमाणविरोधः। सर्वप्रमाणैः प्रपञ्चे उपलभ्यमाने तदभाव ( प्रपंचाभाव ) एव तत्त्वमिति निरूपयितुमशक्यत्वादिति शङ्करभाष्यतद्व्याख्यानयोःप्रपञ्चाभाव एव तत्त्वमित्यस्य वक्तुमशक्यत्वं।

न द्वितीयः- जडस्य मिथ्याभूतस्य विकारिणः मूत्रपुरीषाद्यनेकात्मकस्य भूतस्य ( जगतः ) चेतनसत्याविकारिशुद्धब्रह्मस्वरूपत्वायोगात्। तथाच भूतानि आत्मनि अनुपश्यतीति वाक्येन भूतानि आत्मव्यतिरिक्तानि न पश्यतीत्यर्थो न सिध्यति। तथार्थोऽयुक्तश्चेति तथार्थकरणमयुक्तम्।

सर्वभूतेष्वात्मानमित्यनेन स्पष्टं सप्तम्या सर्वभूतानामाधारत्वस्य आत्मनः आधेयत्वस्य प्रतीतावपि तेषामपि भूतानां स्वं आत्मानं आत्मत्वेन ( तस्यैव विवरणं ) ( यथा अस्य देहस्य कार्यकारणसङ्घातस्यात्मा अहं सर्वप्रत्ययसाक्षिभूतः चेतयिता केवलो निर्गुणः, अनेनैव रूपेण अव्यक्तादीनां स्थावरांतानामहमेवात्मेति ) सर्वभूतेषु चात्मानं निर्विशेषं यस्त्वनुपश्यति इत्यर्थकरणं न परीक्षकसंमतकारणमूलकं, किंतु वञ्चनामूलकमेव। नहि भूतले घटं पश्यतीति वाक्यस्य भूतलानां घटत्वेन पश्यतीत्यर्थः परीक्षकेण क्रियते । भूतेष्वात्मानं पश्यतीत्यस्य भूतानां आत्मत्वेन पश्यतीत्यर्थं कः सचेतनः ब्रूयात् स्वमताग्रहवञ्चनान्यतरपिशाचानाविष्टः । तथा–

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति भण्यते ॥

इत्यादिस्वोदाहृतमहाभारतोक्तार्थाप्तिमत्वादिगुणत्वविरुद्धं निर्गुणः केवलः निर्विशेष इति च आत्मपदस्यार्थमपि कः ब्रूयात् । तस्मान्नायं मन्त्रः सर्वभूतानामात्माभेदादिकं वक्ति । किंतु आधाराधेयभावेन ज्ञातृज्ञेयभावेन भेदमेव वक्ति । श्रुतिबोधितस्य भेदस्य बाधकाभावात् स्वतः प्रमाणीभूतेन मन्त्रेणोक्तो भेदः सत्य इति च सिध्यति ।

तथा 'यस्मिन् सर्वाणि भूतान्यात्मैवभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥

इति मन्त्रस्य 'यस्मिन् सर्वाणि भूतानि यस्मिन् काले यथोक्तात्मनि वा तान्यव भूतानि सर्वाणि परमार्थात्मदर्शनादात्मैवाभूदात्मैव संवृत्तः । परमार्थवस्तुविजानतस्तत्र तस्मिकाले तत्रात्मनि वा को मोहः कः शोकः । शोकश्च मोहश्च कामकर्मबीजमजानतो भवति न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः इति व्याख्यानमप्यसङ्गतं ।

यस्मिन् काले परमार्थात्मदर्शनात् तान्येव भूतानि सर्वाणि आत्मैवाभूदित्युक्तिस्तावदसङ्गता (१) अद्वैतमतरीत्या सर्वदापि भूतानामात्मातिरिक्तत्वाभावेन यस्मिन् काले इति कालविशेषोक्तिरयुक्ता। अद्वैतमतरीत्या विद्यावस्थायां कालस्याप्यभावेन काले इत्युक्तिरप्यसङ्गता।

(२) यस्मिन्=आत्मनि वा भूतानि आत्मैवाभूत् इत्युक्तिरप्यसङ्गतैव। अद्वैतमतरीत्यापि नहि भूतानामात्मभवनं आत्माधिकरणकं।

भूतानीति बहुवचनांतकर्तृवाचकपदस्य एकवचनांताभूदिति क्रियया ऽन्वयोऽप्ययुक्तः। स्वीकृतं च अन्वयायुक्तत्वं दशश्लोकीव्याख्यानतत्त्वबिंदुटीकायां—

किं च शुक्तिकायामारोपितं रजतं शुक्तिज्ञाने सति नहि शुक्तिकारूपं भवद् दृष्टं, किंतु रजतज्ञानस्य निवृत्तिरेव। तथा आत्मनि (ब्रह्मणि) कल्पितानि (आरोपितानि) भूतानि ब्रह्मज्ञाने निवर्तन्ते एव, नतु आत्मरूपाणि भवन्ति। विरुद्धधर्मवतोः जडभूतचेतनब्रह्मणोरैक्यासंभवादिति ज्ञानिनः भूतानामात्मरूपत्वकथनमप्ययुक्तम्।

तत्र काले को मोहः? कः शोकः? इति कथनं चायुक्तम्। अद्वैतमतरीत्या कालाभावात् तत्र आत्मनि को मोहः? कः शोकः? इति कथमनपि न युक्तम्, शोकमोहयोरंतःकरणधर्मत्वेन आत्मनि कदाप्यभावात्।

एकत्वमनुपश्यत इत्यस्य आत्मैकत्वं विशुद्धं गगनोपमं पश्यतः इत्यर्थकरणमप्ययुक्तम्। एकत्वमित्यस्य आत्मैकत्वं (आत्मनःभूतैरभेदः) न शब्दार्थः तद्ग्राहकप्रमाणाभावात्। एकशब्दस्य मुख्यान्यकेवलाद्यनेकार्थत्वेन एकत्वं मुख्यत्वं किंवा एकत्वं अन्यत्वं (भूतादिभिन्नत्वं) अथवा एकत्वं सहायराहित्यम् (सृष्टौ इतरसहायानपेक्षत्वं) इत्याद्यनेकार्थत्वसंभवेन चेतनस्य सत्यस्य परमात्मनः जडेन

अद्वैतमतरीत्या असत्येन ( मिथ्याभूतेन कालत्रयेऽप्यसता ) भूतसमूहेन एकत्वस्य ( अभेदस्य ) असंभवाच्च ।

अद्वैतमतरीत्या सर्वाणि भूतान्यात्मैवाभूदिति जानत इत्यनेन आत्माभेदज्ञानस्य कथिततत्वेन एकत्वमनुपश्यत इत्यस्य एकत्वं=भूतानामात्माभेदं जानत इति अर्थकरणे पुनरुक्तं भवति ।

गीताविरुद्धं च भूतानामात्मना अभेदकथनम् । तथाहि—

'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ '( गी. ६।३१ )

इति गीतायां सर्वभूतस्थितमिति भूतानां परमात्मना आधाराधेय - भावेन भेदमुक्त्वा एकत्वमास्थितः इति एकत्वपदेन अंतर्यामिरूपाणामेवाभेद उक्तः न तु भूतानां परमात्मना अभेद इति ।

' समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ '(गी.१३।२७)

इति गीताश्लोकेनापि सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरं समं यथा स्यात् तथा उच्चनीचादिस्थाननिमित्तकोच्चत्वनीचत्वादिरहितं पश्यति, तथा विनश्यत्सु भूतेषु अविनश्यन्तं यः पश्यति सः पश्यति ज्ञानी इति चेतनाचेतनात्मकप्रपञ्चस्येश्वरेणाधाराधेयभावेन नाश्यत्वानाश्यत्वरूपविरुद्धधर्मेण ज्ञातृज्ञेयभावेन च भेदस्यैवोक्तेरभेदकथनमेतद्गीतावाक्यविरुद्धम् ।

एतेन सर्वभूतेषु चात्मानमिति मन्त्रे सर्वभूतेषु आत्मानं पश्यतीत्यस्य अव्यक्तादिस्थावरांतानामहमेवात्मेति पश्यतीति शङ्कराचार्यव्याख्यानं निरस्तम् । स्पष्टं गीतायां सर्वभूतेषु तिष्ठन्तं परमेश्वरमिति सर्वभूतेषु तिष्ठतः परमेश्वरत्वोक्तेः ।

' सर्वभूतस्थितं यो मां ' (गी. ६।३१ ) इति सर्वभूतस्थस्य मामित्यस्मच्छब्दवाच्यश्रीकृष्णत्वोक्तेश्च ।

तथा 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति' इति कृष्णेन स्वस्य ( परमात्मनः ) भूतादिसर्वपदार्थस्थितत्वं सर्वपदार्थानां स्वस्मिन् ( कृष्णपरमात्मनि ) स्थितत्वोक्तेः जीवस्य सर्वपदार्थ - वृत्तित्वकथनं भूतानामात्मना अभेदकथनं च तद्विरुद्धम् ।

तथा 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि' ( गी. ६।१९ ) इति गीतावाक्यमपि सर्वभूतपरमात्मनोः आधारा - धेयभावेन भेदमेव कथयति न तु सर्वभूतानां परमात्मना अभेदं इति। भूतानां परमात्मना अभेदकथनं श्रुतिसूत्रविरुद्धं तथा तद्व्याख्यानभूत-शङ्करभाष्यविरुद्धं च । तथाहि-

'स सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मांतर्याम्यमृतः इति, यः पृथिव्यां तिष्ठन्.... योऽप्सु तिष्ठन्... योऽग्नौ तिष्ठन्.... योऽन्तरिक्षे तिष्ठन्.... यो वायौतिष्ठन्.... य आदित्ये तिष्ठन्.... य आत्मनि ( जीवे ) तिष्ठन्... इत्याद्यनेक-मन्त्रेषु भूतादीनां सर्वेषां आधारत्वं नियम्यत्वं, परमात्मनः आधेयत्वं नियामकत्वं च कथयित्वा तयोर्भेदः स्पष्टमुक्तः । एतद्वेदार्थनिर्णाय-कवेदांतसूत्रकृता साक्षान्नारायणावतारभूतेन बादरायणेन 'भेदव्यप-देशाच्चान्यः' 'अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' 'शारीर-श्चोभयेऽपि हि भेदेनैनमधीयते' इत्यादिसूत्रैः तथा तत्सूत्रव्याख्यान-कृद्भिः शङ्कराचार्यैरपि भूतादीनां परमात्मना भेदः आधाराधेयभा-वः नियम्यनियामकभावश्चोक्त इति ।

यस्तु सर्वाणि भूतानि इति मन्त्रः, यस्मिन् सर्वाणि भूतानि इति मन्त्रश्च ब्रह्मादिस्थावरांतचेतनाचेतनानां परमात्मना भेदं कथयतः इति नानयोर्मन्त्रयोरभेदविषये ( जीवब्रह्मणोरैक्यविषये ) उदाहरणं युक्तमिति ।

जीवब्रह्मणोरभेदविषये श्रुतिसूत्रगीतासु एकस्याऽपि प्रमाणस्य अभावात् वाक्यान्वयात् इति सूत्रस्य, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादौ विज्ञानात्मैव ( जीव एव ) द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यत आहोस्वित् परमात्मेति संशय्य जीव इति पूर्वपक्षयित्वा परमात्मोपदेश एवायं ( न जीवोपदेशः ) वाक्यान्वयादिति जीवपरमात्मनोर्भेदपरतया यः अर्थः कृतः शङ्कराचार्यैः प्रथमं, स एव युक्तः ।

॥ इति वाक्यान्वयाधिकरणम् ॥

प्रकृतिश्चेत्यादिपञ्चसूत्रात्मकमिदमधिकरणं ब्रह्मण उपादानकारणतां निमित्तकारणतां च बोधयितुं प्रवृत्तमित्याचक्षते शङ्कराचार्याः तद्व्याख्यानं प्रथमतः संग्रहेण अनूद्य तस्यायुक्तता प्रदर्श्यते पश्चात् ।

ॐ प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात् ॐ

ब्रह्म न केवलं जगतो निमित्तकारणं प्रकृतिश्च उपादानकारणं च । कुतः ? प्रतिज्ञादृष्टांतानुपरोधात् । 'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं' ( छां.६।१।२ ) इति प्रतिज्ञया परमात्मज्ञानेन सर्वविज्ञानं बोध्यते । तच्च ब्रह्मविज्ञानेन सर्वविज्ञानं ब्रह्मणः सर्वाभेदे एव सञ्जाघटीति । ब्रह्मणः सर्वाभेदश्च उपादानकारणत्व एव घटत इति प्रतिज्ञा ब्रह्मण उपादानकारणत्वं गमयति ।

तथा दृष्टांतोऽपि 'यथा सोम्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्युपादानकारणगोचर एवाम्नायते , तथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् इति च ।

तथाऽन्यत्रापि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मु. १।१।२ ) इति प्रतिज्ञा। ' यथा पृथिव्यामोषधयः संभवन्ति' ( मु १।१।७ ) इति दृष्टांतः। तथा ' आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं ' इति प्रतिज्ञा। ' स यथा दुंदुभेर्हन्यमानस्य न बाह्यांञ्छब्दान् शक्नुयाद्ग्रहणाय दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा शब्दो गृहीतः'। ( बृ.४।५।६।८ ) इति दृष्टांतः। एवं यथासंभवं प्रतिवेदांतं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ।

यत इतीयं पञ्चमी ' यतो वा इमानि भूतानि जायन्ते ' इत्यत्र जनिकर्तुः प्रकृतिः ( पा. सू. १।४.३० ) इति विशेषस्मरणात् प्रकृति-लक्षणे एवापादाने द्रष्टव्ये इति यद्व्याख्यातं तत्तुच्छम्।

' येनाश्रुतं श्रुतं भवती ' ति प्रतिज्ञावाक्यं, ब्रह्मज्ञानेन सर्व-ज्ञानं भवतीति बोधयतीति शङ्कराचार्यैरेवाव्याख्यातत्वेन प्रत्युत सर्वजगज्ज्ञानस्य ब्रह्मज्ञानं फलमिति विपरीततया व्याख्यातत्वेन च ब्रह्मज्ञानेन जगज्ज्ञानस्यानया प्रतिज्ञया अबोधनात्, प्रत्युत जगज्ज्ञानेनैव ब्रह्मज्ञानं ( फलरूपं ) भवतीति बोधनात्।

' निर्विकारोक्षरःशुद्ध ' इति श्रुत्या ब्रह्मणो निर्विकारत्वावग-मेन जगत्प्रतिपरिणाम्युपादानत्वासम्भवात् विवर्तोपादानत्वे ब्रह्मज्ञाने सर्वज्ञानासम्भवाच्च भ्रमाधिष्ठानत्वरूपविवर्तोपादानतायाः ब्रह्मणोऽसं-भवाच्च। भ्रमाधिष्ठाने उपादानत्वव्यवहारस्य कैरपि शास्त्रकृद्भिरुक्त-त्वेन त्वत्कृतायाः भ्रमाधिष्ठाने उपादानत्वपरिभाषायाः वेदार्थनिरू-पणे कारणत्वायोगात्।

उक्तं हि शङ्कराचार्यैः — ' या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते इति ( ब्र. सू शां. भा. १।४।१ )

ब्रह्मज्ञानेन सर्वज्ञानं भवतीति व्याख्याने श्रुतिपदानामस्वार-स्याच्च । येनाश्रुतं श्रुतं भवतीति प्रतिज्ञावाक्यस्य ब्रह्मज्ञानेन सर्वज्ञानाबोधकत्वेन ब्रह्मण उपादानत्वाबोधकत्वात् । तथाहि-

येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इत्युपनिषदः शाङ्करभाष्यम्- 'तमादेशं विशिनष्टि, येनादेशेन श्रुतेनाश्रुतमप्यन्यत् श्रुतं भवत्यमतं मतमतर्कितं तर्कितं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति सर्वानपि वेदानधीत्य सर्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यत' इति ।

आनन्दगिरिव्याख्या -'किमित्यधीत्य सर्वं वेदं अधिगततदर्थं च पुत्रं आत्मविद्यामधिकृत्य पिता पृच्छति, तस्य सर्ववेदाध्ययनादिनैव कृतार्थत्वादित्याशङ्क्याह सर्वानपीति' इति ।

एतच्छाङ्करभाष्यानन्दगिरिव्याख्यानाभ्यां इत्थमवगम्यते - सर्ववेदाध्ययने कृतेऽपि तथा सर्वं चान्यद्वेद्यमधिगम्यापि ( परमात्मभिन्नस्य सर्वस्य जगतः ज्ञानेऽपि ) परमात्मज्ञानाभावे अकृतार्थ एव भवति, स्वेन यत्कर्तव्यं तस्याकृतैव भवति इतिपरमात्मभिन्नजगज्ज्ञानस्य परमात्मज्ञानमेव फलं, न तु परमात्मज्ञानेन जगज्ज्ञानं भवतीति, सर्वं चान्यद्वेद्यमिति जगतः ब्रह्मणा भेदश्च उक्तो भवति इति नेयं प्रतिज्ञा ब्रह्मविज्ञानेन जगज्ज्ञानबोधनद्वारा ब्रह्मजगतोरभेदं बोधयंती सती उपादानकारणत्वं ज्ञापयतीति ।

विवर्तोपादनत्वपक्षे ब्रह्मज्ञानेन सर्वज्ञानासम्भवश्च । तथाहि- यथा शुक्त्यज्ञानेन शुक्तौ कल्पितं ( अध्यस्तं ) रजतं यावत्कालं शुक्त्यज्ञानं तिष्ठति तावत्पर्यन्तं भासते ज्ञातायां शुक्तौ शुक्त्यज्ञानं नश्यति, अज्ञानकल्पितं रजतं च नश्यति रजतज्ञानं च नश्यति - अधिष्ठानज्ञानेऽध्यस्तनिवृत्तेर्नियतत्वात् । तथा अद्वैतिमते ब्रह्माज्ञानेन

जगतः ब्रह्मणि कल्पितत्वेन यावत्कालं ब्रह्माज्ञानं तिष्ठति तावज्जगद्भासते। जाते च ब्रह्मज्ञाने ब्रह्माज्ञानं, तत्कल्पितं जगत्, जगज्ज्ञानं च नश्यत्येव, उपादाननाशे उपादेयनाशस्यावश्यकत्वात्। तथा चाद्वैतमतरीत्या ब्रह्मणि ज्ञाते ब्रह्माज्ञानकल्पितस्य जगतः निवृत्तिरेव न तु स्थितिः। तथा तज्ज्ञानस्यापीति ब्रह्मज्ञानेन जगज्ज्ञानं भवतीति कथनमनुपपन्नम्। तथाच–'येनाश्रुतं श्रुतं भवतीति प्रतिज्ञावाक्यं कथमनुपपन्नमर्थं बोधयेदिति।

उक्तं च शङ्करादिभिरद्वैतिभिः—

'अथवा हेत्वर्थ उत्तरार्धो विज्ञातमित्यादिः (के.शां.भा. २।११।३) (आनन्द)' अथवा हेत्वर्थ इति लोके शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तं रूप्यादि अविज्ञातं भवति, अजानतामेव तु अध्यस्तं विज्ञातं भवति इति प्रसिद्धं, तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यंतीत्यर्थः' इति (११।३) केनोपनिषद्भाष्ये तट्टिप्पण्यां च अध्यस्तपदार्थज्ञानं अधिष्ठानाज्ञानदशायामेव, ज्ञाते त्वधिष्ठानेऽध्यस्तज्ञानं न भवति इति।

अद्वैतमतरीत्या निर्धर्मके अद्वितीये ब्रह्मणि अधिष्ठानत्वं भ्रांतत्वं च न संभवतः, भ्रमकारणानां सामान्यधर्मविशेषधर्मारोप्यजगत्सादृश्यानां सामान्यधर्मसादृश्यज्ञानानां विशेषधर्माज्ञानादीनां च असम्भवात्।

उक्तं च भामतीकारैः– 'परमार्थस्तु न विभ्रमो नाम कश्चित्, न च संसारो नाम किंतु सर्वमेतत् सर्वानुपपत्ति (ब्रह्मणि भ्रमासंभवे वाद्युक्तसर्वानुपपत्ति) भाजनत्वेन अनिर्वचनीयं (भ्रमः कथं जायते इति वक्तुमशक्यं) इति युक्तमुत्पश्यामः। तदनेनाभिसंधिनोक्तं (शङ्कराचार्येण) 'यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रबोधः' (ब्र. सू. शां. ४।१।३) इति।

येनाश्रुतं श्रुतं भवतीत्यस्य ब्रह्मज्ञानेन सर्वजगज्ज्ञानं भवतीति व्याख्याने श्रुतिपदास्वारस्यं च । तथाहि- यदा ब्रह्मजगतोरुपादानोपादेयभावेनाभेदः श्रुत्यभिप्रेतः स्यात्तदा ब्रह्मणः श्रवणे मनने विज्ञाने तदभिन्नजगतः श्रुतत्वस्य मतत्वस्य विज्ञातत्वस्यैव प्राप्त्या अश्रुतममतमविज्ञातं इति जगतः अश्रुतत्वादिबोधकपदानामसङ्गतत्वप्राप्तेः । न च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्, यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इति दृष्टांताः उपादानोपादेयभाववद्वस्तुबोधका इति दार्ष्टान्तिकेऽपि ब्रह्मजगतोरुपादानोपादेयभावः अङ्गीकरणीय' इति वाच्यम् । यतो दृष्टांतेषु श्रुतानां मृत्पिण्डलोहमणिनखनिकृन्तनानामपि घटादिवत् मृदादिकार्यत्वेन घटादीन् प्रत्युपादानत्वाभावात् न तेषां दृष्टांतवाक्यानामुपादानोपादेयभाववद्वस्तुविषयकतेति, न तद्वाक्यबलेन येनाश्रुतं श्रुतं भवतीति वाक्यं ब्रह्मजगतोरुपादानोपादेयभावबोधकम् ।

एकनखनिकृन्तनज्ञानेन सर्वकार्ष्णायसानां एकमृत्पिण्डज्ञानेन मृण्मयादिसर्वपदार्थानां ज्ञानानुभवाभावेन शाङ्करभाष्यरीत्या मृदादिषु घटादीनां अध्यस्तत्वाङ्गीकारेण च मृदादीनां घटादीन्प्रति परिणाम्युपादानत्वाभावात् विवर्तोपादानत्वे शुक्तिज्ञानेन रजतस्य रजतज्ञानस्य निवृत्तिवत् मृज्ज्ञानेन घटादिज्ञानस्य निवृत्तेः- मृदादिज्ञानेन घटादिज्ञानं भवतीति ( पूर्वोक्तरीत्या ) वक्तुमशक्यत्वाच्च । तद्दृष्टांतानुसारेण ब्रह्मज्ञानेन सर्वजगज्ज्ञानं भवतीति वक्तुमशक्यत्वाच्च । एतेन ( येनाश्रुतं श्रुतं भवतीति प्रतिज्ञायाः यथा सोम्यैकेन नखनिकृन्तनेनेत्यादिदृष्टांतस्य चोपादानोपादेयत्ववद्वस्तुबोधकत्वाभावकथनादिना ) 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इत्यादिप्रतिज्ञा उपादानोपादेयभाववद्वस्तुबोधिका इति निरस्तम् ।

तथा च प्रतिज्ञादृष्टांतयोः ब्रह्मणो जगदुपादानत्वज्ञापकत्वाभावेन प्रतिज्ञादृष्टांतवाक्यमवलम्ब्य ब्रह्म प्रकृतिश्च=उपादानकारणं चेति साधनमयुक्तम् ।

यदप्युक्तम् 'यतोवाऽमानि भूतानि जायन्ते,' इति श्रुतिघटकं यतः इति पदं पञ्चम्यन्तं पञ्चमी च 'जनिकर्तुः प्रकृति' रिति (पा. सू.-१।३।३०) पाणिनिसूत्रेण प्रकृति (उपादान) लक्षणापादाने दृष्टेति यत इति पञ्चम्या ब्रह्मण उपादानत्वसिद्धिरिति तदप्ययुक्तम् । जनिकर्तुः प्रकृतिरिति सूत्रस्थप्रकृतिपदस्योपादानार्थकत्वाभावात् । तथाहि—

पुत्रात् प्रमोदो जायते इत्यादौ अनुपादानेऽपि पञ्चमीदर्शनात् प्रकृतिपदं हेतुमात्रपरमित्युक्तम् वृत्तौ । तथा जनिकर्तुः हेतुरित्येव शब्दलाघवादुच्यतामित्याशङ्क्य असति प्रकृतिग्रहणे, हेतुग्रहणे सति उपादानस्यैवापादानसंज्ञा स्यात् प्रत्यासत्तेः, नेतरस्य प्रकृतिग्रहणात् । प्रक्रियते कार्यमनेनेति व्युत्पत्या कारणमात्रस्य भवतीति प्रकृतिपदं अनुपादानेऽपि अपादानसंज्ञासिध्यर्थमित्युक्तं न्यासे ।

तथा महाभाष्येऽपि - 'अयमपि योगः (जनिकर्तुः प्रकृतिरितिसूत्रं) शक्योऽवक्तुम् । गोलोमाजलोमाविलोमभ्यो दूर्वा जायन्ते अपक्रामन्ति तास्तेभ्यः' इत्यादिना लोमादीनां दूर्वादीन् प्रत्यवधित्वात् ध्रुवमपायेऽपादानम् इत्यनेनैवापादानसंज्ञासिद्धेः इदं सूत्रमनारंभणीयमिति सूत्रं प्रत्याख्यातम्' इति ।

ततश्च भाष्यकारमते वृत्तिकारादिमते च 'जनिकर्तुः प्रकृति' रित्यनेन उपादाने एव पञ्चमीति न सिध्यतीति ।

नच पशुना यजेतेत्यादौ पशुपदस्य पशुमात्रवाचकत्वेऽपि छागस्य वपाया इति वाक्यशेषानुसारेण पशुविशेषपरत्ववत् यतो वा इमानि इति श्रुतिघटकपञ्चम्या ब्रह्मणः कारणत्वसामान्यबोधनेऽपि येनाश्रुतं श्रुतं भवतीत्यादिवाक्यविशेषबलेन पञ्चम्या उपादानकारण-

त्वसिद्धिरिति वाच्यम् । येनाश्रुतं श्रुतमित्यादिवाक्यानां उपादान-कारणत्वबोधकत्वाभावस्य उपपादितत्वात् । ब्रह्मणः उपदानकारणत्व-बोधकानां अन्येषामभावात् ब्रह्मणो द्विविधोपादानकारणताया असंभवाच्च, यतो वेत्यत्र यत इति पदस्य सार्वविभक्तिक 'तसि' प्रत्ययांत-त्वेन कारणत्वाद्यर्थकतृतीयादिविभक्त्यन्तत्वस्यापि वक्तुं शक्यत्वेन पञ्चम्यंतमेवेति निश्चतुमशक्यत्वाच्च ।

एतेन 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतिभिर्ब्रह्मण उपादानत्वसिद्धिरित्यपि निरस्तम् ।

यदप्युक्तम्– 'यथाहि लोके मृत्सुवर्णादिकमुपादानकारणं कुलालसुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्तते, नैवं ब्रह्मणः उपादान-कारणस्य सतोऽन्योऽधिष्ठाताऽपेक्ष्योऽस्ति, प्रागुत्पत्तेरेकमेवाद्वितीयमि-त्यवधारणात् । अधिष्ठात्रंतराभावोऽपि प्रतिज्ञादृष्टांतानुपरोधादेवो-दितो वेदितव्यः । अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासम्भवात् प्रतिज्ञादृष्टांतोपरोध एव स्यात् । तस्मादधिष्ठात्रंतराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम्' इति, तदप्येतेनैव निरस्तम् । प्रतिज्ञया एकविज्ञानेन सर्वविज्ञानस्याबोधनेन असंभवेन च उपादानादन्यस्याधिष्ठातुः (कर्तुः) सत्वे बाधकाभावात् । १।४।२३ ।

ॐ अभिध्योपदेशाच्च ॐ

'अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति । 'सोऽकामयत बहु स्यां प्रजायेय इति' 'तदैक्षत बहु स्यां प्रजायेय' इति च । तत्राभिध्यानपूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते बहु स्यामिति प्रत्यगात्मविषयत्वात् बहुभवनाभिध्यानस्य प्रकृतिरिति गम्यते' इति शाङ्करव्यांख्यानमयुक्तम् ।

अभिध्याशब्दस्य सृष्टिसङ्कल्प ( सृष्टीच्छा ) वाचकत्वेन अभिध्योपदेशादिति सूत्रस्य सृष्टीच्छाया उपदेशादित्यर्थकत्वप्राप्त्या ईश्वरस्य सृष्टीच्छावत्वोक्त्या कर्तृत्वमेव गमयेत् न तु उपादानत्वमिति ब्रह्मण उपादानत्वविषये एतत्सूत्रस्य प्रमाणतया कथनायोगात् ।

न च 'तदैक्षत ' ' बहुस्यामिति ' श्रुतौ सृष्टीच्छायाः आत्मबहुभवनविषयत्वेन आत्मन उपादानत्वं च सिध्यतीति वाच्यम् । अभिध्याशब्दस्य ' अभिध्या तु परस्य विषये स्पृहा ' इति कोशपर्यालोचनया परकीयविषयकस्पृहा ( इच्छा ) र्थकत्वेन स्वकीयबहुभवनेच्छायाः अभिध्याशब्दार्थत्वाभावेन बहुस्यामिति श्रुतेः अभिध्योपपदेशादित्येतत्सूत्रगृहीतत्वासम्भवेन नैतत्सूत्रं ब्रह्मण उपादानत्वबोधकं किंतु कर्तृत्वबोधकमेवेति ।

न च मास्त्वभिध्याशब्दः स्वीयबहुभवनेच्छां न बोधयतीति ब्रह्मणः उपादानत्वे प्रमाणं अभिध्योपदेशादिति सूत्रं, ' सोऽकामयत बहु स्यां प्रजायेय ' ( तै. ) ' तदैक्षत बहु स्यां प्रजायेय ' ( छ. ) इति वाक्ये, आत्मब्रह्मविषयकबहुभवनेच्छां बोधयती ब्रह्मण उपादानत्वे प्रमाणं भवितुमर्हतः इति वाच्यम् । विकल्पासहत्वात् , ( विकल्पपूर्वकं दूषणे कृते संभावनानर्हत्वात् ) तथाहि–

ब्रह्मण उच्यमानमुपादानत्वं किं परिणाम्युपादानत्वं किं वा विवर्तोपादानत्वं ( भ्रमाधिष्ठानत्वं ) । परिणाम्युपादानत्वपक्षे ब्रह्म किं निर्गुणं सगुणं वा । तत्र निर्गुणं ब्रह्म परिणाम्युपादानमिति प्रथमपक्षस्य प्रथमपक्षो न युक्तः । अद्वैतिभिः निर्गुणस्य ब्रह्मणो निर्विकारत्वाभ्युपगमेन परिणाम्युपादानत्वासंभवात् , निर्विशेषत्वाभ्युपगमेन बहुभवनेच्छाया अप्यसंभवात् । नापि सगुणं ब्रह्म परिणाम्युपादानमिति प्रथमपक्षे द्वितीयः पक्षः साधुः । अद्वैतमतरीत्या ' सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम् तदैक्षत बहु स्यां प्रजायेय' इति अद्वितीय-

ब्रह्मणः ( निर्गुणब्रह्मणः ) एव बहुभवनेच्छाश्रवणात् । नहि एकमेवाद्वितीयमित्युक्तब्रह्मणः अद्वैतमतरीत्या सगुणत्वम् ।

किंच सगुणब्रह्मणः अज्ञानादिविशेषणविशिष्टविशेष्यरूपत्वेन तस्योपादानत्वं विशेष्ये वा विशेषणे वा उभयस्मिन् वा वक्तव्यम् । न तावद्विशेष्ये, उक्तरीत्या निर्विकारत्वेन उपादानत्वासंभवात् । नाप्युभयस्मिन् , एकस्मिन् विशेष्ये असंभाव्यमानस्य उपादानत्वस्य उभयत्रासंभवात् । विशेषणे अज्ञानादावेवेति वक्तव्यम् । तथा च न ब्रह्मणः उपादानत्वसिद्धिः । किंच निरनिष्टो निरवद्य इति श्रुत्या अज्ञानादिदोषाभावेन ' असङ्गो ह्ययं पुरुष ' इति श्रुत्या असङ्गत्वेन च ब्रह्मणः अज्ञानादिदोषसंसर्गासंभवेन अज्ञानादि ( दोष ) विशिष्टं ब्रह्म सगुणं इति कथनमप्ययुक्तमेव ।

उपादानत्वं नाम विवर्तोपादानत्व ( भ्रमाधिष्ठानत्व ) मिति पक्षेऽपि निर्गुणं ब्रह्म विवर्तोपादानं ( भ्रमाधिष्ठानं ) उत सगुणं ( अज्ञानादिदोषसंसृष्टं ) । नाद्यः । भ्रमकारणानां ( भ्रमजनकानां ) अधिष्ठाने शुक्त्यादौ दृष्टानां सामान्यधर्मविशेषधर्मारोप्यमाणवस्तुसादृश्यानां सामान्यतो ज्ञातत्वस्य विशेषतोऽज्ञातत्वादीनां च अद्वैतमतरीत्या निर्विशेषे स्वप्रकाशे ( इतरावेद्ये ) ब्रह्मण्यभावेन भ्रमासम्भवात् । स्वीकृतं च भामतीकारादिभिः । ' परमार्थतो न भ्रमो नाम कश्चित् न संसारो नाम सर्वमेतत् सर्वानुपपत्तिभाजनत्वात् अनिर्वचनीयमिति युक्तमुत्पश्यामः ' इत्यादिना अनेकग्रंथेषु ।

सगुणस्यापि विवर्तोपादानत्वं न संभवति । सगुणस्य कल्पितत्वेन ( भ्रमानन्तरभावित्वेन ) भ्रमाधिष्ठानत्वरूपविवर्तोपादानत्वासंभवात् । एतेन ( अनेकदोषयुक्तत्वेन ) ' सोऽकामयत बहु स्यां प्रजायेय ' इति श्रुतिरपि ब्रह्मणः परिणाम्युपादानत्वे वा विवर्तोपादानत्वे वा प्रमाणं भवितुं नार्हति । ' सोऽकामयत बहु स्याम् ' इति

वाक्यं ब्रह्मणो जगद्रूपेण बहुभवनं कथयतीत्युक्तौ बहु स्यामित्यनेनैव बहुभवनेच्छासिद्धेः प्रजायेयेतिपदस्य वैय्यर्थ्यापत्तेः ।

सिद्धांते तु इदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदिति उत्तरश्रुतौ जगत् सृष्ट्वा, तत्र नियामकरूपेण (चेष्टकरूपेण) प्रविश्य बहुभवनस्य उक्तत्वेन ' बहुस्या ' मिति नियामकबहुरूपेण भवनं संकल्प्य प्रजायेयेत्यनेन नियामकबहुरूपार्थं नियम्यप्रजाः ' प्रजायेय, सृजेय ' इति सङ्कल्पपरतया ' बहु स्यां, प्रजायेय ' इत्यनयोः सार्थक्यं संभवतीति नेयं श्रुतिर्ब्रह्मणः जगदुपादानत्वं वक्ति ।

तथा च अभिध्योपदेशादिति सूत्रस्य तथा तत्सूत्रे उदाहृतयोः ' तदैक्षत बहु स्यां प्रजायेय ' ' सोऽकामयत ' इति श्रुत्योः ब्रह्मणः उपादानत्वे प्रमाणतया शङ्कराचार्योदाहरणमयुक्तमिति स्थितं । १।४।२४ ।

ॐ साक्षाच्चोभयाम्नानात् ॐ

यत्कारणं ' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंते आकाशं प्रत्यस्तं यन्ति ' ( छां. १।९।१ ) इति साक्षाद्ब्रह्मैव कारणमुपादाय प्रभवप्रलययोराम्नानात् ब्रह्मैवोपादानकारणं इति यद्व्याख्यानं शङ्कराचार्याणां तन्मंदम् । शङ्करभाष्यव्याख्यानरूपे ब्रह्मविद्याभरणे ' भूतले घटप्रलयेऽपि न भूतलं घटोपादानम् । न च यस्मात्प्रभवति ' इति भूतलव्यावृत्तिः ' निमित्तकारणेऽपि चक्रादौ लयसम्भवात् ' इति वाक्येनाद्वैतिभिरेव प्रभवप्रलयाम्नानयोर्व्यभिचारेणोपादानकारणत्वासाधकताया उक्तत्वात् । नच न हि वयं ब्रह्मणि प्रभवप्रलययोराम्नानमात्रेणोपादानत्वं ब्रूमः किंतु ' अंतवद्वै किल शालावत्य सामे ' ति उपक्रमात् । ' स एषोऽनन्त ' इति उपसं-

हाराच्चानन्त्यव्युत्पादनार्थं 'सर्वाणि ह वा इमानि' इत्यादिवाक्य-मामनायते। न चोपादानान्यत्वे ब्रह्मणः आनन्त्यं व्युत्पादयितुं शक्यं, आनन्त्यवाक्यैकवाक्यतापन्नतयैव प्रभवप्रलयाम्नानं ब्रह्मण उपादानत्वसाधकमिति वाच्यम्। 'साक्षाच्चोभयाम्नानात्' इति सूत्रस्य उपादानत्वविषये उदाहरणायोगात् उपक्रमोपसंहाराभ्यां प्रतीतस्य आनन्त्यस्योपादानतां विनाऽनुपपत्त्यभावाच्च। तथा हि महद्गुणत्वाद्यमनन्तमाहुः इति स्मृत्यनुसारेण अनन्तपदस्य महागुणवत्त्वार्थकत्वेन गुणतः आनन्त्यस्य, न विद्यते अंतो नाशो यस्य इति व्युत्पत्त्या अनन्तशब्दस्य नाशाभाववदर्थकतया कालतः आनन्त्यस्य, न विद्यते अंतः देशपरिच्छेदः यस्य इति व्युत्पत्त्या देशतः आनन्त्यस्य च उपादानत्वं विनाऽनुपपत्त्यभावात् स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्य इत्यादिश्रुत्या आकाशस्यापि अनन्तत्वबोधनात् तस्यापि सर्वजगदुपादानतापत्तेश्च।

ब्रह्मणः परिणाम्युपादानताया विवर्तोपादानतायाश्च प्रमाण-विरुद्धत्वेनोभयाम्नानस्य तदाक्षेपकत्वासंभवाच्च। नह्याक्षेपकं प्रमाण-विरुद्धमाक्षिपति।

ब्रह्मैव कारणमुपादाय प्रभवप्रलययोराम्नानात् ब्रह्मैवोपादान-कारणमिति व्याख्याने साक्षादिति पदस्य वैयर्थ्यं च।

न च आकाशादेवेति श्रौतावधारणोक्तोपादानान्तराभावं साक्षात् इति सूत्रपदेन दर्शयति इति साक्षात्पदस्य सार्थक्यमिति वाच्यम्। साक्षात् इति पदेन एतावदर्थस्याबोधनात्। अद्वैतिमतेऽविद्यायाः उपादानत्वाङ्गीकारेणोपादानान्तरव्यावृत्तेः कर्तुमशक्यत्वाच्च। घटादीनामनुपादानभूते भूतले चक्रे च लयदर्शनात् 'प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः' इति शाङ्करभाष्यन्त्वयुक्तमेव। १।४ २५।

ॐ आत्मकृतेः परिणामात् ॐ

इतश्च प्रकृतिः=उपादानकारणं ब्रह्म 'तदात्मानं स्वयमकुरुत' ( तै. २।७ ) इत्यात्मनः कर्तृत्वकर्मत्वाभिधानात् । कथं पूर्वसिद्धस्य सतः कर्तृत्वेन स्थितस्य क्रियमाणत्वमित्याशङ्कायां– 'परिणामात्' पूर्वसिद्धोऽपि परमात्मा विकारात्मना परिणमयामासात्मानं इति।

अथवा परिणामादिति पृथक्सूत्रम् । 'सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तं च इत्यादिना सामानाधिकरण्येन ब्रह्मण एव विकारात्मना परिणामः आम्नायतेऽतः ब्रह्म प्रकृतिः- उपादानमिति यद्व्याख्यानं तत्तुच्छम् । अस्यार्थस्य सर्वप्रमाणविरुद्धत्वात् ।

तथाहि-कथं पूर्वसिद्धस्य सतः कर्तृत्वेन स्थितस्य क्रियमाणत्वमित्याशङ्क्य परिणामात् पूर्वसिद्धोऽपि परमात्मा विकारात्मना परिणमयामास आत्मानमिति तत्तावदसङ्गतम् । परब्रह्मणो निर्विकारतायाः श्रुत्यादिसिद्धत्वेन विकारवत्वरूपपरिणामासम्भवात् ।

नच तदात्मानं स्वयमकुरुत इति वाक्ये श्रूयमाणः परिणामरूपो विकारा मिथ्येति न विकाररूपपरिणामबोधकश्रुतेः निर्विकारश्रुतिविरोध इति वाच्यम् । इष्टापत्तेः । यतो मिथ्येत्यस्य त्रिकालेऽपि नास्तीत्यर्थकत्वेनब्रह्मणोविकारित्वरूपपरिणामवत्त्वं नास्तीत्येवोक्तंस्यात्। तथाचास्मदिष्टसिद्धिः । अस्याः श्रुतेः ब्रह्मणो मिथ्याभूत ( अविद्यमान) परिणामबोधकत्वाङ्गीकारे श्रुतेरप्रामाण्यापत्तेश्च। न चाप्रामाण्यं वेदस्य वैदिकम्मन्येन वक्तुं शक्यम् । अतो नेयं श्रुतिः परिणामबोधिका ।

ननु तर्ह्यस्याः श्रुतेः कोऽर्थ इति चेत्, 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ॥ ( गी. ४।९ ) 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥' ( गी. ४।७ ) इत्याद्युक्तरीत्या 'स्वयमविकारः सन्नेव स्वसृष्टजगन्नियामकांतर्यामिरूपेण स्वस्य बहुभावोपपत्तेः'। 'यदेकमव्यक्तमनंतरूप'

मिति श्रुतौ एकस्यैवानंतरूपतायाः श्रवणात् । तस्मात् (अद्वृतिभिरेवो- पादानकारणतायाः मिथ्यात्वबोधनात् विवर्तोपादानताया अकथनात्) नेदं सूत्रं ब्रह्मणः उपादानत्वबोधकम् । ब्रह्म विवर्तोपादानमिति अस्मिन् सूत्रे कथ्यते इति शङ्कायाः न प्रसरः, स्पष्टं परिणामादिति परिणामवाचकपदस्य श्रवणात् ।

यच्चोक्तं परिणामादिति सूत्रं पृथक्कृत्य 'सच्च त्यच्चाभवत्' 'निरुक्तं चानिरुक्तं च' (तै. २.६) इत्यादिना ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते इति ब्रह्म उपादानकारणमिति तदप्यतिहेयम् । तथाहि- 'इदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. २.६) इति पूर्ववाक्ये सर्वजगतः सृष्टिमभिधाय 'तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च' इति सर्वजगत्सृष्ट्वा स्वसृष्टं जगत् अनुप्राविशत् । अनुप्रविश्य च सच्च त्यच्चाभवत्' इति प्रवेश्यप्रवेशकभावादिना स्वसृष्टजगद्भिन्नताया आवश्यकत्वेनो - पादानकारणत्वासंभवात् । निर्विकारब्रह्मणः परिणामासम्भवेन सच्च त्यच्चाभवदिति वाक्येन ब्रह्मणः सत्त्यदादिजगद्रूपेण परिणामः कथ्यत इति वक्तुमशक्यत्वात्, श्रुतौ कथितस्य परिणामस्य मिथ्यात्वेन ब्रह्मणः उपादानत्वासिद्धेः श्रुतेरप्रामाण्यप्रसङ्गाच्च न ब्रह्मण उपा - दानकारणत्वसिद्धिः । १।४।२६ ।

ॐ योनिश्च हि गीयते ॐ

'कर्तारमीशं पुरुषं ब्रह्मयोनिं' (मुं- ३।१।३) 'यद्भूतयोनिं परिपश्यंति धीराः' (मुं. १।१।६) इति च ब्रह्मणि योनिशब्दः प्रयुज्यते । योनिशब्दश्चोपादानवचन इति ब्रह्म उपादानकारणमिति यच्छङ्करव्याख्यानं तत्तुच्छम् । योनिशब्दस्य 'योनिष्ट इन्द्र निषदे

अकारि ' ( ऋ. सं. १।१०४।१ ) इति वाक्ये– ' हे इन्द्र ! ते=तव निषदे= उपवेशनाय, योनिः=स्थानं, मया अकारि ' इति स्थानार्थे अपि प्रयोगदर्शनात् न योनिशब्देनोपादानत्वसिद्धिः । न च 'यथोर्णनाभिः सृजते गृह्णते च ' ( मुं. १।१।७ ) इत्युत्तरवाक्ये उपादान कारणीभूतोर्णनाभिदृष्टांतदानात् योनिशब्दः उपादानवचन इति वाच्यम् । ऊर्णनाभेश्चेतनत्वेन तन्तुं प्रति निमित्तकारणत्वात् ऊर्णनाभ्युपभुक्तान्नपरिणतलालाया एवोपादानकारणत्वात् इति वाक्यशेषेणापि योनिशब्देनोपादानकारणत्वासिद्धेः, नेदमपि सूत्रं ब्रह्मणः उपादानत्वबोधकमिति नेदं पञ्चसूत्रात्मकमिदमधिकरणं ब्रह्मणः उपादानत्वबोधकमिति ॥ २७ ॥

ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ

इदं सूत्रं, अण्वादिकारणवादा ब्रह्मकारणवादस्य प्रतिपक्षत्वात् प्रतिषेद्धव्याः ; अतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति । एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वे अण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः । तेषामपि प्रधानवत् अशब्दत्वात् शब्दविरोधित्वाच्चेति व्याख्यातमिति ब्रह्मण एव कारणत्वं न त्वण्वादीनामित्युक्त्या अकारणेभ्यः अण्वादिभ्यो जगत्कारणस्य ब्रह्मणो भेदः सिध्यति इति ॥ २८ ॥

॥ इति प्रथमाध्यायः ॥

॥ श्रीरामचन्द्राय नमः ॥

## ॥ अथ द्वितीयाध्यायप्रारम्भः ॥



शाङ्करभाष्यम्– प्रथमाध्याये सर्वज्ञस्य सर्वेश्वरस्य ब्रह्मणः उत्पत्त्यादिकारणत्वं समर्थितम्, प्रधानादिकारणवादाश्च निराकृताः। इदानीमस्मिन् द्वितीयेऽध्याये स्वपक्षे स्मृतिन्यायविरोधपरिहारः प्रथमपादे, प्रधानादिकारणवादानां न्यायाभासोपबृंहितत्वं द्वितीयपादे, प्रतिवेदांतं सृष्ट्यादिप्रक्रियाया अविगीतत्वं तृतीयचतुर्थपादयोः प्रतिपाद्यते।

ॐ स्मृत्यनवकाशदोषप्रसंग इतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्ॐ

यदुक्तं–ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम्। कुतः? स्मृत्यनवकाशदोषप्रसङ्गात। ब्रह्मणः कारणत्वाङ्गीकारे प्रधानादीनां कारणत्वप्रतिपादिका तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता स्मृतिः, अन्याश्च तदनुसारिण्यः स्मृतयः अनवकाशाः प्रसज्येरन्। तस्मात्तदविरोधेन वेदांता व्याख्येया इति न ब्रह्म जगत्कारणमित्याशंक्य, नैतदाशङ्का युक्ता। अन्यस्मृत्यनवकाशदोषप्रसङ्गात्। यदि ब्रह्मणो जगत्कारणत्वाङ्गीकारे कपिलादिस्मृतीनां अनवकाशदोषप्रसङ्गेन ब्रह्मणः कारणत्वं निषिध्यते तर्हि ब्रह्मणः कारणत्वप्रतिपादिकानां स्मृतीनामनवकाशदोषप्रसङ्गात् ब्रह्मणः कारणत्वमङ्गीकरणीयम्। न चानिर्णयः। श्रुत्यनुसारिस्मृतिभिः ब्रह्मणः कारणत्वनिर्णयोपपत्तेः इति ॥ १ ॥

ॐ इतरेषां चानुपलब्धेः ॐ

सांख्यस्मृत्युक्तानां महदादीनां वेदे लोके चानुपलब्धेः महदादिकार्यप्रतिपादकस्मृतीनां अप्रामाण्यात् कारण ( प्रधान ) प्रतिपा-

दकस्मृतेरप्यप्रामाण्यमिति न तद्विरोधः ब्रह्मकारणवादस्येति शङ्करा-चार्यैर्व्याख्याते इमे सूत्रे प्रधाननिरासेन सर्वज्ञस्य सर्वेश्वरस्य ब्रह्मणः कारणत्वं प्रतिपादयती सर्वज्ञत्वसर्वेश्वरत्वादिधर्मरहितात् जीवजडा-त्मकप्रपंचात् ब्रह्मणः भेदबोधके एवेति नैतत्प्रमेये विवादः। परंतु यच्चोक्तं शङ्करभाष्ये - मनुना च -

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।

संपश्यन् आत्मयाजी वै स्वाराज्यमधि गच्छति ॥ (१२.९१)

इति सर्वात्मदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते। कपिलो हि न सर्वात्मत्वदर्शनं अनुमन्यते आत्मभेदाभ्युपगमात् इति तदत्यन्तमयुक्तम्।

मनुवाक्ये सर्वात्मत्वाप्रतीतेः (सर्वाभेदाप्रतीतेः) प्रत्युत भेदस्यैव प्रतीतेश्च। तथाहि — ' यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः.... यः सर्वाणि भूतानि अंतरो यमयति ' (बृ.३।७।१५) इति वाक्ये सर्वभूतानामन्तर्गतेन परमात्मना भेदस्यैव बोधनात् शङ्करा-चार्यैरपि इदं वाक्यं भूतानां भूतांतर्गतपरमात्मना भेदं बोधयतीत्यु-क्तत्वाच्च तद्वत् सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि इति मनुवा-क्यमपि सर्वप्राणिषु ( चेतनेषु ) आत्मानं परमात्मानं संपश्यन्निति सर्वप्राणिनां नियामकतया अंतःस्थितेन ( अंतर्यामिणा ) परमात्मना भेदमेव बोधयति।

तथा ' स तत्र पर्येति ' ( छां. ८।१२।३ ) इत्यधिकरणाधि-कर्तव्यनिर्देशात् भेदेनैवावस्थानमिति ( ब्रह्मसू. ४।४।४ ) शाङ्करभा-ष्यरीत्या सर्वभूतान्यात्मनि पश्यन्निति परमात्मन अधिकरणत्वस्य भूतानामाधेयत्वस्य च कथनेन भेदबोधकम्।

तथा, ततस्तु पश्यते निष्कलं ध्यायमानः ( मुं. ३।१।८ ) इति वाक्यं द्रष्टृद्रष्टव्यभावेन भेदबोधकम्। शङ्कराचार्यैरपि द्रष्टृद्रष्टव्य-

भावेन भेदं बोधयतीत्युक्तम् । तद्वत् आत्मानं पश्यन्निति मनुवाक्यमपि द्रष्टृद्रष्टव्यभावेन भेदस्यैव बोधकमिति । मनुवाक्ये सर्वात्मत्व ( सर्वाभेद ) बोधकपदाभावेन भेदबोधकपदानां सत्वेन च कपिलमनुमतयोः साम्ये सर्वात्मत्वदर्शनं प्रशंसता मनुना कापिलं मतं निंद्यते इत्युक्तिः वंचनामूलैव ।

यच्चोक्तं ' महाभारतेऽपि च ' बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु' इति विचार्य ' बहव पुरुषा राजन् सांख्ययोगविचारिणाम्' इति परपक्षमुपन्यस्य तद्व्युदासेन ' बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥' इत्युपक्रम्य ' ममांतरात्मा तव च ये चान्ये देहसंस्थिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥ विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति भूतेषु स्वैरचारी यथासुखम् ॥ ' इति सर्वात्मतैव निर्धारितेति तदप्ययुक्तम् । अस्मिन् महाभारतवाक्ये अभेदबोधक-पदाभावेन अभेदाप्रतीतेः ( सर्वात्मत्वाप्रतीतेः ) प्रत्युत भेदबोधक पदानां सत्वेन भेदस्यैव प्रतीतेः । तथाहि ' बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ' ( महाभा. शां. ३५० अ. १ श्लो. ) इति वाक्येन हे ब्रह्मन्=वैशम्पायन ! पुरुषाः=चेतनाः, बहवः उत एक एव ? [ न बहवः ] इति जनमेजयेन प्रश्ने कृते,

' बहवः पुरुषा लोके सांख्ययोगविचारणे । ×
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥

इति श्लोकेन सांख्ययोगविचारणे=सांख्यस्य योगस्य च शास्त्रस्य विचारणे कृते, लोके=संसारे, [ईशितव्यवर्गे] पुरुषाः=चेतनाः, बहवः, हे कुरुकुलोद्वह=जनमेजय, ' एतत् ' इत्यस्य विवरणम्-'एकं पुरुषं न इच्छन्ति इति । एकपुरुष(सर्वात्मत्व)पक्षं ( निराकृत्य ते

×सांख्ययोगविचारिणामितिपाठेतुसांख्ययोगविचारकर्तृणांमतेइत्यर्थः

बहवः पुरुषाः समाः किं वा तेषु मध्ये एकः श्रेष्ठः अन्ये अवराः इति शङ्कायां वैशम्पायनः -

‘ बहूनां पुरुषाणां च यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥ ’

इति श्लोकेन बहूनां पुरुषाणां मध्ये एका एकं योनिः कारणमिति ‘द्यावाभूमी जनयन् देव एकः ’ इति श्रुतौ यथा येन प्रकारेण उच्यते तथा तेन प्रकारेण तं पुरुषं परमात्मानं विश्वं=पूर्णम् , गुणाधिकं आख्यास्यामि ’ इति अनेकपुरुषमध्ये परमात्मनः कारणत्वं सर्वोत्कृष्टत्वं चाभिधाय स्वोक्तार्थस्य ( पुरुषा बहवः नत्वेकः बहुषु पुरुषेषु परमात्मा श्रेष्ठः सर्वज्ञत्वादिगुणपूर्णः इत्यस्यार्थस्य ) दार्ढ्याय

‘ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्रह्मणा सह संवादं त्र्यम्बकस्य विशांपते ’ ॥ ( ३५०।८ )

इत्यादितः स्वोक्तार्थप्रतिपादिकां पितापुत्रसंवाद (चतुर्मुखरुद्रसंवाद) रूपामाख्यायिकां वक्ति वैशम्पायनः । रुद्र उवाच-

कौतूहलं चापि हि मे एकांतगमनेन ते ।
नैतत्कारणमल्पं हि भविष्यति पितामह ॥
किन्तु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।
सुरासुरैरध्युषितं ऋषिभिश्चामितप्रभैः ॥
गन्धर्वैरप्सरोभिश्च सततं सन्निषेवितम् ।
उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ॥

इति सुरासुरा यत्र तिष्ठन्ति यत्र अमितप्रभाः ऋषयो गन्धर्वाश्च तिष्ठन्ति क्षुत्पिपासावर्जितं वैराजसदनं त्यक्त्वा वैजयन्तनामकं गिरिवरं एकाकी कुत आगतोऽसि इति पृष्टो ब्रह्मा उवाच –

‘ वैजयन्तो गिरिवरः सततं सेव्यते मया ।
अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ २२ ॥

वैजयन्तनामके स्थित्वा एकाग्रेण मनसा विराट्पुरुषः मया चिन्त्यते इति ब्रह्मवचनं श्रुत्वा रुद्र उवाच-

'बहवः पुरुषा ब्रह्मन् त्वया सृष्टाः स्वयम्भुवा ।
सृज्यन्ते चापरे ब्रह्मन् स चैकः पुरुषो विराट् ॥ २३ ॥
को ह्यसौ चिन्त्यते ब्रह्मन् त्वयैकः पुरुषोत्तमः ।
एतन्मे संशयं ब्रूहि महत् कौतूहलं हि मे ॥ २४ ॥' इति ।

हे ब्रह्मन् ! त्वया पुरुषा बहवः सृष्टाः अपरे सृज्यन्ते । एतादृशेन त्वया चिन्तनीयः पुरुषोत्तमः कः? एतद्विषये मम संशयो वर्तते। एतच्छ्रोतुं मम महत्कौतूहलमस्ति, इति रुद्रेण पृष्टो ब्रह्मा पुनरुवाच-

'बहवः पुरुषाः पुत्र ये त्वया समुदीरिताः । एवमेतत् ....
बहूनां पुरुषाणां स यथैका योनिरुच्यते ॥ २६ ॥
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ।
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् ॥ २७ ॥

३५० अध्यायः समाप्तः ।

हे पुत्र रुद्र, त्वया ये समुदाहृताः बहवः पुरुषाः एतत्=बहुपुरुषवत्वं एवं तथैव ...... बहूनां पुरुषाणां मध्ये द्यावाभूमी जनयन् देव एकः इति श्रुतौ यथा येन प्रकारेण एका योनिः एकं कारणमित्युच्यते तथा तेन प्रकारेण इत्युक्तः पुनः ब्रह्मा उवाच- तं=मया ध्येयं पुरुषं विश्वं=पूर्णं, परमं=उत्तमं, सुमहत्तमं=अतिशयेन श्रेष्ठं, निर्गुणं=कदापि सत्वरजस्तमोगुणरहितं, सनातनं परमात्मानं, निर्गुणाः=सत्वरजस्तमोगुणरहिता भूत्वा प्रविशंति (मोक्षंप्राप्नुवन्ति) इति तं वक्ष्यामि।

श्रुणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते । ॥ १ ॥
न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम ।
सं गुणैर्निर्गुणैर्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ २ ॥

अशरीरश्शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥ ३ ॥
ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥ ४ ॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ ५ ॥
महापुरुषशब्दं स बिभर्त्येकः सनातनः ॥ ९ ॥
देवास्सर्वे मुनयस्साधुशांतास्तं प्राग्वंशे यज्ञभागं यजन्ते
अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥२०॥
मत्तो जगज्जङ्गमं स्थावरं च सर्वे वेदाः सरहस्याश्च पुत्र ॥
एतत्ते कथितं पुत्र यथावदनुपृच्छतः ।
सांख्यज्ञाने तथा योगे यथावदनुवर्णितम् ॥ २२ ॥
( शां. ३५१ अ. )

हे पुत्र रुद्र, यथा एष पुरुषः, शाश्वतः=शश्वदेकप्रकारः, अव्ययः=स्वरूपतो नाशरहितः, अक्षयः=धर्मतोनाशहीनः, अप्रमेयः= साकल्येन ज्ञातुमशक्यः, सर्वगश्च=सर्वत्रविद्यमानः, इति निरुच्यते=कथ्यते तथा शृणु, ॥१॥ हे सत्तम=अतिशयेन साधो, सः=पुरुषोत्तमः, त्वया मया अन्यैर्वापि चक्षुषा द्रष्टुं न शक्यः ॥२॥ अशरीरः=प्राकृत शरीररहितः, सर्वेषु प्राकृतेषु शरीरेषु निवसति=प्राकृतशरीरे विद्यमानोऽपि तच्छरीरकृतकर्मभिः न लिप्यते ॥ ३ ॥

स च परमपुरुषः ( परमात्मा ) मम × अन्तरात्मा=अंतःस्थित्वा नियामकः, तव चांतरात्मा । ये च अन्ये देहे विद्यमानास्तेषां सर्वेषां अंतरात्मा असौ परमात्मा साक्षिभूतः सर्वजनक्रियमाणकर्म-

× ‘ यस्सर्वेषु भूतेषु तिष्ठन् ’ (बृ.) इत्युक्तरीत्या सर्वेषु अन्तः-स्थित्वा नियामकः ।

द्रष्टा केनचित्पुरुषेण क्वचिदपि काले न ग्राह्यः स्वकीयेच्छामन्तरा दृश्यो न ÷ भवति ॥ ४ ॥ विश्वमूर्धा=अनेकशीर्षवान्, अनेकबाहुवान्, अनेकपादनेत्रनासिकावान्, क्षेत्रेषु=महाभूतादिसमस्तपदार्थेषु, सुखविशिष्टःसन् स्वैरचारी=यथेष्टं चरति ॥ ५ ॥

सनातनः एकः सः परमात्मा, महापुरुषशब्दं, महापुरुष इति शब्दो महापुरुषशब्दस्तं बिभर्ति महापुरुषशब्दवाच्यः (इतरे सर्वे पुरुषशब्दवाच्याः, अयं तु महापुरुषशब्देन वाच्य इति) सर्वे देवाः साधुभताश्शांताश्च मुनयः, तं यज्ञभागं=परमात्मानं, यजन्ते, प्रजानां ईशः आद्यः अहं=ब्रह्मा (चतुर्मुखः) तस्मात्=पूर्वोक्तात् परमात्मनः जातः। त्वं (रुद्रः) मत्तः (चतुर्मुखात्) प्रसूतः। मत्तः जङ्गमं स्थावरं च जगत् जातं। हे पुत्र रुद्र! सरहस्याः सर्वे वेदाः अभिव्यक्ताः ॥ २० ॥

हे पुत्र रुद्र! अनुपृच्छतः=प्रश्नं कुर्वतस्ते, सांख्यज्ञाने=सांख्यशास्त्रे, तथा, योगे=योगशास्त्रे यथावत् अनुवर्णितं अनुपृच्छतः प्रश्नं कुर्वतस्तव, यथावत्=यथावर्तते तथा कथितम् ॥ २२ ॥

इति पुरुषैक्य (सर्वात्मत्व) पक्षं निराकृत्य पुरुषबहुत्वपक्षं व्यवस्थाप्य 'उत्तमः पुरुषस्त्वन्यः' इति गीतोक्तरीत्या बहुपुरुषेभ्यः भिन्नं महापुरुषशब्दवाच्यं ब्रह्मरुद्रादिदेवर्षिगन्धर्वादिनियामकं तैः पूज्यं ब्रह्मरुद्रादिसर्वोत्पादकं अतिश्रेष्ठं परमात्मानं सेतिहासं सतात्पर्यं प्रतिपादयति।

'महाभारते सर्वात्मता निर्धारिता' इत्युक्तिः अज्ञान (भ्रम) मूला वा प्रतारणमूला वा स्यात्।

---

÷ 'एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते। इच्छन् मुहूर्तान्नश्येऽहं ईशोऽहं जगतां गुरुः' (भारत)

केचित् वदन्ति—भगवदाज्ञया मोहनार्थं शङ्कराविष्टशङ्कराचार्यस्य मोहनार्थैवेयमुक्तिरिति । अपरे तु अज्ञानमूलैवेति वर्णयन्ति- सुधीभिरेव अन्यतरपक्षो निर्धार्यताम् ।

वयं तु न सर्वात्मत्वं ( सर्वाभेदः ) भारतसिद्धमिति बाढं वदामो वदिष्यामः साधयामश्च । ‘ बहवः पुरुषा राजन् सांख्ययोगविचारिणाम्’ इति परपक्षमुपन्यस्य तद्व्युदासेन.... सर्वात्मतैव निर्धारिता इत्युक्तिरत्यन्तमसङ्गता । तथाहि– ‘बहवः पुरुषा राजन् सांख्ययोगविचारिणामिति ’ स्वपक्ष एव उपन्यस्तः न तु तस्य परपक्षत्वमुक्तम् । नापि व्युदासः कृतः । प्रत्युत सांख्ययोगपक्षस्यैव ब्रह्म ( चतुर्मुख ) सम्मतत्वं उक्तम् भारते अस्मिन्नेव प्रकरणे वक्ष्यमाणश्लोकाभ्यां ।

एतत्ते कथितं पुत्र यथावदनुपृच्छतः ।

सांख्यज्ञाने तथा योगे यथावदनुवर्णितम् ।। इति ।। २२ ।।

सांख्ययोगशास्त्रप्रकारेण रुद्रं प्रति ब्रह्मणा कथितमिति । सांख्येन विधिना चैव योगेन च यथाक्रमम् ’ ‘ चिन्तयामि गतिं चास्य ’ इति सांख्ययोगयोर्ब्रह्मकर्तृकचिंतनसाधनत्वं तथा-

तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः ( श्वे. ६।१३ ) इति ।

सांख्ययोगाभ्यां अभिपन्नं प्राप्तं देवं ज्ञात्वा मुच्यते इति सांख्ययोगयोः मोक्षकारणत्वं चोक्तं स्वीकृतं शङ्कराचार्यैः तत्कारणं सांख्ययोगाभिपन्नमिति वैदिकमेव तत्र ज्ञानं ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्यते ( ब्र सू. शां· २।१।४ ) इति भाष्ये सांख्ययोगयोः मोक्षसाधनत्वमेतत् श्रुतौ कथ्यते इति ।

गीतायामपि ‘ एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ’ इत्यादि ग्रन्थेषु सांख्ययोगशब्दौ अनेकवारं श्रुतौ इति सांख्ययोगशब्दयोः श्रवणमात्रेण तयोः परपक्षत्वकथनमनुपपन्नम् । यद्यपि

प्रधानकारणवादिनां सांख्यशास्त्रं निरीश्वरप्रतिपादकं योगशास्त्रं चास्ति, ते वेदविरुद्धार्थविषये अप्रमाणे भवितुमर्हतः । नहि बहवः पुरुषा लोके सांख्ययोगविचारिणामिति भारतोक्तसांख्ययोगविचारवत्पुरुषोक्तबहु-पुरुषत्वं वेदविरुद्धं प्रत्युत 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इत्याद्यनेकश्रुत्यादिसिद्धम् । चतुर्मुखोऽपि (ब्रह्मापि) 'सांख्येन विधिना चैव योगेन च यथाक्रमम् । चिन्तयामि गतिं चास्य' (८) इत्यादिश्लोकैः सांख्ययोगोक्तप्रकारेण परमात्मानं ध्यायतीति चतुर्मुखा (ब्रह्मा) ह्यनुमतत्वं चोक्तं तत्रैव भारते इति न पुरुषबहुत्वप्रतिपादकभारतोक्तसांख्ययोगशास्त्रयोः परपक्षत्वमुक्तं न वा निराकृतं भारते इति ।

न च श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. ३।८) इति । द्वैतिनो हि ते सांख्या योगाश्च नात्मैकत्वदर्शिनः (ब्र.सू. शां २।१।३) इति शाङ्करभाष्योक्तरीत्या सांख्ययोगप्रतिपाद्यात्मबहुत्वं तमेव विदित्वा इति श्रुतिविरुद्धमिति तस्य तस्मिन् विषये त्याज्यत्वं सिध्यतीति वाच्यम् । 'तमेव विदित्वा' इति श्रुत्या आत्मैकत्वज्ञानस्य मोक्षसाधनतायाः तदन्यस्मिन् मोक्षसाधनत्वनिराकरणस्य चासिद्धेः प्रत्युत जीवब्रह्मणोर्भेदज्ञानस्यैव मोक्षहेतुत्वसिद्धेः । तथाहि– 'वेदाहमेतं पुरुषं महांतं आदित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय ॥ (श्वे.३।८)

इति श्रुतिः, एतं=प्रमाणसिद्धं, महांतं=श्रेष्ठं, आदित्यवर्णं=आदित्यवद्वर्णवन्तं (प्रकाशमानं) तमसः सत्वरजस्तमोरूपगुणत्रयात्मकप्रकृतेः परस्तात् विद्यमानं सत्वरजस्तमोगुणरहितं (निर्गुणम्) पुरुषं=पूर्ण-षड्गुणं परमात्मानं अहं वेद, जनः तं पूर्वोक्तं परमात्मानं, विदित्वैव

अतिमृत्युं=मोक्षं, एति, अयनाय=मोक्षाय, अन्यः पन्थाः न विद्यते इति स्पष्टं महत्वादिगुणविशिष्टपरमात्मज्ञानेन मोक्षमभिदधती, ज्ञातृ-ज्ञेयभावेन अहं वेद अन्योऽपि जनः तं परमात्मानं विदित्वा मोक्षं प्राप्नोति इति भेदबोधकधर्मज्ञानस्यैव मोक्षहेतुत्वं बोधयति, नत्वात्मैकत्वज्ञानस्य; तद्बोधकपदाभावात । जीवपरमात्मनोर्भेदबोधिकानां भेदज्ञानस्यैव मोक्षसाधकत्वप्रतिपादिकानां 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे.१।६) 'अनन्यप्रोक्ते गतिरत्र नास्ति' (का.१।२।८) 'प्रोक्तान्येनैव सुज्ञानाय प्रेष्ट' (का.१।२।९) इत्यादिबहुश्रुतीनां सत्वेन तद्विरोधाच्च ।

यदप्युक्तम् 'श्रुतिश्च सर्वात्मतायां भवति' 'यस्मिन सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कश्शोक एकत्वमनुपश्यतः' 'इत्येवंविधा' इति तदप्ययुक्तम् । यस्मिन् सर्वाणि भूतानीति वाक्यस्य सर्वात्मत्वबोधकत्वाभावात् । अस्याः श्रुतेः यथा सर्वात्मत्व ( जीव-ब्रह्मणोरभेद ) बोधकत्वाभावस्तथा वर्णितं वाक्यान्वयाधिकरणे, (बृ.१।४।२) तत्रैव द्रष्टव्यम् ।

इतरेषां चानुपलब्धेरिति सूत्रे 'प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि महदादीनि न तानि वेदे लोके वोपलभ्यन्ते भूतेंद्रियाणि तावल्लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तु म् अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येवेन्द्रियार्थस्य न स्मृतिरवकल्प्यते। यदपि क्वचित्तत्परमिव श्रवणमवभासते तदप्यतत्परं व्याख्यातं । 'आनुमानिकमप्येकेषामित्यत्र कार्यस्मृतेरप्रामाण्यात् कारणस्मृतेरप्यप्रामाण्यं युक्तमित्यभिप्रायात्तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः इति शङ्कराचार्यव्याख्यानं न जगतो मिथ्यात्वबोधकं न वा जीवब्रह्मणोरभेदबोधकम्—प्रत्युत सर्वज्ञः सर्वेश्वरः जगत उत्पत्तिकारणं, न प्रधानं; इति असर्वज्ञात् असर्वेश्वरात् जीवजडात्मकप्रपञ्चात्

ब्रह्मणः अस्मदिष्टभेदज्ञापकमेवेति न निराकार्यम्। परन्तु सांख्योक्तानां महदादीनां यत् लोकवेदयोरनुपलभ्यत्वमुक्तं तदयुक्तम् । श्रुतौ गीतायां च महदादीनामुक्तेः । श्रुतौ तावत्–

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥' का.

गीतायामपि–भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥' (गी.७।४)

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेंद्रियगोचराः ॥' ( गी.१३।५ )

इति। नहि तत्र सांख्योक्ता महदादय उक्ताः किंत्वन्या इत्युक्तं आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' इत्यत्रेति वाच्यम् । नाममात्रे विवादात् तेषामत्राहङ्कारादीनां कथनात् तस्मात् इतरेषां महदादीनामनुपलब्धेः श्रुतिषु लोकेषु च उपलब्ध्यभावादित्युक्तिरसङ्गतैवेति ॥ २ ॥

ॐ एतेन योगः प्रत्युक्तः ॐ

इति सूत्रमपि, 'एतेन=सांख्यस्मृतिप्रत्याख्यानेन, सांख्यस्मृतिवत् प्रधानं स्वतंत्रं कारणं तस्य च महदादीनि च कार्याणि इति प्रतिपादयन्ती योगस्मृतिरपि प्रत्याख्याता वेदितव्या। अतः ब्रह्मकारणताबोधकवेदांतस्य न योगस्मृतिविरोध ' इति शाङ्करव्याख्यानानुसारेण अकारणात् जीवजडत्मकात्प्रपञ्चात्कारणस्य ब्रह्मणः भेदबोधकमेव । यत्तु ' श्रुतिर्हि वैदिकादत्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति ' तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (श्वे.) इति द्वैतिनो हि सांख्या योगाश्च नात्मैकत्वदर्शिनः ' इति तन्न ।

' वेदाहमेतं पुरुषं महांतं आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय '॥

इति ( श्वे. ) श्रुतिः सर्वापेक्षया महत्त्वादित्यवर्णत्वसत्वरजस्तमोगुणराहित्यादिजीवविरुद्धधर्मबोधनेन ज्ञातृज्ञेयभावबोधनादिना जीवब्रह्मणोर्भेदज्ञानस्यैव मोक्षसाधनत्वं बोधयति न त्वात्मैकत्वज्ञानस्य। 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इति सैव श्वेताश्वतरश्रुतिः स्पष्टं भेदज्ञानमेव मोक्षसाधनमिति बोधयन्ती द्वैतिनामेव मोक्षः न त्वद्वैतिनां इति वक्ति। तथा 'अनन्यप्रोक्ते गतिरत्र नास्ति...प्रोक्तान्येनैव सुज्ञानाय प्रेष्ट' इति, अनन्यप्रोक्ते=जीवेश्वराभेदज्ञानिना अद्वैतिना प्रोक्ते गतिर्नास्ति, अन्येन=जीवेश्वरभेदज्ञानिना द्वैतिना प्रोक्ते, सुज्ञानाय=समीचीनज्ञानाय, मोक्षजनकज्ञानाय भवति इति द्वैतज्ञानिन एव मोक्षं वक्ति। विस्तरस्तु पूर्वाधिकरण एव कृतः, तत्रैव द्रष्टव्यः।२।१।३।

ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ

इति सूत्रस्य यदुक्तं चेतनं ब्रह्म जगतः उपादानकारणमिति तन्नोपपद्यते। अस्य विकारस्य जगतः विलक्षणत्वात् ब्रह्मविलक्षणत्वात् तथात्वं च ब्रह्मविलक्षणत्वं च जगतः शब्दात्। यतः शब्द एव 'विज्ञानं चाविज्ञानं च (तै. २।६) इति कस्यचिद्विभागस्याचेतनतां श्रावयंश्चेतनाद्ब्रह्मणः विलक्षणं अचेतनं जगच्छ्रावयति इति निर्विकारस्य चेतनस्य ब्रह्मणः अचेतनजगत् प्रति विकारवत्त्वरूपोपादानत्वासंभवरूपोर्थः उक्तः शङ्कराचार्येण। स च युक्त एव प्रमेयस्य अबाधितत्वात्। परंतु तस्य अर्थस्य पूर्वपक्षत्वं यद्वक्ष्यते तन्न युक्तं बाधकाभावात्। अयं सूत्रार्थो वा न वा इति विचारः प्रकृतानुपयुक्तत्वात् न क्रियत इति। २।१।४

'मृदब्रवीत्, 'आपोऽब्रुवन्' 'तत्तेज ऐक्षत' ता आपऐक्षन्त' 'ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुः' (बृ.६।१।७) 'ते ह वाचमूचुस्त्वं न उद्गायेति' (बृ. १।३।२) इत्यादि श्रुतयः

मृदादिकार्याणामपि चेतनत्वं बोधयन्तीति न मृदादिकार्यस्य ब्रह्मविलक्षणत्वमित्याशङ्कायां प्रवृत्तस्य –

ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ

इति सूत्रस्यापि, 'मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यंते न भूतेंद्रियमात्रं कुतः विशेषानुगतिभ्यां विशेषो हि भोक्तॄणां भूतेंद्रियाणां च चेतनाचेतनप्रविभागलक्षणः प्रागभिहितः। सर्वचेतनतायां चासौ नोपपद्यते। अपि च कौषीतकिनः प्राणसंवादे करणमात्राशङ्काविनिवृत्तये अधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति 'एता ह वै देवता अहं श्रेयसे विवदमाना इति' 'ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा' (२।१४) इति च, अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मंत्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ. आ. २।४।२४) इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिका देवतामनुगतां दर्शयति। प्राणसंवादवाक्यशेषे च 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः' (छां.५।१।७) इति श्रेष्ठत्वनिर्धारणाय प्रजापतिगमनं तद्वचनाच्चैकैकोत्क्रमणेनान्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः, 'तस्मै बलिहरणम्' (बृ.६।१।१३) इति चैवंजातीयकोऽस्मदादिष्विव व्यवहारोऽनुगम्यमानोऽभिमानिव्यपदेशं द्रढयति। 'तस्माद्विलक्षणमेवेदं ब्रह्मणो जगत् विलक्षणत्वाच्च न ब्रह्मोपादानकं जगदिति पूर्वपक्षे प्राप्ते प्रतिविधत्ते-दृश्यते तु' इति यद्व्याख्यानं कृतं तदपि युक्तमेव। 'मृदब्रवीत् आपोऽब्रुवन्' इत्यादि वदनसंवदनादिचेतनोचितव्यापारबोधकेषु वेदवाक्येषु चेतनानामेव विवक्षितत्वात्। परन्तु एतत्सूत्रस्य पूर्वपक्षसूत्रत्वं यदुक्तं तन्न युक्तम्। मृदब्रवीत् आपोऽब्रुवन् इत्यादिवाक्यानां सिद्धांते चेतनपरत्वात् ब्रह्मण उपादानत्वासंभवाच्चेति। २।१।५॥

ॐ दृश्यते तु ॐ

'विलक्षणयोरपि पुरुष (चेतन) केशयोः पुरुषनखयोः गोमय ( अचेतन ) वृश्चिक ( चेतन ) योः उपादानोपादेयभावो दृश्यते' इति जगद्विलक्षणमपि ब्रह्म जगदुपादानं भवितुमर्हति इति शङ्कराचार्याणां यद्व्याख्यानं तदयुक्तम्। तेनैव 'नन्वचेतनान्येव पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानि अचेतनान्येव च वृश्चिकशरीराणि अचेतनादीनां गोमयानां कार्याणीति' उत्तरवाक्येन निराकृतत्वात्।

महदादिकं जगत् न चेतनविकारः अचेतनत्वात् घटवदिति अनुमानविरुद्धत्वाच्च जगति ब्रह्मोपादानतायाः। न च यच्चैतन्येनानन्वितं [ अचेतनं ] तत् चेतन [ब्रह्म] प्रकृतिकं न इति व्याप्तौ दृष्टांताभावः। अस्माभिः [ अद्वैतिभिः ] समस्तवस्तुजातस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात्। चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यागमतात्पर्यस्य प्रसाधितत्वेन आगमविरोधश्च ब्रह्मणः जगदुपादानत्वानङ्गीकारे इति शङ्कराचार्यैस्तत्रैव दोषोऽभिहित इति वाच्यम्। तद्दोषाणामयुक्तत्वात्। तथाहि– घटादीनां मृदादिविकारत्वस्य प्रमितत्वात् घट एव दृष्टांतो भवितुमर्हति, नहि घटस्य मृद्विकारत्वाभावे घटाद्यर्थं मृदादिग्रहणं कुर्यात्। घटस्य साक्षान्मृद्विकारत्वेऽपि परंपरया ब्रह्मैव ( चेतनमेव ) उपादानकारणमिति चेत् तर्हि न स्वयं घटश्चेतनविकारः किंतु घटकारणं मृत् चेतनविकार इत्युक्तं स्यात्। तथा च कथं न दृष्टांतता घटस्य ? तथा च घटस्य दृष्टांतत्वसंभवात् अनुमानविरुद्धं जगतः चेतनो ( ब्रह्मो ) पादानत्वम्।

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्च [ उपादानकारणं च ] इति आगमतात्पर्यस्य साधितत्वात् तद्विरोध इति यत् तदप्ययुक्तम्। ब्रह्मणः उपादानबोधकस्यैकस्याप्यागमस्याभावात्। प्रत्युत 'निर्वि-

कारोऽक्षरः शुद्धः' इत्यादीनां उपादानत्वनिषेधकानां आगमानां सत्वाच्चेति प्रकृत्यधिकरणे उपपादितत्वात् इति ।२।१।६

ॐ असदितिचेन्न प्रतिषेधमात्रत्वात् ॐ

यदि चेतनं शुद्धं शब्दादिहीनं च ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येतासत्तर्हिकार्यं प्रागुत्पत्तेरिति प्रसज्येत । अनिष्टं चैतत्सत्कार्यवादिनस्तवेति चेत् नैष दोषः । प्रतिषेधमात्रत्वात् । प्रतिषेधमात्रं हीदं नास्य प्रतिषेधस्य प्रतिषेध्यमस्ति । निषेध्यं हि कार्यस्य कारणात्मना सत्त्वं उत कारणसत्त्वातिरिक्तसत्त्वं वा । नाद्यः यथेदानीं कार्यं कारणात्मना सत् तथा प्रागपीति न कारणात्मना सत्त्वं निषेध्यम् । कार्यस्य कारणसत्त्वातिरिक्तसत्त्वं त्विदानीमपि स्वातन्त्र्येण नास्त्येव । 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद (बृ.२।४।६) इत्यादिश्रवणादिति न निषेध्यं । इष्टत्वात् । अतः प्रतिषेधमात्रमेवेदं न तु प्रतिषेध्यमस्तीति यद्व्याख्यानं शङ्कराचार्याणां तदयुक्तम् । असदितिचेदिति शङ्काया एवायुक्तत्वात् शब्दादिमदशुद्धं जगत्प्रति शुद्धस्य निर्विकारस्य ब्रह्मणः केवलस्य निमित्तकारणत्वेन [उपादानकारणत्वाभावेन] शब्दादिमज्जगतः प्रागुत्पत्तेरसत्वप्रसक्तिरेव नास्ति । उपादानकारणीभूताशुद्धप्रकृत्यात्मना सत्वात् । नहि निर्विकारं ब्रह्म जगत उपादानकारणं । जगत्प्रति ब्रह्मणो विवर्तोपादानत्वरूपकारणत्वाङ्गीकारेऽपि जगतः उत्पत्तेः प्रागित्युक्तिरयुक्तैव शुक्तावारोपितरजतस्येव सर्वदाप्यसत्वात् । एवमेवोक्तं शङ्कराचार्यैः । 'ननु शब्दादिहीनं ब्रह्म जगतः कारणम् । बाढम् । ननु शब्दादिमत् कार्यं कारणात्मना हीनं प्रागुत्पत्तेरिदानीं वाऽस्ति तेन न शक्यते वक्तुं प्रागुत्पत्तेरसत्कार्यमिति । विस्तरेण चैतत् मिथ्यात्वम् । (नास्ति नासीन्नभविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वं कालत्रयेऽप्यसत्वं)

कार्यकारणानन्यत्ववादे वक्ष्यामः ' इति वाक्येन कार्यस्य जगतः कालत्रयेप्यसत्वं इति तस्मात् असदिति चेत् इति सूत्रीयशङ्काभागस्य व्याख्यानमयुक्तम् ।

एवं ' न प्रतिषेधमात्रत्वात् ' इति समाधानग्रन्थस्यापि यद्व्याख्यानं 'चेतनस्य शुद्धस्य शब्दादिहीनस्य ब्रह्मणः तद्विपरीताशुद्धशब्दादिमज्जगद्रूपकार्यं प्रति कारणत्वमिष्येत तर्हि कार्यं प्रागुत्पत्तेः असत्प्रसज्येतेति इति निषधोक्तिरयुक्तैव । प्रतिषेधमात्रत्वात् = कार्यं प्रागुत्पत्तेः असत् प्रसज्येतेति यः प्रतिषेधः कृतस्तस्य न प्रतिषेध्यमस्ति । तथाहि- उत्पत्तेः प्राक्कार्यस्य कारणात्मना सत्त्वं निषिध्यते । उत कारणात्मानमन्तरेण स्वातन्त्र्येण सत्त्वं निषिध्यते । नाद्यः । यथैव हीदानीमपीदं कार्यं कारणात्मना सत् एवं प्रागुत्पत्तेरपीति गम्यमानत्वेन उत्पत्तेः प्राक् कारणात्मना सत्त्वं निषिध्यते इत्युक्तेरसङ्गतत्वात् । न द्वितीयः । न हीदानीमपीदं कारणात्मानमंतरेण स्वतन्त्रमेवास्ति । ' सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' (बृ. २।४।६) इति श्रवणादिति ' तदप्ययुक्तम् । कार्यस्य उपादानकारणात्मना इदानीं पूर्वमपि सत्त्वेऽपि निमित्तकारणात्मना कदाप्यभावात् । ब्रह्मणो जगत्प्रति उपादानकारणत्वाभावेन तद्रूपतया जगतः इदानीं पूर्वमपि सत्त्वोक्तेरयुक्तत्वात् नाद्य इति आद्यपक्षनिराकरणमयुक्तम् । न द्वितीयइति द्वितीयपक्षनिराकरणमप्ययुक्तम् । ब्रह्मणो निमित्तकारणत्वेन निमित्तकारणीभूतपरमात्मानमन्तरा इदानीं स्थितिसंभवात् ।

यच्च परमात्मानं ( ब्रह्म ) अंतरा जगन्नास्ति इत्यस्मिन् विषये ' सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ' इति श्रुत्युदाहरणं तत् श्रुत्यर्थापरिज्ञानमूलम् । यः पुरुषः आत्मनोऽन्यत्र–अन्याश्रयतया सर्वं पदार्थजातं वेद, तं पुरुषं सर्वं सर्वपदार्थजातम् । ( तदभिमानिदेवाः)

परादात्' इति श्रुतौ स्पष्टं सर्वपदार्थस्य परमात्मना आधाराधेयभावेन भेद एव बोध्यते। अभेदाभिप्राये 'सर्वं तं परादात् योऽन्यत् आत्मनः सर्वं वेद' इति श्रुतिपाठः स्यात्। तथात्वे च यः आत्मनः अन्यत्=भिन्नं सर्वं वेदेति अद्वैत्यभिमतार्थःस्यात्। न चैवमस्ति। तस्मात् सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद इति श्रुतिः जगतो ब्रह्मव्यतिरेकेण (ब्रह्मभिन्नतया) सत्त्वमवगमयति। विशेषविचारस्तु पूर्वमेव कृतस्तत्रैव द्रष्टव्यः ।२।१।७॥

ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ

अत्राह- 'यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुध्यादिधर्मकं कार्यं ब्रह्मकारणकमभ्युपगम्येत तदपीतौ प्रलये प्रतिसंसृज्यमानं कार्यं कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेत् इत्यपीतौ कारणस्यापि ब्रह्मणः कार्यस्येवाशुध्यादिरूपप्रसङ्गात्सर्वज्ञं ब्रह्म जगत्कारणमित्यसमञ्जसमिदमौपनिषदं दर्शनं इत्यादिशङ्कायाम् अत्रोच्यते' — इति यद्व्याख्यानं तदप्ययुक्तमेव।

ब्रह्मणो जगत्प्रत्युपादानकारणत्वे कार्यस्य प्रलये उपादानकारणरूपत्वप्राप्त्या उपादेयगताः केचन अशुध्यादिधर्माः उपादानकारणे प्राप्नुयुः। नहि ब्रह्म अद्वैतिमते जगत्प्रत्युपादानकारणं किंतु रजतस्य शुक्तिकेव विवर्तोपादानं (जगत्प्रकारकभ्रमविशेष्यमेव)। यथा रजतस्य शुक्तिज्ञानेन नाशे (प्रलये) न शुक्तिरूपताप्राप्तिः तथा ब्रह्माज्ञानेन ब्रह्मण्यारोपितस्य जगतः ब्रह्मज्ञानेन नाश एव नतु ब्रह्मरूपताप्राप्तिरिति अज्ञानेन भासमानं जगत् ब्रह्मरूपं न भवति। प्रलये स्वधर्मेण ब्रह्म अशुद्धमपि न करोति इति विवर्तवादिरीत्या ब्रह्मणः अशुद्धत्वशङ्कैव न पदं दधाति। वस्तुतस्तु ब्रह्मणो जगत्प्रति निमित्तकारणत्वात् प्रकृते ब्रह्मणः उपादेयगतधर्मसंबंधप्रसक्तिरेव नास्तीत्येतत्सूत्रस्यौपनिषददर्शनासामंजस्यशङ्कापरतया अर्थवर्णनमयुक्तमेवेति।

ॐ न तु दृष्टांतभावात् ॐ

इति सूत्रस्य- 'अपीतौ कारणं कार्यधर्मेण संबध्येत' इति शङ्कायाः, 'लोके कारणस्य कार्यधर्मेणासंबंधे शरावमृत्तिकादिदृष्टांताः सन्तीति न ब्रह्म कार्यधर्मेण अपीतौ संबध्यते' इति यद्व्याख्यानं तदयुक्तं। ब्रह्मणोनिमित्तकारणत्वेन परिणाम्युपादानकारणत्वाभावेन उपादेयगतधर्मसंबन्धाप्रसक्तेः। अद्वैतमतरीत्या ब्रह्मणो विवर्तोपादानत्वेऽपि अध्यस्तसंबंधाप्रसक्तेरुक्तत्वाच्च। यदुक्तं शङ्कराचार्यैः 'अत्यल्पं चेदमुच्यते कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति स्थितावपि समानोऽयं प्रसङ्गः'। कार्यकारणयोरनन्यत्वाभ्युपगमात्। इदं सर्वं यदयमात्मा (बृ २।४।६) आत्मैवेदं सर्वं (छां.७।२५।२) ब्रह्मैवेदममृतं पुरस्तात् (मु.२।२।११) सर्वं खल्विदं ब्रह्म (छां.३।१४।१) इत्येवमाद्याभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणानन्यत्वं श्राव्यते। तत्र यः परिहारः कार्यस्य तद्धर्माणां चाविद्यारोपितत्वात् न तैः कारणं संसृज्यते इति अपीतावपि स समानः' इति * तदयुक्तम्॥

'इदं सर्वं यदयमात्मा' इत्यादिश्रुतीनां कार्य (जगत)ब्रह्मणोरभेदबोधकत्वाभावः बहुवारं तत्र तत्र प्रदर्शितः तत्रैवानुसन्धेयः।

किं च 'कार्यस्य तद्धर्माणां च अविद्याध्यारोपितत्वान्न तैः कारणं संसृज्यते' इति यदुक्तं तदप्यसङ्गतम्। यथा शुक्तिकाज्ञानवता पुरुषेण शुक्तिकायां कल्पितं रजतं न शुक्तिकारणकम् न वा कार्यं किंतु मिथ्यैव=नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगि तथा ब्रह्माज्ञानवता पुरुषेण ब्रह्मणि कल्पितं जगत् न ब्रह्मकारणकं न वा कार्यं

---

* शङ्कराचार्यैः पुनः पुनः उक्तमेवोच्यते इति अगत्या तस्यायुक्तताप्यस्माभिः पुनः पुनः प्रदर्शितव्यतया प्राप्ता।

किंतु मिथ्यैवेति जगतः कार्यत्वोक्तेः ब्रह्मणः कारणत्वोक्तेरयुक्तत्वात्। कार्यत्वं हि कारणानंतरकालवृत्तित्वं न हि त्रैकालिकनिषेधप्रतियोगित्वेनाद्वैत्यङ्गीकृतस्य जगतः कारणानंतरकालवृत्तित्वरूपकार्यत्वं संभवति ।सर्वदा असत्वात् । उक्तं हि अद्वैतसंप्रदायविद्भिर्गौडपादाचार्यैः 'न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः । न मुमुक्षुर्न वै मुक्तः' ( गौ. का. २ ३२ ) इत्यादिवाक्येन सर्वजगतः असत्वम् । तद्व्याख्याने शङ्कराचार्यैरपि- ' द्वैतस्य ( जगतः ) असत्वं सिद्धं... सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः ...तस्मात्सूक्तं द्वैतस्य असत्वात् निरोधाद्यभाव इति ' (गौ. शां भा. २।३२) इत्यादिवाक्येन द्वैतस्य जगतः शशविषाणादिवदसत्वं तथा, 'यदेतद्द्वैतस्यासत्वं उक्तं युक्तितः तदेतद्वेदान्तप्रमाणावगतमित्याह ....... विश्वमिदं द्वैतं समस्तमसत् दृष्टं, क्वेत्याह वेदांतेषु इति ' ( गौ. शा- भा. २।३१ ) इत्यादिवाक्यैश्च जगतः असत्वमुक्तम् ।

एवं ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमस्नानसंध्यायज्ञवेददेवतीर्थपुण्यपापस्वर्गवैकुण्ठतल्लोकादिनिर्गुणब्रह्मातिरिक्तसमस्तजगतः शशविषाणवदसत्वं वदतामद्वैतिनां क्व ब्राह्मण्यं क्व वा ब्रह्मचर्याद्याश्रमः क्व च संध्या क्व यज्ञः क्व वेदाध्ययनं क्व वा द्रव्यत्यागरूपयज्ञोद्देश्यभूता देवताः क्व वा पार्वतीपतिः काशीश्वरः सगुणः क्व वा गङ्गा क्व वा पुण्यपापे क्व वा तत्प्राप्याः स्वर्गनरकवैकुण्ठादिलोका इति, एवं ब्राह्मणादिवर्णानां असत्वेऽङ्गीकृतेऽपि 'आस्तिकाः जनाः अद्वैतिनो महा नास्तिकाः अद्वैतमतं नास्तिकमतमिति मत्वा अद्वैतमतं न गृह्णीयुः इत्यास्तिकजनमोहनार्थं न वयं नास्तिका इव ब्राह्मणादिवर्णानां शशविषाणवदसत्वं ब्रूमः किं तु व्यावहारिकसत्यतां अङ्गीकुर्मः अतो न वयं नास्तिका इति ते वदन्ति । नास्तिका हि सर्वस्य नास्तित्वं वदन्तस्तथैवाचरन्ति । न ह्यास्तिकाभिमतानि कर्माणि कुर्वंति । अद्वै-

तिनस्तु 'वचस्येकं मनस्येकं कर्मण्येकं' इत्युक्तरीत्या मनसि सर्वस्यासत्वं जानन्तोऽपि आस्तिका इव वेदोदितब्राह्मणवर्णब्रह्मचर्याद्याश्रमोक्तानि कर्माणि कुर्वन्त इव प्रदर्शयन्तः प्रलोभयन्ति । तदुक्तमभियुक्तैः-

'सौगता वेदबाह्या हि वेदाप्रामाण्यवादिनः ।
अवैदिका इति ज्ञात्वा वैदिकैः परिवर्जिताः ॥
वेदान् प्रविश्य वेदानां योऽप्रामाण्यं प्रसाधयेत् ।
मायी तु यत्नतस्त्याज्यः वैदिकैर्हितशत्रुवत् ॥ इति ।

कुमारिलभट्टाचार्यैरपि-

सत्यं चेत् संवृतिः केयं मृषा चेत् सत्यता कथम् ।
सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः ॥
तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थमुपन्यासः लालावक्कासवादिवत् ॥
नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।
तस्माद्यन्नास्ति नास्त्येव यद्यस्ति परमार्थतः ॥
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ।
न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ॥

इत्यादिग्रन्थैः व्यावहारिक ( सांवृतिक ) सत्यं पारमार्थिक–सत्यमिति सत्यद्वयखण्डनं कृतम् । न केवलं कुमारिलभट्टाचार्यैः कृतम् । शङ्करभाष्यभामत्यादिष्वपि । भामती-' यद्युच्येत तात्त्विकं प्रामाण्यं प्रमाणानां अनेन विचारेण व्युदस्यते नसांव्यवहारिकम् । तथा च भिन्नविषयत्वात् न सर्वप्रमाणप्रतिषेध इति ( बौद्धेन जगतो व्यावहारिकत्वेऽभिहिते तन्निषेधार्थं ) अत आह– ( शाङ्करभाष्यम् ) 'न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यते अपह्नोतुम् ' ।( ब्र.सू.शां.भा. २।२।३१ ) ' भामती-प्रमाणानि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते । अतात्त्विकत्वं तु तद्गो-

चरस्यान्यतो बाधकादवगन्तव्यम् । न पुनः सांव्यवहारिकं नः प्रामाण्यं नतु तात्त्विकमित्येव प्रवर्तन्ते ' इत्यादिग्रन्थेन प्रमाणानां व्यावहारिकवस्तुविषयत्वं खण्डितम् ( प्रमाणगृहीताः पदार्थाः न व्यावहारिका इत्युक्तम् ) तथा च द्वैतस्य जगतः शशविषाणवत् नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वरूपमसत्वमेव मनसि निधाय लोकवञ्चनार्थं ब्राह्मणवर्णब्रह्मचर्याद्याश्रमयज्ञदेवतावेद-तीर्थानां त्रैकालिकनिषेधप्रतियोगित्वापरपर्यायव्यावहारिकसत्वाङ्गी-कारः; एते ब्राह्मणाः एते ब्रह्मचर्याद्याश्रमवन्तः एते वेदाध्ययनकर्तारः एते वैदिकाः एते सोमयाजिनः इति आस्तिकानिव स्वान् जनाः व्यवहरेयुः । तथा स्वयमपि अद्वैतमतावलम्बनेन नष्टा भवन्तु इति वञ्चनार्थं ' असत्यमप्रतिष्ठं ते; एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्ध-यः । प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ( गी. १६।८।९ ) इति गीतोक्तरीत्या स्वयं नष्टाः सन्तः जगतो नाशनार्थं केचन आसु-रस्वभावाः प्रवृत्ताः । केचन असुरलोकमोहनार्थं भगवान् बुद्ध इव प्रवृत्ताः; इति, 'भोः सात्त्विकस्वभावाः ! यूयं मा मोहं प्राप्नुत ' 'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । दैवी संपद्विमोक्षाय निबं-धायासुरी मता ॥ ' इत्युक्त्वा, आसुरस्वभावाः ' असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ' । ' ईश्वरोऽहं ' इति ज्ञानमवष्टभ्य ' आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यां-त्यधमां गतिम् ' इत्युक्तरीत्या अधोगतिं मा प्राप्स्यथ । ' उत्तमः पुरु-षस्त्वन्यः परमात्मेत्युदाहृतः ' ( १५।१७ ) 'ईश्वरः सर्वभूतानां हृद्दे-शेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' ( गी. १८।६१ ) इत्यादि गीतोक्तरीत्या ' पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ' इति, ' यदा पश्यः पश्यते रुक्मवर्णं कर्तार-मीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं

साम्यं उपैति ॥' इत्यादिश्रुत्युक्तरीत्या परमात्मा(परब्रह्म) सर्वोत्तमः सर्वजगत्कर्ता चतुर्मुखादिजनकः जीवजडात्मकप्रपञ्चाद्भिन्नः सर्वस्य प्रेरक इति परं ब्रह्म ज्ञात्वा परमात्मप्रसादेन मुक्ता भवत, न तु अद्वैत्युपदेशजन्येन 'ईश्वरोऽहं, जगन्मिथ्या, ईश्वरः (परंब्रह्म) निर्गुणः एवेति मत्वा अधोगतिं मा प्राप्नुत इति। तस्मात् असमञ्जसमिदमद्वैतदर्शनम् ॥ २।१।९ ॥

ॐ स्वपक्षदोषाच्च ॐ

इति सूत्रस्य 'स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः प्रादुष्युः। कथमिति उच्यते। यत्तावदभिहितं विलक्षणत्वान्नेदं जगत् ब्रह्मप्रकृतिकमिति। प्रधानप्रकृतिकतायामपि समानमेतत्, शब्दादिहीनात् प्रधानात् शब्दादिमतो जगत उत्पत्त्यभ्युपगमात्। अत एव च विलक्षणकार्योत्पत्त्यभ्युपगमात्समानः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गः इत्यादि। तस्मात् कार्यासत्वप्रसङ्गादीनां न दोषत्वम् इति यद्व्याख्यानम्; तत्र विलक्षणत्वात् नेदं जगत् ब्रह्मप्रकृतिकं (ब्रह्मपरिणामकं) इति यदुक्तं तद्युक्तमेव। अविकारस्य चेतनस्य ब्रह्मणः जगत्प्रति परिणाम्युपादानत्वासम्भवात्। ब्रह्मप्रकृतिकत्वस्य (ब्रह्मपरिणाम्युपादानकत्वस्य) अद्वैतिभिरनङ्गीकृतत्वेन तत्समर्थनायोगाच्च। 'प्रधानप्रकृतिकतायामपि समानमेतत्' इति जगत्प्रधानयोरपि विलक्षणत्वात् (शब्दादिमत्त्वशब्दादिराहित्यरूपवैलक्षण्यवत्वात्) न जगतः प्रधानप्रकृतित्वसंभव इति यत् सांख्यमतोपरि दोषसाम्यकथनं तदयुक्तम्। ब्रह्मगताव्यभिचारिचैतन्यरूपस्वभावस्य जगति अभावात्, जगतस्तदुपादानत्वासम्भवेऽपि प्रधानगताचैतन्यादिस्वभावस्य जगति सत्वेन जगतः तदुपादानत्वे बाधकाभावात्। न च प्रधाने जगद्गतशब्दादिमत्वरूपधर्माभावात् न प्रधानं जगदुपादानमिति वाच्यम्। कार्यगतसर्वधर्माणां कारणे स्थितेरनावश्यकत्वात्। तथात्वे च सम-

स्तप्रकृतिविकारोच्छेदप्रसङ्गः । न ह्यसति प्रकृत्यपेक्षया अतिशये प्रकृतिविकार इति संभवति । तथा च स्वपक्षदोषाच्च इति सूत्रस्य एवं व्याख्यानमयुक्तम् । २।१।१०॥

ॐ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॐ

'यस्मादागमरहिताः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्काः अप्रतिष्ठिता भवन्ति तस्मादपि नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम् । उत्प्रेक्षाया निरंकुशत्वात् । अन्यथा=यथा तर्कः अप्रतिष्ठितः दोषयुक्तो न भवेत् तथा अनुमीयत इति चेत् क्वचिद्विषये तर्कस्य प्रतिष्ठितत्वेऽपि प्रकृततर्कस्य अविमोक्षप्रसङ्गः अप्रतिष्ठितत्वदोषान्मोक्षाभावप्रसङ्गः । न हीदमतिगम्भीरं भावयाथात्म्यं (भावस्य जगत्कारणस्य याथात्म्यं अद्वितीयत्वं) युक्तिनिबन्धनं आगममन्तरेणोत्प्रेक्षितुमपि शक्यम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षगोचरः, लिङ्गाद्यभावान्नानुमानादीनामिति चावोचाम ........अत आगमवशेनागमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितम्' इति यद्व्याख्यानं शङ्कराचार्याणां; तत्र ब्रह्मविषये केवलागमवेद्यत्वं यदुक्तं तद्युक्तम् । नैषा तर्केण मतिरापनेयेति श्रुतेः । परन्तु अद्वैत्यभिमताद्वितीयनिर्गुणब्रह्मणः यत् आगमवेद्यत्वमुक्तं तन्न युक्तम्। आगमवेद्यत्वा (आगमजन्यज्ञानविषयत्वा) योगात् । तथाहि- यथा ऐंद्रियकताप्रयोजकरूपाद्यभावात् प्रत्यक्षागोचरः यथा च लिङ्गाद्यभावाच्च अनुमानाविषयः तथा अद्वैत्यभिमते निर्गुणे (निर्धर्मके) ब्रह्मणि शब्द (आगम) प्रवृत्तिप्रयोजकधर्माभावात् नागमस्यापि विषयः । उक्तं हि ३।२।१७ ब्रह्मसूत्रीयशाङ्करभाष्ये 'बाष्कलिना बाध्वः पृष्टः सन् अवचनेनैव ब्रह्म प्रोवाचेति श्रूयते । सहोवाच अधीहि भो इति। स तूष्णीं बभूव । तं हि द्वितीये वा तृतीये वा वचन उवाच । ब्रूमः खलु त्वं तु न विजानासि उपशांतोऽयमात्मा' इति । तद्व्याख्याने च

पुनःपुनरधीहि भो इति निर्बंधकारिणं तं द्वितीये तृतीये च प्रश्ने तूष्णीं भावं त्यक्त्वोवाच । उपशांतो निरस्तद्वैतः अतस्तस्य तूष्णींभाव एव उत्तरमिति शब्दाविषयत्वं ( आगमाविषयत्वं ) इत्यद्वैत्यभिमतं ब्रह्म केनापि प्रमाणेनागम्यत्वात् शशविषाणवत् असिद्धमेव ( असदेव ) ।

न चाद्वैत्यभिमतस्य ब्रह्मणः प्रमाणागम्यत्वेऽपि स्वप्रकाशत्वात् सिद्धिः (सत्वं) शशविषाणस्य प्रमाणागम्यत्वात् अस्वप्रकाशत्वाच्च न सिद्धिः ( न सत्वं ) उक्तं ह्यद्वैतसिद्धौ ' शुद्धं नहि दृश्यं.... किंतूपहितमेव तच्च मिथ्यैव । न हि वृत्तिदशायामनुपहितं भवति...... न चैवं शुद्धसिद्धिर्नस्यादिति वाच्यम् । स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् इति ' इति वाच्यम् । ब्रह्म स्वप्रकाशमित्यस्मिन् विषये प्रमाणाभावात् । प्रमाणाङ्गीकारे च प्रमाणजन्यज्ञानविषयस्य ब्रह्मणः उपहितत्वप्राप्त्या तस्य शुद्धत्वायोगात् ।

ब्रह्म स्वप्रकाशमित्यस्मिन् विषये प्रमाणाभावेऽपि ब्रह्मणः स्वप्रकाशत्वमङ्गीकृत्य सिध्यङ्गीकारे च शशविषाणस्यापि प्रमाणमन्तरा स्वप्रकाशत्वाङ्गीकारप्राप्त्या शशविषाणमपि अद्वैत्यभिमतब्रह्मवत् सिध्येत् । नच शशविषाणं प्रमाणमन्तरा स्वप्रकाशमित्यङ्गीकारार्हमिति चेत् तर्हि पि प्रमाणमन्तरा स्वप्रकाशमित्यङ्गीकारानर्हमिति स्वप्रकाशत्वासिद्ध्या नाद्वैत्यभिमतब्रह्मणः सिद्धिरिति ।

अस्तु वा स्वप्रकाशत्वं ब्रह्मणः । तच्च स्वप्रकाशत्वमितरावेद्यत्वरूपं खलु अद्वैतिभिरङ्गीक्रियते । तच्चेतरावेद्यत्वरूपं स्वप्रकाशत्वमितरावेद्यस्य शशविषाणस्यापि सममिति इतरावेद्यत्वरूपस्वप्रकाशत्वेन ब्रह्मणस्सिद्धिः शशविषाणस्यासिद्धिरित्युक्तिर्बालानामपि न मनोरमं किमु पंडितानां ।

तस्मात् अद्वैत्यभिमतस्य ब्रह्मणः आगमगम्यत्वासम्भवात् आगमवशेन आगमानुसारितर्कवशेन च चेतनं ब्रह्म कारणं प्रकृतिश्चेति स्थितमित्युक्तिः शङ्कराचार्याणामयुक्तैव ।

किं च चेतनब्रह्मणः कारणत्वं ( निमित्तकारणत्वं ) प्रकृतित्वं ( उपादानकारणत्वं) स्थितमिति प्रकृत्यधिकरणोक्तनिमित्तकाणरत्वोपादानकारणत्वयोः असंम्भवशङ्कापरिहारेण स्थितत्वोक्तिरप्ययुक्ता। प्रकृत्यधिकरणे ब्रह्मणः निमित्तकारणत्वोपादानकारणत्वयोरनुक्तत्वात् अद्वैतमतरीत्या अद्वैत्यभिमतब्रह्मणः निमित्तकारणत्वोपादानकारणत्वयोरसम्भवस्य प्रकृत्यधिकरण एवोक्तत्वात्। असम्भवप्रकारस्तु शाङ्करीयप्रकृत्यधिकरणव्याख्यानखण्डनावसरे द्रष्टव्यः। तथा च नेदमधिकरणं ब्रह्मण उपादानत्वस्थापकम् ।२।१।११॥

ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ

इति सूत्रं, 'एतेन- प्रधानकाणरतावादनिराकरणेन, शिष्टा अपरिग्रहाः=शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदंशेनापरिगृहीताः ये अण्वादिकारणवादाः तेऽपि प्रतिषिद्धतया, व्याख्याताः=निराकृताः द्रष्टव्याः' इत्यण्वादिकारणवादान् निराकृत्य, सर्वज्ञस्य ब्रह्मण एव कारणत्वव्यवस्थापकमिति शङ्कराचार्यव्याख्यानोक्तरीत्या जगत्कारणत्वादिरहितात् चेतनाचेतनात्मकजगतः भेदमेव ज्ञापयति। २।१ १२॥

ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ

इति सूत्रस्य- 'ब्रह्मणो जगत्प्रति परिणाम्युपादानत्वं न युक्तम् तथात्वे उपादानस्योपादेयेनाभेदात् भोक्तुर्ब्रह्मोपादानत्वेन ब्रह्मणा अभेदस्य भोगस्यापि ब्रह्मोपादानत्वेन ब्रह्मणा अभेदस्य च प्राप्त्या यत् यदभिन्नाभिन्नं तत्तेनाभिन्नमिति न्यायेन भोक्त्रभिन्नब्रह्माभिन्ने भोग्ये भोक्त्रभेदस्य एवं भोग्याभिन्नब्रह्माभिन्ने भोक्तरि भोग्याभेदस्य च प्राप्त्या भोक्त्रापत्तेः=भोक्तुर्भोग्यत्वप्राप्तेः: अविभागः=अयं भोक्ता इदं भोग्यं इति प्रसिद्धस्य विभागस्याभावप्राप्तिरिति चेत्, स्यात् लोकवत्=यथा लोके समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेन-

वीचीतरङ्गबुद्बुदादीनां इतरेतरविभागः इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते। न च समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गादीनामितरेतरभावापत्तिर्भवति । न च तेषामितरेतरभावानापत्तावपि समुद्रात्मनोऽन्यत्वं भवति । एवमिहापि न भोक्तृभोग्ययोरितरेतरभावापत्तिः । न वा परस्माद्ब्रह्मणोऽन्यत्वं भविष्यति। अतः परमकारणाद्ब्रह्मणोऽन्यत्वेऽपि उपपद्यते भोक्तृभोग्यलक्षणो विभाग इति अर्थं वर्णयित्वा तस्यायुक्तत्वं 'अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः न त्वयं विभागः परमार्थतोऽस्ति' इति भाष्यवाक्येन , तथा 'आपाततोऽविचारितलोकसिद्धदृष्टांतोपदर्शनमात्रेण निराकरोति सूत्रकारः स्याल्लोकवदिति' भामतीवाक्येन तथा 'प्रत्यक्षादीनामौत्सर्गिकप्रामाण्यमङ्गीकृत्य स्थूलबुद्धिसमाधानार्थं परिणामदृष्टांतेन भेदाभेदावुक्तौ' इति भाष्यरत्नप्रभाग्रन्थेन, 'परिणामबुद्धिमुपमृद्य पुमान्विनिवर्तयत्यथ विवर्तमतिः' (सं॰ शा २'८४) 'परिणामधियो विवर्तधीरपवादात्मतया व्यवस्थितिः, (८७) 'कृपणधीः परिणाममुदीक्षते' (८९) इत्यादिसंक्षेपशारीरिकग्रन्थेन शङ्कराचार्याद्यद्वैतिभिः स्वीकृतमिति नात्रास्माभिर्विचारितव्यमस्ति यद्यपि। तथापि भगवता नारायणस्वरूपिणा बादरायणेन सिद्धांतसूत्रेणायमर्थः कथित इति स्वीकृत्य तस्यार्थस्य 'स्थूलबुद्धिसमाधानार्थमिति' आपाततोऽविचारितलोकसिद्धदृष्टांतोपदर्शनमात्रेणेति 'कृपणधीः परिणाममुदीक्षते' इति स्थूलबुद्धिभिरविचारितलोकसिद्धदृष्टान्तै'रिति अयुक्ततावर्णनं, सूत्रप्रामाण्यमङ्गीकृत्य तेषां भाष्यकर्तृत्वाभिमानवतां वैदिकानां न युक्तं ; किंतु वेदांतसूत्राप्रामाण्यमङ्गीकुर्वता बौद्धादीनामेव युक्तम् । वेदसूत्रनिर्णीतार्थस्य साधुताया एव वैदिकैर्वक्तव्यत्वात् इति २।१।१३ ॥

ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ

भोक्तृभोग्यलक्षणं विभागं व्यावहारिकमङ्गीकृत्य स्याल्लोकवदिति परिहारोऽभिहितः । भोक्तृभोग्यविभागः परमार्थतो नास्ति। तदनन्यत्वं=यस्मात्तयोः कार्यकारणयोरनन्यत्वं अवगम्यते। कार्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात्कारणात् परमार्थतोऽनन्यत्वं=व्यतिरेकेणाभावः कार्यस्यावगम्यते। कुतः ? आरंभणशब्दादिभ्यः; आरम्भणशब्दस्तावत् एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टांतापेक्षायामुच्यते। 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' (छां. ६।१।१) इति। एतदुक्तं भवति। एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घटशरावोदञ्चनादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत्। यतो वाचारम्भणं विकारो नामधेयं' वाचैव केवलं अस्तीत्यारभ्यते विकारो घटश्शराव उदञ्चनं चेति। न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति। नामधेयमात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यमित्येष ब्रह्मणो दृष्टांत आम्नातः। तत्र श्रुताद्वाचारंभणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते। आरंभणशब्दादिभ्य इत्यादिशब्दात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि (छां. ६ ८) 'इदं सर्वं यदयमात्मा' (बृ. २।४।२) 'ब्रह्मैवेदं सर्वं' (मु. २।२।११) 'आत्मैवेदं सर्वं' (छां. ७।२५।२) 'नेह नानास्ति किंचन' (बृ. ४।४।१९) इत्येवमाद्यप्यात्मैकत्वप्रतिपादनपरं वचनजातमुदाहर्तव्यम्। न चान्यथैकविज्ञानेन सर्वविज्ञानं सम्पद्यते। तस्माद्यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं यथा च मृगतृष्णिकोदकादीनां ऊषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात्। एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभावः इति द्रष्टव्यम्' इति यद्व्याख्यातं तदत्यन्तमयुक्तम्।

तथाहि- कार्यभूताकाशादिप्रपञ्चस्य कारणात्परब्रह्मणः परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावोऽवगम्यते इति प्रतिज्ञाय आरंभणशब्दादिभ्य इति हेतुः कथितः। तत्र प्रतिज्ञा तावन्न युक्ता। कारणं द्विविधम्। निमित्तकारणमुपादानकारणम्। (परिणामिकारणम्) चेति। तत्र ब्रह्मणो निमित्तकारणत्वे यथा घटस्य निमित्तकारणकुलालात् भेदः तथा कार्यस्य प्रपञ्चस्य निमित्तकारणाद्ब्रह्मणो भेद एव नत्वैक्यं।

उपादानकारणात्कार्यस्यैक्यं यद्यपि लोके दृष्टं तथापि परिणामिकारणत्वरूपमुपादानत्वं 'निर्विकारोऽक्षरः शुद्धः' इत्यादिश्रुतिसिद्धनिर्विकारस्य ब्रह्मणः न संभवत्येवेति कार्यस्य प्रपञ्चस्य कारणाद्ब्रह्मणो व्यतिरेकेणाभावकथनमयुक्तमेव। नच ब्रह्मणः परिणामित्वरूपोपादानकारणत्वासंभवेऽपि शुक्तिकाया रजतभ्रमाधिष्ठानत्वरूपरजतोपादानकारणतेव ब्रह्मणो जगदुपादानत्वं विवर्ताधिष्ठानत्वरूपं (जगत्प्रकारकभ्रमविशेष्यत्वरूपं) संभवतीति रजतस्य शुक्तिकाव्यतिरेकेणाभाव इव जगतोऽपि ब्रह्मव्यतिरेकेणाभावः सम्पत्स्यत इति वाच्यम्। निर्गुणं ब्रह्मैकमेव सत्यम्। तदन्यत्सर्वमध्यस्तं (कल्पितं) इत्यद्वैतिमतरीत्या निर्धर्मके ब्रह्मणि अध्यासकारणस्यैकस्याप्यसंभवेन अध्यासाङ्गीकारे अनेकानुपपत्तीनां सत्वेन चाध्यासासम्भवात् (भ्रमासम्भवात्) जगत्प्रकारकभ्रमविशेष्यत्वरूपजगदुपादानत्वस्य अद्वैतब्रह्मणोऽयोगात्। अङ्गीकृतं च भामतीकृता वाचस्पतिमिश्रेण 'न विभ्रमो नाम कश्चित् न च संसारो नाम किंतु सर्वमेतत् सर्वानुपपत्तिभाजनत्वेन अनिर्वचनीय' मिति वदता, स्पष्टं अध्यासाङ्गीकारे सर्वा अनुपपत्तयः सन्तीति। तुष्यत्विति न्यायेन जगद्भ्रमविशेष्यत्वेऽङ्गीकृतेऽपि शास्त्रे लोके वा रजताध्यास (भ्रम) विशेष्याशुक्तिः न रजतकारणमिति व्यवहरन्तीति न ब्रह्म जगत्कारणमिति शक्यते वक्तुं। किंच द्वैतिमतरीत्या असत्यतयाऽङ्गीकृतस्याद्वैतिमतरीत्या प्रातिभासि-

कतयाऽङ्गीकृतस्य शुक्तिरूप्यस्य, द्वैतिमतरीत्या पारमार्थिकसत्यतयाङ्गीकृतया अद्वैतिमतरीत्या व्यावहारिकतयाऽङ्गीकृतया शुक्त्या विरुद्धधर्माधिकरणत्वात् यथा आवयोर्मते नाभेदस्तथा 'कथं त्वसत्येन वेदांतवाक्येन सत्यस्य ब्रह्मात्मकत्वस्य प्रतिपत्तिरित्याद्यनेकवाक्यजालेन एतदधिकरणभाष्ये, द्वैतस्य असत्वादिति गौडपादकारिकाभाष्ये च जगतः असत्वं शङ्करेणोक्तमिति असतो जगतः सत्यभूतब्रह्मणा अभेदस्यासंभवात् । नच अनन्यत्वमित्यस्य व्यतिरेकेणाभाव इत्यर्थस्य कृतत्वेन अनन्यत्वशब्देन कार्यस्य जगतोऽभेदो नोक्तः किंतु यथा शुक्तिव्यतिरेकेण रजतस्याभावः तथा ब्रह्मव्यतिरेकेण जगतोऽभावः एव विवक्षित इति वाच्यम् । जगतो ब्रह्मव्यतिरेकेणाभाव इत्यनेन जगतोऽभाव ( असत्वं ) एव विवक्षितः स्यात्तर्हि जगतोऽभाव इत्येव वक्तव्यं स्यात् । न तु ब्रह्मव्यतिरेकेणाभाव इति । चैत्रे द्रव्यं नास्तीति कथनाभिप्राये चैत्रे द्रव्यस्याभावः इत्येवोच्यते न तु चैत्रे द्रव्यस्य सुवर्णव्यतिरेकेणाभाव इति । द्रव्यस्य सुवर्णव्यतिरेकेणाभाव इत्युक्तौ सुवर्णात्मकं द्रव्यमस्ति न तु तदतिरिक्तमिति यथा ज्ञायते तथा जगतः ब्रह्मव्यतिरेकेणाभाव इत्युक्तौ न हि जगतोऽभावः ( असत्वं ) बोध्यते किंतु ब्रह्मात्मकं जगदिति ( जगतः ब्रह्मरूपत्वं=ब्रह्माभेद इति ) तच्च पूर्वं विरुद्धधर्माधिकरणत्वेन निरस्तम् । ननु * न खल्वनन्यत्वमित्यभेदं ब्रूमः किंतु भेदं व्यासेधामः अतो नाभेदाश्रयदोषप्रसङ्ग इति चेन्न । भेदाभेदयोर्विरुद्धत्वेन भेदनिषेधे अभेदस्यावर्जनीयत्वात् । ननु ब्रह्मव्यतिरेकेण जगतोऽभाव इति शब्दैस्तथा अबोधनेऽपि मम ( अद्वैतिनः ) जगतोऽभावकथन एव तात्पर्यमिति चेत्तर्हि 'नाभाव उपलब्धेः' ( ब्र.सू. २।२।२८ ) इत्यादिसूत्रेषु जगतोऽभाववक्त्रोः शून्यविज्ञानवादिनोर्मते उक्तानां प्रत्यक्षादिप्रमाणविरोधादिरूपदोषा-

* भामती

णां प्राप्तेः । तस्माद्द्वैतिमतरीत्या असद्भूतजगतः सत्यभूतब्रह्मणा ऐक्यासंभवात् । ब्रह्मणि जगतोऽध्यासासम्भवात् ब्रह्मणो जगत्प्रति उपादानकारणत्वासंभवात् न ब्रह्मजगतोरनन्यत्वं=व्यतिरेकेणाभाव इति कार्यकारणयोर्जगद्ब्रह्मणोरनन्यत्वमिति प्रतिज्ञाया अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च तदनन्यत्वमिति सूत्रखण्डस्य तयोर्जगद्ब्रह्मणोः कार्यकारणयोरनन्यत्वं व्यतिरेकेणाभाव इत्यर्थकथनमयुक्तम् ।

अरम्भणशब्दादिभ्य इति हेतुभागविचारः—

यदुक्तं ‘ आरम्भणशब्दादिभ्य ’ इति सूत्रखण्डगतेन आरम्भणशब्देन ‘ वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ’ इति श्रुतिं गृहीत्वा अनया श्रुत्या जगतो मिथ्यात्वसिद्धिरिति तदप्ययुक्तं । अस्यां श्रुतौ जगतो मिथ्यात्वबोधकपदाभावात् । न च ‘ वाचारंभणं’ ‘ नामधेयं ’ इति पदे मिथ्यात्वबोधके स्त इति वाच्यम् । वाचारंभणपदस्य वाचा आरभ्यत इति व्युत्पत्या वाग्जन्यव्यवहारविषय इत्यर्थकत्वेन तथा नामधेयमिति पदस्य नामार्थकत्वेन मिथ्यार्थकत्वाभावात् । न च वाचारम्भणपदोत्तरं मात्रं इति पदे संयोजिते वाचारंभणमात्रमिति सम्पत्या तस्य वाचैव केवलमस्तीत्यारभ्यते विकारो घटःशराव उदश्चनं चेति न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति इत्यर्थकत्वप्राप्त्या मिथ्यात्वबोधकत्वं, तथा नामधेयपदोत्तरं मात्रपदे संयोजिते नामधेयामिति सम्पत्या तस्य च नामैव केवलं न विकारो नाम कश्चिदस्ति ( ह्यतदनृतं ) इत्यर्थकत्वप्राप्त्या मिथ्यात्वबोधकत्वमिति वाच्यम् । श्रुतावविद्यमानमात्रपदं संयोज्यार्थकरणस्य अयुक्तत्वात् । अन्यथा ( अविद्यमानपदे संयोज्य अर्थकरणस्य युक्तत्वे ) ‘ सत्यं ज्ञानमनन्तं ब्रह्म ,इति श्रुत्या ब्रह्मणोऽपि असत्यत्वाज्ञानरूपत्वपरिच्छिन्नत्वसिध्द्यापत्तेः तत्रापि सत्यादिपदात्पूर्वं न न, न, इति पदानि संयोज्य, ब्रह्म न सत्यं=मिथ्या, न ज्ञानं इत्याद्यर्थकथन-

संभवात् । ननु वाचारंभणनामधेयपदयोः पुरतः मात्रपदसंयोजने पूर्ववाक्यं ज्ञापकमस्ति । अतस्तत्र मात्रपदसंयोजनं कर्तव्यम् । सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्ये न इति पदसंयोजने ज्ञापकाभावात् नात्र न इति पदसंयोजनं कार्यम् । तथाहि–एकब्रह्म विज्ञानेन सर्वजगद्वि-ज्ञानं 'येनाश्रुतं श्रुतं भवति' इत्यादिवाक्येन प्रतिज्ञाय दृष्टांतापेक्षा-यामिदमुच्यते 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति । यद्यस्य वाक्यस्य घटादेः मृद्व्यतिरेकेणाभावरूपमिथ्यात्वं नाभिमतं स्यात्तर्हि मृद्विज्ञानेन सर्वमृण्मयज्ञानं न स्यात् । तथा च जगतो ब्रह्मव्यतिरेकेण अभावरूपमिथ्यात्वं विना अनुपपद्यमानायां एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञायां दृष्टांतत्वं न स्यात् । उक्तं च- एकब्रह्मविज्ञानेन जगज्ज्ञाने दृष्टांतत्वमिति वाचारंभणनामधेयशब्दयोः पुरतो मात्रपदं संयोज्य मृद्व्यतिरेकेणाभावरूपमिथ्यार्थकत्वं स्वीकरणीयम् इति चेन्न । अनेक-दोषयुक्तत्वात् । तथाहि—

येनाश्रुतं श्रुतं भवतीति प्रतिज्ञायेति यदुक्तं तत्तावदयुक्तम् । लोके शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तं रूप्याद्यविज्ञातं भवति अजानतामेव तत्रध्यस्तं विज्ञातं भवतीति सिद्धम् । तथा, ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं पश्यन्तीति केनोपनि-षच्छाङ्करभाष्यटीकावाक्यैरधिष्ठानाज्ञान एवाध्यस्तज्ञानं भवति। अधि-ष्ठानज्ञानेऽध्यस्तज्ञानं न भवति। प्रत्युत विद्यमानमपि नश्यति । विज्ञे-यत्वादिरूपजगतो ब्रह्मण्यध्यस्तत्वेन ब्रह्मज्ञानिना ब्रह्मणि ज्ञेयत्वाद्यध्य-स्तजगज्ज्ञानं न भवति इति 'अविज्ञातं विजानतां विज्ञातमविजानतां' ( केन. २।११ ) इति मन्त्रव्याख्यानावसरे अद्वैतिभिरेवोक्तत्वेन अधिष्ठानभूतब्रह्मज्ञानेन अध्यस्तजगज्ज्ञानासम्भवात्। किंच ब्रह्मविज्ञा-नेन सर्वविज्ञाने ब्रह्मविदः घटपटादिषु कुत्रापि संशयो न स्यात् ।

तथा ब्रह्मव्यतिरेकेण जगतोऽभावात् ब्रह्मज्ञानेन जगतो ज्ञातत्वेन अश्रुतममतमिति विशेषणानामनुपपत्तिश्च स्यात्। दृष्टांते मृदादिज्ञाने सति तत्कार्यघटादिविषयकसंशयश्च न स्यात्। अस्ति च संशय इति न कारणीभूतब्रह्मज्ञानेन कार्यभूतजगज्ज्ञानविषयोऽयं दृष्टांतः सम्भवति। मृत्पिण्डलोहमणिनखनिकृन्तनानामपि घटकटककुद्दालादिवत् मृल्लोहादयःकार्यविशेषतया घटादीन्प्रत्युपादानकारणत्वाभावाच्च उपादानकारणज्ञानेनोपादेयज्ञाने नायं दृष्टांतः।

ननु मास्तु 'येनाश्रुतं श्रुतं भवति' इति पूर्ववाक्यं ज्ञापकं, मृत्तिकेत्येव सत्यमित्युत्तरवाक्यं मात्रपदसंयोजने ज्ञापकं भविष्यति। मृत्तिकेत्येव सत्यमिति मृत्तिकायाः सत्यत्वावधारणेन मृत्तिकाकार्यस्य घटादेर्मिथ्यात्वस्याभिप्रततया मात्रपदसंयोजनस्य सूचनादिति चेन्न। त्वन्मते घटादेर्मृत्तिकाकार्यतया मिथ्यात्वस्याङ्गीकारे मृत्तिकाया अपि जलकार्यत्वेन तन्मिथ्यात्वस्यापि त्वन्मतरीत्या अङ्गीकार्यत्वात्। मृत्तिकायास्त्वन्मतरीत्या पारमार्थिकसत्यत्वाभावेन मृत्तिका सत्यमित्यस्य व्यावहारिकसत्यं=मिथ्या इत्यर्थस्यैवाङ्गीकरणीयतया मृत्तिकाकार्यघटादेरपि व्यावहारिकसत्यत्वस्य त्वन्मतसिद्धतया मृत्तिकेत्येवेत्येवकारेण (अवधारणेन) मृत्तिकाकार्यघटादेः व्यावहारिकसत्यतानिषेधायोगेन वाचारंभणनामधेयपदोत्तरं मात्रपदयोजनेन तन्निषेधासम्भवान्नेदमपि मात्रपदसंयोजनस्य ज्ञापकमिति।

यदुक्तं आरंभणशब्दादिभ्य इत्यादिशब्दात् 'एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छां. ६।८।८) इति वाक्यं जगतो ब्रह्मव्यतिरेकेणाभावे (मिथ्यात्वे) प्रमाणमिति तदप्ययुक्तम्। अस्यां श्रुतौ जगतो मिथ्यात्वबोधकपदाभावात्। न च तत्सत्यमिति परमकारणस्य ब्रह्मणः सत्यत्वकथनात् ब्रह्मातिरिक्तस्य जगतो मिथ्यात्वं=ब्रह्मव्यतिरेकेणाभावः सिध्यतीति वाच्यम्। यतः

तत्सत्यमिति वाक्येन तद्ब्रह्म सत्यमिति ब्रह्मणः सत्यत्वसिद्धावपि न तु जगतो मिथ्यात्वं सिध्यति अवधारणाभावात् ( एवकाराभावात् )। न हि वसिष्ठो ब्राह्मण इत्युक्ते गौतमस्याब्राह्मणत्वं सिध्यति। तथाच परमकारणस्यैकस्यैव सत्यत्वावधारणात् इति शङ्कराचार्योक्तिस्तामसजनमोहमूला वा स्वमताग्रहमूला वेत्युपेक्षणीयैव सुधीभिः।

'इदं सर्वं यदयमात्मा' ( बृ. २।४।६ ) 'ब्रह्मैवेदं सर्वं' ( मु. २।२।११ ) 'आत्मैवेदं सर्वं (छां. ७।२५।२ ) 'नेह नानास्ति किंचन' (बृ ४।४।१९ ) इत्यादिश्रुतीनां यथा जगतः ब्रह्मव्यतिरेकेणाभावबोधकत्वाभावस्तथा दर्शितः वाक्यान्वयाद्यधिकरणविचारावसरे इति नेह पुनर्विचार्यते। तथा एकविज्ञानेन सर्वविज्ञानं श्रुत्यादिषु नोक्तम्। न वा जगतो मिथ्यात्वसाधकमित्येतदपि पूर्ववाक्येषु बहुवारमुक्तं तत्रैव द्रष्टव्यम्। अतस्तेनापि न जगतो मिथ्यात्वसिद्धिरित्यलं।

ननु अनेकात्मकं ब्रह्म यथा वृक्षोऽनेकशाख इत्यादिना ब्रह्मण एकत्वं नानात्वं च सत्यमेवेति भेदाभेदवादिमतमनूद्य नैवं स्यादित्यादिना यत् तस्यायुक्तत्वं वर्णितं तत्समीचीनमेव। परन्तु अयुक्ततावर्णनप्रकारस्त्वयुक्तः—तथाहि 'मृत्तिकेत्येव सत्यम्' इति प्रकृतिमात्रस्य दृष्टांते सत्यत्वावधारणात् इति यदुक्तं तन्न युक्तम्। अद्वैतिमते अधिष्ठानसत्तापेक्षया अध्यस्तस्य न्यूनसत्ताकत्वाङ्गीकारेण पारमार्थिकसत्ताके ब्रह्मणि अध्यस्तस्यैव व्यावहारिकसत्ताकत्वप्राप्तिः न तु व्यावहारिके आरोपितस्य व्यावहारिकसत्वप्राप्तिरिति घटस्य स्वकारणभूतायां मृदि आरोपितत्ववत् मृदोऽपि स्वकारणे व्यावहारिके आरोपितत्वात् अधिष्ठानभूतस्वकारणगतव्यावहारिकसत्तापेक्षया न्यूनसत्ताकत्वं ( प्रातिभासिकसत्वं ) स्यात् न तु व्यावहारिकसत्त्वमिति। एवं तत्तत्कारणानामपीति प्रकृतिमात्रस्य (कारणमात्रस्यमृदादेः) सत्यत्वावधारणात् इत्युक्तेरसङ्गतत्वात्।

न च मृदः ब्रह्मैव कारणं ब्रह्मण्येवारोपितत्वमिति ब्रह्मसत्तापेक्षया न्यूनसत्ता ( व्यावहारिकी सत्ता ) मृद उपपद्यते इति वाच्यम् । तर्हि घटोऽपि ब्रह्मकारणकः ब्रह्मण्येवारोपित इति घटस्यापि मृद्वत् व्यावहारिकसत्यत्वमेव स्यात् इति मृद्घटयोः भिन्नसत्ताकत्वासिध्या श्रुतौ मृदः सत्यत्वं, घटस्य मिथ्यात्वं उच्यते इत्युक्तेरसङ्गतत्वापत्तेः।

एतेन वाचारंभणशब्देन च विकारजातस्यानृतत्वाभिधानादित्युक्तिरपि परास्ता । वाचारम्भणशब्दस्य वाग्जन्यव्यवहारविषयत्वार्थकत्वेन अनृतार्थकत्वाभावाच्च ।

न च वाचारंभणशब्दस्य पुरतः मात्रपदसंयोजने कृते वाचारंभणमात्रं=वाग्जन्यव्यवहारविषयमात्रं न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति इति वाचारंभणशब्देन विकारस्य मिथ्यात्वं सिध्यतीति वाच्यम् । यतः स्वचित्तप्रभवाः एवमादिकल्पनाः अक्षरबाह्याः (वेदाक्षराप्रतिपाद्याः ) । नहि अक्षरबाह्यो वेदार्थः वेदार्थोपकारी वा (भवितुमर्हति ) इति ( बृ. शां भा. २।३:६ ) शङ्करोक्तदिशा अविद्यमानमात्रपदसंयोजनेन कृतस्यार्थस्य वेदाक्षरबाह्यत्वात् । ( वेदाक्षराप्रतिपाद्यत्वात् ) वेदार्थत्वाभावात् । तथाच दृष्टांतवाक्येन मृत्तिकादीनां सत्यत्वस्य, घटादीनां मिथ्यात्वस्य चासिद्ध्या दार्ष्टान्तिकेऽपि ब्रह्मण एव सत्यत्वमन्येषां मिथ्यात्वमिति न सिध्यति । तस्मात् ।

न च दार्ष्टान्तिकेऽपि ‘ एतदात्म्यमिदं तत्सर्वं तत्सत्यं ’ इति परमकारणस्यैव सत्यत्वावधारणात् * ब्रह्मण एव सत्यत्वमन्येषां मिथ्यात्वं सिध्यतीति वाच्यम् । तत्सत्यमित्यत्र परमकारणस्यैकस्यैव सत्यत्वावधारकैवकाराभावेन तदर्थस्य वेदाक्षरबाह्यत्वेन वेदार्थत्वाभावात् ।

‘ स आत्मा तत्त्वमसि श्वेतकेतो ’ इति शारीरस्य ( जीवस्य )

---

* शाङ्करभाष्यवाक्यम्

ब्रह्मभावोपदेशात् संसारस्य मिथ्यात्वं, सत्यत्वे जीवब्रह्मणोरैक्यायोगात् ' इत्युक्तिरपि स्वव्याहत्याद्यनेकदोषयुता। तत्त्वमसीत्यादिवाक्येन निर्विषयकं ब्रह्मरूपं ज्ञानमेवाभिव्यज्यते न तु यत्किंचिद्विषयकं ज्ञानं जायते इति 'एकधैवानुद्रष्टव्यं एतदप्रमेयं ध्रुवम्' (बृ.४।४।२०) इत्युपनिषच्छाङ्करभाष्ये, दशश्लोकीसिद्धांतबिंदुटीकायां चोक्तत्वेन अद्वैतमतरीत्या तत्त्वमसीति वाक्येन बोधस्यैवानुत्पत्तेः।

तुष्यत्विति न्यायेन तत्त्वमसीति वाक्यस्य बोधजनकत्वेऽङ्गीकृतेऽपि अखण्डार्थबोधकत्वाङ्गीकारेण चित् एतावद्बोधोत्पत्त्या तद्बोधस्य शारीरस्य ब्रह्मभावाविषयकत्वात् न शारीरस्य (जीवस्य) ब्रह्मभाव सिद्धिः इत्यादितत्त्वमस्यादिश्रुतिविचारप्रकरणोक्तानेकदोषयुक्तत्वात्।

यदुक्तं ' दर्शयति च- ' यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् ' (बृ. ४।५।१५) इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभाव इति तदप्ययुक्तम्। यत्र त्वस्येति वाक्ये ब्रह्मात्मत्वदर्शिनः व्यवहाराभावस्याकथनात्। प्रत्युत क्रियाकारकफललक्षणसर्वव्यवहारस्यैवोक्तः जीवब्रह्मणोर्भेदस्यापिकथित्वाच्च। तथाहि— पूर्वोत्तरवाक्यसहितं यत्र त्वस्येति वाक्यं त्वित्थं- ' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदिर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत् तत्केन कं रसयेत्तत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत्। तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यते विज्ञातारमरे केन विजानीयात् ' ( बृ. ४।५।१५ ) इति।

तस्यार्थः- निर्विशेषचैतन्यभावमापन्नस्य मुक्तस्य न विज्ञानादिकमस्तीति वदतां मायावादिनां मते अनिष्टं प्रसङ्गं वक्तुं तस्य व्याप्तिसापेक्षत्वात् व्यतिरेकव्याप्तिं तावदाह यत्र हीति । यत्र=यदा, द्वैतं=भिन्नं वस्तु, भवति=विद्यते, तत्=तदैव, इतरः=पुरुषः, इतरं=गन्धं, जिघ्रति. तत्=तदा, इतरः=पुरुषः, इतरं=घटं, पश्यति....तत्=तदा, इतरः पुरुषः इतरं विजानाति ' इति वाक्येन यदा द्वैतसद्भावः तदैव दर्शनादिभोगः इति वक्ष्यमाणतर्के व्यतिरेकव्याप्तिमभिधाय तस्या हि शब्देन प्रमाणप्रसिद्धतामुपदर्श्य प्रसङ्ग ( तर्क ) माह- यत्र=यस्यामवस्थायां ( अविद्यानिवृत्तिरूपायां मुक्तौ ) अस्य=ज्ञानिनः, सर्वं=कारणादिकं आत्मैवाभूत्=आत्मव्यतिरेकेण नाभूत् , तत्=तस्यामवस्थायां, केन=कारणेन, कं=विषयं, जिघ्रेत् ( गन्धादिज्ञानं न स्यात् एवमेव तत्तत्पदार्थविषयकज्ञानं न स्यात् ) येन परमात्मना इदं सर्वं, विजानाति ( जीवः ) तं वक्ष्यमाणमूर्तामूर्तविलक्षणत्वाशीर्यत्वादिगुणयुक्तं परमात्मानं, केन विजानीयात् स एष आत्मा इति न- मूर्तं न इति न- अमूर्तं न, अगृह्यः साकल्येन ज्ञानाविषयः हि=यस्मात् न गृह्यते प्रमाणेन, अशीर्यः=अनाश्यः हि=यस्मात् न शीर्यते, असङ्गः=असम्बद्धः हि=यस्मात् न सज्यते असितः=अबद्धः, न व्यथते न रिष्यति इति, तथा अरे ! विज्ञातारं आत्मानं केन विजानीयात् इति ( गन्धादिज्ञानं अशीर्यत्वादिगुणविशिष्टपरमात्मज्ञानं स्वात्मज्ञानं च तस्मात् गन्धादिज्ञानाभावस्य परमात्मज्ञानाभावस्य स्वात्मज्ञानाभावस्य चानिष्टत्वेन, ( प्रमाणविरुद्धत्वेन ) नाङ्गीकार्यं गन्धादिज्ञानाभावपरमात्मज्ञानाभावस्वात्मज्ञानाभावादिकम् । अतः मुक्तौ आत्मातिरिक्तं किंचिदपि नास्तीति न वक्तव्यमिति । मोक्षे ज्ञानाभावाद्यङ्गीकर्त्रद्वैतमतं निराकरोतीयं श्रुतिरिति जगतः मिथ्यात्वविषये वा जीवस्य ब्रह्मात्मत्वदर्शने वा, दर्शने सति क्रियाकारक-

फललक्षणव्यवहाराभावे वा, विद्याविषये दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावे वा विद्यावस्थायां कर्तृत्वभोक्तृत्वनिवारणे वा, प्रमाणं भवितुं नार्हतीति ।

स्वभाष्ये शङ्कराचार्यैः एतेषां विषये ' यत्र हि द्वैतमिव भवति' यत्र त्वस्य सर्वमात्मैवाभूत् ' इति श्रुत्युदाहरणमयुक्तम् ।

नच यदा भोजनं कृतं स्यात्तदा तृप्तिः स्यात् तृप्त्या नैव भाव्यमतो भोजनं न कर्तव्यं इति अस्माकं तृप्तेरिष्टत्वेन यथा वक्तुं नशक्यतेतथा विद्यावस्थायां (मोक्षे) गन्धादिज्ञानाभावपरमात्मज्ञानाभावस्वज्ञानाभावादेरस्माकं (अद्वैतिनां ) इष्टत्वेन मोक्षे आत्मातिरिक्तं किंचिन्न स्यात्तदा गन्धादिज्ञानं, येनेदं सर्वं विजानाति तस्य परमात्मनो ज्ञानं, स्वज्ञानं च न स्यात् । गन्धादिज्ञानाद्यभावो नैव युक्तः । अतस्तज्ज्ञानसाधनमात्मातिरिक्तमङ्गीकरणीयमिति वक्तुं न शक्यते । युष्मदीयतर्के आपाद्यस्यानिष्टत्वरूपाङ्गाभावात् इति वाच्यम् । गन्धादिज्ञानाद्यभावरूपापाद्यस्य अनिष्टत्वेन गन्धादिज्ञानाभावो नाङ्गीकार्यः । अत आत्मातिरिक्तं वस्त्वङ्गीकरणीयमिति वक्तुं शक्यत्वात कथं गन्धादिज्ञानाभावस्यानिष्टत्वमिति चेत् । आपाद्यस्यानिष्टत्वं नाम प्रमाणविरुद्धत्वं ( प्रमाणगृहीताभावप्रतियोगित्वम् ) न तु युष्मदनिष्टत्वम् । तच्च प्रमाणविरुद्धत्वरूपमनिष्टत्वं मोक्षे गन्धादिज्ञानाभावस्य वर्तत एव ।

तथाहि-- ' अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ' ( छां. ८।२।६ )

' अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते ' ( छां. ८।२।७ )

' अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ८।२।८

'अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते' ( छां. ८।२।९ )

'यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते' ( छां. ८।२।१० )

'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते' ( छां ८।२।१ )

अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते' [ ८।२।२ ]

'अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते' [ ८।२।३ ]

'अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते' [ ८।२।४ ]

'अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते' [ छां. ८।२।५ ]

'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इत्याद्यनेकैः वेदवाक्यैर्मोक्षे गन्धमाल्यान्नपानगीतवादित्रस्त्रीपितृमातृभ्रातृस्वसृसख्यादीप्सितकामनावान् भवति सर्वस्यापि प्राप्तिर्भवति सर्वमनुभवति। पर्यटनजक्षणक्रीडनस्त्रीकर्मकरमणयानकरणकगमनादिकं सर्वं करोति इति मोक्षे गन्धादिज्ञानस्य विद्यमानत्वबोधनेन प्रामाणिकत्वात्, गन्धादिज्ञानाद्यभावः प्रमाणगृहीताभावप्रतियोगित्वरूपानिष्टत्ववानेवेति नाङ्गीकार्यो हि गन्धादिज्ञानाभावः । अतस्तत्कारणीभूतानां आत्मातिरिक्तानां इन्द्रियादीनां विद्यावस्थायां मोक्षेऽपि स्वीकार्यत्वमेवेति इयं श्रुतिः मोक्षावस्थायामपि आत्मातिरिक्तवस्तु (द्वैत) सद्भावं

णमयति । नच स तत्र पर्येति जक्षन् क्रीडन् रममाणः इति, स यदि पितृलोककामो भवति इत्यादिश्रुतयः संसारावस्थायां क्रीडादिकं वदन्ति नतु मोक्षे इति कथं गन्धादिज्ञानस्य क्रीडावत्वस्य च मोक्षे सत्त्वसिद्धिरिति वाच्यम् । मोक्ष एव गन्धादिज्ञानवत्त्वबोधनात् । तथाहि- 'तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इह आत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति (छां.८।१।६) इति राजादिसेवाजनितो लोकः यथा क्षीयते यथा अग्निहोत्रादिपुण्यचितोऽपि लोकः स्वर्गादिः क्षीयते तथा आत्मानं=परमात्मानं, अननुविद्य=अज्ञात्वा, एतान्=परमात्मसंबन्धिनः सत्यान् कामान्=सत्यकामादिगुणांश्च अज्ञात्वा गच्छन्ति । तेषां परमात्माज्ञानिनां परमात्मगुणाज्ञानिनां च सर्वेषु लोकेष्वकामचारो भवति । ये जनाः परमात्मानं ज्ञात्वा एतान् परमात्मसंबन्धिनः सत्यकामत्वादींश्च ज्ञात्वा गच्छन्ति तेषां सत्यकामत्वादिगुणविशिष्टपरमात्मज्ञानिनां सर्वेषु लोकेषु कामचारो भवतीति अज्ञानिनां क्षयफलवत्वमुक्त्वा ज्ञानिनां मुक्तानामक्षयफलवत्वमुक्तम् । तदेवाक्षयफलवत्वं 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठंति तेन पितृलोकेन सम्पन्नो महीयते' इत्याद्युत्तरवाक्यैः × य आत्मानं यथोक्तलक्षणं परमात्मानं साक्षात्कृतवान् वक्ष्यमाणब्रह्मचर्यादिसाधनसम्पन्नः सन् तत्स्थान् (परमात्मस्थितान्) सत्यान् कामान् साक्षात्कृतवान् स त्यक्तदेहः मुक्तः पितृलोककामः=पितृदर्शनकामो भवति। अस्य सत्यकामत्वादिगुणविशिष्टपरमात्मापरोक्षज्ञानिनः सङ्कल्पादेव इच्छामात्रादेव पितरः समुत्तिष्ठन्ति तेन इच्छितेन पितृलोकेन पितृदर्शनेन सम्पन्नः महीयते स्वावरैः पूज्यते वर्धते वा महिमानमनुभवति।

× शङ्करभाष्यानुसार्यर्थोऽयम् ।

एवं मातृलोककामः भ्रातृलोककामः स्वसृलोककामः सखिलोककामः गन्धमाल्यलोककामः गीतवादित्रलोककामः स्त्रीलोककाम एवं यद्यत्कामः तेन तेन कामितेन सम्पन्नः महीयते स्वावरैः पूज्यते वर्धते वा महिमानमनुभवति इति विवृतमिति मोक्ष एव गन्धमाल्यवादित्रादिज्ञानं तथा पितृमातृस्वसृसख्यादिज्ञानं भवतीति कथ्यते इति ।

एवं परंज्योतिरुपसम्पद्येति वाक्यमपि परंज्योतिरुपसम्पद्य प्राप्य स्वरूपेणाविर्भूय (प्राकृतदेहं परित्यज्य मुक्तो भूत्वा) स मुक्तस्तत्र पर्येति जक्षन् क्रीडन् रममाणः इति मोक्षे जक्षणादीन् बोधयति इति मोक्ष एव क्रीडादिबोधनात् ।

शङ्कराचार्यैरपि १ स्वकृतब्रह्मसूत्रभाष्ये २ तथा बृहदारण्यकोपनिषद्भाष्ये ३ छांदोग्यभाष्ये च स तत्र पर्येतीति वाक्यं स यदि पितृलोककामो भवतीति वाक्यं च मोक्षावस्थाप्रतिपादकमिति स्पष्टमुक्तम् । तथाहि तद्वाक्यानि-

' परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते यः स किं परस्मादात्मनः पृथगेव भवत्युताविभागेनैवावतिष्ठत इति वीक्षायाम् ' स तत्र पर्येति ' ( ८।१२।३ ) इत्यधिकरणाधिकर्तव्यनिर्देशात् ' ज्योतिरुपसम्पद्य ' ( छां.८।१२।३ ) इति च कर्तृकर्मनिर्देशाद्भेदेनैवावस्थानमिति यस्य मतिस्तं व्युत्पादयत्यविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते ' [ ब्र.सू.शां. ४।४।४ ] इति भाष्यवाक्येन मोक्षावस्थायां भेदेनैवावस्थानं बोधयतीत्युक्तम् । न चास्य शाङ्करभाष्यस्य पूर्वपक्षवाक्यत्वात् कथं शङ्कराचार्यैरिदं वाक्यं मोक्षावस्थाप्रतिपादकमिति स्वीकृतमित्युच्यते इति वाच्यम् । सिद्धांतेऽपि ' भेदनिर्देशस्तु अभेदेऽप्युपचर्यते ' इति वाक्येन स तत्र पर्येतीति वाक्यस्य मोक्षावस्थायां भेदप्रतिपादकत्वं स्वीकृत्य परं स्वमताग्रहेण मोक्षे भेदनिर्देशः औपचारिकतया नेय इत्युक्तम् ।

तथा 'अत एव च जक्षणादिसङ्कीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थमात्मरतिरित्यादिवत् । नहि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि शक्यन्ते वर्णयितुं द्वितीयविषयत्वात्तेषाम् ' (ब्र.सू.शां.-४।४।६) इति वाक्येन स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेत्यादिवाक्यं मोक्षे क्रीडनादिकं वक्तीति स्वीकृत्य अज्ञजनमोहनाय वा स्वमताभिनिवेशेन वा क्रीडनादेर्द्वितीयवस्तुसापेक्षत्वान्मोक्षे द्वितीयवस्तुनोऽभावात् भक्षण क्रीडादिकं दुःखाभावमात्रविषयतया योजनीयम् ; इत्युक्तत्वेन इदं वाक्यं मोक्षावस्थां प्रतिपादयतीत्यत्र न विवादोऽद्वैतिनाम् ।

मोक्षे आत्मातिरिक्तं द्वितीयं वस्तु विद्यते इति द्वैतिनः, न विद्यत इत्यद्वैतिनः । एतद्विचारस्यैव प्रक्रांतत्वेन मोक्षे द्वितीयवस्तु नास्तीति सिद्धवत्कथनमनुपपन्नमेव । 'स यदि पितृलोककामो भवति' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इत्याद्यनेकश्रुत्यादिवाक्यैः मोक्षे द्वितीयवस्तुसिद्धेः । न चैतेषां वाक्यानां मोक्षपरत्वाभाव इति वाच्यम् । 'जक्षन् क्रीडन् रममाणः' 'स यदि पितृलोककामो भवति ' ' सर्वान् कामान् समश्नुते इत्यादिश्रुतिभ्यो मोक्षे सुखं संवेद्यमिति ' ( बृ.शां.भा ३।९।२८ ) इति भाष्यवाक्येन मोक्षे भक्षणक्रीडापितृदर्शनादिकं सिध्यति ' इत्युक्त्वा स्वमताग्रहेण मोक्षे ज्ञानकारणाभावेन ज्ञानं न सम्भवतीति कथयित्वा तर्हि ( भक्षणक्रीडापितृदर्शनाद्यनङ्गीकारे ) जक्षन् क्रीडन्नित्यादिश्रुतिविरोधोऽसंवेद्यत्वे इति चेत् इति वाक्येन मोक्षे जक्षणादिप्रतिपादकश्रुतिविरोधमाशंक्य ' सर्वात्मैकत्वे यथाप्राप्तानुवादित्वात् । मुक्तस्य सर्वात्मभावे सति यत्र क्वचिद्योगिषु देवेषु वा जक्षणादिप्राप्तं तद्यथा प्राप्तमेवानूद्यते तत् तस्यैव सर्वात्मभावादिति सर्वात्मभावमोक्षस्तुतये ' ( बृ शां.३।९ ) इति वाक्येन मुक्तस्य स्वतो जक्षणाद्यभावेऽपि

सर्वात्मस्वरूपत्वात् ( संसारिभिरभेदात् ) ये योगिनो देवा वा अमुक्ता जक्षणक्रीडादिकं कुर्वन्ति तदभेदान्मुक्तस्य मुक्तोऽपि जक्षणक्रीडापितृदर्शनादिमानिति मोक्षस्तुतये कथ्यते इति समाधानमुक्तं शङ्कराचार्यैः । एवं च जक्षन् क्रीडन् रममाण इति श्रुतिः मोक्षे मुक्तस्य जक्षणक्रीडापितृदर्शनादिकं कथयतीत्यत्र विवादाभावोऽद्वैतिनाम् । परन्तु यदुक्तं- योगिभिर्देवैर्वा अभेदान्मुक्तस्य, देवादिकर्तृकजक्षणादिकं मुक्तस्य कथ्यते इति तदसङ्गतम् । अद्वैतमतविरुद्धत्वात् । तथाहि मुक्तस्य सर्वात्मभावो नाम सर्वैर्विशिष्टैर्योगिभिर्देवैर्वा अभेदो वा शुद्धैर्वा । नाद्यः । विशिष्टयोगिभिर्देवैर्वा अद्वैतिनां मते मुक्तेन ऐक्यानङ्गीकारात् । न द्वितीयः । शुद्धानां देवानां योगिनां वा क्रीडाद्यभावेन तदभिन्नस्य मुक्तस्य जक्षणक्रीडादिकथनमद्वैतमतविरुद्धं; किंच संसारे विद्यमानं जक्षणक्रीडादिकं अद्वैतमते इष्टं वा दुष्टं वा । इष्टं चेन्मोक्षे इष्टक्रीडाद्यभावेन इष्टविघातकत्वान्मोक्षो नापेक्षणीयः स्यात् । दुष्टत्वे मोक्षे देवादिनिष्ठदुष्टजक्षणादिप्रापकदेवादितादात्म्यस्यानिष्टत्वेन मोक्षस्तुतिर्न स्यात् , प्रत्युत निंदैव स्यात् । अतोऽनिष्टं देवादिनिष्ठजक्षणादिकम् । मुक्तस्य सर्वात्मभावात् अनूद्यते मोक्षस्तुतये इत्युक्तिरयुक्तैव ।

किंच मुक्तस्य सर्वात्मभावे सति यत्र क्वचिद्योगिषु देवेषु वा जक्षणादि प्राप्तं तद्यथाप्राप्तमेवानूद्यते तत् तस्यैव सर्वात्मभावादिति सर्वात्मभावमोक्षस्तुतये (ब्र शां.भा.३ ९) इति शङ्कराचार्योक्तिरयुक्तैव। 'यथाप्राप्तानुवादित्वे दुःखित्वमपीति चेत् योग्यादिषु यथाप्राप्तजक्षणादिवत् स्थावरादिषु यथाप्राप्तदुःखित्वमपीति चेत् (ब्र.शां.-भा.३।९)इति शङ्कराचार्योक्तदिशैव संसारिणो ये ये दोषाः दुःखादयस्तेषां सर्वेषां मोक्षे मुक्तस्य प्राप्त्या स्वस्वकृतदुष्टकर्मजन्यदुःखादि यत्किञ्चिदनिष्टयुक्तसंसारापेक्षया मोक्षे सर्वदुष्टकर्मप्रयोज्यदुःखादि

सर्वानिष्टप्रसङ्गेन मोक्षस्यात्यन्तहेयत्वप्राप्तेः । तथा च मोक्षः कैरपि नापेक्ष्यो भवेदिति मोक्षे संसारिनिष्ठभक्षणादिकं सर्वात्मभावनिमित्तं तिष्ठतीत्युक्तिरसङ्गतैव ।

न च स्थावरनिष्ठदुःखित्वादीनां मिथ्यात्वात् न मुक्तस्य वस्तुतो दुःखित्वमिति वाच्यम् । योगिदेवनिष्ठजक्षणक्रीडानन्दादीनामपि मिथ्यात्वेन मुक्तस्य मोक्षे अवक्तव्यत्वात् । 'मिथ्याभूतस्यापि योगिनिष्ठजक्षणक्रीडास्त्रीरमणादेः इष्टत्वेन मोक्षस्तुतये मुक्तस्य वर्ण्यत्वे दुःखादेस्तु अनिष्टत्वेन मोक्षस्यातिहीनत्वप्राप्तेः न मोक्षे वर्ण्यता ' इति आनन्दगिर्युक्तिरप्ययुक्तैव । संसारिगतदुःखादेरिव संसारिगतजक्षणस्त्रीरमणादेः तज्जन्यसुखस्यापि हेयत्वेन तत्कथनेन मोक्षवर्णनायोगात् संसारसुखस्य हेयत्वाभावे मोक्षार्थं कोऽपि न यतेतेति पूर्वोक्तदोषात्।

तथा च मोक्षे गन्धादिज्ञानस्य परमात्मज्ञानस्य स्वज्ञानस्य च प्रामाणिकत्वेन प्रामाणिकपरित्यागस्यानिष्टत्वेन मोक्षे गन्धादिज्ञानार्थं तत्कारणभूतानामात्मातिरिक्तानामङ्गीकार्यत्वेन विद्यावस्थायामात्मातिरिक्तं नास्तीत्यद्वैतिभिरुक्तमयुक्तमेवेति यत्र त्विति वाक्यं जीवब्रह्मणोर्भेदं जगतः सत्यत्वमेव बोधयति ।

अद्वैतिभिरपि ब्रह्मविद्याभरणकारैः ' विज्ञातारमरे केन विजानीयात्' इत्यतः पूर्ववाक्ये ' येनेदं सर्वं विजानाति तं केन विजानीयात् ' इति जीवात् भिन्नतया परमेश्वरः किमर्थं प्रतिपाद्यते येनेश्वरेण जीवः इदं सर्वं विजानाति तं परमेश्वरं केन विजानीयात् इति तदर्थः । तस्मादिदं वाक्यं अत्यन्ताभेदवादिनोऽ ( अद्वैतिनोऽ ) ननुगुणम्' इति (ब्र.सू.१।४।२२) इति ब्रह्मसूत्रशाङ्करभाष्यव्याख्यावसरे यत्र त्वस्येति श्रुतिः जीवब्रह्मणोर्भेदबोधिकेत्युक्तम् ।

तथा अप्पयदीक्षितैरपि न्यायरक्षामणौ- ' एवं जीवे परमात्मनि च प्राक् प्रस्तुतेऽङ्गीकृते ' येनेदं सर्वं विजानाति तं च केन

विजानीयात् ' इत्युपसंहारवाक्यं येनेति तृतीयांतस्य परामर्शनीयं परमात्मानं विजानातेः कर्तारं जीवं चासाद्य समंजसं भवति। जीवस्य ब्रह्माभेदेन प्रस्तुतत्वाङ्गीकारे तु येनेति तृतीया प्रथमार्थे योजनीयेति क्लेशः स्यात् ' इत्यादिवाक्येन जीवब्रह्मणोर्भेदबोधिकेत्युक्तमिति नैतद्वाक्यं जीवब्रह्मणोरैक्यविषये उदाहरणीयं नापि जगतः मिथ्यात्वविषये ।

न च उभाभ्यां अद्वैतिभ्यां पूर्वपक्षतया उक्तं वाक्यं संगृह्य येनेति वाक्यं जीवब्रह्मणोर्भेदं बोधयतीति द्वैतिनां कथनमयुक्तम् । सिद्धांते अपेयदीक्षितैः ' एवमादौ मध्ये च जीवपरामर्शस्य जीवविषयत्वमङ्गीकृत्यैव भेदपक्षे तदुपपादनस्य कर्तुं शक्यत्वेऽपि तस्य ब्रह्मविषयत्वं सिद्धं कृत्वा यत्तदुपपादनाय यत्नमारिथतवान् सूत्रकारः, तेन ज्ञायते जीवपरयोरभेद एवास्य सिद्धांतः। 'येनेदं सर्वं विजानाति' इत्यस्य योजनाक्लेशोऽपि अद्वैतप्रस्तावानुरोधार्थत्वान्न दोषायेत्याशय इति वाक्येन; एवमेव ब्रह्मविद्याभरणकारैरपि- ' येनेति तृतीया प्रथमार्थे भविष्यति ' इति वाक्येन च, येनेति पदस्य य इति प्रथमांतत्वं स्वीकृत्य ' येनेदं सर्वं विजानाति ' इत्यस्य यः=जीवः इदं सर्वं विजानाति तं जीवं केन विजानीयात् इति येनेति पदेन जीव एव ज्ञानकर्तृतया बोध्यते, न तु ब्रह्म जीवकर्तृकज्ञानकरणतयेति अस्य वाक्यस्य यथा अभेदाविरुद्धता तथा अर्थस्य कथितत्वात् इति वाच्यं। अभेदाविरुद्धतया अर्थकथनस्यासंभवात् । ताभ्यामेवाभेदाविरुद्धतया योजनस्य क्लेशकरत्वं भेदपरतया योजने क्लेशाभावः ( समञ्जसः ) इति तथा अर्थकथनस्य अयुक्तताया वर्णनाच्च । तथार्थकथनस्यासंभवस्त्वित्थम्- ' यत्र वा सर्वमात्मैवाभूत् तत् केन कं जिघ्रेत् केन कं पश्येत्.... तत्केन कं विजानीयात् येनेदं सर्वं विजानाति तं केन विजानीयात् । य एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो नहि

शीर्यतेऽसङ्गो न हि सज्यते असितो न व्यथते न रिष्यति । विज्ञातारमरे केन विजानीयात्' (बृ. ४।५।१५ ) इति वाक्यम् । तस्य च अद्वैतिमतरीत्या अर्थः -

अविद्यायामेव सत्यां क्रियाकारकफलव्यवहारो न ब्रह्मविदः । यत्र=यस्यां विद्यावस्थायां सर्वं आत्मैवाभूत् आत्मव्यतिरिक्तं नास्ति, तत्=तदा, केन=घ्राणेन्द्रियेण, कं=गन्धं जिघ्रेत्, केन=चक्षुषा कं= रूपादिकं पश्येत् केन=श्रोत्रेंद्रियेण कं=शब्दं शृणुयात्' इति गन्धादिज्ञानानि निषिध्य इतरज्ञाननिषेधार्थं प्रवृत्तं- येनेदं सर्वं विजानाति तं केन विजानीयात्... विज्ञातारमरे केन विजानीयात्' इत्युत्तरवाक्यं-तस्य च येनेतिपदं प्रथमांततया विपरिणम्य, यः=जीवः इदं सर्वं विजानाति तं जीवं केन विजानीयात् विज्ञातारं=जीवं केन विजानीयात् इति । स चार्थोऽसंभावितः । तथाहि- 'येनेदं सर्वं विजानाति तं केन विजानीयात् ........ विज्ञातारमरे केन विजानीयात्' इति वाक्ययोर्मध्ये 'स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते अशीर्यो नहि शीर्यतेऽसङ्गो न सज्यतेऽसितो न व्यथते न रिष्यति' इति वाक्यमस्ति । तथा च येनेदं सर्वं विजानाति तं च केन विजानीयात् स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यते असङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादिति समग्रं वाक्यं, तत्र स एष नेति नेति आत्मा अगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यति इति वाक्यस्य तु 'स एष आत्मा परं ब्रह्म, नेति नेति= सर्वधर्मरहितः, अगृह्यः ज्ञानाविषयः, हि=यस्मात् न गृह्यते, अशीर्यः हि=यस्मात् न शीर्यते, असङ्गः=न हि सज्यते, तथा, असितः=अबाद्यः न व्यथते, न रिष्यति, हिंसां नापद्यते; इति अद्वैतमतरीत्याऽर्थः । तथाच- 'स एष नेति नेति' इति वाक्यस्थाभ्यां स एष इति

पदाभ्यां परब्रह्मैव ग्राह्यं न जीवः तस्य नेति नेतीत्यादिवाक्योक्तसर्वधर्मनिषेधादीनामयोगात्। एकवाक्यघटकयत्तच्छब्दयोः एकार्थकत्वेन स एष नेति इति वाक्योक्तेन स इति शब्देन परब्रह्मणः ग्रहणे यच्छब्देन परमात्मग्रहणं कर्तव्यम्। अत एव ब्रह्मविद्याभरणकारैः अप्पयदीक्षितैरपि येनेति यच्छब्देन परमात्मग्रहणं स्वरसमित्युक्तम्। एवं च येन परमात्मना इदं सर्वं विजानाति तं परमात्मानं केन विजानीयात् इति भेदानुकूलार्थ एव स्वीकार्यो न तु येनेति पदस्य यः इति विभक्तिविपरिणामं कृत्वा यः जीवः इत्यर्थः स्वीकार्यः। उत्तरवाक्यस्थेन स इति शब्देन जीवस्यैव ग्रहणापत्त्या तस्मिन् नेति नेत्याद्युक्तसर्वधर्मनिषेधायोगात्। विभक्तिविपरिणामादिक्लेशकरत्वात्। येनेति वाक्यस्य जीवज्ञाननिषेधकत्वे स्वीकृते विज्ञातारमरे केन विजानीयात् इत्यस्यापि जीवज्ञाननिषेधकत्वस्य वक्तव्यतया पौनरुक्त्यापाताच्च। न चाद्वैतप्रस्तावानुरोधित्वात् अगतिकागतिकतया पौनरुक्त्यं विभक्तिविपरिणामादिक्लेशोऽपि सह्य इति वाच्यम्। अस्यामुपनिषदि अन्यत्र कुत्रापि वा अद्वैतप्रस्तावस्याभावात्।

तथाच 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इति वाक्यं येन परमात्मना इदं सर्वं विजानाति जीवः तं परमात्मानं केन विजानीयात् इति एकज्ञानक्रियायां परमात्मनः करणत्वस्य जीवस्य कर्तृत्वस्य बोधकतया, विज्ञातारं स्वात्मानं (जीवं) केन विजानीयादिति पृथगुक्त्या च, जीवस्य परमात्मना भेदबोधकमेव। अभेदवादिनामद्वैतिनामननुगुणं (विरुद्धमेव) इदं वाक्यं इति ब्रह्मविद्याभरणकारैरप्पयदीक्षितैरुक्तं युक्तमेवेति।

विज्ञातारमरे केन विजानीयादिति वाक्यं मोक्षेऽपि जीवस्य विज्ञातारमितिपदेन विज्ञातृत्वं (ज्ञानकर्तृत्वं ज्ञानाश्रयत्वं) वक्तीति मोक्षे जीवस्य ज्ञानमङ्गीकरणीयमेव। नच विज्ञातारमितिपदेन जीवस्य भूत-

पूर्वगत्या विज्ञानकर्तृत्वमुच्यते नतु मोक्षे इति शङ्कराचार्यैः स्वभाष्ये उक्तमिति वाच्यम्। शङ्कराचार्यैस्तथा उक्तत्वेऽपि विज्ञातारमिति पदेन तथा अप्रतीत्या शब्दार्थत्वाभावेन स्वमताभिनिवेशमूलकत्वेन च उपेक्षणीयत्वात्।

शङ्कराचार्यानन्दगिरिवार्तिककारसुरेश्वरादिभिः यत्र त्वस्य सर्वमात्मैवाभूदिति वाक्यात्पूर्वं विद्यमानं यत्र हि द्वैतमिव भवति इति वाक्यं द्वैतप्रपञ्चस्य पारमार्थिकत्वं बोधयतीत्युक्तं च। विशेष-विचारः वाक्यान्वयाधिकरणे कृतः तत्रैवानुसन्धेयः। तथाच 'दर्शयति च' 'यत्र त्वस्य सर्वमात्मैवाभूत्' 'तत्केन कं पश्येत्' (बृ.-४.५।१५) इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारक-फललक्षणस्य व्यवहारस्याभावं, नचायं व्यवहाराभावोऽवस्थाविशेष-निबद्धोऽभिधीयत इति युक्तम्। तत्त्वमसीति ब्रह्मात्मभावस्यानवस्था-विशेषनिबन्धनत्वादिति शङ्करोक्तिरयुक्तैव। यत्र त्वस्येति वाक्ये ब्रह्मात्मत्वदर्शी जीवब्रह्माभेदं ज्ञानी कः। तस्य क्रियाकारकफललक्ष-णव्यवहाराभावो नोक्तः।

क्रियाकारकफललक्षणव्यवहाराभावस्यानुक्तत्वेन तस्य व्यवहा-राभावस्य अवस्थाविशेषनिबद्धत्वशङ्का सुदूरमपास्ता। 'तत्त्वमसि' इति वाक्यं बोधमेव न जनयति इत्यद्वैतिभिरुक्तत्वेन, तुष्यत्वितिन्यायेन बोधजनकत्वाङ्गीकारेऽपि चित् इति चिद्विषयकाभेदाद्यविषयक-बोधजनकत्वस्याद्वैतसिध्यादिग्रन्थकृद्भिः स्वीकृतत्वेन च, तेन वाक्येन ब्रह्मात्मत्व (जीवब्रह्माभेद) प्रतीतेरेवाजननेन ब्रह्मात्मभावस्य अनवस्थाविशेषनिबन्धनत्वादित्युक्तिरप्ययुक्तैवेति।

'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ.४।४।१९) इति च भेददृष्टिमपवदन्नेवैतद्दर्शयति इत्युक्तिरप्यसङ्गतैव। अस्याः श्रुतेः भेददृष्ट्यपवादकत्वाभावात् इति पूर्वमेव दर्शितम्।

यदप्युक्तम् ' न चस्मिन् दर्शने ज्ञानान्मोक्ष उपपद्यते.... सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनावगमात् ' इति, तदपि तुच्छम् । संसारस्य मिथ्याज्ञानकल्पितत्वेऽपि कथं ज्ञानेन निवृत्तिः ( संसारः अज्ञानकल्पितो भूयात् । तथापि कथं ज्ञानेन निवृत्तिः ) इति शङ्कायां, यथा ज्ञानस्य विरोध्यज्ञाननिवर्तकत्वस्वाभाव्यात् ज्ञानेनाज्ञाननिवृत्तौ अज्ञानकल्पितः संसारोऽपि निवर्तते इति उच्यते अद्वैतिना, तथा 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ' इत्यादिप्रमाणेन अवगतब्रह्महत्यादेर्निवर्तकत्वस्वभाववतो सेतुदर्शनादेः सत्यभूतस्य ( सेत्वज्ञानाकल्पितस्य ) अपि ब्रह्महत्यादेर्निवर्तकत्ववत् सत्यभूतस्यापि प्रकृतिबन्धस्य निवृत्तेः । ' पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति, इति श्रुत्याऽवगतबन्धनिवर्तकत्वस्वभाववता प्रेरकत्वभिन्नत्वादिना ज्ञातेन परमात्मना उपपत्तेः । किंच अद्वैतमत एव त्रैकालिकनिषेधप्रतियोगिनः ( कालत्रयेऽप्यसतः ) बन्धस्य संसारस्य निवृत्तिः ( ज्ञानानन्तरकालीनः अभावरूपो ध्वंसः ) नैवोपपद्यते । कदाचिद्विद्यमानस्यैव ध्वंसः । न हि कदाप्यविद्यमानस्य शशविषाणादेर्ध्वंसः ।

' न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तः इत्येषा परमार्थता ' इति गौडपादकारिकायां; 'तथा न निरोधः निरोधनं निरोधः प्रलयः ( नाशः ) उत्पत्तिर्जननं बद्धः संसारी जीवः साधकः .... मुमुक्षुः मोचनार्थी मुक्तः विमुक्तबन्धः उत्पत्तिप्रलययोरभावात् । बद्धादयो न सन्ति...कथमुत्पत्तिप्रलययोरभावः इति उच्यते द्वैतस्यासत्वात्......सतो ह्युत्पत्तिः प्रलयो वा स्यात् नासतः शशविषाणादेः ' इति तद्व्याख्यानशङ्करभाष्ये च, बन्धादीनामसत्वात् बन्धध्वंसादीनामभाव एवोक्तः इति न तु बन्धस्य

सत्यत्ववादिद्वैतमते परमात्मज्ञानात् प्रसादद्वारा मोक्षः (बन्धध्वंसः) सम्भवति इति श्रुत्यादिप्रमाणसिद्धत्वात् ।

एतेन उभयसत्यतायां हि कथमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यते इत्युच्यते इत्युक्तिरपि परास्ता । असत्यस्य बन्धस्य शशविषाणादिवत् ध्वंसासम्भवस्याद्वैतिभिरेवोक्तत्वेन सत्यस्यैव ध्वंस इत्यङ्गीकार्यत्वात् । नन्वेकत्वैकान्ताभ्युपगमे(१)नानात्वाभावात् प्रत्यक्षादिलौकिकानि प्रमाणानि व्याहन्येरन्निर्विषयत्वात् स्थाण्वादिष्विव पुरुषादिज्ञानानि (२) तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात् तदभावे व्याहन्येत (३) मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात् तदभावे व्याघातः स्यात् (४) कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्यते इति वाक्येन ब्रह्मातिरिक्तद्वितीयवस्त्वनङ्गीकारे अबाधितासन्दिग्धविज्ञानसाधनत्वरूपप्रमाणलक्षणाभावात् सर्वेषामप्रामाण्यं प्रसज्यते इति यदुक्तं शङ्कराचार्यैः तत्सत्यमेव। 'तमेवं विद्वानमृत इह भवति' इत्यादिमोक्षशास्त्रमपि परमात्मज्ञानं मोक्षसाधनमिति बोधकं शिष्यशासितृज्ञेयज्ञानमोक्षादिद्वितीयवस्तुसापेक्षं अप्रमाणं प्रसज्येत। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विधिशास्त्रं यागस्वर्गयागोद्देश्यदेवतायागकर्त्रादिभेदसापेक्षमप्रमाणं च प्रसज्येत । 'न सुरां पिबेत्' 'न परदारान् गच्छेत्' इत्यादिनिषेधशास्त्राण्यपि अप्रमाणानि प्रसज्येरन् । कथं चानृतेन ( नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगिरूपमिथ्याभूतेन=कदाप्यसता ) आत्मैकत्वप्रतिपत्तिः स्यात् । आत्मैकत्वप्रतिपत्तेरेवाभावे अप्रतिपद्यमानस्य आत्मैकत्वस्य सत्यत्वं वा कथं स्यात् इत्यादयो दोषाः अद्वैतिमते वज्रलेपायिता एव । ( दुष्परिहारा एव )

एतद्दोषपरिहारार्थं यदुक्तं शङ्कराचार्यैः— 'अत्रोच्यते — नैष दोषः, सर्वव्यवहाराणां प्राक् ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः ।

स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रतिपत्तिः तावत्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते विकारानेव त्वहं ममेत्यविद्ययात्मात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते । स्वाभाविकीं ब्रह्मात्मतां हित्वा तस्मात्प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक् प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, तद्वत्' इति तदत्यन्तमयुक्तम् । अनेकदोषयुक्तत्वात् । तथाहि सर्वव्यवहाराणां नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वं वदतामद्वैतिनां मते प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वकथनमयुक्तम् । नासीदिति पूर्वकाले सत्वं निषिध्य ब्रह्मात्मताविज्ञानात् पूर्वकाले सत्वोक्तेः व्याहतत्वात् । स्वाप्नव्यवहारस्येव प्राक् प्रबोधादित्युक्तिरप्ययुक्तैव । दृष्टांतासम्मतेः । स्वाप्नपदार्थानां 'स हि कर्ता' इत्यादिश्रुतिभिः ईश्वरकर्तृकत्वोक्तेः सत्यत्वात् ।

शङ्कराचार्याः स्वकृतग्रन्थे 'स्वप्नव्यवहारस्येव प्राक् प्रबोधात्, स्वप्नवन्मिथ्या' इत्यादिवाक्येन स्वप्नपदार्थानां मिथ्यात्वं प्रतिक्षणमाहुः । तत्र तत्र तत्साधनाभासांश्च प्रदर्शयामासुः । अतः स्वप्नपदार्थानां मिथ्यात्वे ये युक्त्याभासाः प्रदर्शिताः तेषां आभासतां प्रदर्श्य स्वाप्नपदार्थानां सत्यतां प्रमाणेन प्रदर्शयिष्यामः । तथाहि 'सन्ध्ये सृष्टिराह हि (ब्र सू. ३।२।१) 'स यत्र प्रस्वपिति' (बृ.४।३।९) इत्युपक्रम्य, 'न तत्र रथा रथयोगाः न पन्थानो भवंति अथ रथान् रथयोगान् पथः सृजते' (बृ.४।३।१०) इत्यादि । तत्र संशयः किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः आहोस्विन्मायामयीति । तत्र तावत्प्रतिपद्यते संध्ये तथ्यरूपा सृष्टिरिति....तस्मिन्संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति । कुतः । यतः प्रमाण-

भूता श्रुतिरेवमाह 'अथ रथान् रथयोगान् पथः सृजते (बृ.४।३।१०) इत्यादि स हि कर्तेति चोपसंहारात् एवमेवावगम्यते (१) इति वाक्येन ;

अपि चैके शाखिनः अस्मिन्नेव सन्ध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क. ५।८) इति पुत्रादयश्चात्र कामा अभिप्रयन्ते...प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः प्राज्ञस्य हि इदं प्रकरणम् । 'अन्यत्र धर्मादन्यत्राधर्मात्' (क.२।१४) इत्यादि तद्विषय एव च वाक्यशेषोऽपि । 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' (क.५।८) इति प्राज्ञकर्तृका च सृष्टिः तथ्यरूपा समधिगता जागरिताश्रया तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति....तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति वाक्येन च, श्रुत्यादिप्रमाणानुकूलं सन्ध्ये सृष्टिराह हि निर्मातारं चैके पुत्रादयश्चेति सूत्राभ्यामुक्तं स्वाप्नपदार्थस्य पारमार्थिकसत्यत्वरूपं अर्थं पूर्वपक्षत्वेन स्वीकृत्य 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' (ब्र. सू. ३।२।३) इति सूत्रं सिद्धांतसूत्रमिति मत्वा तस्येत्थं व्याख्यां चक्रुः शंकराचार्याः । तुशब्दः पूर्वपक्षं व्यावर्तयति । नैतदस्ति यदुक्तं सन्ध्ये सृष्टिः पारमार्थिकीति, मायैव सन्ध्ये सृष्टिः न परमार्थगन्धोऽप्यस्ति । कुतः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । न हि कार्त्स्न्येन=परमार्थवस्तुधर्मेण अभिव्यक्तः स्वप्नः; कार्त्स्न्यं नाम (१) देशसम्पत्तिः (२) कालसम्पत्तिः (३) निमित्तसम्पत्तिः (४) अबाधश्च । नहि परमार्थवस्तुविषयाणि देशकालनिमित्तानि अबाधश्च स्वप्ने सम्भाव्यन्ते । तथाहि—

(१) न तावत् स्वप्ने रथादीनामुचितो देशः सम्भवति । नहि संवृते देशे रथादयोऽवकाशं लभेरन् ।

(२) कालसम्पत्तिरपि नास्ति। कालविसंवादोपि स्वप्ने भवति। रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्बहुवर्षपूगानतिवाहयति।

(३) निमित्तानि च स्वप्नपदार्थज्ञानकारणानि स्वाप्नपदार्थनिर्माणकारणानि चेति द्विविधानि न तानि द्विविधान्यपि निमित्तानि उचितानि विद्यन्ते।

[१] करणोपसंहाराद्धि नास्य स्वाप्नपदार्थरथादिज्ञानकरणानि चक्षुरादीनि सन्ति।

[२] स्वाप्नपदार्थनिर्माणकारणमपि घटस्य कुलाल इव निमित्तकारणं मृदिव उपादानकारणं चेति द्विविधम्। उभयमपि स्वप्नपदार्थनिर्माणकारणं नास्ति।

[१] निमेषमात्रेण रथादिनिर्वर्तने कुतोऽस्य (स्वप्नद्रष्टुः) सामर्थ्यमिति निमित्तकारणाभावः।

[२] रथादिनिर्माणे उपादानकारणानि दारूणि न सन्ति इत्युपादानकारणाभावः।

एवं स्वाप्नपदार्थज्ञानकरणचक्षुराद्यभावात् निमित्तकारणस्य स्वाप्नपदार्थसर्जनसमर्थस्य चाभावात् उपादानकारणदारूणामभावात् स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते।

[४] बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे इति स्वप्नदृष्टस्य प्रबोधकाले बाधः। स्वप्न एव चैते सुलभबाधा भवन्ति। रथोऽयमिति हि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः।

स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रं (श्रुतिः) 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' ( बृ. ४।३।१० ) इत्यादि। तस्मात् (१) स्वाप्नरथादीनामुचितदेशाभावात् [२] उचितकालाभा-

वात् [३] ज्ञानकारणचक्षुरादीनामुपरतत्वेन स्वाप्नपदार्थज्ञानकारणाभावात् (४) निमेषमात्रेण स्वाप्नपदार्थसर्जनसमर्थपुरुषाभावात्[५]स्वाप्नपदार्थोपादानकारणदार्वभावात् ( काष्ठाभावात् ) [६] प्रबोधकाले स्वाप्नपदार्थानां प्रत्यक्षबाधितत्वात् स्वप्नकालेऽपि बाधितत्वात् श्रुतिबाधितत्वाच्च स्वाप्नदर्शनं मायामात्रं मिथ्या । तस्मात् स्वाप्नपदार्थस्य सत्यत्वं नाङ्गीकारार्हमिति यच्छङ्कराचार्यैरुक्तं तदयुक्तम् । स्वाप्नपदार्थस्य मिथ्यात्वबोधनपरतया शङ्कराचार्यकृतस्य मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति सूत्रव्याख्यानस्य दुष्टत्वात् । तथाहि ' न तत्र रथा न रथयोगा न पन्थानो भवन्ति ' ( बृ.४।३ १० ) इत्यादिशास्त्रं स्वाप्नपदार्थानां रथादीनां स्वप्ने अभावं(बाधं) बोधयतीति यदुक्तं तत्तावदयुक्तम् । पदार्थस्य बाधो नाम नास्ति नासीन्न भविष्यतीति बोध्यमानत्रैकालिकनिषेधप्रतियोगित्वम्।स च कदाप्यसत एव सम्भवति । न पूर्वकालमात्रे असतः (प्रागभावप्रतियोगिनः ) सम्भवति । विवाहानंतरं जातानां पुत्राणां विवाहात्पूर्वमसतां प्रागभावप्रतियोगिनां पश्चाच्च भवतां इमे पुत्रा बाधिता इति व्यवहाराभावात् एवं जातानां पुत्राणां नाशानन्तरमुत्तरकाले असत्वमात्रेण बाधितत्वव्यवहाराभावात् । तथाच ' न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते, न तत्र आनन्दा मुदः प्रमुदो भवन्ति, अथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशांताः पुष्करिण्यः स्रवन्त्यो भवन्ति, अथ वेशांतान् पुष्करिणीः स्रवन्तीः सृजते, स हि कर्ता ' ( बृ. ४।३।१० ) इति श्रुतिः-' तत्र= तस्मिन् प्रदेशे, रथाः रथयोजका अश्वाः मार्गाश्च स्वप्नात्पूर्वं न भवन्ति अविद्यमानाः अथ अनन्तरं ( स्वप्नकाले ) रथान् अश्वादीन् मार्गांश्च सृजते ईश्वरः, इति, तत्र आनन्दाः सुखविशेषाः मुदः पुत्रादिलाभनिमित्ताः हर्षाः प्रमुदः=प्रकर्षोपेता हर्षा न भवन्ति । अथ अ-

नंतरं स्वप्नकाले आनन्दाः मुदः प्रमुदः सृजते सृष्टिं करोति ईश्वरः। तत्र वेशांताः पल्वलाः पुष्करिण्यः तडागाः स्रवन्त्यः नद्यः न भवंति। अथ अनन्तरं [स्वप्नकाले] पल्वलान् पुष्करिणीर्नदीः सृजते ईश्वरः। स हि यस्मात् कारणात् कर्ता=सर्वकर्ता तस्मात्' इति, अथपदेन स्वप्नात्पूर्वं रथादीनामभावं [प्रागभावं] उक्त्वा, स्वप्नकाले रथादीन् सृजते ईश्वरः इति स्वप्नकाले रथादीनामीश्वरसृष्टत्वेन सत्त्वं वक्तीति 'न तत्र रथा ... अथ रथान् रथयोगान् सृजते' इति श्रुतिः, स्वाप्नरथादीनां नास्ति नासीन्न भविष्यति इति बोध्यमानत्रैकालिक-निषेधप्रतियोगित्वरूपमसत्त्वापरपर्यायं मिथ्यात्वं न वक्तीति नानया श्रुत्या स्वाप्नपदार्थस्य मिथ्यात्वसिद्धिः।

।इतिस्वाप्नपदार्थमिथ्यात्वे शङ्कराचार्योक्तश्रुतिबाध्यत्वहेतुनिराकरणं।

स्वाप्नपदार्था मिथ्या स्वप्नकालेऽपि बाधितत्वात् इति सर्वेषां स्वाप्नपदार्थानां मिथ्यात्वे स्वप्नकाले बाधितत्वोक्तिरप्ययुक्ता। सर्व-स्वाप्नपदार्थानां बाधादर्शनात्। यथा शुक्तौ प्रतीयमानरजतस्य नेदं रजतमिति बाधदर्शनेन तस्य मिथ्यात्वेऽपि न अबाधितस्य सत्यरजतस्य घटादेर्वा मिथ्यात्वं तथा केषांचित्स्वप्ने प्रतीयमानानां पदार्थानां बाधदर्शनेन मिथ्यात्वेऽपि न स्वप्ने दृश्यमानसर्वपदार्थानां मिथ्यात्वम-न्यथा [यत्किञ्चिद्वस्तुनः बाधदर्शनमात्रेण सर्वस्य मिथ्यात्वे] स्वप्ने दृश्यमानात्मनोऽपि मिथ्यात्वं स्यात्। शुक्तिरजतस्य बाधदर्शनमात्रेणा-बाधितस्य सत्यरजतादेरपि मिथ्यात्वं स्यात्। बाधस्य साधिष्ठानत्वनिय-मेन अयं रथः इति पूर्वजातस्वप्नदर्शनस्यानन्तरं जातेन अयं मनुष्य इति ज्ञानेन तदनन्तरं जातेन अयं वृक्ष इति ज्ञानेन च पुरोवर्तिनि प्रतीय-मानरथत्वमनुष्यत्वादीनां बाधेऽपि बाधविशेष्यीभूतमधिष्ठानभूतं इदं वस्तु न बाध्यते इति तस्य स्वाप्नपदार्थस्य मिथ्यात्वासिद्धेः। न हि वयं (द्वैतिनः) जाग्रत्काले वा स्वप्नकाले वा यद्यत्प्रतीयते तत्सर्वं सत्यं

न मिथ्या इति ब्रूमः। किंतु यत्प्रतीयते यस्य बाधो नास्ति तत्सत्यं, यस्य बाधोऽस्ति तन्मिथ्येति।

तथा च स्वप्नकाले रथोऽयं मनुष्योऽयमित्यादिना ज्ञातस्य रथत्वादेः ज्ञानेन बाधेऽपि न पुरोवर्तिनः बाधः न वा रथत्वातिरिक्तानां सर्वेषां बाध इति नायं स्वाप्नबाधः स्वप्ने प्रतीयमानस्य सर्वस्य असत्त्वं बोधयति।

एतेन 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रेण स्वाप्नपदार्थानां सर्वेषां बाधकथनात् स्वाप्नपदार्थाः सर्वे मिथ्या इति कस्यचिदुक्तिरपि परास्ता। यस्य स्वाप्नपदार्थस्य बाधोऽस्ति तस्य मिथ्यात्वेऽपि न सर्वस्य मिथ्यात्वं बाधाभावात्।

॥ सर्वस्वाप्नानां मिथ्यात्वविषये स्वाप्नकालीनबाधस्य शङ्कराचार्योक्तहेतुत्वनिराकरणम् ॥

यच्चोक्तं 'शङ्कराचार्यैः बाध्यंते चैते रथादयः स्वप्नदृष्टाः प्रबोधे' इति वाक्येन स्वाप्नपदार्थानां प्रबोधकाले बाधदर्शनान् मिथ्यात्वमिति, तदप्ययुक्तम्। प्रबोधकाले स्वाप्नपदार्थानां रथादीनां बाधादर्शनात्। तथाहि सुप्तरुत्थानानन्तरं स्वाप्न एवायं रथादिर्न जागरित इति हि खलु बाधः न तु नायं रथ इति। यथा कार्तिकमासे दृष्टं चैत्रं कालांतरे अयं चैत्रः वैशाखमासे दृष्टः इति कदाचिद्भ्रमो जायते, तदनन्तरं नायं वैशाखमासे दृष्टः किन्तु कार्तिकमासे इति बाधो जायते। स च बाधः, न हि चैत्रस्य नास्ति नासीन्न भविष्यतीति बोध्यमानत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वसाधको भवति किन्तु कार्तिकमासवृत्तित्वस्यैव बाधकः, तथा स्वाप्न एवायं रथादिः न जाग्रत् इति बाधोऽपि रथादीनां जाग्रत्कालवृत्तित्वस्यैव बाधकः (त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वग्राहकः) न तु रथादीनाम्। बाधज्ञानं यस्याभावं (असत्त्वं) गृह्णाति तस्यैव बाधकं

न तु स्वविषयस्य सर्वस्य बाधकं; बाधस्य साधिष्ठानत्वनियमात् अधिष्टानातिरिक्तस्यैव । अन्यथा नेदं रजतमिति बाधज्ञानं इदं-पदार्थस्यापि बाधकं (असत्त्वग्राहकं) स्यात् । न भवति च इदं-पदार्थस्यासत्त्वग्राहकं किन्तु रजतस्यैवेति ।

यदि हि जाग्रत्काले नायं रथ इति बाधः स्यात् तदा रथादी-नां अभावग्रहणात् रथादीनां मिथ्यात्वं स्यान्नायं न तथा (नायं रथ इति)बाध इति न स्वाप्नपदार्थानां रथादीनां सर्वेषां मिथ्यात्वसिद्धिः। तुष्यत्विति न्यायेन " नायं रथ " इति बाधांगीकारेऽपि बाधस्य साधिष्ठानत्वनियमात् स्वाप्नरथस्य बाधेऽपि नाधिष्ठानस्य स्वप्न-प्रतीतेदंपदार्थस्येति । "

' बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे ' इति शङ्करा-चार्याणां रथादीनां सर्वेषां बाध्यत्वोक्तिरयुक्तैव ।

॥ इति शङ्कराचार्योक्तस्वप्नदृष्टानां रथादीनां मिथ्यात्वे प्रबोधकाले बाधितत्वहेतुभङ्गः ॥

स्वाप्नपदार्थानां मिथ्यात्वे स्वाप्नपदार्थोपादानकारणदार्व-भावात् इति हेतुकथनमप्ययुक्तम् । दुष्टत्वात् । [व्यभिचारित्वात्]। मा हि भूत् एकस्य तत्पदार्थोपादानस्याभावेन अन्येनोपादानेन तत्पदार्थस्याभावः [मिथ्यात्वं] ।

रथा हि बहवः । एकः सुवर्णोपादानकः अन्यो रजतोपा-दानकः अपरः काष्ठोपादानक इति । न हि सुवर्णोपादानकारणा-भावमात्रेण रथसामान्याभावः सिद्ध्यति । सुवर्णरूपोपादानाभावेन सौवर्णरथस्यानुत्पत्तावपि रजतरूपोपादानेन रजतरथोत्पत्तिसम्भवात् । एवं रजतरूपोपादानाभावे न रथसामान्याभावः सिद्ध्यति सौवर्णस्य काष्ठस्य वा रथस्योत्पत्तिसम्भवात् । एवं काष्ठरूपोपादानाभावेन रथसामान्याभावः सिद्ध्यति । राजतस्य सौवर्णस्य वा रथस्योत्पत्ति-

संभवात् । तथा च स्वाप्नरथादिः मिथ्या ( त्रैकालिकनिषेधप्रतियोगी ) काष्ठरूपोपादानाभावात् यत् काष्ठरूपोपादानाभावात्तन्नास्ति इति अनुमातुं नैव शक्यते । सौवर्णरथे राजतरथे वा व्यभिचारात् । काष्ठरूपोपादानाभावेऽपि सौवर्णस्य वा राजतस्य वा सत्त्वात् काष्ठरूपोपादानाभावात् इति हेतुर्व्यभिचरितत्वात् न रथादीनां सर्वेषां मिथ्यात्वं साधयितुमलम् (समर्थम्) ।

ननु 'रथादिनिर्वर्तनेऽपि कुतो........ दारूणि इति शाङ्करभाष्येण दार्वभावमात्रस्य हेतुत्वे बोधितेऽपि उपादानकारणमात्राभावकथन एव तात्पर्यात् । तथा च स्वाप्नरथादयः मिथ्या (न सन्ति) दारूपलक्षितोपादानकारणसामान्याभावात् यत् उपादानकारणसामान्याभाववत् तन्नास्ति ( मिथ्या ) यथा शशविषाणमिति अनुमातुं शक्यते व्यभिचाराभावादिति चेन्न । दुष्टत्वात् । ( हेत्वसिद्धेः ) । न हि स्वप्नरथादीनां उपादानकारणसामान्यस्य ( यत्किंचिदुपादानकारणस्यापि ) अभावः । अंतःकरणपरिणतानां वासनानां ( संस्काराणां ) सत्वात् वासनाभिः ( उपादानरूपाभिः ) रथनिर्माणसम्भवात् । स्वीकृतं हि शङ्कराचार्यप्रभृतिभिरद्वैतिभिः स्वाप्नरथादीनां वासनाया उपादानकारणत्वं । तथा हि तेषां वाक्यानि - 'कथं पुनः सृजते रथादिसाधनानां वृक्षादीनामभावे' इत्याशंक्य 'तद्वासनामात्रं वेशांतादीन् सृजते वासनामात्ररूपान्' इति । ( बृ. शां. भा. ४।३।१० )

'वासनामयी सृष्टिः श्लिष्टेति उत्तरमाह उच्यते' इति । ( बृ. शां. आनन्द. ४।३।१० )

'यथा तु जाग्रत्सृष्टेः बाह्यकरणापेक्षायाः तदनपेक्षान्तरकरण- (वासना) मात्रसाध्या दृष्टा स्वप्ने रथादिसृष्टिरशक्यापह्नोतुं एवं सर्वशक्तेः परस्या देवतायाः आन्तरकरणानपेक्षाया जगत्सर्जनं श्रूयमाणं

न सामान्यतो दृष्टमात्रेण अपह्नवमर्हतीति ' ( ब्र. सू. शां. भामती २।१।३१ ) इत्यादीनि स्वाप्नरथादीनां वासना उपादानकारणमिति बोधकानि वाक्यानि ।

तथा च स्वाप्नरथादीनामुपादानकारणस्य सत्त्वात्, उपादानकारणदार्वभावादिति वा दारूपलक्षितोपादानकारणसामान्याभावादिति वा हेतुना स्वाप्नरथादीनां अभावः सूत्रेण कथ्यते इति कथनमयुक्तमेव शङ्कराचार्याणाम् ।

।इति स्वाप्नपदार्थानां मिथ्यात्वे उपादानकारणाभावस्य हेतुत्वभङ्गः ।

स्वाप्नरथादिपदार्थाः मिथ्या निमेषमात्रेण स्वाप्नपदार्थनिर्माणसमर्थपुरुषाभावादिति, ' रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं " इति शाङ्करभाष्योक्तहेतुरप्ययुक्तः असिद्धत्वात् । निमेषमात्रेण सर्जनसमर्थस्येश्वरस्य ' प्राज्ञनामकपरमात्मनः ' सत्त्वात् । स्वीकृतं च शङ्कराचार्यैः 'सर्वोपेता च तद्दर्शनात्' (ब्र. सू २।१।३०) इति सूत्रव्याख्यावसरे 'सर्वशक्तियुक्ता च परा देवता' इति अभ्युपगन्तव्यं कुतः तद्दर्शनात् । तथा हि–दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः–'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ' (छां. ३।१४।४) सत्यकामः सत्यसङ्कल्पः (छां. ८।७।१) ' यः सर्वज्ञः सर्ववित् ' (मुं.१।१।९) ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' [ बृ. ३। ८।९ ] इत्येवं जातीयका' इति । स्वाप्नपदार्थस्रष्टृत्वं सर्वशक्तियुक्तप्राज्ञनामकपरमात्मन एव वक्ति च ' य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ' [का. ५।८] इति श्रुतिः । तथा च निमेषमात्रेण जगत्सर्जनकर्त्रीश्वरस्य सद्भावेन तेनैकनिमेषमात्रेण स्वाप्नपदार्थस्रष्टृत्वोपपत्तेः । निमेषमात्रेण स्वाप्नपदार्थनिर्माणसमर्थपुरुषाभावादिति हेतोः असिद्धत्वात् नायं हेतुः स्वाप्नपदार्थमिथ्यात्वसाधने समर्थ इति ।

॥ इति स्वाप्नपदार्थानामभावे [मिथ्यात्वे] सर्जनसमर्थ-
पुरुषाभावस्य हेतुत्वभङ्गः ॥

निमित्तान्यपि च स्वप्नेन बुद्ध्ये...... उचितानि विद्यन्ते करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, इति वाक्येन शाङ्करभाष्ये स्वाप्नपदार्थाः मिथ्याः स्वाप्नपदार्थदर्शनकरणाभावात् इति हेतुरुक्तः सोऽप्ययुक्तोऽसिद्धत्वात् । 'न तावत्सन्ध्ये स्थाने अत्यन्तमात्मनः करणविरमणमस्ति 'सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति ' (बृ. ४ ३।७) इति तत्रापि धीसंबन्धश्रवणात् । तथा च स्मरंति- 'इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ' इति ॥ 'कामादयश्च मनसो वृत्तय इति श्रुतिः, ताश्च स्वप्ने दृश्यन्ते तस्मात्समना एव स्वप्ने विहरति ' [बृ.शां.भा.२।३।४०] इति स्वाप्नपदार्थदर्शनकरणस्य मनसः स्वप्नकाले सत्त्वं शङ्कराचार्यैः स्वयमेव स्वीकृत्य स्वाप्नपदार्थदर्शनकरणाभावोक्तेर युक्तत्वात् ।

यत् जन्यं ज्ञानं तत् सकरणकमिति नियमात् जन्यस्वाप्नपदार्थज्ञानस्य करणं सर्वरपि किंचित्कल्पनीयम् । अकारणकार्योत्पत्तेरयोगादिति करणाभावशङ्काकरणमेवानुचितं करणविशेषज्ञानाभावमात्रेण प्रमितकार्यायोगशङ्काया अयोग इति ।

॥इति स्वाप्नपदार्थमिथ्यात्वे स्वाप्नपदार्थज्ञानकरणाभावस्यहेतुत्वभङ्गः॥

'न हि रथादीनां उचितदेशः सम्भवति । न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन् ' इति वाक्येन शाङ्करभाष्योक्ताः 'स्वाप्नपदार्थाः मिथ्या अवस्थातुमुचितदेशाभावात् ' इति हेतुरप्ययुक्तः पूर्ववदसिद्धत्वात् । तथा हि-यत् यदुपादानकं तत्तद्देशवृत्ति यथा घटः मृदुपादानकः मृदो देशे तिष्ठति तथा स्वाप्नरथादयोऽपि अंतःकरणाश्रितवासनोपादानका इति अद्वैतिभिरप्यङ्गीकृतत्वेन वासनाप-

रिणतरथादीनां स्वोपादानवासनाश्रयमन एव उचितदेश इति स्वोपादानकारणवासनायाः प्रदेशभूते मनसि स्थातुमर्हंतीति उचितदेशाभावादिति हेतुरसिद्ध एवेति न तेन हेतुना स्वाप्नपदार्थस्य मिथ्यात्वसिद्धिः। कालविसंवादोऽपि च स्वप्ने भवति। रजन्यां सुप्तो वासरं भारते वर्षे मन्यते तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्बहु–वर्षपूगानतिवाहयति' इति ( ब्र.सू.शां.३।२।३ ) वाक्येन, स्वाप्नपदार्थाः मिथ्या स्वाप्नकाले स्वप्नपदार्थाधिकरणतया गृहीतकालाभावात् इत्युक्तानुमानमप्ययुक्तम्। ईश्वरनिर्मितवासनापरिणतकालस्य सत्त्वात्। किंच स्वाप्नपदार्थाधिकरणतया गृहीतकालाभावे तादृश कालवृत्तित्वं बाध्यतां, स्वाप्नपदार्थास्तु अबाधितत्वात् सत्या एव। तथा च कात्स्न्येंन देशकालनिमित्तसम्पत्त्यबाधरूपेण परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूप एव स्वप्नः इति, 'देशकालनिमित्तसम्पत्त्यबाधरूपकात्स्न्येंनानभिव्यक्तस्वरूपत्वात्। मायैव सन्ध्ये सृष्टिर्न परमार्थ गन्धोऽप्यस्ति ' इति शांकरव्याख्यानमयुक्तम्।

एवं स्वाप्नपदार्थसत्यत्वविषये बाधके परिहृते निर्बाधानि ' संध्ये सृष्टिराह हि ' ' निर्मातारं चैके पुत्रादयश्च ' इत्याभ्यां सूत्राभ्यां प्रदर्शितानि प्रमाणानि इति तयोः सूत्रयोः पूर्वपक्षसूत्रत्वोक्तिरयुक्तैव ' अत्रैष देवः स्वप्ने....दृष्टं चादृष्टं च श्रुतं चाश्रुतं च अनुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति ' (षट् ४।५) इति श्रुतौ, स्पष्टं सच्च पश्यतीति स्वप्ने दृष्टस्य पदार्थस्य सत्त्वमुक्तम्। शङ्कराचार्यैरपि ' सच्च परामार्थोदकादिअसच्च मरीच्युदकादि' इति स्वप्नदृष्टपदार्थानां परमार्थसत्त्वमुक्तम्।

एतेन ' वैधर्म्याच्च न स्वप्नादिवत् ' इति सूत्रं स्वप्नार्थानां मिथ्यात्वबोधकमित्येतन्निरस्तम्। श्रुतौ स्पष्टं स्वप्नपदार्थानां सत्यत्वकथनात्।

किं च " स्वप्नादिप्रत्ययवत् जागरितविषया अपि स्तम्भादि-प्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति बुद्धनोक्तौ प्रवृत्तं " वैधर्म्याच्च न स्वप्नादिवत् " इति सूत्रं । तस्यार्थः—स्वप्नादि-प्रत्ययवत् जाग्रत्प्रत्यया भवितुं नार्हन्ति कस्मात् वैधर्म्यात् । वैधर्म्यं हि भवति स्वप्नजागरितयोः किं पुनर्वैधर्म्यम् बाधाबाधाविति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते' इति, स्वप्नादीनां बाधितत्वात् जाग्रत्पदार्थानामबाध्यत्वात्, जाग्रत्प्रत्ययस्याबाधितविषयकत्वेन स्वप्नादिप्रत्ययस्य बाधितविषयकत्वेन, वैधर्म्यात्, जाग्रत्प्रत्ययाः स्वप्नादिप्रत्ययवत् मिथ्यार्थविषयकाः इति न वक्तव्यमिति । न ह्यनेन सर्वेषां स्वाप्नार्थानां मिथ्यात्वं सिद्ध्यति । किंच स्वप्नादिव-दित्यत्रादिपदग्राह्यतावच्छेदकधर्मः कः ? न तावद्वस्तुत्वं तथात्वे वस्तुत्वाक्रान्तानां जाग्रत्पदार्थानामपि आदिपदबोध्यत्वप्राप्त्या एकस्य वस्तुनः अन्येन वस्तुना वैधर्म्यकथनं न स्यात् । नापि स्वप्नत्वं स्वप्नवदित्यनेनैव निर्वाहे स्वप्नादिवदित्यादिपदवैयर्थ्यापत्तेः । अतः बाध्यत्वमादिपदग्राह्यतावच्छेदकमिति वक्तव्यम् । तथात्वे स्वप्नादि-वदितिपदेन ये बाध्याः स्वप्नादयः इत्येवोक्तं स्यात तथाचाबाध्यानां सत्त्वेन श्रुत्युक्तानां स्वप्नार्थानामसत्त्वस्य अनेन सूत्रेणानुक्तत्वात् न सर्वेषां स्वप्नपदार्थानां मिथ्यात्वबोधकमिदं सूत्रमिति ।

अपि च ' य एष सुप्तेषु जागर्ति कामं कामं ' इतिश्रुतिः परब्रह्मण एव जाग्रद्वत् स्वप्नपदार्थस्रष्टृत्वं वक्तीति शङ्कराचार्यैरेव काठकभाष्ये व्याख्यातत्वेन जाग्रत्पदार्था इव स्वप्नपदार्थाः सत्या एव । तथाहि तद्भाष्यव्याख्याने प्रसङ्गादागतं (जीवकथनं) परिसमाप्य प्रकृतप्रतिपादनपरं उत्तरमित्याह यत्प्रतिज्ञातमिति " यत्प्रतिज्ञातं गुह्यं ब्रह्म वक्ष्यामीति तत् (ब्रह्म) आह ।

" य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वै तत् " (का. ५।८) य एष सुप्तेषु प्राणादिषु जागर्ति न स्वपिति; कथं? कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थं निर्मिमाणो निष्पादयन् जागर्ति, पुरुषो यः तदेव शुक्रं शुभ्रं शुद्धं तत् ब्रह्म न अन्यत् गुह्यं ब्रह्मास्ति तदेव अमृतं अविनाश्युच्यते सर्वशास्त्रेषु । किंच पृथिव्यादयो लोकाः सर्वे तस्मिन्=ब्रह्मण्याश्रिताः सर्वलोककारणत्वात् तस्य । तत् ब्रह्म, कश्चन नात्येति नातिक्रामति उ एव इति ।

एतेन यदुक्तं बल्लारीवेंकटरामशास्त्रिणा ' य एष सुप्तेषु ' इति वाक्यं ' योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ' इति जीवस्य पूर्वं प्रस्तुतत्वात् जीवप्रकरणमेवेति तन्निरस्तम् शङ्कराचार्यैरेवास्य वाक्यस्य ब्रह्मपरतायाः स्पष्टमभिधानात् ।

तथाच- यथा जाग्रत्पदार्थाः अबाध्याः घटपटादयः सत्याः बाध्याः शुक्तिरजतादयः असत्या इति द्विविधाः, तथा स्वाप्नार्थाः अपि अबाध्याः गजतुरगादयः सत्याः, बाध्याः जाग्रत्पदार्थाभेदादयः असत्याः इति द्विविधाः । ' स्वप्ने सच्च असच्च पश्यति ' इति श्रुतेः । ' जाग्रत्प्रत्ययाः मिथ्याविषयकाः प्रत्ययत्वात् स्वाप्नप्रत्ययवत् ' इत्यनुमानं अबाध्यगजतुरगादिस्वाप्नपदार्थविषयके व्यभिचारि इति स्वाप्नपदार्थविषयकज्ञानदृष्टांतेन प्रत्ययत्वहेतुना जाग्रत्प्रत्ययस्य मिथ्यार्थविषयकत्वं स्वाप्नपदार्थदृष्टांतेन वा जाग्रत्पदार्थानां मिथ्यात्वं वा न साधनार्हमिति प्रतिवाच्यं स्वाप्नवदेवेति बौद्धवत् पदार्थमिथ्यात्वविषयेदृष्टांतदानं शङ्करादीनामयुक्तमेवेति ।

' कथं त्वसत्येन वेदांतवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत । नहि रज्जुसर्पेण दष्टो म्रियते नापि मृगतृष्णिकांभसा पानावगाहनादिप्रयोजनं च क्रियते ' इति यः आक्षेपः कृतः स तु

युक्त एव । कारणस्य कार्याव्यवहितप्राक्क्षणवृत्तित्वपदार्थजनन-शक्तिमत्वादेरावश्यकत्वेन शशविषाणवत् त्रिकालेऽप्यसतः पदार्थस्य कार्याव्यवहितप्राक्क्षणवृत्तित्वशक्तिमत्वादेरसंभवेन असता वेदांतवाक्येन कस्यापि कार्यस्याजननात् । यच्च प्रदर्शितं असतः कार्योत्पत्तावुदाहरणं शङ्काविषादिनिमित्तकमरणादिकार्योपलब्धेः स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यदर्शनात् इति तदप्ययुक्तमेव । त्रिकालेऽप्यसति शङ्काविषे मरणाव्यवहितप्राक्क्षणवृत्तित्वस्य मरणजननानुकूल शक्तिमत्त्वस्य चासम्भवेन मरणकारणत्वासम्भवेन सत्याया विषशङ्काया एव मरणकारणत्वात् स्वाप्नपदार्थानां सत्यत्वेन कार्यजनकत्वसंभवेऽपि असतः कार्योत्पत्तौ तयोरुदाहरणत्वासम्भवात् ।

यच्च ‘ तत्कार्यमप्यनृतमेवेति चेद्ब्रूयात् ’ इत्याशङ्कितं तयोरुदाहरणत्वासम्भवं, ‘तत्र ब्रूमः यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतं, इति वाक्येन अभ्युपेत्य, ‘ तथापि तदवगतिः सत्यमेव फलं प्रतिबुद्धस्याप्यबाध्यमानत्वात् । न हि स्वप्नादुत्थितः स्वप्नदृष्टसर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानः तदवगतिमपि मिथ्येति मन्यते कश्चित् इति स्वाप्नावगतेः सत्यत्वमभिधाय, असतः सत्कार्योपपत्तौ तस्याः अवगतेरुदाहरणत्वमभिहितम् तदप्ययुक्तम् । तद्भाष्यव्याख्यातृभामतीकारा एव ‘ यद्यपि परीक्षका अनिर्वाच्यरूपितामवगतिमनिर्वाच्यां निश्चिन्वन्ति ( न सत्यां ) तथापि लौकिकाभिप्रायेणेदमुक्तम् इति शङ्कराचार्यैरभिहितां अवगतेः सत्यतां लौकिकाभिप्रायेण न परीक्षकदृष्टया इति निराचक्रुः । शङ्कराचार्या अपि अनुपदं असत्यात्सत्योत्पत्तेः श्रुतिसिद्धान्वयव्यतिरेकसिद्धतां दर्शयितुं प्रवृत्ताः । ‘असत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्रतिपत्तिं दर्शयति, इति कण्ठत एव स्वाप्नावगतेरसत्यतां

उक्तवन्त इति असत्यात्सत्यस्य कार्यस्योत्पत्तौ अवगतेरुदाहरणत्वासम्भवात् असत्यस्य कारणत्वासम्भवाच्च ।

यच्चोक्तं- असत्यात्सत्योत्पत्तिः श्रुतिसिद्धाऽन्वयव्यतिरेकसिद्धा चेत्याह । तथा च श्रुतिः "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" ( छां. ५।२।८ ) इत्यसत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्रतिपत्तिं दर्शयति, ... अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हंति इत्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यते इति दर्शयति, इति तदप्यसङ्गतम् । स्वप्नदर्शनं नासीत् इति बाधाभावेन स्वप्नदर्शनस्यासत्यत्वाभावात् ( सत्यत्वात् ) ।

यच्च 'तथाकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः' इति असत्यात् सत्कार्योत्पत्तावुदाहरणांतरं दर्शितं भाष्ये तदत्यन्तमसङ्गतम् । यतः रेखारूपं यदनृतमक्षरं तत्प्रतिपत्त्या अकारादिरूपं यत्सत्याक्षरं तत्प्रतिपत्तिर्दृष्टा इत्यनेन रेखाप्रतीत्यक्षरप्रतिपत्त्योरेव कार्यकारणभाव उक्तः न त्वनृतरेखायाः सत्याकाराक्षरप्रतिपत्तिकारणत्वं' इति । किंच रेखायाः असत्यत्वं 'यद्यपि रेखास्वरूपं सत्यं' इति भामतीकारैरेव निराकृतं इति असत्यात्सत्यकार्योत्पत्तौ अस्योदाहरणत्वासम्भवात् ।

यच्चोक्तं 'अपि चात्यन्तमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकं नातः परं किंचिदाकांक्ष्यमस्ति । यथा हि लोके यजेतेत्युक्ते किं तेन कथमित्याकांक्ष्यते नैवं तत्त्वमसि, अहं ब्रह्मास्मि इत्युक्ते किंचिदन्यदाकांक्ष्यमस्ति सर्वात्मैकत्वविषयत्वावगतेः । सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थे आकांक्षा स्यात् न त्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति य आकांक्ष्येत', इति तदप्ययुक्तम् । तत्त्वमस्यादिवाक्येन ब्रह्मज्ञानं न जायते किं नाम तदावरकाज्ञाननिवृत्तौ अभिव्यज्यते ।

तच्च ज्ञानं निर्विषयकं इत्युक्तत्वेन आत्मैकत्वप्रतिपत्तेर्डुलिक्षीरप्रायत्वात् । ननु ' न चेयमवगतिर्नोत्पद्यते इति वक्तुं शक्यं तद्धास्य व्यजज्ञौ, (छां. ६।१६।३) इत्यादि श्रुतिभ्यः अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधानात्, इत्युत्तरवाक्येनैव अवगत्युत्पत्तिः सकारणं साधिता इति कथं सा डुलिक्षीरप्राया इति चेन्न। तद्धास्य व्यजज्ञाविति वाक्यात्पूर्वं आत्मैकत्वविषयकप्रतिपत्तिजनकवाक्यस्याभावात् व्यजज्ञावित्यस्य आत्मैकत्वप्रतिपत्तिमान् इत्यर्थस्यासंभवाच्च । न च तद्धास्य व्यजज्ञाविति वाक्यात्पूर्वं आत्मैकत्वप्रतिपत्तिजनकं तत्त्वमसीति वाक्यमस्तीति वाच्यम् । तत्त्वमसिवाक्यस्यात्मैकत्वप्रतिपत्तिजनकत्वाभावस्यास्माभिरन्यत्रोपपादितत्वेन डुलिक्षीरप्रायताऽनिवारणात् । इदं सर्वं मनसि निधायैव भामतीकाराः आत्मैकत्वावगतेर्डुलिक्षीरप्रायतामाशङ्कितवन्तः ।

किंच श्रवणादयो नैतादृशावगतिसाधनानि भवितुमर्हंति इति प्रागेवावोचाम ।

यदप्युक्तं ' नचेयमवगतिरनार्थिका भ्रांतिर्वेति शक्यं वक्तुं अविद्यानिवृत्तिफलकत्वात् बाधकज्ञानान्तराभावाच्चेति ' तदप्ययुक्तं । आत्मैकत्वावगतेरविद्यानिवृत्तिफलकत्वे तस्यास्त्वदुक्तांत्यफलत्वायोगात । न च ' न हीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति येन नांत्या स्यात । किंत्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते अविद्यानिवृत्तिश्च न तत्कार्यतया फलमपि त्विष्टतया इष्टलक्षणत्वात्फलस्य इति' भामतीवाक्येन आत्मैकत्वावगतिरविद्यानिवृत्तिरूपैव नत्वविद्यानिवृत्तिफलकेत्युक्तत्वेन आत्मैकत्वावगतेः अंत्यफलत्वं संभवत्येवेति वाच्यम् । एवमुक्तेरनन्तदोषयुक्तत्वात् । तथाहि- ज्ञानेन हि स्वसमानविषयकस्वसमानाधिकरणज्ञाननिवृत्तिर्दृष्टेति अज्ञान-

निवृत्तौ जननीयायां तत्कारणतया पूर्वं अज्ञानसमानविषयकं तत्समानाधिकरणं आत्मैकत्वज्ञानमावश्यकम् तच्च ज्ञानं 'तत्त्वमसि इति वाक्याज्जायत इति न शक्यते वक्तुं अद्वैतिना; अंत्यफलत्वहानेः। तत्त्वमस्यादिवाक्यात् मुख्यवृत्त्या वा लक्षणाद्यमुख्यवृत्त्या वा तादृशज्ञानासंभवस्योक्तत्वाच्च। अद्वैतिभिस्तादृशज्ञानजनकत्वानङ्गीकाराच्च सविषयकज्ञानस्य अद्वैतमते भ्रांतित्वाच्च इति।

यच्चोक्तं "तदेवं अविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्य ईश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च न परमार्थतो विद्ययाऽपास्तसर्वोपाधिस्वरूपे आत्मनि ईशित्रीशितव्यसर्वज्ञत्वादिव्यवहार उपपद्यते। तथा चोक्तं 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छां. ७।२४।१) इति 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति 'तत्केन कं पश्येत्' (बृ. ४।१६।६) इत्यादिना च एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे' इति वाक्येन व्यवहारदशायामेव परमात्मनः ईशितृत्वसर्वज्ञत्वसर्वशक्तित्वादिकं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे' इति तन्न युक्तम् परमार्थावस्थायां व्यवहाराभावबोधकस्यैकस्यापि वेदांतवाक्यस्याभावात्। तथा हि यत्रत्वस्येति वाक्यं सर्वव्यवहाराभावं वदतामद्वैतिनां मतनिराकरणार्थमेव प्रवृत्तं मोक्षदशायां (परमार्थावस्थायां) पितृलोकगन्धमाल्यादिज्ञानपरमात्मज्ञानस्वज्ञानादिसर्वव्यवहारं स्थापयत्येवेति एतदधिकरणे पूर्वमुक्तम्।

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा इति ज्ञातृज्ञेयादिव्यवहारसद्भावबोधकत्वेन परमार्थदशायां सर्वव्यवहाराभावाबोधकत्वात्। यथा हि यत्र नान्यत्पश्यति इति वाक्यघटितं पूर्वोत्तरवाक्यमित्थम्– 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास'

इति। 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा 'अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पं यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यं,(छां.७।२४।१) इति । तस्य चार्थः- यो वै भूमा=महत् तत् सुखं ततोऽर्वाक् सातिशयत्वात् अल्पं अतः तस्मिन् अल्पे सुखं नास्ति अतः भूमैव सुखम् , तृष्णादिदुःखबीजत्वासम्भवात् भूम्नः अतो भूमैव विजिज्ञासितव्यः ' इति सनत्कुमारेण नारदं प्रत्युक्ते नारदः भूमलक्षणविषयकज्ञानेच्छां प्रदर्शयति 'भूमानं भगवो विजिज्ञास ' इति-भगवः पूज्य ' सनत्कुमार ! भूमानमहं विजिज्ञासे=ज्ञातुमिच्छामि' इति। सनत्कुमारो नारदं प्रति भूमलक्षणमाह यत्र नान्यत्पश्यतीत्यादिना ।

यत्र यस्मिन्, भूम्नि-तत्त्वे, अन्यत् न पश्यति, अन्यत् न शृणोति, अन्यत् न विजानाति पुरुषः स भूमा इति यत्र वस्तुनि अन्यत् पश्यति अन्यत् शृणोति अन्यद्विजानाति पुरुषः तदल्पम् ।

यो वै भूमा तदमृतं=अविनाशि, अथ यदल्पं तत् मर्त्यं विनाशीति, यत्र नान्यत्पश्यतीति वाक्येन सनत्कुमारेण भूम्नः किं लक्षणं उक्तं भवतीति शङ्करभाष्ये विचार्य 'अदृश्येऽनात्म्ये' इत्यादि-श्रुत्युदाहरणेन दर्शनश्रवणविज्ञानाविषयत्वं भूम्नः लक्षणं तच्च अन्येषां तु दर्शनश्रवणविज्ञानविषयत्वात् नातिव्याप्तमित्यभिहितमिति एतद्वाक्यं ब्रह्मणि (भूम्नि) दर्शनश्रवणविज्ञानविषयत्वमेव निराकरोति न तु परमार्थदशायां सर्वव्यवहाराभावं बोधयतीति परमार्थदशायां सर्वव्यवहाराभावविषये एतत्श्रुत्युदाहरणमयुक्तम् ।

यच्छ्रवणमननविज्ञानाविषयत्वमुक्तं तदपि न युक्तम् । ब्रह्मणः शशविषाणवत् अप्रामाणिकत्वेनासत्वप्राप्त्या सर्वात्मना ज्ञानाविषयत्वादेः वक्तुमशक्यत्वादित्यन्यत्रोक्तमत्रानुसंधेयम् ।

यच्चाप्युक्तं 'एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे' इति। तदयुक्तम् एकस्यापि वेदान्तवाक्यस्य सर्वव्यवहाराभावबोधकत्वाभावेन सर्वे इत्युक्तेरत्यन्तमसङ्गतत्वात्। वेदान्तानामपि सर्वव्यवहारान्तःपातित्वेन तेषामभावे (असत्त्वे) व्यवहाराभावबोधकत्वायोगात्। न हि वन्ध्यासुतः शशविषाणो वा किंचित्कार्यं कर्तुं शक्नोतीति शक्यते वक्तुं इति।

तथा ईश्वरगीतास्वपि 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः। न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः। अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जन्तवः॥ (गी. ५।१४।१५) इति 'परमार्थावस्थायां ईशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते' इति यदुक्तं तदप्ययुक्तम्। अस्यां स्मृतौ परमार्थावस्थाबोधकपदाभावात् ईशित्रीशितव्यादिव्यवहाराभावबोधकपदानामप्यभावात्। सर्वं भ्रमेण द्रष्टॄणामद्वैतिनां गीतायां तदर्थबोधकानां पदानां अविद्यमानत्वेऽपि विद्यमानतया वा तदर्थाप्रतिपादकानां पदानां तदर्थप्रतिपादकतया वा भ्रमेण भासनं 'गृहं भक्षयितुः पुंसः कवाटः पर्पटायते' इति न्यायेन नाश्चर्यावहम्। भ्रांतशिरोमणीनां भ्रांत्या गीतावाक्येन परमार्थावस्थायां सर्वव्यवहारासिद्धेः। वदन्ति च 'एष ह्येव साधु कर्मकारयति तं यमेतेभ्यो उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो निनीषते (कौ.ब्रा ३।७) 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृ.३।२।१३) इत्यादिश्रुतयः, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' (ब्र. सू. २।१।३४) इत्यादिसूत्राणि, 'ये यथा मां प्रपद्यन्ते तान् तथैव भजाम्यहम्' (गी. ४।११) इत्यादिगीतावाक्यानि च जीवानां कर्मकर्तृत्वं, परमात्मनः (ईश्वरस्य) प्राणि (जीव) कृतकर्मानुसारेण फलदातृत्वम्, स्वीकृतंच शङ्कराचार्यैः। वैषम्यनैर्घृण्ये इति [ब्र.सू

२।१।३४] सिद्धांतसूत्रभाष्ये जीवानां कर्मकर्तृत्वं जीवकृतकर्मानुसारेण फलदातृत्वमीश्वरस्य एतानि श्रुतिसूत्रगीतावाक्यानि वदन्तीति। एष ह्येव साधु कर्म कारयति तं यं एतेभ्यो उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यं अधो निनीषते इति श्रुत्यर्थस्तु-यं जनं उन्निनीषते= ऊर्ध्वं नेतुमिच्छति तं साधु कर्म कारयति ईश्वर यं अधो निनीषते= अधः नेतुमिच्छति तं असाधु कर्म कारयत्येष ईश्वरः इति। एतया च श्रुत्या जनस्य (लोकस्य) कर्मकर्तृत्वं सृजति तैः कर्माणि सर्जयतीति सिद्धयति।

'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' (बृ. ३।२ १३)पुण्येन=स्वकृतपुण्यकर्मणा पुण्यः=स्वर्गादिपुण्यलोकवान् भवति। पापेन=स्वकृतपापकर्मणा पापः—नरकादिपापलोकवान् भवतीति श्रुति-रपि.जनानां पुण्यकर्मकर्तृत्वं पापकर्मकर्तृत्वं स्वकृतेन पुण्यकर्मणा पापकर्मणा च पुण्यपापलोकप्राप्तिं च कथयति।

'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति गीताऽपि ये मनुष्याः यथा यत्फलार्थितया मां भजंते मत्प्रीतिकरं कर्म कुर्वंति तान् तथैव तत्फलदानेन भजामि-अनुगृह्णामि इति, जीवानां तत्तत्फ-लेच्छया कर्मकर्तृत्वं तत्तत्कर्मानुसारेण ईश्वरस्य फलदातृत्वं च वक्ति इति।

'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः। न कर्मफल-संयोगं स्वभावस्तु प्रवर्तते॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः॥ अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥' (गी. ५। १४।१५) इति गीताश्लोकयोरर्थस्तु प्रभुः परमात्मा लोकस्य कर्तृत्वं÷ स्वतः कुर्वीति कर्तृत्वं (कर्तृत्वे स्वातन्त्र्यं) न सृजति। लोकस्य कर्माणि अदृष्टानि वा रथघटादीप्सितपदार्थान्वा न सृजति।

÷ शाङ्करभाष्ये कर्तृत्वं स्वतः कुर्वीति व्याख्यानं

स्वातन्त्र्येण लोकस्य कर्मफलसंयोगं कर्मणां फलानां च यः संयोगः सम्बन्धः (कार्यकारणभावरूपः) तं न सृजति। (एतत्कर्मण एतत्फलं प्रति कारणत्वं न नियमेन सम्भवति कदाचित्कर्मकरणे फलं जायते कदाचित् कर्मकरणे फलं न जायते इति कर्मफलयोः कार्यकारण-भावोऽपि ईश्वराधीन एव न तु लोकाधीनः (फलोत्पादनेऽपि जीवस्य स्वातन्त्र्यं नास्ति) तर्हि केन सर्वं जायते इति शङ्कायां स्वभावस्तु प्रवर्तते इत्युक्तम्। स्वभावः स्वतन्त्रो भावः परमात्मा सर्वव्यापारेषु प्रवर्तते सर्वान् व्यापारान् कारयति, इति (५।१४)।

समस्तव्यापारान् परमात्मा कारयति चेत् पुण्यपापानि तत्फलानि च तस्य स्युः इति शङ्कायां, प्रवृत्तम् – 'नादत्ते कस्य चित्पापं न चैव सुकृतं विभुः' इति। विभुः फलादिस्वीकारे अस्वीकारे च समर्थः परमात्मा कस्यचित् पापं=केनचित् पुरुषेण कृतं पापं, सुकृतं-पुण्यं च नादत्ते=न स्वीकरोति विभुत्वात् लोकैः कर्म कारयित्वापि स्वयं तत्तत्कर्मफलं नानुभवति इति। जीवानां कर्तृत्वे कर्म (रथघटादिपदार्थे) निर्माणे कर्मफलयोः कार्यकारणभावे स्वातन्त्र्याभावे कुतः अहं कर्ता इत्यादि मनुते इत्यत आह–'अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः' इति। ज्ञानं ज्ञायते अनेनेति ज्ञानं बुद्धिः। अज्ञानेनावृतं, तेन कारणेन जन्तवः=प्राणिनः 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥ तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृत-बुद्धित्वात् न स पश्यति दुर्मतिः॥ (गी. १८।१५।१६) इत्युक्त-प्रकारेण मुह्यन्ति। अहमेव कर्ता न मम कारयिता ईश्वरोऽस्तीत्या-दिभ्रमं प्राप्नुवन्तीति। तथा च यत्र नान्यत्पश्यति इत्यादिश्रुतयो वा न कर्तृत्वं न कर्माणि इत्यादिगीतावाक्यानि वा, परमार्थावस्थाय सर्वव्यवहारस्यासत्त्वं न बोधयन्ति; प्रत्युत 'एष सर्वेश्वर ए

भूताधिपतिरेष भूतपाल एष सेतुर्विधारणे एषां लोकानां असंभेदाय (बृ. ४।४।२२) इति ’ ‘ परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ...... स तत्र पर्येति जक्षन् क्रीडन् रममाणः ’ इत्यादिश्रुतयः, ‘ ईश्वरःसर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ’ इत्यादिगीतावाक्यानि च नियम्यनियमनादिसर्वव्यवहारं दर्शयन्ति । न च व्यवहारावस्थायां व्यवहारं दर्शयन्ति न तु परमार्थावस्थायामिति वाच्यम् । व्यवहार-दशायामित्यर्थबोधकपदाभावात् ।

‘ प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तते । अतात्विकत्वं नु तद्गोचरस्यान्यतो बाधकादवगन्तव्यं न पुनः सांव्यावहारिकं नः प्रामाण्यं नतु तात्त्विकमित्येव प्रवर्तते ’ इति वाक्येन भामतीकृता प्रमाणानां व्यावहारिकविषयतायाः खण्ड-नात् स्वेन रूपेणाभिनिष्पद्यत इति स्वरूपप्राप्तिमुक्त्वा मोक्षदशाया-( परमार्थावस्थाया ) मेव जक्षणक्रीडादिव्यवहारोक्तेः ।

यच्चोक्तं ‘ सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वं इत्याह । व्यवहाराभिप्रायेण स्याल्लोकवदिति ’ इति तदप्ययुक्तम् । सूत्रे तदर्थ-बोधकपदाभावात् । निर्णायकसूत्रप्रणेत्रा भगवता बादरायणेन सिद्धांतसूत्रेण प्रतिपादितस्यार्थस्य मिथ्यात्वापरपर्यायव्यावहारिकत्व-कथनायोगात् । तस्माज्जगतः ब्रह्म ( ज्ञान ) व्यतिरेकेणाभावबोधक-मद्वैतिमतं ज्ञानव्यतिरेकेण जगतोऽभावबोधकबौद्धमतमेव।२।१।१४।।

ननु भवतु अद्वैतमतं बौद्धमतं, तावता किं नः छिन्नमिति चेत् नाभाव उपलब्धेः इत्यादिसूत्रैः ज्ञानव्यतिरेकेण जगतः असत्त्वं बोध-यतां बौद्धानां मतं खण्डितम् । शङ्कराचार्यैरपि विज्ञानव्यतिरेकेणा-भावं बोधयतां मतस्य खण्डनपरतया इमानि सूत्राणि व्याख्यातानि चेति बौद्धमताभिन्नाद्वैतमतमपि खण्डितत्वादनुपादेयमेवेति ।

बौद्धाद्वैतमतयोः साम्यं तत्खण्डनप्रकारश्च लेशतः प्रदर्शयिष्यते।

शङ्कराचार्याणामद्वैतमतं शून्यवादिनां विज्ञानवादिनां च बौद्धानां मतमेव। शङ्कराचार्याभिमतपरापरतत्त्वयोः बौद्धाभ्युपगतपरापरतत्त्वाभ्यां वैलक्षण्याभावात् सालक्षण्यसद्भावाच्च। तथाहि-अपरतत्त्वविषये (जगद्विषये) तावत्सर्वतः सालक्षण्यं वैलक्षण्याभावं चाद्वैतिनां वचनैः प्रदर्शयामः। अद्वैतसिद्धिव्याख्याने—'वस्तुतो ब्रह्मभिन्ने शून्यवादिभिरस्माकं साम्यमिष्टमित्यपि बोध्यम्' इति वाक्येन, 'यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना च अद्वयवस्तुसामीप्यमुक्तं' इति गौडपादीयशाङ्करभाष्यवाक्येन, तथा 'ज्ञानमात्रं पारमार्थिकं तत्रैव ज्ञातृज्ञेयादि कल्पितमिति सौगतमतमेव भवताऽपि स्वीकृतम्' इत्यानन्दगिरीयवाक्येन च कण्ठोक्त्यैव ब्रह्मातिरिक्तापरतत्त्वविषये ऐक्यं तयोर्मतयोरुक्तम्।

किंच, 'स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदांतेषु विचक्षणैः॥ २१
न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥ २२॥'

इति गौडपादीयकारिकयोः, तथा-

'यथा माया यथा स्वप्नो गन्धर्वनगरं यथा।
यथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतः॥'

इति बौद्धीयमाध्यमिकवृत्तिश्लोकस्य, 'यदेतद्द्वैतस्यासत्त्वमुक्तं युक्तितस्तद्वेदांतप्रमाणावगतमित्याह स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः। यथा च प्रसारितपण्यापणगृहप्रासादस्त्रीपुञ्जनपदव्यवहाराकीर्णमिव गन्धर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टं यथा च स्वप्नमाये दृष्टे असद्रूपे तथा विश्वमिदं द्वैतं समस्तमसत् दृष्टं। न निरोधः निरोधनं

निरोधः प्रलयः, उत्पत्तिर्जननं, बद्धः संसारी जीवः, साधकः साधनान्मोक्षस्य, मुमुक्षुर्मोचनार्थी, मुक्तो विमुक्तबन्धः। उत्पत्तिप्रलययोरभावाद्बद्धादयो न सन्ति इत्येषा परमार्थता। कथमुत्पत्तिप्रलययोरभाव इति उच्यते–द्वैतस्यासत्त्वात्...सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतश्शशविषाणादेः' इति गौडपादीयशाङ्करभाष्यस्य च पर्यालोचनयापि स्पष्टमिदमवगम्यते ब्रह्मातिरिक्तस्य द्वैतप्रपञ्चस्य शशविषाणादिवदसत्त्वमेवाभिमतं बौद्धाद्वैतिनोरिति।

किंच इममेवार्थं वदति सिद्धांतलेशसंग्रहव्याख्यानमपि। तत्र सृष्ट्यादिश्रुतिप्रतिपाद्यस्य वियदादिसृष्टितत्क्रमादेश्शशशृङ्गायमाणतया आलम्बनाभावेन श्रुतेरप्रामाण्यमाशङ्क्य, ब्रह्मप्रमितिजनकत्वेन प्रामाण्यं प्रदर्श्य, श्रुतिमात्रप्रतीतवियदादिसर्गतत्क्रमादेरिव श्रुतिमात्रप्रतीतस्वर्गादिफलस्याप्यसत्त्वमेवाभिप्रेतं कल्पकाभावस्य तुल्यत्वात्' इति वाक्येन असत्त्वमेव वियदादेर्व्यवस्थापितत्वात् ब्रह्मप्रमितिजनकत्वेन यत्प्रामाण्यं वेदस्य प्रदर्शितं तदपि न सम्भवति ब्रह्मणः अज्ञेयत्वेन तत्प्रमितेरेवानुदयात् इति। एवमेव बृहदारण्यभाष्यव्याख्यानेऽपि 'द्वैतवैतथ्ये शास्त्रप्रामाण्यविघातमाशङ्क्य 'न द्वैतवैतथ्यं शास्त्रप्रामाण्यविघातकं, यतो बौद्धादिभिः श्रेयसे प्रस्थापिताः स्वशिष्याः द्वैतमिथ्यात्वावगमेऽपि स्वर्गकामश्चैत्यं वंदेत इत्यादिशास्त्रस्य प्रामाण्यं गृह्णन्ति तथा अग्निहोत्रादिशास्त्रस्यापि प्रामाण्यं भविष्यति इति वाक्येन बौद्धाभिमतमेव मिथ्यात्वं जगतोऽभिमतमद्वैतिनामिति ज्ञायते।

ननु सर्वस्यापि वियदादिप्रपञ्चस्य स्वप्नतुल्यत्वे तद्विज्ञानात्मकमेव सर्वं वक्तव्यं ततश्च विज्ञानवादिसमयप्रवेशापत्तिः इति शङ्कते।

ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययं च भगवत्समयः।
यदि बाह्यवस्तु वितथं नु कथं समयाविमौ न सदृशौ भवतः॥

यदि बोध एव परमार्थवपुर्न तु बोध्यमित्यभिमतं भवति ।
ननु चाश्रितं भवति बुद्धमुनेर्मतमेव कृत्स्नमिह मस्करिभिः ॥

नन्विति । शाक्यो जिनबौद्धो विज्ञानवादी तत्सिद्धांतेनेत्यर्थः । भगवतः भगवत्पादादेः (शङ्करादेः) समय इत्यर्थः । ननु विज्ञानवादिना वेदप्रामाण्याद्यनभ्युपगमात् कथं तदभ्युपगन्तृभगवत्समयस्य तत्समयतुल्यतेति चेत्सत्यम् । तथापि विज्ञानातिरिक्तविज्ञेयानभ्युपगमे कथं न तत्तौल्यं तेनापि तथैवाङ्गीकारादित्याह यदीति । बाह्यं विज्ञानातिरिक्तं वस्तु विथतं अलीकं कथं न्विति सम्बन्धः । इति सर्वज्ञमुनिमधुसूदनसरस्वतीकृतसंक्षेपशारीरकतद्व्याख्यानवचनाभ्यां चावगम्यते विज्ञानवादिनामिवाद्वैतवादिनामपि विज्ञानातिरिक्तस्य जगतोऽलीकत्वमेव अभिमतमिति ।

बौद्धानां तत्त्वसंग्रहनामकग्रन्थे—

" नित्यज्ञानविवर्तोऽयं क्षितितेजोजलादिकः ।
आत्मा तदात्मकश्चेति सङ्गिरंते परे पुनः ॥
तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः । '

इति वाक्येन क्षितितेजोजलादिबाह्यपदार्थानां विज्ञानकल्पितत्व (मिथ्यात्व) मभ्युपगच्छतामद्वैतिनां विज्ञाननित्यताभ्युपगममात्रमल्पापराधः इति दर्शितम् । तेनापि ज्ञायते जगद्विषये विज्ञानवादिमतमेवाद्वैतमतमिति ।

ये तु रज्जुसर्पादिवत् प्रपंचस्यात्यन्ततुच्छत्वं (असत्त्वं) इच्छंति ते तु बौद्धप्रभेदा एव । 'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते' इत्यादिपद्मपुराणवचनात् 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' इति गीतावचनादिति विज्ञानभिक्षुवाक्येन, अद्वैतिनो बौद्धा इव जगतोऽसत्त्वमभ्युपगच्छन्तीत्यवगम्यते ।

तथा 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र.सू. २।२।२९) इति सूत्रस्य जगतः असत्त्वनिराकरणपरे स्वकृतभाष्ये 'ये तु बौद्धमतावलंबिनो मायावादिनस्तेऽप्यनेनैव न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः' इति जगतोऽसत्त्वनिराकरणेन मायावादिनां निरस्तत्वं वदन् भास्कराचार्योऽपि अद्वैतिनां बौद्धानामिव जगतोऽसत्ववादित्वमेवाभिप्रैति इति अपरतत्त्वविषये तयोरैक्ये न कोऽपि संशयस्तत्तद्ग्रन्थान् पर्यालोचयताम् इति ।

परतत्त्वविषयेऽपि साम्यं बौद्धाद्वैतवादिनोः । अद्वैतिनां मते निर्विशेषं ब्रह्म तत्त्वं शून्यवादिनां मते निर्विशेषं शून्यं तत्त्वमिति तयोर्भेदाभावः ।

सहस्रनामभाष्ये शङ्कराचार्यैः ब्रह्मणि शब्दप्रवृत्तिकथनप्रस्तावे 'निर्विशेषत्वाच्छून्यवच्छून्यः' इति ब्रह्मणश्शून्यवन्निर्विशेषत्वस्योक्तत्वात्।

किंच 'यस्मिन्न कश्चिद्विशेषोऽस्ति नाम वा रूपं वा गुणो वा कर्म वा भेदो वा जातिर्वा' इति (बृ.शां.भा. २।३।६) ब्रह्मणि-यत्किञ्चित्प्रतियोगिकस्यापि भेदरूपविशेषस्य निषेधात् ।

अपि च यद्धि यतो व्यावर्तते तत् तद्व्यावर्तकधर्मयोगेनैव ततो व्यावृत्तं दृष्टम् । यथाघटात्पटः । न च ब्रह्मशून्ययोः कश्चिद्व्यावर्तकधर्मोऽस्ति । उभाभ्यां शून्यब्रह्मणोर्निर्विशेषत्वाङ्गीकारात् ।

नापि ब्रह्मणः सत्यत्वज्ञानत्वादिधर्मत्वेन सत्यत्वज्ञानत्वादिधर्मरहितात् शून्यात् भेदः । अद्वैतिभिर्ब्रह्मणि सत्यत्वज्ञानत्वादिधर्माणामनङ्गीकारात् ।

न च सत्यत्वज्ञानत्वादिधर्माणामभावेऽपि 'अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धम्' । (संक्षेपशा.) इति वाक्येन असत्यादिव्यावृत्तिधर्माणां ब्रह्मणि सत्त्वावगमेन शून्याद्भेदसिद्धिरिति वाच्यम् । शून्येऽपि 'जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत्' इति

बौद्धग्रन्थेन असत्यादिव्यावृत्यादिधर्माणां सत्वावगमेन असत्याद्यावृ-त्यादिधर्मैरपि भेदासिद्धेः।

ननु ब्रह्मेति शून्यमिति संज्ञाभेदात् संज्ञाभेदन्यायेन शून्य-ब्रह्मणोर्भेदसिद्धिरिति चेन्न। निमित्तभेदरहितसंज्ञाभेदस्य एकस्यैव घटस्य घटकरीरकलशादिसंज्ञाभेदवत् अर्थवैलक्षण्याप्रयोजकत्वात्। तथाहि- ब्रह्मशब्दस्य ब्रह्मणि मुख्यवृत्तिरमुख्यवृत्तिर्वा ?। मुख्यवृत्ति-रित्याद्यपक्षेऽपि योगो वा रूढिर्वा योगरूढिर्वा ?।नाद्यः। ब्रह्मशब्द-स्य यौगिकार्थो हि बृंहणकर्तृत्वादिकं 'अथ कस्मादुच्यते ब्रह्मेति बृंहति बृंहयति चेति श्रुतेः। न च तद्युक्तं, ब्रह्मणः अद्वैतिमते, निर्विशेषत्वाङ्गीकारात्। न च देशकालवस्तुपरिच्छेदराहित्यरूपं महत्त्वं ब्रह्मशब्दप्रवृत्तिनिमित्तं तच्चास्ति ब्रह्मणीति ब्रह्मशब्दस्य ब्रह्मणि योगः सम्भवतीति वाच्यम्। देशकालवस्तुपरिच्छेदराहित्यरूपप्रवृत्ति-निमित्तस्य 'जाड्यावृतिदुःखांतपूर्वदोषविरोधि यत्' इति तैश्शू-न्येऽपि सत्त्वाङ्गीकारात् तस्य शून्यव्यावर्तकत्वासंभवात्।

नापि रूढिरिति द्वितीयः पक्षः असिद्धेः अपसिद्धांताच्च। यथा घटादिशब्दानां घटत्वादिकं प्रवृत्तिनिमित्तमेवं ब्रह्मण्यपि ब्रह्मशब्दप्रवृत्तिनिमित्तं किंचिद्वाच्यम्। न च तद्युक्तं निर्विशेषत्वात्। एतेन योगरूढिरिति तृतीयः पक्षः परास्तः। योगप्रवृत्तिनिमित्तस्य रूढिप्रवृत्तिनिमित्तस्य चाभावात्।

ब्रह्मणि शब्दानां नामुख्यवृत्तिरपि संभवति। अमुख्यवृत्तिर्हि द्विधा गौणी लक्षणा चेति। प्रवृत्तिनिमित्तातिरिक्तमुख्यार्थगुणयोगे हि गौणी दृष्टा। न च निर्विशेषे ब्रह्मणि गुणयोगोऽस्ति इति न ब्रह्मशब्दस्य ब्रह्मणि गौणी वृत्तिः।

नापि लक्षणा। मुख्यार्थसम्बन्धिनि अर्थान्तरे वृत्तिर्हि लक्षणा। 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या असङ्गत्वेनाङ्गीकृते

निर्विशेषे अद्वैत्यभिमते ब्रह्मणि मुख्यार्थसम्बन्धो ह्यसंभवीति न लक्षणयाऽपि ब्रह्मणि ब्रह्मशब्दप्रवृत्तिरिति शून्यब्रह्मशब्दयोः शून्ये ब्रह्मणि च प्रवृत्तौ निमित्ताभावेन निष्प्रयोजकसंज्ञाभेदस्य अर्थभेद-सम्पादकत्वाभावात् ।

किं च 'शून्यवादिपक्षस्तु सर्वप्रमाणप्रतिषिद्ध इति तन्निरा-करणाय नादरः क्रियते ' इति शाङ्करभाष्यव्याख्याने ब्रह्मविद्या-भरणे 'शून्यपदेन सर्वप्रपञ्चातीतं भावरूपं किंचित्तत्त्वं विवक्षितम्, उताभावरूपम् । नाद्यः तथा सति वाचोयुक्त्यन्तरेण ब्रह्मवादः एवाश्रितः स्यात् इति तन्निराकरणाय न सूत्रकृता सूत्राण्यारचितानि' इति वाक्येन शून्यवादिमताद‌द्वैतमतस्य अपरप्रमेये ( जगद्विषये ) साम्यमङ्गीकृत्य परप्रमेयेऽपि शून्यब्रह्मणोरितरविषये वैलक्षण्याभाव-मङ्गीकृत्य भावाभावरूपत्वविषय एव विवादं सूचयित्वा शून्यस्य भावरूपत्वे 'वाचोयुक्त्यन्तरेण ब्रह्मवाद एवाश्रितः' इति बौद्धैः शून्यस्य भावरूपत्वाङ्गीकारे भावरूपाच्छून्यात् भावरूपब्रह्मणः भेदाभावः जगद्विषये उभाभ्यां कल्पितत्वाङ्गीकारात् उभयोर्मतयोर्भेदाभावः सिद्ध एवेति न शून्यवादिमतनिराकरणं कर्तव्यमस्माभिः अद्वैतिभिरिति स्वीकृतमुभयमतैक्यम् ॥

शून्यस्याभावरूपत्वाङ्गीकारे 'तदा सर्वप्रमाणविरोधः । सर्व-प्रमाणैः प्रपञ्च उपलभ्यमाने तदभाव एव तत्त्वमिति निरूपयितुमशक्य-मिति दूषणस्य स्फुटतया तन्निराकरणाय न सूत्रकृता सूत्राण्यारचि-तानि ' इति वाक्येन शून्यस्य प्रपञ्चाभावरूपत्वे सर्वप्रमाणविरुद्ध-त्वेन साधयितुमशक्यं बौद्धेनेति, 'मृतमारणमिव न निराकरणार्ह-मपि, इति सूत्रकारः न तन्मतनिराकरणाय सूत्राणि रचयामास ' इति यदुक्तं ब्रह्मविद्याभरणकारैः तदपि अद्वैतमते समम् ( न केवलं परापरतत्त्वविषये बौद्धाद्वैतमतयोः साम्यं मृतमारणवदेव निराकर-णानर्हत्वेऽपि समम् ।

प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वात् निषेधस्य तात्त्विकत्वेऽपि नाद्वैतहानिकरत्वमित्येतदद्वैतासिद्धौ, तथा अस्माभिरपि ब्रह्मातिरिक्ताभावानङ्गीकारात् नाद्वैतव्याघात इति खण्डनखण्डखाद्यव्याख्यायामन्यग्रन्थेषु च अद्वैतिभि ब्रह्मणः प्रपञ्चाभावरूपत्वाङ्गीकारात् इति ।

आखंडलार्थस्तु जगतः कल्पितत्वं तु अद्वैतिवादिशून्यवादिभ्यामङ्गीकृतमिति नापरप्रमेये उभयमतयोर्भेदः । शून्यस्य भावरूपत्वे अद्वैत्यभिमतब्रह्मणोऽपि भावरूपत्वात् वाचोयुक्त्यन्तरेण (शब्दभेदेन) शून्यवादिना ब्रह्मवादः एवाश्रितः भावरूपशून्यब्रह्मणोर्भेदाभावादिति ।

शून्यस्य प्रपञ्चाभावरूपत्वे अद्वैत्यभिमतब्रह्मणोऽपि प्रपञ्चाभावरूपत्वमद्वैतिभिः स्वीकृतमिति तत्पक्षेऽपि शून्यवादिमतात् न ब्रह्मवाद्यद्वैतमतस्य भेद इति ।

ज्ञानमात्रं पारमार्थिकं तत्रैव ज्ञातृज्ञेयादि कल्तिमिति सौगतमतमेव भवता संगृहीतमित्याशङ्क्याह ज्ञानमिति (आनंद०)

ज्ञानं नैतद्बुद्धेन भाषितं ( गौ. का. )

यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना च अद्वयवस्तुसामीप्यमुक्तम् । इति वाक्यैः अद्वैतमतस्य बौद्धमतेन अपरतत्त्वविषये संपूर्णं साम्यमङ्गीकृत्य ' इदं तु परमार्थतत्त्वमद्वैतं वेदांतेष्वेव विज्ञेयं । ' ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम् ' ( गौ. शां. भा. ) इति भाष्येण– तथा ' सकलभेदविकलं परिपूर्णमनादिनिधनं ज्ञप्तिमात्रं उपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते मतांतरेषु नैवमिति कुतो मतसाङ्कर्यशङ्का अवकाशमासादयेत् इत्यर्थ इति शाङ्करभाष्यव्याख्यानेन च परतत्त्वविषये यत्किञ्चिद्वैलक्षण्यमिव प्रदर्शयामासुः । तद्वैलक्षण्यमपि न संभवतीति पूर्वं प्रदर्शितमेव

किंचित् स्मार्यते । तथा हि अद्वैतब्रह्मवत् निर्विशेषत्वात् शून्यमपि सकलभेदविकलं; यथा ब्रह्म देशकालादिपरिच्छेदराहित्यरूपपूर्णत्ववत् तथा शून्यमपि देशकालादिपरिच्छेदराहित्यरूपपूर्णत्ववत् । 'जाड्य-संवृतिदुःखान्तपूर्वदोषविरोधि यत्' इत्युक्तेः । अद्वैतब्रह्मवत् शून्यमप्यनादिनिधनं, (उत्पत्तिनाशशून्यं) यथा अद्वैत्यभिमतं ब्रह्म ज्ञप्तिमात्रं ज्ञानरूपं यथा शून्यमपि ज्ञप्तिमात्रम् (ज्ञानरूपम्) ।

यदुक्तमद्वैत्यभिमतं ब्रह्म उपनिषदेकसमधिगम्यं शून्यं तु नोपनिषत्समधिगम्यमिति न तद्युक्तम् । अद्वैत्यभिमतब्रह्मणि निर्विशेषत्वाङ्गीकारेण शब्दप्रवृत्तिहेतूनां धर्माणामभावादज्ञेयत्वाच्च । उपनिषत्समधिगम्यत्वस्य शून्यवदेव असम्भवात् न तेनापि धर्मेण वैलक्षण्यं शून्यस्य कथनार्हमिति न शून्यब्रह्मणोरुभयमते भेद इति ।

किं च 'ननु सर्वस्यापि वियदादिप्रपञ्चस्य स्वप्नतुल्यत्वे तद्विज्ञानात्मकमेव सर्वं वक्तव्यं ततश्च विज्ञानवादिसमयप्रवेशापत्ति-रिति शङ्कते नन्विति ।'

ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययं च भगवत्समयः ।
यदि बाह्यवस्तु वितथं नु कथं समयाविमौ न सदृशौ भवतः ॥

शाक्यो जिनबौद्धो विज्ञानवादी समयन तत्सिद्धांतेनेत्यर्थः । भगवतो व्यासभगवत्पादादेः समय इत्यर्थः । ननु विज्ञानवादिना वेदप्रामाण्याद्यनभ्युपगमात् कथं तदभ्युपगंतृभगवत्समयस्य तत्समय-तुल्यतेति चेत्सत्यम् । तथाऽपि विज्ञानातिरिक्तज्ञेयानभ्युपगमे कथं न तत्तौल्यं तेनाऽपि तथैवाङ्गीकारादित्याह यदीति । बाह्यं विज्ञानातिरिक्तं वस्तु वितथमलीकं कथं न्विति सम्बन्धः ।

यदि बोध एव परमार्थवपुर्न तु बोध्यमित्यभिमतं भवति ।
ननु चाश्रित भवति बुद्धमुनेर्मतमेव कृत्स्नमिह मस्करिभिः ॥

यदि बोध इति। अभिमतमिति भवतामिति शेषः। मस्करिभिरेकदण्डिभिः। इति संक्षेपशारीरके मधुसूदनसरस्वतीकृते तद्व्याख्याने च अद्वैतमतस्य विज्ञानवादिबौद्धमतेन वेदाप्रामाण्यादिसर्वविषये साम्यमाशङ्क्य अद्वैतमते-

" ननु मातृमानविषयावगतीरपरस्परं प्रति विभागवतीः।
उपयन् भदन्तमुनिना सदृशः कथमेष वैदिकमुनिर्भवति॥ "

नन्विति निश्चये। माता अन्तःकरणविशिष्टः प्रमाता, मानं चक्षुरादि, विषयो रूपादिः अवगतिः रूपाद्याकारा चक्षुरादिजन्यांतःकरणवृत्तिस्ता इत्यर्थः। अपरस्परमन्योन्यं उपयन्नङ्गीकुर्वन्-भदन्तो बौद्धस्तेन मुनिना विज्ञानवादिनेति यावत्। वैदिकमुनिर्वेदोक्तसन्यासी श्रीशङ्कराचार्य इति यावत्' इति वाक्येन मातृमानविषयावगतीनामङ्गीकारात् बौद्धमते तदनङ्गीकारात् भेदमिव प्रदर्श्य 'ननु भवताऽपि परस्परं मातृमानादिप्रपञ्चोऽभ्युपगतश्चेत् कथमात्मनो निष्प्रपञ्चाद्वयत्वमित्याशङ्क्य तस्यात्मनि तदज्ञानकल्पितत्वान्न चाद्वैतक्षतिर्न वा विज्ञानवादादविशेष इत्याशयेनाह परमात्मसंश्रयेति' इति वाक्येन मातृमानादीनां सत्यानामङ्गीकारे अद्वैतभङ्गभिया मातृमानादीनां मिथ्यात्वं ( कल्पितत्वं ) अङ्गीकृत्य अद्वैतविरोधे परिहृते पुनरागतः बौद्धमताविशेषरूपः पिशाचः। बौद्धैरपि बुद्धिकल्पितमातृमानफलव्यवहारः स्वीकृत इति। उक्तं च बौद्धमतानुवादावसरे शङ्कराचार्यैः। ' तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन (बुद्धिकल्पितेन) रूपेण अंतस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते। उक्तं च भामतीकारैः ' यद्यपि अनुभवात् नान्योऽनुभाव्यमनुभविता अनुभवनं तथापि बुद्ध्यारूढेन=बुद्धिपरिकल्पितेन अंतस्थ एवैष प्रमाणप्रमेयफलव्यवहारः प्रमातृव्यवहारश्चेत्यपि द्रष्टव्यम्। न पारमार्थिक इत्यर्थ इति।

आनंदगिरिकृतन्यायनिर्णये च ‘ ज्ञानमेव कल्पितनीलाद्याकारतया मेयम् । अवभासात्मकतया फलं ’ तच्छक्त्यात्मतया मानं तदाश्रयतया मातेति विज्ञानवादेऽपि कल्पितमानादिभेदमुपेत्य सर्वव्यवहारसिद्धिरित्यर्थ ’ इति । तथा च अद्वैतिभिरेव सर्वविषये बौद्धसाम्यमङ्गीकृतमिति अद्वैतमतं विज्ञानवादिबौद्धमतमेव । तच्च बौद्धमतं शङ्कराचार्यप्रभृतिभिः प्रत्यक्षादिप्रमाणविरुद्धत्वात् निराकृतमिति नाद्वैतिभिरपि उपादेयं बौद्धमतं हेयमन्यैः । (२।१।१४)

ॐ भावे चोपलब्धेः ॐ

इदं सूत्रं ‘ इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव कारणस्य कार्यमुपलभ्यते । तद्यथा मत्यां हि मृदि घट उपलभ्यते ’ इति शङ्कराचार्यव्याख्यानानुसारेण जगदुपादानकारणभूतायाः प्रकृतेः जगदभेदं बोधयति न तु निमित्तकारणस्य ब्रह्मणः इति जगतो ब्रह्मानन्यत्वे=ब्रह्मव्यतिरेकेणाभावे प्रमाणं भवितुं नार्हति ।१५।

ॐ सत्त्वाच्चावरस्य ॐ

इति सूत्रं ‘ इतश्च कारणात्कार्यस्यानन्यत्वं, यत्कारणं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते सदेव सोम्येदमग्र आसीत् ( छां. ६।२।१ ) ‘ आत्मा वा इदमेक एवाग्र आसीत् ’ ( ऐ. आ. २।४।१ ) इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात् । यच्च यदात्मना यत्र न वर्तते न तत्तत उत्पद्यते, यथा सिकताभ्यस्तैलम् । तस्मात्प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात्कार्यमित्यवगम्यते । यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरत्येवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति । एकं च पुनः सत्त्वमतोऽप्यनन्यत्वं कारणात्कार्यस्य ’ इति व्याख्याय, कार्यस्य जगतः ब्रह्मानन्यत्वं ( ब्रह्मव्यतिरेकेणाभावं ) यत्कथयामासुः

तदयुक्तम्। तथाहि- यत्तु कारणादनन्यत्वं कार्यस्येति तत्तु उपादानकारणविषयं न तु निमित्तकारणविषयम्। घटस्य निमित्तकारणेन कुलालेनानन्यत्वादर्शनात्। निर्विकारं ब्रह्म जगत्प्रति निमित्तकारणमेव न तु परिणाम्युपादानकारणमिति प्रतिपादितं प्राक्। ब्रह्मणो जगत्प्रति विवर्तोपादानत्व ( जगत्प्रकारकभ्रमविशेष्यत्व ) मपि न सम्भवति। ब्रह्मणि जगद्भ्रमविशेष्यत्वप्रयोजकानां सामान्यधर्मविशेषधर्मजगत्सादृश्यादीनां मध्ये एकस्याप्यभावात्। तुष्यत्विति न्यायेन विवर्तोपादानत्वाङ्गीकारेऽपि रजतविवर्तोपादानभूतशुक्त्यनन्यत्वस्य रजते असंभववत् जगतः विवर्तोपादानभूतब्रह्मानन्यत्वस्यापि असंभवात्। नच रजते शुक्त्यभेदरूपशुक्त्यनन्यत्वस्यासम्भवेऽपि शुक्तिव्यतिरेकेणाभावरूपं शुक्त्यनन्यत्वं सम्भवतीति तद्वदेव ब्रह्मव्यतिरेकेणाभावरूपं ब्रह्मानन्यत्वं ब्रह्मण्यारोपितस्य जगतः सम्भवतीति वाच्यं। केनापि रूपेण कालत्रयेऽप्यसतः शुक्तौ प्रतीयमानस्य रजतस्य शुक्तिव्यतिरेकेणाभाव इति विशेषरूपेण निषेधायोगवत् त्रिकालेऽप्यसतः जगतः ब्रह्मव्यतिरेकेणाभाव इति विशेषरूपेण निषेधायोगात् ब्रह्मव्यतिरेकेण नास्तीति विशेषरूपेण निषेधे ब्रह्मरूपेणास्तीति प्रतीतेः। तच्चायुक्तम्। मिथ्याभूतस्य जगतः सत्यभूतब्रह्मरूपत्वासम्भवात्।

'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं......तदैक्षत' (छां. ६.२.१) इति श्रुतिस्तु, इदं कार्यं जगत् अग्रे सृष्टेः पूर्वं सदेव ब्रह्मरूपमेवासीदिति कार्यस्य सृष्टेः पूर्वं सद्रूपत्वं(ब्रह्मरूपत्वं)न वक्ति। मिथ्याभूतस्य (कल्पितस्य) सद्रूपत्वा (ब्रह्मरूपत्वा) नुपपत्तेः। इदं—शब्दस्य विशेष्यत्वे 'तदैक्षत' 'तत्तेजोऽसृजत' इत्युत्तरवाक्येऽपि तच्छब्देन विशेष्यस्यैव ग्रहणीयत्वेन तत्=कार्यमैक्षत। तत्=कार्यं तेजः असृजत इति कार्यस्यैवेक्षितृत्वसर्जनकर्तृत्वापत्तेः। आपो वा इदमग्र आसुः इति श्रुतावपि इदंशब्दनिर्दिष्टस्यैव विशेष्यत्वापत्त्या

इदं आसुः इति एकवचनांतबहुवचनांतयोर्विशेषणविशेष्यभावानुपपत्तेः। 'यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्व न व्यभिचरति' इत्युक्तिस्तु स्वमतविरुद्धा। तथा हि अद्वैतमते घटपटादिसर्वजगतः नास्ति नासीत् न भविष्यति इति बोध्यमानत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वाङ्गीकारेण एकस्मिन्नपि काले असतः त्रिकालेषु सत्त्वोक्तिः स्वमतविरुद्धा। न हि यथा शुक्तिकायामारोपितं रजतं शुक्तिकावत् यस्मिन् कस्मिंश्चित् कालेऽपि सत् , नापि शुक्त्यभिन्नं, तथा ब्रह्मणि आरोपितं जगत् यस्मिन् कस्मिंश्चिदपि काले न सत् भवितुमर्हति नापि ब्रह्माभिन्नम् 'द्वैतस्यासत्वं सिद्धम् सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः' इत्यादि गौडपादीयभाष्ये जगतः शशविषाणवत् असत्त्वोक्तेः असद्भूतस्य जगतः सत्यब्रह्मणा अभेदो न युक्तः ।२।१।१६॥

ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ

इति सूत्रस्य– 'असदेवेदमग्र आसीत्' (छां. ३।१९।१) इति श्रुतिः; असद्वा इदमग्र आसीत्' (तै.२।७।१) इति श्रुतिश्च-अग्रे सृष्टेः प्राक् इदं जगत् असत् आसीदिति जगतः असत्वं बोधयतीति न कार्यस्य जगतः कारणीभूतब्रह्मानन्यत्वमित्याशंक्य, जगतः असत्वकथनं न अत्यन्तासत्वाभिप्रायेण (स्वरूपाभावाभिप्रायेण) किं तु अव्याकृतनामरूपत्वाभावाभिप्रायेण, नामरूपव्याकृतवस्तुन एव सच्छब्दार्हत्वात्। 'असदेवेदमग्र आसीत् इत्यादौ असत्त्वेन व्यपदिष्टस्यैव 'तत्सदासीत्' इति वाक्यशेषे सत्त्वेन कथनात्। तथा 'आत्मानं स्वयमकुरुत' (तै. २।७।७।१) इति वाक्यशेषे उक्तस्य अकुरुतेति क्रियमाणत्वविशेषणस्य असत्यसम्भवात्। 'असदेवेदमग्र आसीत् असद्वा इदमग्र आसीत्' इत्यत्र श्रुतस्य असदासीदित्यस्य

असदिव आसीदित्यर्थकत्वेन कार्यस्य पूर्वं सत्त्वाभावावगमेन कारणीभूताद्ब्रह्मणः कार्यस्य अनन्यत्वमेवेति यदर्थवर्णनं तदप्ययुक्तमेव ।

'असदेवेदमग्र आसीत् तत्सदासीत्' इति श्रुतिः अद्वैतमतरीत्या 'इदं जगत् अग्रे असत्=अव्याकृतनामरूपवद्ब्रह्मरूपमासीत्' इति व्याख्याने पूर्वं विशेष्यतया इदंपदबोध्यजगतः प्रसक्तत्वेन तदितिपदेन जगदेव परामृश्यते नतु असत् इति तत्पदबोध्यं जगत् अनन्तरं सत् आसीत् इति जगत एव सत्त्वं बोधयति नतु असतः सत्त्वमिति 'तत्सदासीत्' इति वाक्यशेषेण असतः सत्त्वं कथ्यते इत्युक्तेरयोगात् । किं च 'इदं जगत् अग्रे असत्=अव्याकृतनामरूपात्मकं ब्रह्मैवासीत् तत्=असत् अव्याकृतनामरूपात्मकं ब्रह्म, सत्=व्याकृतनामरूपात्मकमासीत्' इत्युक्तिरप्ययुक्तैव । ब्रह्मणो निर्विकारत्वेन सर्वदा अव्याकृतनामरूपत्वात् अग्रे अव्याकृतनामरूपत्वोक्तेः पश्चात् व्याकृतनामरूपत्वोक्तेश्चायोगात् ।

न च 'इदं=जगत् असदासीदित्यस्य न अव्याकृतनामरूपवद्ब्रह्मात्मकमासीत् । तत्=अव्याकृतनामरूपवत्त्वनिमित्तेन असच्छब्दबोध्यं ब्रह्म सत्=व्याकृतनामरूपवद्ब्रह्मरूपमासीदिति अर्थं न वर्णयामः, येन ब्रह्मणो निर्विकारत्वेन सर्वदा अव्याकृतनामरूपत्वेन पूर्वं अव्याकृतनामरूपत्वोक्तिःपश्चात् व्याकृतनामरूपत्वोक्तिश्चायुक्तेति शङ्कायाः प्रसक्तिः । किंतु इदं जगत् असत्=अव्याकृतनामरूपवदविद्यात्मक-( प्रकृत्यात्मक ) मासीत् । अनन्तरं प्रकृतेः ( अविद्यायाः ) जगदात्मना परिणामे, तत् जगत्, सत्=नामरूपात्मना परिणत (व्याकृत)-प्रकृत्यात्मक ( अविद्यात्मक ) मासीदित्यर्थकरणात् । प्रकृतेः विकारित्वेन व्याकृत्वाव्याकृतत्वसंभवात्' इति वाच्यम् । एतेन कार्यजगतः अविद्यात्मकप्रकृत्यनन्यत्वसिद्धावपि कार्यभूतजगतः कारणब्रह्मानन्यत्वस्य अद्वैत्यभिमतस्यासिद्धेः ।

किंच ब्रह्मणः कदापि विकाराभावेन अव्याकृतनामरूपवत्त्वस्य सर्वदा सत्त्वेन जगतश्चाद्वैतमते सर्वदा ब्रह्मस्वरूपत्वाङ्गीकारेण च जगत् अग्रे अव्याकृतनामरूपात्मकब्रह्मरूपमासीदित्युक्तिरप्ययुक्तैव ।

अपि च मिथ्याभूतस्य जगतः सत्यब्रह्मस्वरूपत्वस्यायोगाच्चेत्यादीनां दोषाणां प्राप्तेः जगतः असद्रूपब्रह्मरूपत्वकथनमयुक्तमेव ।

'असद्वा इदमग्र आसीत्' ( तै. २।७।१ ) इति श्रुतिः जगतः पूर्वमसत्त्वं वक्तीत्याशङ्क्य, 'तदात्मानं स्वयमकुरुत इति वाक्यशेषे असच्छब्दबोध्यस्य क्रियमाणत्वेन विशेषणात् क्रियमाणत्वस्य च असति=शून्ये असंभवात् असद्वा इदमग्र आसीदित्यत्रत्यासच्छब्दः नात्यन्तासत्त्वाभिप्रायः किंतु अव्याकृतनामरूपवद्ब्रह्माभिप्रायः । तथा च जगत् अव्याकृतनामरूपवद्ब्रह्मरूपमासीदित्यर्थ' इति कथनमप्ययुक्तम् । तदात्मानं स्वयमकुरुत इति वाक्यशेषोक्तक्रियमाणत्वविशेषणस्य अत्यन्तासति शून्ये अयोगेन असद्वा इदमग्र आसीदित्यत्रत्यासच्छब्दस्य अत्यन्तासदर्थकत्वाभाववत् निर्विकारे ब्रह्मण्यपि तदात्मानं स्वयमकुरुतेति वाक्यशेषोक्तक्रियमाणत्वविशेषणस्य असंभवेन असच्छब्दस्य ब्रह्मार्थकत्वस्याप्ययोगेन, इदं जगत् असत्=अव्याकृतनामरूपात्मकब्रह्मरूपमासीदिति अर्थकथनस्याप्ययोगात् । 'असद्वा इदमग्र आसीत्' 'असदेवेदमग्र आसीत्' इति श्रुत्योः सूत्रकारेण एवमर्थो वर्णित इति शाङ्करव्याख्यानमयुक्तमेव । (२।१।१७)

ॐ युक्तेश्शब्दान्तराच्च ॐ

इति सूत्रस्य 'युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वमनन्यत्वं च कारणादवगम्यते, शब्दांतराच्च । युक्तिस्तावद्वर्ण्यते — दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते । नहि दध्यर्थिभिर्मृत्तिकोपादीयते । न

घटार्थिभिः क्षीरम् । तदसत्कार्यवादे नोपपद्येत । अविशिष्टे हि प्रागुत्पत्तेः सर्वस्य सर्वत्रासत्त्वे कस्मात् क्षीरादेव दध्युत्पद्यते, न मृत्तिकायाः । मृत्तिकाया एव च घट उत्पद्यते न क्षीरात् । अथा–विशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयो न मृत्तिकायां । मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीर इत्युच्येत, तर्ह्यति-शयवत्त्वात्प्रागवस्थाया असत्कार्यवादहानिः सत्कार्यवादसिद्धिश्च ' इत्यादिना यत् कार्यस्य कारणादनन्यत्वे उत्पत्तेः प्राक् सत्वे च युक्त्यभिधानं तत्सर्वं परिणाम्युपादानकारणविषय एव नतु निमित्त-कारणविषये । घटस्य निमित्तकारणात् अन्यत्वादेर्दर्शनात् । प्रकृते च निर्विकारस्य ब्रह्मणः जगत्प्रति निमित्तकारणत्वेन कार्यस्य जगतः निमित्तकारणाद्भेदस्यैव सिद्धेः नेयं युक्तिर्जगतो निमित्तकारणीभूत-ब्रह्मानन्यत्वं बोधयति ।

' शब्दान्तराच्चैतदवगम्य ....पूर्वसूत्रेऽसद्व्यपदेशिनः शब्दस्यो दाहृतत्वात्ततोऽन्यः सद्व्यपदेशी शब्दः शब्दांतरं ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, इत्यादि । तद्धैक आहुरसदेवेदमग्र आसीदिति चासत्पक्षमुपक्षिप्य कथमसतः सज्जायेतेत्याक्षिप्य ' सदेव सोम्येदमग्र आसीत् ( छां. ६।२।१ इत्यवधारयति । तत्रेदंशब्दवाच्यस्य कार्य-स्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमा-णत्वात्सत्त्वानन्यत्वे प्रसिद्ध्यत' इति शब्दांतराच्चेति सूत्रभागस्य यद्व्याख्यानं तदप्ययुक्तम् ।

' सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्... तदैक्षत... तत्तेजोऽसृजत ' इति श्रुतिः ' हे सोम्य ! इदमग्रे=अस्य जगतोऽग्रे एकं=प्रधानं (मुख्यं) अद्वितीयं=स्वसजातीयद्वितीयवस्तुरहितं, अथवा असहायं, सदेव=सन्नामकपरमात्मैव, आसीत् । तत्=सन्नामकं ब्रह्म बहु स्यां=नियामकरूपेण (अंतर्यामिरूपेण) बहु स्यां, तदर्थं नियम्य-

प्रजाः प्रजायेय इति ऐक्षत् । तत्=ब्रह्म, तेजः तेजोऽभिमानिदेवतां, तेजोभूतं च, असृजत,' इति सन्नामकब्रह्मणः सृष्टेः पूर्वं सत्त्वं ततो जगत्सृष्टिं प्रतिपादयति, न तु इदंपदेन जगत्कथयित्वा तस्य सन्नामकब्रह्मणा अभेदं बोधयति । तथात्वे अद्वैतमतरीत्या शशविषाणवत् त्रिकालेऽप्यसतः अचेतनस्य जगतस्त्रिकालेऽपि सता चेतनेन ब्रह्मणा ऐक्यायोगेन इदं सदिति सामानाधिकरण्यानुपपत्तेः। न च बाधायां सामानाधिकरण्यं स्वीकृत्य इदन्त्वेन यत्प्रतीतं तत् सत्=ब्रह्म इति ब्रह्मणि जगतः कल्पितत्वमेवोच्यते, नतु इदंपदनिर्दिष्टस्य मिथ्याभूतस्याचेतनस्य जगतः सत्यभूतचेतनब्रह्मणा अभेद इति वाच्यम् । तथा सति मिथ्याभूतजगतः सत्येन ब्रह्मणा भेद एवोक्तो भवतीत्यनया श्रुत्या जगतो ब्रह्मानन्यत्वासिद्धेः । तस्मादियं श्रुतिर्जगतो ब्रह्मणा अभेदे नोदाहर्तव्या ।

यच्चाप्युक्तं 'यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्पश्चाच्चोत्पद्यमानं कारणे समवेयात्तदान्यत्कारणात्स्यात् । तत्र 'येनाश्रुतं श्रुत भवति' (छां.६।१।३) इतीयं प्रतिज्ञा पीड्येत। सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते ' इति तदप्ययुक्तम् । 'येनाश्रुतं श्रुतं भवतीति वाक्यस्य 'तमादेशं विशिनष्टि येनादेशेन श्रुतेनाश्रुतमपि अन्यत् श्रुतं भवत्यमतं मतमतर्कितं तर्कितं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति सर्वानपि वेदानधीत्य सर्वं च अन्यत् वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते ' इति वाक्येन शङ्कराचार्यैरेव अन्यत् श्रुतं भवतीति सर्वं चान्यद्वेद्यमिति स्पष्टमन्यदितिपदाभ्यां ब्रह्मणश्चेतनाचेतनात्मकजगता भेदाभिधानात् । तथा 'अकृतार्थ एव भवति यावदात्मतत्त्वं न विजानाति' इति वाक्येन, जगज्ज्ञानस्य ब्रह्मज्ञानमेव फलं जगति ज्ञातेऽपि ब्रह्मणः ज्ञानाभावे व्यर्थमेव जगतो ज्ञानमिति जगज्ज्ञानं

कारणं ब्रह्मज्ञानं फलं (कार्यं) इत्युक्तत्वेन च जगद्ब्रह्मणोर्भेदस्यैवाभिधानात्। ब्रह्मज्ञानेन जगतो ज्ञानं भवति इत्युक्तौ जगतो ब्रह्मणा ऐक्यं यथाकथञ्चित्प्रतीयेत न ब्रह्मज्ञानेन जगज्ज्ञानं भवतीत्युक्तम्। अद्वैतमतरीत्या ब्रह्मज्ञानेन जगज्जानं न सम्भवति च। अधिष्ठानाज्ञानदशायामेव अध्यस्तं भाति। यथा शुक्तिकाज्ञानदशायां तत्राध्यस्तं रजतमधिष्ठाने शुक्तितत्त्वे ज्ञाते शुक्तिकाज्ञाननिवृत्या शुक्तिकाज्ञानकल्पितमध्यस्तं रजतं नश्यति न दृश्यते च ; एवं ब्रह्माज्ञानकल्पितं जगत् ब्रह्मणि अधिष्ठाने ज्ञाते ब्रह्माज्ञाननिवृत्या अध्यस्तं जगत् नश्यति, न दृश्यते च, इति येनाश्रुतं श्रुतं भवतीति श्रुतेः ब्रह्मज्ञाने जगद्भाति इत्यर्थः असम्भवी, शङ्कराचार्येर्न कृतश्चेति नानया श्रुत्या जगतो ब्रह्मानन्यत्वमुच्यत इति। २।१।१८

ॐ पटवच्च ॐ

इति सूत्रस्य 'संवेष्टितप्रसारितपटयोर्यथाऽभेदः तथा कारणाद्ब्रह्मणः कार्यस्याभेदः इति अर्थकथनमयुक्तम्। मिथ्याभूत [असद्भूत] जगतः सत्येन ब्रह्मणा ऐक्यायोगस्य पूर्वं बहुवारमुक्तत्वात् इति। २।१।१९

ॐ यथा च प्राणादिः ॐ

कार्य जगत् उपादानाद्ब्रह्मणः भिन्नं ब्रह्मकार्यभिन्नकार्यकरत्वात्। यत् यत्कार्यभिन्नकार्यकरं तत् तस्माद्भिन्नं यथा घटकार्यभिन्नकार्यकरः पटः घटाद्भिन्न इति ब्रह्मजगतोः विलक्षणकार्यकारिणोर्भेदमाशङ्क्य 'यथा च प्राणादिः' इति (२०) सूत्रस्य 'यथा च लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्रेण रूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते नाकुञ्चनप्रसारणादिकं कार्यान्तरं, तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चन–

प्रसारणादिकमपि कार्यान्तरं निर्वर्त्यते । न च प्राणभेदानां प्रभेदवतः प्राणादन्यत्वं समीरणस्वभावाविशेषात् । एवं कार्यस्य कारणादनन्यत्वमतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात्तदनन्यत्वाच्च सिद्धैषा श्रौती प्रतिज्ञा ' येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं (छां.६।१।१) इति व्याख्याने ' यथा प्राणविलक्षणकार्यकारिणां प्राणापानादिविशेषाणां न प्राणात् प्रायः भेदः तथा विलक्षणकार्यकारिणोरपि ब्रह्मजगतोर्न भेद ' इति यदुक्तं तन्न युक्तम् ।

चेतनसत्यभूतब्रह्मणः अचेतेनामत्यजगता अभेदासंभवस्य पूर्वं व्यवस्थापितत्वात् । येनाश्रुतं श्रुतं भवति इति प्रतिज्ञावाक्यस्य ब्रह्मज्ञानेन जगज्ज्ञानं भवतीत्येतत्परत्वाभावस्य, प्रत्युत जगज्ज्ञानस्यैव ब्रह्मज्ञानं फलमित्येतत्परत्वस्य च व्यवस्थापितत्वाच्च । तस्मात् ज्ञानमात्रं पारमार्थिकं तत्रैव ज्ञातृज्ञेयादि कल्पितमित्यादि सौगतम ( बौद्ध ) मतमेव वेदसूत्रगीतार्थतया प्रकल्प्य अद्वैतमतं वेदसूत्रगीतारूपप्रस्थानत्रयसिद्धमिति तामसजनमोहनार्थं दर्शयित्वा सात्विकानां मोहो माभूदिति अद्वैतमताभिन्नं बौद्धमतं नाभाव उपलब्धेरित्यादिसूत्रैः खण्डयित्वा नैतदद्वैतमतं सात्विकैर्ग्राह्यमिति प्रदर्शयामासुरिति । २।१।२० ।

ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते । चेतनाद्धि जगत्प्रक्रियायामायश्रिमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते । कुतः इतरव्यपदेशात् इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः । ' स आत्मा तत्त्वमसि श्वेतकेतो (छां. ६।८।७) इति प्रतिबोधनात् । यद्वा इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति । ' तत्सृष्ट्वा तदेवानुप्राविशत् ' (तै. २-६) इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वप्रदर्शनात् । ' अनेन जीवेनात्मनानु-

प्रविश्य नामरूपे व्याकरवाणि (६।३।२) इति च परा देवता जीवमात्मशब्देन व्यपदिशन्ती न ब्रह्मणो भिन्नः शारीर इति दर्शयति। तस्माद्यद्ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैवेति। अतः स स्वतन्त्रः कर्ता सन् हितमेवात्मना सौमनस्यकरं कुर्यान्नाहितं जन्ममरणजरारोगाद्यनेकानर्थजालम्। न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वाऽनुप्रविशति। न च स्वयमत्यन्तनिर्मलः सन् अत्यन्तमलिनं देहमात्मत्वेनोपेयात्। कृतमपि कथञ्चिद्यद्दुःखकरं तदिच्छया जह्यात्। सुखकरं चोपाददीत। स्मरेच्च मयेदं जगद्बिंबं विचित्रं विरचितमिति। सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति। यथा च मायावी स्वयं प्रसारितां मायामिच्छयाऽनायासेनैवोपसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत्। स्वमपि तावच्छरीरं शारीरो न शक्नोत्यनायासेनोपसंहर्तुम्। एवं हि तत्क्रियाद्यदर्शनादन्याय्या चेतनाज्जगत्प्रक्रियेति गम्यते ॥२।१।२१

ॐ अधिकं तु भेदनिर्देशात् ॐ

तुशब्दः पक्षं व्यावर्तयति। यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत् तद्वयं जगतः स्रष्टृ ब्रूमः। न तस्मिन्हिताकरणादयो दोषाः प्रसज्यन्ते। न च तस्य हितं किञ्चित्कर्तव्यमस्ति अहितं वा परिहर्तव्यम्। नित्यमुक्तस्वभावत्वात्। न च तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति सर्वज्ञत्वात्सर्वशक्तित्वाच्च। शारीरस्त्वनेवंविधस्तस्मिन्प्रसज्यन्ते हिताकरणादयो दोषाः। न तु तं वयं जगतः स्रष्टारं ब्रूमः। कुत एतत् भेदनिर्देशात्। 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृ २।४।५) सोऽन्वेष्टव्यः स विजिज्ञासितव्यः [छां. ८।७।१] सता सोम्य तदा सम्पन्नो भवति [छां ६।८।१]

शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढः [बृ.४।३।३५] इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति इति सूत्रद्वयं शङ्कराचार्यैर्व्याख्यातम्। तत्र शारीर (जीव) ब्रह्मणोरभेदे हिताकरणादिदोषान् प्रसञ्जयित्वा, 'अधिकं तु भेदनिर्देशात्' इति सूत्रेण 'आत्मा वाऽरे द्रष्टव्यः' 'सोऽन्वेष्टव्यः सता सोम्य' 'शारीर आत्मा' इत्यादिश्रुतिभिर्जीवब्रह्मणोर्भेदावगमात्। ब्रह्मणः कारणत्वेन हिताकरणादिदोषाः। न हि तस्य हितं किंचित्कर्तव्यमस्त्यहितं वा परिहर्तव्यं नित्यमुक्तस्वभाववत्त्वात् इति यः परिहारोऽभिहितः सः समीचीन एव। परं 'नन्वभेदनिर्देशोऽपि दर्शितः तत्त्वमसि, इत्येवंजातीयकः। कथं भेदाभेदौ विरुद्धौ सम्भवेयाताम्, इत्याशङ्क्य 'नैष दोषः आकाशघटाकाशन्यायेनोभयसम्भवस्य तत्र तत्र प्रतिष्ठापितत्वात्' इति यत्समाधानमुक्तं तदयुक्तम्। स आत्मा तत्त्वमसि, इति श्रुतेः अद्वैतमतरीत्या बोधजनकत्वाभावेन, तस्य बोधजनकत्वांगीकारेऽपि चिदित्यखण्डार्थबोधकत्वेन अभेदबोधकत्वाभावेन निर्बाधभेदबोधकपूर्वोदाहृतश्रुतिभिर्भेदस्यैव सिद्ध्या विरुद्धयोर्भेदाभेदयोरेकत्र समावेशप्रसक्तेरेवाभावेन भेदस्यौपाधिकत्वं [मिथ्यात्वं] अभेदस्य च पारमार्थिकत्वमिति समाधानस्यासंगतत्वात्।

अद्वैतमतरीत्या तत्त्वमसि इति वाक्यस्य चिदिति बोधजनकत्वमपि न सम्भवति। तथा हि—न तावद्रूढ्या योगेन वा चिद्रूपब्रह्मोपस्थितिः। ब्रह्मचिति गुणक्रियाजातिभेदादीनां शब्दप्रवृत्तीनां मध्ये एकस्याप्यभावात्। नापि लक्षणया गौण्या वा चितः(ब्रह्मणः) उपस्थितिः असङ्गे निर्गुणे ब्रह्मणि शक्यसंबन्धशक्यार्थगुणयोगादीनां तत्प्रयोजकानामभावात्। तथा च चितः केनापि पदेन कयाऽपि वृत्त्या उपस्थित्यसंभवेन चिद्विषयकबोधजनकत्वासम्भवात्। 'तत्त्वमसि' इति वाक्यस्य अभेदबोधकत्वाभावेन जीवस्य संसारित्वं

ब्रह्मणश्च स्रष्टृत्वं च नापगच्छति। अतो जीवब्रह्मणोरभेदमाशङ्कय ब्रह्मणः स्रष्टृत्वाङ्गीकारे शङ्किता हिताकरणादिदोषाः, अभेदग्राहक-प्रमाणानामभावेन भेदग्राहकाणां सता सोम्य तदा सम्पन्नो भवती-त्यादीनां प्रमाणानां सद्भावेन च जीवादन्यस्य ब्रह्मणः स्रष्टृत्वाङ्गीकारे न प्रसज्यन्ते इत्येव समाधानं युक्तम्। विशेषविचारस्तु तत्त्व-मस्यादिवाक्यविचारे द्रष्टव्यः। (२।१।२२)

नन्वखण्डरूपे ब्रह्मणि जीवेश्वरवैचित्र्यं कथं, कथं च तत्कार्य-वैचित्र्यमित्यनुपपत्तौ प्राप्तायां प्रवृत्तस्य

ॐ अश्मादिवच्च तदनुपपत्तिः ॐ

इति सूत्रस्य- 'यथा च लोके पृथिवीत्वसामान्यान्वितानामपि अश्मनां केचिन्महार्हा मणयो वज्रवैडूर्यादयोऽन्य मध्यमवीर्याः सूर्यकां-तादयोऽन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणा इत्यनेकविधं वैचित्र्यं दृश्यते, यथा चैकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्प-फलगन्धरसादिवैचित्र्यं चन्दनकिंपाकादिषु उपलक्ष्यते, यथा चैक-स्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च विचित्राणि कार्याणि भवन्ति, एवमेकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपप-द्यत इत्यतस्तदनुपपत्तिः परपरिकल्पितदोषानुपपत्तिरित्यर्थः' इति यत् व्याख्यानं शङ्कराचार्याणां तदयुक्तम्। विकारिणां पदार्थानां अनादिशक्तिभेदात् विचित्रकार्यात्मतासम्भवेऽपि निर्विकारस्य ब्रह्मणः नानारूपात्मना वैचित्र्यं नोपपद्यते (निर्विकारत्वात्) इति प्रकृते अश्मादीनां दृष्टांतत्वासम्भवात्।

यच्च- श्रुतेश्च प्रामाण्यात् विकारस्य च वाचारम्भणमात्रत्वात् स्वप्नदृश्यभाववैचित्र्यवच्चेत्यभ्युच्चयः, इति अश्मादिवच्च इति सूत्रगत-चशब्दस्यार्थवर्णनं तदप्ययुक्तम्। श्रुतौ ब्रह्मणो विचित्र (नाना) रूपेण

भवनानुक्तया तदनङ्गीकारे श्रुतिप्रामाण्यविघाताभावात् विकारस्य वाचारम्भणमात्रत्वाभावात् ( मिथ्यात्वाभावात् ) स्वप्नदृश्यभावानां वस्तूनां विलक्षणवासनोपादानकत्वेन तद्वैचित्र्ये अनुपपत्त्यभावेन तद्दृष्टांतकथनायोगात् इति । तस्मादिदमधिकरणं जीवब्रह्मणोर्भेद-बोधकमेव । २।१।२३

ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ

इति सूत्रस्य 'चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते । कस्मात् ? उपसंहारदर्शनात् । इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकसाधनो-पसंहारेण संगृहीतसाधनाः सन्तः तत्तत्कार्यं कुर्वाणा दृश्यन्ते । ब्रह्म चासहायं तवाभिप्रेतं तस्य साधनांतरानुपसंग्रहे सति कथं स्रष्टृत्वमुप-पद्येत ? तस्मान्न ब्रह्म जगत्कारणमिति चेत् नैषः दोषः । यतः क्षीरवद्द्रव्यस्वभावविशेषादुपपद्यते । यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं तथेहापि भविष्यति । ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनमौष्ण्यादिकं, कथमुच्यते क्षीरवद्धि इति । नैष दोषः, स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रामनुभवति तावत्येव त्वर्यते त्वौष्ण्यादिना दधिभावाय । यदि च स्वयं दधिभावशीलता न स्यान्नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत । न हि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्यते । साधनसामग्र्या च तस्य पूर्णता सम्पाद्यते । परिपूर्णशक्तिकं तु ब्रह्म । न तस्यान्येन केनचित्पूर्णता सम्पादयितव्या । श्रुतिश्च भवति 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे. ६-८) इति । तस्मादेकस्यापि

ब्रह्मणो विचित्रशक्तियोगात्क्षीरादिवद्विचित्रपरिणामः उपपद्यते' इति यद्व्याख्यानं शङ्कराचार्याणां तत्तु अद्वैतमतरीत्या अयुक्तमेव। तथा हि-अद्वैतमते ब्रह्मणि सर्वजगतः कल्पितत्वाङ्गीकारेण सर्वभ्रमाधिष्ठानत्वरूपविवर्तकारणतायाः ब्रह्मणोऽनेककारकानपेक्षत्वात् तदभावेन ब्रह्मणः विवर्तकारणत्वाभावशङ्काया एवानुदयात्। तत्परिहारार्थं क्षीरवदिति-यथा क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमते तथा ब्रह्मापि विचित्रशक्तियोगात् बाह्यसाधनमनपेक्ष्य जगद्रूपेण परिणमते इत्युक्तेरसङ्गतत्वात्। तथा च अद्वैतमतं वा परित्यज्यताम्। सूत्राणि वा परित्यज्यन्ताम्। न हि परस्परविरुद्धयोरद्वैतमतसूत्रयोः ऐककण्ठ्यार्थमित्थमयुक्तं वक्तव्यमिति। २।१।२४

ॐ देवादिवदपि लोके ॐ

इति सूत्रस्य 'स्यादेतत् - उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः, दृष्टत्वात्। चेतनाः पुनः कुलालादयः साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्तमाना दृश्यन्ते। कथं ब्रह्म चेतनं सदसहायं प्रवर्तेतेति। देवादिवदिति ब्रूमः। यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किञ्चिद्बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि च रथादीनि च निर्मिमाणा उपलभ्यन्ते। मंत्रार्थवादेतिहासपुराणप्रामाण्यात्। तन्तुनाभश्च स्वत एव तन्तून् सृजति, बलाका चान्तरेणैव शुक्रं गर्भं धत्ते, पद्मिनी चानपेक्ष्य किंचित्प्रस्थानसाधनं सरोऽन्तरात्सरोऽन्तरं प्रतिष्ठते एवं चेतनमपि ब्रह्मानपेक्ष्य बाह्यं साधनं स्वत एव जगत् स्रक्ष्यति' इति यद्व्याख्यानं तदपि कल्पितत्वपक्षे अयुक्तमेव। २।१।२५ ॥

ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ

इति सूत्रं 'चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्ष्य बाह्यसाधनं स्वयं परिणममानं जगतः कारणमिति स्थितम्। शास्त्रार्थपरिशुद्धये तु पुनराक्षिपति। कृत्स्नप्रसक्तिः कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति निरवयवत्वात्। यदि ब्रह्म पृथिव्यादिवत्सावयवमभविष्यत्ततोऽस्यैकदेशः पर्यणंस्यदेकदेशश्चावास्थास्यत। निरवयवं तु ब्रह्म श्रुतिभ्योऽवगम्यते-'निष्कलं निष्क्रियं शांतं निरवद्यं निरञ्जनम्' (श्वे. ६।१९) 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' (मुं. २।१।२) 'इदं महद्भूतमनन्तपारं विज्ञानघन एव' (बृ. २।४।१२) 'स एष नेति नेत्यात्मा' (बृ. ३।९।२६) 'अस्थूलमनणु' (बृ. ३।८।८) इत्याद्याभ्यः सर्वविशेषप्रतिषेधिनीभ्यः। ततश्चैकदेशपरिणामासम्भवात् कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत। द्रष्टव्यतोपदेशानर्थक्यं चापन्नम्। अयत्नदृष्टत्वात्कार्यस्य, तद्व्यतिरिक्तस्य च ब्रह्मणोऽसम्भवात्। अजत्वादिशब्दकोपश्च। अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत। तथापि ये निरवयवत्वस्य प्रतिपादकाः शब्दा उदाहृतास्ते प्रकुप्येयुः। सावयवत्वे चानित्यत्वप्रसङ्ग इति सर्वथाऽयं पक्षो न घटयितुं शक्यते इत्याक्षिपति। २।१।२६

ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ

तुशब्देनाक्षेपं परिहरति। न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति। न तावत्कृत्स्नप्रसक्तिरस्ति। कुतः। श्रुतेः। यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते। एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते। प्रकृतिविकारयोर्भेदेन व्यपदेशात्। 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे

व्याकरवाणि ' ( छां. ६।३।२ ) इति, 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ( छां. ३।१२।६ ) इति चैवंजातीयकात्, तथा हृदयायतनत्ववचना-त्सत्सम्पत्तिवचनाच्च। यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात्, 'सता सोम्य तदा सम्पन्नो भवति ' ( ६।८।१ ) इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात्। विकृतेन ब्रह्मणा नित्यसम्पन्नत्वादविकृतस्य च ब्रह्मणोऽभावात्। तथेंद्रियगोचरत्वप्रतिषेधाद्ब्रह्मणो विकारस्य चेंद्रियगोचरत्वोपपत्तेः। तस्मादस्त्यविकृतं ब्रह्म। न च निरवयवत्वश-ब्दकोपोऽस्ति, श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात्। शब्दमूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकं तद्यथाशब्द-मभ्युपगन्तव्यम्। शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयत्यकृत्स्न-प्रसक्तिं निरवयवत्वं च...तस्माच्छब्दमूल एवातींद्रियार्थयाथात्म्या-धिगमः ' इति यत् सूत्रव्याख्यानं तदपि पूर्ववदेवायुक्तम्। अद्वैतमते ब्रह्मणः परिणामकारणत्वानङ्गीकारात् निर्विकारस्योपादानकारणत्वा-संभवाच्च। 'निष्कलं निष्क्रियं शांतं ' 'अस्थूलमनणु ' इत्यादि-श्रुतिभिर्ब्रह्मणः सर्वज्ञत्वादिधर्माणामनिषेधात्। प्रत्युत 'य सर्वज्ञः सर्ववित् ' 'एतस्य वा अक्षरस्य प्रशासने गार्गि, सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' इत्यादिश्रुतिभिरनेकधर्माणां विधानाच्च ब्रह्म सर्व-विशेषरहितं न भवति। सर्वविशेषराहित्ये प्रमाणाभावात्। तथाहि येनकेनचित्पदेन ब्रह्म बोधयित्वैव खलु तस्मिन् धर्माः निषेध्याः। न तु ब्रह्म अबोधयित्वैव धर्मा निषेद्धुं शक्यन्ते। येन केनचित्पदेन ब्रह्मबोधस्तु न हि ब्रह्मणि शक्यतावच्छेदकशक्यसम्बन्धादिधर्ममन्तरा जायते इति शब्देन निर्विशेषब्रह्मबोधो न जायते। नापि प्रत्यक्षं ब्रह्मणि संनिकर्षादिधर्माभावे संभवति। नाप्यनुमानं व्यापकत्वादिगुणाभावे संभवति। अङ्गीकृतं चाद्वैतिभिः 'निर्विशेषं ब्रह्म प्रमाणागम्यम् '

( अप्रमेयमज्ञेयं च ) इति निर्विशेषं ब्रह्म शशविषाणवदसदेवेति ।

शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयत्यकृत्स्नप्रसक्तिं निरवयवत्वं च इति यदुक्तं तन्न युक्तम् । तत्र विवादाभावेन विरोधाप्रसक्तेः । ब्रह्मणः कार्त्स्न्येन वा एकदेशेन वा परिणाम इत्यस्मिन् विषये खलु विवादः । यदि शब्दः ब्रह्मणः परिणामं निरवयवत्वमपरिणतभागस्य सत्त्वं च कथयेत् तदा निरवयवस्य ब्रह्मणः परिणामित्वाङ्गीकारे निरवयवस्य ब्रह्मणः सर्वस्यापि जगद्रूपेण परिणतत्वेन ब्रह्मत्वाभावप्रसङ्गः । ब्रह्मणः अपरिणतभागस्य सत्त्वाङ्गीकारे सावयवत्वप्रसङ्गः इति शङ्का श्रुतिगम्यत्वेन निवर्तेत । न ह्युक्तं ब्रह्मणः परिणामित्वं कस्यामपि श्रुतौ । प्रत्युत परिणामित्वविरुद्धं निर्विकारत्वमेव ‘ निर्विकारोऽक्षरः शुद्ध ’ इत्यादिना । तथा च विरोधप्रसक्तेरेवाभावेन श्रुत्येकगम्यत्वेन विरोधनिराकरणमयुक्तमेव ।

‘ ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुम् । निरवयवं च ब्रह्म परिणमते न च कृत्स्नमिति । यदि निरवयवं ब्रह्म स्यात् नैव परिणमेत कृत्स्नमेव वा परिणमेत...... तस्माद्दुर्घटमेतदिति ’ इत्याशङ्क्य, ‘ नैष दोषः अविद्याकल्पितरूपभेदाभ्युपगमात् । न ह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु सम्पद्यते । न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते । वाचारंभणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्येति न निरवयवत्वं ब्रह्मणः कुप्यति । न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था । तत्प्रतिपत्तौ फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा । तत्प्रतिपत्तौ फला-

वगमात् । 'स एष नेति नेत्यात्मा' इत्युपक्रम्याह 'अभयं वै जनक प्राप्तोऽसि' (बृ. ४।२।४) इति । तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति' इति यत्समाधानमुक्तं, तत्तु अवैदिकानां वेदाप्रामाण्यवादिनां नास्तिकानामेव युक्तं न तु वैदिकानां वेदसूत्रगीतारूपप्रस्थानत्रयप्रामाण्यवादिनामास्तिकानाम् । तथा हि–

'अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते । पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते वाचारंभणमात्रत्वाच्च अविद्याकल्पितस्य नामरूपभेदस्येति न निरवयवत्वं ब्रह्मणः कुप्यति' इति वाक्येन 'ब्रह्म निर्विशेषं निरवयवमपरिणतं चेत्यत्र श्रुतेस्तात्पर्यं, ब्रह्म परिणतं चेत्यत्र न श्रुतेस्तात्पर्यम् । किंतु मिथ्याभूतं (कल्पितं) परिणाममादाय ब्रह्म परिणामीत्यादिश्रुतिव्यवहारः । श्रुतेस्तस्मिन् विषये अप्रामाण्यमेवेति स्वीकृतम् । निर्गुणं निर्विशेषं ब्रह्म तु न श्रुतिप्रतिपाद्यमिति कृत्स्नस्य वेदस्याप्रामाण्यमेवाङ्गीकृतं भवति । उक्तं हि संक्षेपशारीरमधुसूदनकृततद्व्याख्यानयोश्च 'ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययं च भगवत्समयः' इति वाक्येन बौद्धाद्वैतमतयोरुक्तं साम्यम् । ननु विज्ञानवादिना वेदप्रामाण्याद्यनभ्युपगमात् कथं तदभ्युपगन्तृभगवत्समयस्य ( शङ्करसमयस्य ) तत्समयतुल्यतेति चेदिति वाक्येनाक्षिप्य, सत्यं तथापि विज्ञानातिरिक्तविज्ञेयानभ्युपगमे कथं न तत्तौल्यम् ? तेनापि तथैवाङ्गीकारादित्याह यदीति 'यदि बाह्यवस्तु वितथं नु कथं समयाविमौ न सदृशौ भवतः' इति वाक्येन विज्ञानरूपब्रह्मातिरिक्तवस्तुनः असत्त्वाङ्गीकारेण वेदाप्रामाण्यविषये उभयोः साम्यं स्पष्टं स्वीकृतम् ।

यच्चोक्तम् 'न चेयं परिणामश्रुतिः परिणामप्रतिपादनार्था । तत्प्रतिपत्तौ फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपाद-

नार्थी त्वेषा । तत्प्रतिपत्तौ फलावगमात् । स एष नेति नेत्यात्मा ' इत्युपक्रम्याह– ' अभयं वै जनक प्राप्तोऽसि ' ( बृ.४।२४ ) इति तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति 'इति तदप्ययुक्तम् । प्रसक्तस्यैव निषेधः, न ह्यप्रसक्तस्य स्वयं प्रसक्तिं सम्पाद्य निषेधो दृष्टः । ' प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ' इति न्यायेन निषधार्थं स्वयं प्रसक्तिकरणस्यायोगात् । इदं रजतमिति रजतस्य प्रसक्तौ हि नेदं रजतमिति निषिध्यते, न तु स्वयमेव इद रजतमिति प्रसज्य नेदं रजतमिति निषेद्धारो दृष्टाः । प्रकृते च ब्रह्मणः परिणामादिकं केन वा प्रसक्तं चेत् ब्रह्म परिणामादिविशेषरहितमिति बोधनीयम् । न ह्यतींद्रिये ब्रह्मणि परिणामादिविशेषः प्रसक्तः इति श्रुत्या तन्निराकरणस्यायोगात् श्रुतिः स्वयमेव परिणामादिकं प्रसञ्जयित्वा निषेधतीति कथनं प्रक्षालनाद्धीतिन्यायविरुद्धम् ।

किं च ब्रह्मणः परिणामस्तु श्रुतौ कुत्रापि नोक्त इति परिणामप्रतिपादकश्रुतेः परिणामबोधने तात्पर्यं नास्ति, परिणामज्ञाने फलाभावात् । किंतु सफलनिर्विशेष (परिणामादिविशेषरहित) ब्रह्मप्रतिपत्त्यर्थं निषेधप्रतियोगिपरिणामप्रसक्त्यर्थं परिणामकथनमित्येतत् शाङ्करव्याख्यानमयुक्तम् । ' स एष नेति नेति ' इति वाक्यं न निर्विशेषब्रह्मबोधकमित्युक्तं प्राक् । २।१।२७

ॐ आत्मनि चैवं विचित्राश्च हि ॐ

' अपि च नैवात्र विवदितव्यं, कथमेकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति । यत आत्मन्यप्येकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते-'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' (बृ. ४।३।१० )इत्यादिना । लोकेऽपि देवादिषु मायाव्यादिषु स्वरूपानु-

पमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते । तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यति ' इति यद्व्याख्यानं तदप्ययुक्तम् । कथमेकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति विवादः विवर्तत्वपक्षे परिणामपक्षे वा । न ताव-द्विवर्तत्वपक्षे । तत्र स्वरूपोपमर्दप्रसक्तेरेवाभावात् । परिणामपक्षे स्वरूपानुपमर्देन कथं सृष्टिरित्यस्ति शङ्कायाः प्रसक्तिः । तस्य स्वप्न-दृशि जीवे ' न तत्र रथा रथयोगा ' इत्यादिना स्वरूपानुपमर्देनैव अनेकाकारा सृष्टिः पठ्यते इति समाधानकथनमयुक्तम् । तस्यां श्रुतौ परमात्मा स्वप्नकाले वासनापरिणतान् पदार्थान् सृजते इति स्वाप्न-पदार्थानां वासनो ( संस्कारो ) पादानकत्वमीश्वरनिमित्तकत्वं च कथ्यते । न तु जीवसृष्टत्वम् । तुष्यत्विति न्यायेन रथादेर्जीव-सृष्टत्वेऽपि न जीवोपादानत्वम् (जीवपरिणामित्वम्) शङ्करादिभिरेव ' वासनामयान्, वासनामयी सृष्टिरित्यादिना वासनोपादानकत्वस्य कथितत्वेन जीवस्य स्वरूपोपमर्दप्रसक्तेरेवाभावेन जीवस्य स्वप्ने इव ब्रह्मणः स्वरूपोपमर्देन विना जगत्सृष्टिः (जगत्परिणामकारणत्वं) इति दृष्टांतकथनायोगात् । ' लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते । तथैक-स्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यति ' इति यदुक्तं, तत्तु शास्त्राज्ञानमेव न, किंतु दृश्यमानलौकिकपदार्थाज्ञानं च बोधयति । न हि मायावी वृश्चिकसर्पहस्त्यश्वादिरूपेण स्वयं परिणमते, किंतु मन्त्रसामर्थ्यात् स्वयमपरिणत एव गजतुरगादीन् दर्शयति इति स्वरूपानुपमर्देन ब्रह्मणः अनेकाकारभवने नास्य दृष्टांतत्वं सम्भवति ।

यद्यपि भाष्ये ब्रह्मणः परिणामपक्षं स्वीकृत्यैव तत्पक्षे प्रसक्ता दोषाः परिणामस्याविद्याकल्पितत्वेन मिथ्यात्वपक्षं स्वीकृत्य परि-

हृताः, नतु विवर्तोपादानत्वपक्षं स्वीकृत्येति स्थितेऽपि टिप्पणीकाराः 'उक्तं विवर्तवादं सूत्रकाराभिप्रेतत्वेन स्पष्टयति आत्मनीति, (आनंद) तत्र ब्रह्मणो विवर्तोपादानत्वं स्वप्नसाक्षिदृष्टांतेन द्रढयन् मायावादं स्फुटयति सूत्रकारः आत्मनीति, (रत्नप्रभा) इत्यादिना, विवर्तवादमतं स्वीकृत्यैतानि सूत्राणि प्रवृत्तानीति वदन्ति। भाष्ये तादृशवाक्यानामप्रतीतेः, प्रत्युत परिणामादिसर्वव्यवहारास्पदत्वं प्रतीयते इति परिणामवादमेव स्वीकृत्य तस्याविद्याकल्पितत्वं प्रतिपादितमिति॥२।१।२८॥

ॐ स्वपक्षदोषाच्च ॐ

इति सूत्रस्य प्रधानपरमाण्वादिवादेषु अपि कृत्स्नप्रसक्त्यादिदोषाणां सत्त्वाच्चेति व्याख्यानमयुक्तम्। त्वं चोर इत्युक्ते त्वमपि चोर इतिवत् दोषसाम्योक्तिमात्रेण स्वपक्षे प्राप्तदोषाणामपरिहारात्।

न च 'परिहृतश्च ब्रह्मवादिना स्वपक्षदोष इति उक्तमिति वाच्यम्। दोषपरिहारस्य ब्रह्मपरिणामत्वपक्षे असम्भवस्योक्तत्वादिति। २।१।२९

ॐ सर्वोपेता च तद्दर्शनात् ॐ

'एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते विचित्रो विकारप्रपञ्च इत्युक्तम्। तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति तदुच्यते। सर्वोपेता च तद्दर्शनात् सर्वशक्तियुक्ता च परा देवतेत्यभ्युपगन्तव्यम्। कुतः तद्दर्शनात्। तथा हि दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः सर्वकर्मा सर्वकामः सर्वगंधः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छां. ३।१४।४) 'सत्यकामः सत्यसङ्कल्पः' (छां. ८।७।१) 'यः सर्वज्ञः सर्ववित्' (मु. १।१।९) एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ. ३।८।९) इत्येवञ्जातीयका इति यद्व्याख्यानं तत्तु सर्वज्ञत्वाद्यनत-

कल्याणगुणयुक्तं ब्रह्म सत्यं जगत्सृजति इति वादिनां द्वैतिनां मत एव युक्तम्। विचित्रजगत्सृष्टौ सर्वज्ञत्वादिधर्माणामावश्यकत्वात् ब्रह्मणि सर्वज्ञत्वादिगुणानां सत्त्वाच्च। न तु निर्गुणे ब्रह्मणि सर्व कल्पितमिति वदतामद्वैतिनां मते युक्तम्। शुक्तिकायामन्यस्य रजतभ्रमोत्पत्तौ अधिष्ठानभूतायाः शुक्तिकायाः सामर्थ्यस्य अनावश्यकत्ववत् ब्रह्मणि जगतो भ्रमस्य अन्येन जननीये विचित्रशक्तेरनुपयोगेनानावश्यकत्वात् न सम्भवति च निर्गुणे ब्रह्मणि विचित्रशक्तिरिति। २।१।३०

ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ

स्यादेतत्— विकरणां परां देवतां शास्ति शास्त्रम् ‘ अचक्षुष्कमश्रोत्रमवागमनाः ’ ( बृ. ३।८।८ ) इत्येवंजातीयकम्। कथं सा सर्वशक्तियुक्ताऽपि सती कार्याय प्रभवेत्। देवादयो हि चेतनाः सर्वशक्तियुता अपि सन्त आध्यात्मिककार्यकारणसम्पन्ना एव तस्मै तस्मै कार्याय प्रभवन्तो विज्ञायन्ते। कथं च ‘ नेति नेति ’ (बृ. ३।९।२६) इति प्रतिषिद्धसर्वविशेषाया देवतायास्सर्वशक्तियोगः सम्भवेदिति चेत् यदत्र वक्तव्यं तत्पूर्वमेवोक्तम्। श्रुत्यवगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम्। न च यथैकस्य सामर्थ्यं दृष्टं तथाऽन्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति ’ इति यद्व्याख्यानं तदपि सर्वं ब्रह्मणि कल्पितमित्यद्वैतमते न युक्तम्। कस्यचित् पुरुषस्य जायमाने भ्रमे अधिष्ठानव्यापारस्यैवोपयोगाभावेन अधिष्ठानभूतेश्वरव्यापारनिर्वाहकसर्वशक्तेः करणानां चाभावेऽपि बाधकाभावात्।

अथादेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्ति। अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमिति वाक्यं

ब्रह्मणो मूर्तामूर्तविलक्षणत्वं प्राणादीनां सत्यत्वप्रदत्वं च वक्तीति न सर्वधर्मनिषेधकमित्युक्तं प्राक् ।

परमात्मनः सर्वकामत्वादिसर्वशक्तिमत्त्वं सूत्रसिद्धांततया अभिधाय तद्विरुद्धतया (सूत्रसिद्धांतविरुद्धतया) पुनः प्रतिषिद्धसर्वविशेषस्य ब्रह्मणः सर्वशक्तियोगस्सम्भवतीत्येतदपि अविद्याकल्पित रूपभेदोपन्यासेनोक्तमिति वाक्येन परमात्मनि सर्वज्ञत्वादिशक्तियोगादि कल्पितं (मिथ्या=नास्ति नासीन्न भविष्यति) इति कथनं सर्वज्ञत्वादिप्रतिपादकश्रुतिसूत्राणामप्रामाण्यकथकबौद्धवत् अद्वैतिनां शोभते इति । यच्चोक्तं वयं वैदिकाः वेदोक्तार्थाङ्गीकर्तारः, वयं सूत्रभाष्यकर्तारः इति वदत्सु अद्वैतिषु 'स्वपुत्रजातस्य विरुद्धभाषी तद्भाष्यकारोऽहमिति ब्रुवन् यः ।। तं तत्क्षणाद्यो न दिधक्षति स्म स व्यासरूपो भगवान् क्षमाब्धिः ।।' इति प्राचीनैरभियुक्तैः क्षमाब्धित्वं बादरायणस्य यद्वर्णितं तन्नाहं साधु मन्ये ।

'दैवी संपद्विमोक्षाय निबन्धायासुरी मता' 'नष्टात्मानोऽल्पबुद्धयः' 'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।।' इत्युक्ततमःप्राप्तये तत्साधनसम्पूर्त्यर्थमेव तेषां दहनाभावः न तु क्षमयेति ।

परमात्मनः सर्वज्ञत्वादिगुणवत्त्वं पारमार्थिकमेव, न तु अविद्याकल्पितमित्येतत् 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र. सू. ३।२।११) इति सूत्रव्याख्यावसरे स्पष्टयिष्यामः ।२।१।३१

ॐ न प्रयोजनवत्त्वात् ॐ

अन्यथा पुनश्चेतनकर्तृत्वं जगत आक्षिपति । न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति । कुतः ? प्रयोजनवत्त्वात् प्रवृत्तीनाम् । चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न

मदोपक्रमामपि तावत् प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः। किमुत गुरुतरसंरंभाम्। भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः। 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' (बृ.२ ४.५) इति। गुरुतरसंरंभा चेयं प्रवृत्तिर्यदुच्चावचप्रपञ्चं जगद्विम्बं विरचयितव्यम्। यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत। प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात्। अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टस्तथा परमात्मापि प्रवर्त्स्यत इत्युच्येत, तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत। तस्मादश्लिष्टा चेतनात् सृष्टिरिति। २।२।३२

ॐ लोकवत्तु लीलाकैवल्यम् ॐ

तु शब्देनाक्षेपं परिहरति। यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किञ्चित्प्रयोजनमनभिसन्धाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति, यथा चोच्छ्वासप्रश्वासादयोऽनभिसन्धाय बाह्यं किञ्चित्प्रयोजनं स्वभावादेव सम्भवन्ति, एवमीश्वरस्याप्यनपेक्ष्य किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति। न हीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः श्रुतितो वा सम्भवति। न च स्वभावः पर्यनुयोक्तुं शक्यते। यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरंभेवाभाति। तथापि परमेश्वरस्य लीलैव केवलेयम्। अपरिमितशक्तित्वात्। यदि नाम लोके लीलास्वपि किञ्चित्सूक्ष्मं प्रयोजनमुत्प्रेक्ष्येत। तथापि नैवात्र किञ्चित्प्रयोजनमुत्प्रेक्षितुं शक्यते आप्तकामश्रुतेः। नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा,सृष्टिश्रुतेः सर्वज्ञश्रुतेश्च' इति यदुक्तं शङ्कराचार्यैः तदद्वैतमतरीत्या न युक्तम्। यथा केनचित्पुरुषेण पुरुषे स्थाणुत्व

मारोपितं, शुक्तिकायां रजतत्वं कल्पितं, तथा ब्रह्मणि जगत् पुरुषेण कल्पितमिति हि अद्वैतमतमिति। यथा पुरुषे स्थाणुत्वाध्यासः अधिष्ठानपुरुषस्य प्रयोजनमपेक्ष्य न जातः किन्तु भ्रांतपुरुषीय-विशेषादर्शनादिमूलः तथा ब्रह्मणि जगदध्यासः पुरुषाज्ञानमूलक एव, न त्वधिष्ठानसम्बन्धिप्रयोजनमपेक्ष्य जायत इति प्रयोजनाभावेन ब्रह्मणो जगत्कारणत्वाक्षेपः, यथा राज्ञः राजामात्यस्य वा प्रयोजन-मनभिसन्धाय प्रवृत्तिः, तथा ब्रह्मणोऽपि प्रयोजनमनभिसन्धायैव प्रवृत्तिरिति समाधानं चायुक्तमद्वैतवादे।

ननु सूत्रकारो भगवान् बादरायण एव 'न प्रयोजनवत्त्वात्' इति सूत्रेण ईश्वरस्य प्रयोजनाभावेन सृष्टिकर्तृत्वमाक्षिप्य लोकवत्तु लीलाकैवल्यमिति सूत्रेण लोके राजादीनामिव प्रयोजनाभावेऽपि सृष्टिः सम्भवतीत्युक्तवानिति तद्व्याख्यानकर्तृभिस्तथैव व्याख्यातमिति सूत्रकारो भगवान् व्यास एव पर्यनुयोज्यः न हि शङ्कराचार्य इति चेत् न। यदि सूत्रकाराः जगतः ब्रह्मणि कल्पितत्वपक्षं स्वीकृत्य प्रयोजनाभावात् न ब्रह्मणि कारणत्व (जगद्भ्रमाधिष्ठानत्व) मुपपद्यते इत्याशङ्क्य राजादिदृष्टांतेन प्रयोजनमन्तरापि कारणत्वं सम्भवतीति असङ्गतं वदेयुः तदा ते सूत्रकारा अपि पर्यनुयोज्या एव। न हि ते जगतः मिथ्यात्व ( कल्पितत्व ) मवादिषुः। अतस्ते न पर्यनु-योज्याः। जगतः कल्पितत्वमुररीकृत्य ब्रह्मणः प्रयोजनमन्तरा कारणत्वं जगद्भ्रमाधिष्ठानत्वरूपं न संभवतीत्याक्षिप्य प्रयोजनमंतरापि कारणत्वं संभवति इति वक्तारश्शङ्कराचार्या एव पर्यनुयोज्या इति।

( रत्नप्रभा ) स्वप्नसृष्टिवदस्याः सृष्टेर्मायामात्रत्वान्न फलापेक्षे-त्याह नचेति।

( भामती ) अपि च नेयं पारमार्थिकी सृष्टिः, येनानुयुज्येत प्रयोजनम्, अपि त्वनाद्यविद्यानिबन्धना। अविद्या च स्वभावत एव

कार्योन्मुखी न प्रयोजनमपेक्षते । नहि........इत्याह ।

( आनन्द० ) किं च सृष्टेरविद्यानिबन्धनत्वेन अवस्तुत्वात् गंधर्वनगरादि भ्रमेष्विव न फलापेक्षेत्याह न चेति ।

(शं. भा.) नचेयं परमार्थविषया सृष्टिश्रुतिः अविद्याकल्पित-नामरूपव्यवहारगोचरत्वात् ब्रह्मात्मभावप्रतिपादनपरत्वाच्च इत्येतन्नैव विस्मर्तव्यम् इति । रत्नप्रभा भामती न्यायनिर्णयव्याख्यासहितेन शाङ्करभाष्यवाक्येन यदि सृष्टिः सत्या स्यात् तदानीमेव प्रयोजनापेक्षा स्यात् । न सृष्टिः सत्यपदार्थविषया किंत्वविद्याकल्पितेति सृष्टौ प्रयोजनाभावेन अयुक्तत्वशङ्का न युक्ता । प्रयोजनाभावेऽपि राजादीनां क्रीडादिवत् लीलारूपा सृष्टिरिति समाधानकथनं चायुक्त-मिति तैरवगतमिति ज्ञायते चेत् किं तावता । एतत्सूत्रयोः अद्वैत-मतविरुद्धत्वं नापगतमेव । एतावान् विशेषः पूर्वं शङ्कराचार्या भ्रांता इति पर्यनुयोज्यत्वमापन्नाः । इदानीमेतत्सूत्रयोरद्वैतमतविरुद्धत्वं ज्ञात्वापि बुद्ध इव वञ्चका इति वा व्याहतभाषिण इति वा पर्यनु-योज्यत्वमापन्ना इति ।

तथा च एते सूत्रे अद्वैतमतविरुद्धे सूत्रानुसारिणी शङ्कराचार्य-व्याख्यापि अद्वैतमतविरुद्धैवेति अद्वैतिभिः एते सूत्रशङ्करव्याख्ये त्याज्ये । अथवा सूत्रशङ्करव्याख्यानुसरणे च अद्वैतमतं वा त्याज्यम्। अद्वैतमतस्य सूत्रभाष्यविरुद्धत्वात् इति ॥ २।१।३३ ॥

ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॐ

‘ न ईश्वरः कारणमुपपद्यते....... नायमीश्वरस्यापराधः ... तथा हि दर्शयति श्रुतिः......इत्येवं जातीयका ’ इति यद्व्याख्यानं सूत्रस्य तत्तु आस्तिकानां युक्तं न तु नास्तिकानाम् । तथाहि शास्ता शास्त्रमित्याद्यस्तीति वदतामास्तिकानां लोकानां निष्कारणं सुखदुःख-

दातुः ईश्वरस्य वैषम्यनैर्घृण्यशङ्कायाः प्रसक्तिः। तस्य च 'पुण्यो वै पुण्येन कर्मणा भवति' 'एष ह्येव साधु कर्म कारयति' इत्यादि-श्रुत्युक्तदिशा तत्तत्कृतकर्मानुसारेण फलदातृत्वाद्वैषम्यनैर्घृण्ये न संभवतः इति समाधानं च कर्तुं शक्यते।

शास्ता नास्ति शास्त्रं नास्ति अयं लोकोऽपि नास्ति इति वदतां नास्तिकनास्तिकानामद्वैतिनां मते क ईश्वरः? के सुखदुःखे? कोदाता कः सुखदुःखभोक्ता? न निरोधः न चोत्पत्तिः इत्युक्तदिशा उत्पत्तिः क? संहारः क? क वा वैषम्यनैर्घृण्ये? कस्मात्। सर्वं कल्पितं कस्याप्यभावात्। न ईश्वरः कारणमित्येतस्य अद्वैतमतसिद्धांतत्वात् तस्य पूर्वपक्षतया कथनं 'पुण्यं नास्ति, पापं नास्ति, तत्प्र-योजककर्मापि नास्ति, कर्मकर्तारो न सन्ति, ताभ्यां प्राप्या लोकाः न सन्ति, गन्तारो न सन्ति, ईश्वरो हि तत्तत्कर्मानुसारेण फलदाता इत्येतत्सर्वं मिथ्या=त्रैकालिकनिषेधप्रतियोगि शशविषाणवत् इति स्वमतेन निषेध्यस्य सिद्धांतत्वकथनं बालानामुपहासकरम्। उन्मत्तोऽपि कथं स्वमतविरुद्धस्य सिद्धांतत्वं स्वमतानुकूलस्य पूर्वपक्षत्वं ब्रूयात्। पश्यन्तु अद्वैतमतस्य सूत्रानुकूल्यम्।

न च वैष्णवा एवंरीत्यैव दूषयन्ति अविचार्यैव इति वाच्यम्। भामतीकारैरेव 'अभ्युपेत्य च सृष्टेस्तात्त्विकत्वमिदमुक्तम्। अनिर्वा-च्या तु सृष्टिरिति न प्रस्मर्तव्यमत्रापि' इति वाक्येन एतत्पूर्वपक्षस्य समाधानस्य च विस्मरणमूलकत्वोक्त्या अस्मदुक्तरीत्या सिद्धांतपूर्वपक्ष-योः व्यत्यस्ततत्वस्य कथनात्। ननु कैः प्रस्मर्तव्यमित्युक्तमिति चेत् यैर्विस्मृत्यैवं व्याख्यानं कृतं तैरेव। शंकराचार्यैरेवंरीत्या व्याख्यात-मिति चेत् शंकराचार्यैरिदं व्याख्यानं विस्मरणेन कृतमिति सिद्ध्यति। २।१।३४॥

ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. ६।२।१) इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म यदपेक्ष्य विषमा सृष्टिः स्यात्। सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत। अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम। प्राग्विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत्। नैष दोषः। अनादित्वात्संसारस्य। भवेदेष दोषो यद्यादिमान् संसारः स्यात्। अनादौ तु संसारे बीजांकुरवद्धेतुहेतुमद्भावेन कर्मणस्सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते' इति यद्व्याख्यानं तदयुक्तम्। सर्वजगतः कल्पितत्वेन वैषम्यनैर्घृण्यशङ्काया एव अप्रसक्तया तत्तत्कर्मानुसरण-प्रयुक्तवैषम्यनैर्घृण्यपरिहारकथनस्यायोगात्। 'विचित्रसृष्टेः पूर्वं कर्मणामभावात् कर्मापेक्षत्वं न सम्भवतीत्याशङ्क्य संसारस्यानादि-त्वात् पूर्वपूर्वकर्मापेक्ष्य ईश्वर उत्तरोत्तरदेहं सृजतीति वैषम्यनैर्घृण्य-शङ्कापरिहारकथनमयुक्तम्।

'सदेव सोम्य' इति श्रुतिः कर्मणां प्राक्सृष्टेः ईश्वरेण अवि-भागं न बोधयतीति पूर्वमेवोक्तम्। २।१।३५

ॐ उपपद्यते चाप्युपलभ्यते च ॐ

उपपद्यते च संसारस्यानादित्वम्......उपलभ्यते च संसा-रस्यानादित्वं श्रुतिस्मृत्योः। श्रुतौ तावत् 'अनेन जीवेनात्मना' (छां. ६।३।२) सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारण-निमित्तेनाभिलपन्ननादिः संसार इति दर्शयति। इत्यादिवाक्येन यत्संसारस्यानादित्वं बोधितं तद्युक्तमेव। संसारस्यानादित्वात्। परंतु संसारस्यानादित्वविषये 'अनेन जीवेनात्मना' इति श्रुत्यु-

दाहरणमयुक्तम् । श्रुतौ जीवशब्दस्य अंतर्यामिनारायणपरत्वात् । श्रुत्यर्थस्तु पूर्वमेवोक्तो द्रष्टव्यः । २।१।३६

ॐ सर्वधर्मोपपत्तेश्च ॐ

इति सूत्रस्य ' चेतनं ब्रह्म जगतः कारणं प्रकृतिः........उप संहरति । यस्मादस्मिन् ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते । सर्वज्ञं सर्वशक्ति महामायं च ब्रह्म इति । तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति यद्व्याख्यानं कृतं तदद्वैतमतरीत्या अयुक्तम् ।

अस्मिन् ब्रह्मणि कारणे गृह्यमाणे इत्युक्तं कारणत्वं किंरूपं ? कर्तृत्वरूपं, निमित्तकारणत्वं, किंवा परिणामकारणत्वं, किंवा विवर्तोपादानत्वं ? कस्य ब्रह्मणः–निर्गुणस्य वा सगुणस्य वा ?

१) न तावन्निर्गुणस्य विवर्तोपादानत्वरूपं कारणत्वं वक्तुं शक्यम् । ' न भ्रमो नाम कश्चित् न संसारो नाम कश्चित् वर्तते ' सर्वमेतत् सर्वानुपपत्तिभाजनत्वेन अनिर्वचनीयमिति युक्तमुत्पश्यामः इति निर्गुणे ब्रह्मणि भ्रमकारणानां मध्ये कस्यापि कारणस्यासंभवात् भ्रमासंभवेन विवर्तोपादानत्वरूपकारणत्वासंभवात् ।

२) न वा निर्गुणस्य परिणाम्युपादानत्वरूपं कारणत्वम् । ब्रह्मणो निर्विकारत्वात् ।

३) न वा निर्गुणस्य कुलालवत् कर्तृत्वादिरूपनिमित्तकारणत्वम् । समस्तक्रियाशून्ये कर्तृत्वादिरूपकारणत्वस्यासम्भवात् ।

४) न सगुणं ब्रह्म विवर्तोपादानं (जगत्प्रकारकभ्रमविशेष्यम्) तस्यैव (सगुणस्य) कल्पितत्वेन [ कल्पना (भ्रमा) नन्तरभावितेन ] जगद्भ्रमकारणत्वासंभवात् ।

५) न वा सगुणस्य परिणाम्युपादानत्वं नापि कर्तृत्वरूपनिमित्तकारणत्वम् । अद्वैतमतरीत्या मिथ्याभूतस्य (कालत्रयेऽप्यसतः) पूर्वकालवृत्तित्वरूपस्य वा जननानुकूलशक्तिमत्त्वरूपस्य वा कारणत्वस्यासम्भवात् । सगुणस्य वा निर्गुणस्य वा विवर्तोपादानत्वं वा परिणाम्युपादानत्वं वा कर्तृत्वं मिथ्यैवेति मायिकत्वात्तत्रोपपत्तिचिन्ता न कार्येति चेत् साधु समार्थितो ब्रह्मकारणत्ववादः नास्तिकवत् । एवं केनापि रूपेण जगत्काणत्वस्य अद्वैतमतरीत्या सगुणस्य निर्गुणस्य वा ब्रह्मणो असम्भवात् अद्वैतदर्शनं न वैदिकम् । २।१।३६

॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥



गदगनगरे न्यू गदग मुद्रणालये मुद्रितम्



ज्ञानोत्कर्षजुषोऽघसंचयमुषो भास्वत्सुधांशुत्विषो ।
नानादुर्मतविद्विषो जितरुषो विद्वद्वरालीपुषः ।।
सच्चारित्र्यसुपूतभव्यवपुषस्सच्छास्त्रसार्थायुषः ।
सत्यध्यानमुनीशमान्यगुरवः कुर्युस्सदा मङ्गलम् ।।

।। श्रीदिग्विजयरामो विजयते ।।

# भेदपराण्येव खलु ब्रह्मसूत्राणि
## द्वितीयो भागः

श्रीमन्मध्वसिद्धांतोन्नाहिनीसभा
चिरतानूर्

# ब्रह्मसूत्रशांकरभाष्यस्य द्वितीयाध्यायीय द्वितीयपादपरामर्शः

यद्यपि मुमुक्षूणां मोक्षसाधनत्वे सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तं, परद्वेषकरपरपक्षनिराकरणं न युक्तं, तथापि महाजनपरिगृहीतानि सांख्यादिशास्त्राणि सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत्केषांचिन्मंदमतीनां "एतान्यपि सम्यग्दर्शनायोपादेयानी"त्यपेक्षा तथा युक्तिगाढत्वसंभवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु इत्यतः तदसारतोपपादनं वीतरागेणापि कर्तव्यमिति शंकराचार्येणैवोक्तत्वात् अस्माभिरपि शांकरमतस्य असारता (परमतनिरासप्रकारस्य स्वमतसाधनप्रकारस्य च प्रमाणविरुद्धता स्वव्याहततादिकं च) प्रदर्श्यते ।

अस्मिन्पादे शांकरभाष्यरीत्या अष्टाधिकरणानि पंचचत्वारिंशत्सूत्राणि ।

१) तत्र दशसूत्रात्मकं सांख्यमतनिरासकं प्रथमाधिकरणम् ।

२) चेतनस्य ब्रह्मणो जगत्कारणत्वे अभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात् । तददर्शनात् न चेतनं ब्रह्म जगत्कारणमिति वैशेषिकाणां आक्षेपस्य वैशेषिकप्रक्रिययैव निरासकमेकसूत्रात्मकं द्वितीयाधिकरणम् ।

३) वैशेषिकमतनिरासकं सप्तसूत्रात्मकं तृतीयाधिकरणम्

४) वैनाशिकसमय ( वैभाषिक सौत्रांतिकसमय ) निरासकं दशसूत्रात्मकं चतुर्थाधिकरणम् ।

५) विज्ञानवादिबौद्धमतनिरासकं पंचसूत्रात्मकं पंचमाधिकरणम् ।

६) सत्स्यात् असत्स्यादिति सप्तभंगिजैनमतनिरासकं चतुःसूत्रात्मकं षष्ठाधिकरणम् ।

७) केवलाधिष्ठात्रीश्वरकारणवादनिरासकं पंचसूत्रात्मकं सप्तमाधिकरणम् ।

८) भागवतमतनिरासकं चतुस्सूत्रात्मकमष्टमाधिकरणम् ।

तत्र यद्यपि सांख्यादिसप्तमतं शंकराचार्यैः निरस्तम् । अस्माकमपि तन्निरासः संमत एव । तथापि शंकराचार्यैः उक्तः यः विज्ञानवादिबौद्धमतनिरासप्रकारातिरिक्तषडधिकरणनिरासप्रकारः सः स्वव्याहतः प्रमाणविरुद्धश्च इति किंचित्प्रदर्शयामः ।

विज्ञानवादिमतनिरासकपंचसूत्रात्मकपंचमाधिकरणनिरासप्रकारः युक्त एव । परंतु स च निरासप्रकारपिशाचः स्वमतमपि (अद्वैतमतमपि) ग्रसति ( अद्वैतमतनिरासकोऽपि भवति ) । अद्वैतमतस्य निरसिष्यमाण विज्ञानवादि (शून्यवादि) बौद्धमताभ्यां साम्यात् इति प्रदर्शयिष्यामः ।

अष्टमाधिकरणस्य भागवतमतनिरासकतया व्याख्यानं तु सर्वप्रमाणविरुद्धत्वात् अयुक्तमिति च प्रदर्शयिष्यामः । तथाहि—

रचनानुपपत्तेर्नानुमानमिति सूत्रव्याख्याने "इदं जगत् अखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम् । आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभावितमैः शिल्पिभिः

मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेत्। लोष्ठ-पाषाणादिष्वदृष्टत्वात्। मृदादिष्वपि कुंभकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते। तद्वत्प्रधानस्यापि चेतनांतराधिष्ठितत्वप्रसंगः। नच मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं न बाह्य-कुंभकारादिव्यपाश्रयेणेति किंचिन्नियामकमस्ति। नचैवं सति किंचि-द्विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते चेतनकारणसमर्पणात्। अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति" इति सांख्यमते यद्दूषणमुक्तं तद्दूषणमद्वैतमतेऽपि समम्। तथाहि—अद्वैतमते हि निर्गुणं निष्क्रियं ब्रह्म एकं सत्यं, सत्त्वासत्त्वाभ्यां वक्तु-मशक्या च अविद्या त्वपरा। ब्रह्म तु निर्विशेषं शशविषाणवत् किंचि-दपि कर्तुमशक्तम्। उक्तं हि शंकराचार्यैः— 'निर्विशेषस्य...कार-णत्वाभ्युपगमे शशविषाणादिभ्योऽप्यंकुरादयो जायेरन्' इति (ब्र. सू. भा. २-२-३६) तस्य रचनाऽनुपपन्नैव। अविद्या तु प्रधानवत् अचे-तनेति रचनानुपपत्तेरेव हेतोः न जगत्कारणं भवितुं युक्तमिति सांख्य मतोपरि उक्तदूषणस्याद्वैतमतेऽपि सत्त्वात्।

## २ प्रवृत्तेश्च

इति सूत्रव्याख्याने "रचनासिद्ध्यर्था या प्रवृत्तिः साऽपि नाचे-तनस्य प्रधानस्य स्वतंत्रस्योपपद्यते मृदादिषु रथादिषु चादर्शनात्। नहि मृदादयो रथादयो वा स्वयमचेतनाः सन्तः चेतनैः कुलाला-दिभिः अश्वादिभिर्वा अनधिष्ठिताः विशिष्टकार्याभिमुखप्रवृत्तयो दृश्य-न्ते। अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणं अनुमातव्यं भवति" इति यद्दूषणं सांख्यमते प्रदर्शितं तदद्वैतमतेऽपि समम्। अद्वैत्यभिमतं निष्क्रियं ब्रह्म किंचिदपि कर्तुं न शक्तमिति न तस्या-

धिष्ठातृत्वं, अन्यत् अधिष्ठातृ च नास्त्येवेति केनाप्यनधिष्ठिताय जडभूताया अविद्यायाः कुलालाद्यनधिष्ठितमृदादिवत् प्रवृत्त्यनुपपत्तेर्नाचेतना अविद्या जगत्कारणमनुमातव्यं भवति इति दोषस्य समत्वात् जगतः अनुत्पत्तिरेवेति ।

ननु सांख्यमते जगतः सत्त्वांगीकारात् तस्य (सत्यभूतजगतः) उत्पत्तेः कारणाद्यावश्यकं । तदभावे उत्पत्त्याद्यसंभवो दोषः । ननु अस्मन्मते (अद्वैतमते " न निरोधो न चोत्पत्तिर्न बद्धो नच साधकः ।। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ।। स्वप्नमाये यथादृष्टे गंधर्वनगरं यथा । तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः "। ( गौड. का. ) द्वैतस्यासत्त्वं सिद्धम् सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतश्शशविषाणादेः (गौ.का.शां) बाधितस्य कालत्रयेऽपि सत्त्वाभावात् ( आनंदगिरि) इत्यादि गौडपादकारिकातच्छांकरभाष्याद्युक्तरीत्या सर्वस्यासत्त्वात् मायिकस्य सर्वस्य अनुपपत्तेर्भूषणत्वाच्च कारणापेक्षायां एव अभावेन रचनाप्रवृत्त्याद्यनुपपत्तयोऽस्माकमलंकारा एवेति युष्माभिर्या या अनुपपत्तयः प्रदर्शिताः तास्सर्वा अस्माकं अलंकारभूता एवेति दूषणदातृभिर्युष्माभिरस्माकं साहाय्यमाचरितमिति चेत् सर्वान् दोषानलंकारतया स्वीकुर्वतः तव देवानांप्रियस्येव वादिप्रतिवादित्वयोरसंभवात् उदासितव्य एवाति न प्रतिपक्षीकर्तव्य इति ।

**महद्दीर्घवद्वा ह्रस्वपरीमण्डलाभ्यामिति द्वितीयाधिकरणम्** कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते । शुक्लेभ्यस्तन्तुभ्यश्शुक्लपटस्य प्रसवदर्शनात् तद्विपर्ययादर्शनाच्च । तस्माच्चेतनस्य ब्रह्मणः जगत्कारणत्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात् । तददर्शनात्तु न चेतनं ब्रह्म जग

त्कारणं भवितुमर्हतीति परमाणुकारणवादिकृताक्षेपस्य परिहारार्थम् । महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् इति सूत्रं प्रवृत्तमिति मनसि निधाय "यथा परमाणोः परिमण्डलात्सतोऽणु ह्रस्वं च द्व्यणुकं जायते महद्दीर्घं च त्र्यणुकादि न परिमण्डलम् । यथा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घं च त्र्यणुकं जायते नाणु नो ह्रस्वम् एवं चेतनात्ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे किं तव च्छिन्नम्" इति वाक्येन चेतनात् ब्रह्मणोऽचेतनस्य जगतः उत्पत्तिः समर्थिता । तादृशाशंकैवायुक्ता । समाधानं च सुतरामयुक्तम् । तथा हि ब्रह्म विवर्तोपादानकारणं वा निमित्तकारणं वा नोभयमपि, अद्वैतमते निर्गुणे निष्क्रिये शशविषाणायिते ब्रह्मणि कारणत्वस्यैवासंभवात् । तुष्यत्विति न्यायेन कारणत्वांगीकारेऽपि समवायिकारणगुणप्राप्तेः क्वचित्संभवेऽपि अद्वैतमतरीत्या चैतन्यस्य ब्रह्मगुणत्वाभावेन कार्ये जगति चैतन्यप्राप्त्यापादनस्यायोगात् । समाधानं चायुक्तम् । 'चेतनात्ब्रह्मणः अचेतनं जगज्जनिष्यते' इति समाधानस्य निष्क्रियब्रह्मवादिनामद्वैतिनां मतेऽयोगात् इत्यादि ।

परमाणुवादनिरासके तृतीयेऽधिकरणे "अपि चाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वाऽनुभयस्वभावा वाऽभ्युपगम्यन्ते गत्यंतराभावात् । चतुर्धाऽपि नोपपद्यते । प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसंगः । निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात्सर्गाभावप्रसंगः । उभयस्वभावत्वं च विरोधादसमंजसम् । अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यप्रवृत्तिप्रसंगात् । अतंत्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसंगात् । तस्मादप्यनुपपन्नः परमाणु-

कारणवादः" इति यद्दूषणं परमाणुकारणवादे दत्तं तदद्वैतमतेऽपि समम्। अद्वैतमते ह्यद्वितीयस्य ब्रह्मणः कारणत्वं वक्तव्यं। तच्च ब्रह्म प्रवृत्तिस्वभावं वा निवृत्तिस्वभावं वाउभयस्वभावं वा अनुभयस्वभावं वा अभ्युपगमनीयं गत्यन्तराभावात्। चतुर्धाऽपि नोपपद्यते। प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसङ्गः। निवृत्ति-स्वभावत्वेऽपि नित्यमेव प्रवृत्तेर्भावात्सर्गाभावप्रसंगः। उभयस्वभावत्वं विरोधादसमंजसम्। अनुभयस्वभावत्वे तु निमित्तवशात् प्रवृत्तिनिवृ-त्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसन्निधानात् नित्यप्रवृ-त्तिप्रसंगात्। अतंत्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसंगात्। तस्मात् ब्रह्म-कारणतावादोऽप्यनुपपन्न इति दूषणस्य दातुं शक्यत्वात् इत्यादि स्वव्याघातकदूषणदानमयुक्तमेवेति।

तस्मिन्नेवाधिकरणे 'अपरिग्रहाच्चात्यन्तमनपेक्षा' (२७) इति सूत्रव्याख्याने– "प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनिबद्धः। अयं तु परमाणुकारण-वादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्त-मेवानादरणीयो वेदवादिभिः" इति यद्दूषणमुक्तं तदपेक्षया अद्वैत मते अधिकं दूषणमायास्यति अद्वैतमते वेदस्य तत्प्रामाण्यादेः सर्वजगतः असत्त्वांगीकारेण ब्रह्मणश्चाग्राह्यत्वांगीकारेण अद्वैतिभिरेव कोप्यंशोन गृहीतः। अन्यैर्मन्वादिभिस्तु ग्राह्योंऽशो नास्तीति किमु वक्तव्यम्। 'न मीमांसकादेर्मतं वा' इत्यादिना स्वीयमद्वैतमतमेव मिथ्येति नादृतं शंकराचार्यैरिति अन्यैरनादरणीयत्वं किं वक्तव्यमिति।

यथा असारतरतर्कसन्दब्धत्वात् ईश्वरकारणवादश्रुतिविरुद्धत्वात् श्रुतिप्रवणैश्च शिष्टैर्मन्वादिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षाऽस्मिन्

परमाणुकारणवादे कार्या श्रेयोऽर्थिभिः, तथा तदपेक्षया अधिका चानपेक्षा कार्या अद्वैतवादे । शान्तं पापम् ! पदार्थसत्त्वे खलु अपेक्षाप्रसक्तिः । अद्वैतवादस्य सत्त्वे खल्वपेक्षाप्रसक्तिः तस्यैवासत्त्वात् अपेक्षाप्रसक्ते-रेवाभावात् अपेक्षा न कार्येत्युक्तिरयुक्तैवेति ।

| परमाणुकारणवादे | अद्वैतवादे |
|---|---|
| १ असारतरतर्कसंदृब्धत्वेऽपि तदुक्तानां तर्काणां सत्वमस्ति | १ अद्वैत्युक्तानां तर्काणां सत्वमेवनास्ति । सारासारतरत्वादिकं तु दूरे |
| २ ईश्वरस्य कारणत्वांगीकारात् ईश्वरस्य कारणत्वप्रतिपादकश्रुतिविरोधो नास्ति इति श्रुतिप्रवणैः परिग्रहणयोग्यताऽस्त्यंशे परमाणुकारणवादस्य | २ अद्वैतमते ईश्वरस्य तत्कारणत्वस्याप्यसत्वं तत्प्रतिपादकश्रुतेरपि असत्वमित्यंगीकारेण श्रुतिप्रवणैः [ श्रुतिप्रामाण्यवादिभिः ] परिग्रहणयोग्यत्वासंभव एवाद्वैतवादस्य |

---

चतुर्थाधिकरणे निर्विशेषस्य स्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यंकुरादयो जायेरन् । नचैवं दृश्यते इति वाक्येन निर्विशेषस्याभावस्य कारणत्वासंभवरूपं यद्दूषणं बौद्धमतोपरि दत्तं अद्वैतमतोपर्यपि ब्रह्मणो निर्विशेषत्वांगीकारात् जगत्कारणत्वानुपपत्ति-रूपं तद्दूषणं सममित्याद्यनेकदोषाः संति । प्रकृतानुपयुक्तत्वान्न विचार्यन्ते ।

---

विज्ञानवादिबौद्धमतनिरासकं पंचमाधिकरणं तु बौद्धमतनिरा-सकवत् अद्वैतमतनिरासकं मतद्वयस्य साम्यात् । तथाहि–

## २८ नाभाव उपलब्धेः

“ एवं बाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषूद्भावितेषु विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते । केषांचित्किल

विनेयानां बाह्ये वस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवाद-प्रक्रियेयं विरचिता । नासौ सुगताभिप्रायः । तस्य तु विज्ञानैकस्कन्ध वाद एवाभिप्रेतः । तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणांतस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते । सत्यपि बाह्येऽर्थे बुध्द्या-रोहमंतरेण प्रमाणादिव्यवहारानवतारात् । कथं पुनरवगम्यतेऽन्तस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति । तद संभवात्······स्वप्नादिवच्च द्रष्टव्यम् । यथाहि स्वप्नमायामरीच्युदक-गन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवंति । एवं जागरितगोचरा अपि स्तंभादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते प्रत्ययत्वा विशेषात् " इत्यादिग्रन्थेन ज्ञेयं ज्ञानातिरेकेण असत् तदतिरेकेणासंभवात् नरश्रृंगवत् । जागरितगोचराः स्तंभादिप्रत्यया निरालंबनाः (अविद्यमान विषयकाः) प्रत्ययत्वात् स्वप्नादिप्रत्ययवत् (स्वप्नमायामरीच्युदकगंधर्व नगरादिप्रत्ययवत्) इत्याद्यनुमानेन जगत्प्रत्ययस्य निरालंबनत्वं (जाग्रत्प्रत्ययविषयाणां स्तंभादीनामसत्त्वं) बोधयद्बौद्धमतमनूद्य तन्नि रासार्थं प्रवृत्तस्य नाभाव उपलब्धेः इति सूत्रस्य व्याख्यानभूतेन " न खल्वभावो बाह्यस्यार्थस्याध्यवसातुं शक्यते । कस्मात् । उप-लब्धेः । उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्तंभः कुड्यं घटः पटः इति । नचोपलभ्यमानस्यैवाभावो भवितुमर्हति । यथाहि कश्चिद् भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं ब्रूयान्नाहं भुंजे न वा तृप्यामीति । तद्वदिंद्रियसंनिकर्षेण स्वयमुपलभमान एव बाह्य-मर्थं नाहमुपलभे न च सोऽस्तीति ब्रुवन् कथमुपादेयवचनः स्यात् " इति वाक्येन शंकराचार्याः जगतः अभाव=असत्त्वं न वक्तव्यम् उप-लभ्यमानत्वात् । अन्यथा अनुभवापलापापत्तेः इति निराचकुः । तदु परि बौद्धेन " नाहमेवं ब्रवीमि न कंचिदर्थमुपलभे इति किंतूपलब्धि-

व्यतिरिक्तं नोपलभे इति ब्रवीमि" इत्युक्तौ, "बाढमेवं ब्रवीषि निरङ्कुशत्वात्ते तुंडस्य। नतु युक्त्युपेतं ब्रवीषि। यत उपलब्धि-व्यतिरेकोऽपि बलादर्थस्याभ्युपगन्तव्यः उपलब्धेरेव। नहि कश्चि-दुपलब्धिमेव स्तंभः कुडयं चेत्युपलभते। उपलब्धिविषयत्वेनैव तु स्तंभकुडयादीन् सर्वे लौकिका उपलभन्ते" इति वाक्येन घटपटादी-नामुपलब्धिव्यतिरेकोऽपि स्वीकार्यः। सर्वे लौकिकाः उपलब्धि-विषयत्वेनैव स्तंभकुडयादीनुपलभन्ते न तूपलब्धिरूपत्वेनेति घटपटा दीनामुपलब्धिव्यतिरिक्तत्वं (ज्ञानातिरिक्तत्वमपि) स्वीकरणीयमि-त्यादिदूषणेन बौद्धमतं निराकृतम्। तदद्वैतमतेऽपि समम्। अद्वैति-भिरपि प्रज्ञानव्यतिरेकेण स्वाप्नजागरितयोर्न कश्चिद्विशेषः गृह्यते। तस्मात् प्रज्ञानव्यतिरेकेण अभावो युक्तस्तेषाम् (शां. बृहद्भा. २-४-७) इति।

कारणं परं ब्रह्म, (ज्ञानरूपं) तस्मात् कारणात् (ज्ञानरूपा-द्ब्रह्मणः) अनन्यत्वं=व्यतिरेकेणाभावः कार्यस्यावगम्यते इति (ब्र. सू. शां. २-४-१४) इत्यादिवाक्यैः ज्ञानव्यतिरेकेण जगतः अभावः (असत्त्वं) अङ्गीक्रियते इति ज्ञायते इति ज्ञानव्यतिरेकेण जगतः अभावांगीकारे बौद्धमतोपरि यद्यद्दूषणमुक्तं तन्मायावाद्यद्वैतमतेऽपि वज्रलेपायितमिति बौद्धमतवत् मायावाद्यद्वैतमतं प्रमाणविरुद्धत्वेन दुष्टत्वादनुपादेयम्।

स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि स्तंभादिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति, बाह्यार्थापलापिना बौद्धे-नोक्तौ तन्निराकरणार्थं प्रवृत्तं सूत्रं-

"ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ" [२९] इति

तस्य व्याख्यानभूतैः "न स्वप्नादिप्रत्ययवत् जागरितप्रत्ययां भवितुमर्हति। कस्मात्? वैधर्म्यात्। वैधर्म्यं हि भवति स्वाप्नजागरितयोः। किंपुनर्वैधर्म्यं? बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु, प्रतिबुद्धस्य मिथ्या मया उपलब्धो महाजनसमागम 'इति, नह्यस्ति मम महाजनसमागमो निद्राग्लानं तु मे मनो बभूव येनैषा भ्रांतिरुद्बभूवे'ति, एवं मायादिष्वपि भवति, यथायथं बाधः। नैवं जागरितोपलब्धं वस्तु स्तंभादिकं कस्यांचिदवस्थायां बाध्यते" इति वाक्यैः स्वाप्नप्रत्ययस्य बाधकसद्भावेन तस्य अविद्यमानविषयकत्वेऽपि जाग्रत्प्रत्ययस्य कस्यामप्यवस्थायां बाधाभावात् जाग्रत्प्रत्ययः विद्यमानविषयक एव न असद्विषयकः (ज्ञानविषयीभूतं जगत् सत्यमेव न मिथ्या) इति बौद्धाभिमतं जगतः मिथ्यात्वं निराकृत्य, सत्यत्वं व्यवस्थापयद्भिः शंकराचार्यैः विमतं जगत् मिथ्या दृश्यत्वात् (ज्ञानविषयत्वात्) स्वप्नवत् इत्याद्यनुमानैः जगतः § मिथ्यात्वबोधकं (असत्त्वबोधकं) अद्वैतमतमपि निराकृतम्। अद्वैतिभिरपि विज्ञानवादिबौद्धवत् जाग्रत्प्रत्ययस्य असद्विषयत्वांगीकारात्। तथाहि-जगत्प्रत्ययस्यासद्विषयकत्वपराणि तद्वाक्यानि — "ज्ञानमात्रं पारमार्थिकं। तत्रैव ज्ञातृज्ञेयादि कल्पितमिति सौगतमतमेव भवतापि संगृहीतमित्याशंक्याहेति," (आनंदगिरीयं) 'यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तं' (शां. भा.)

---

§ नास्तित्वापर्यायत्वात् मिथ्यात्वस्येति ब्रह्मविद्याभरणे

'वस्तुतः ब्रह्मभिन्ने शून्यवादिभिरस्माकं साम्यमिष्टमित्यपि बोध्यम्। (अद्वै. सि. व्याख्या)

ननु सर्वस्यापि वियदादिप्रपंचस्य स्वप्नतुल्यत्वे तद्वद्विज्ञानात्मकमेव सर्वं वक्तव्यम्। ततश्च विज्ञानवादिसमयप्रवेशापत्तिरिति शंकते—' ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययं च भगवत्समयः। यदि बाह्यवस्तु वितथं नु कथं समयाविमौ विसदृशौ भवतः (संक्षेपशारीरक) इत्यादीनि॥

उक्तं च भास्कराचार्येण शंकराचार्यसमकालीनेन "ये तु बौद्धमतावलंबिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः" इति। भामत्यामपि. 'वैधर्म्याच्च न स्वप्नादिवत् बाधाबाधौ वैधर्म्यम् स्वप्नप्रत्ययो बाधितो जाग्रत्प्रत्ययश्चाबाधितः। त्वयापि चावश्यं जाग्रत्प्रत्ययस्याबाधितत्वमास्थेयम्। तेन हि स्वप्नप्रत्ययो बाधितो मिथ्येत्यवगम्यते, जाग्रत्प्रत्ययस्य तु बाध्यत्वे स्वप्नप्रत्ययस्यासौ न बाधको भवेत्, नहि बाध्यमेव बाधकं भवितुमर्हति। तथाच न स्वप्नप्रत्ययो मिथ्येति साध्यविकलो दृष्टांतः स्यात् स्वप्नवदिति। तस्माद्बाधाबाधाभ्यां वैधर्म्यान्न स्वप्नप्रत्ययदृष्टांतेन जाग्रत्प्रत्ययस्य शक्यं निरालंबनत्व (असद्विषयकत्व) मध्यवसातुं' इति वाक्यैः जगत्प्रत्ययस्य निरालंबनत्वं (जगतः स्वप्नवत् मिथ्यात्वं) वदद्बौद्धमतं निराकुर्वद्भिः भामतीकारैः जगदसत्त्ववादिमायावादिमतमपि निराकृतम्।

(भामती) अपिच स्वतः प्रामाण्ये सिद्धे जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धं। नानेनानुमानेन ( स्तंभादिप्रत्ययाः निरा–

लंबनाः प्रत्ययत्वात् । स्वाप्नप्रत्ययवत् इत्यनुमानेन ) अन्यथयितुं शक्यम् । अनुभवविरोधे तदनुत्पादात् । अबाधितविषयतापि अनुमानोत्पादसामग्री । न च कारणाभावे कार्यमुत्पत्तुमर्हति इत्याशयवानाह ॥ अपि चानुभवविरोधप्रसंगादिति ॥

" अपि चानुभवविरोधप्रसंगाज्जागरितप्रत्ययानां स्वतो निरालंबनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुं (कथं) इष्यते । नच यो यस्य स्वतों धर्मो न संभवति सोऽन्यस्य साधर्म्यात्तस्य संभविष्यति । न ह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति ! दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः " इति ( भाष्यम् )

(रत्नप्रभा ) ' अपि चेति । वस्तुतो घटाद्यनुभवस्य निरालंबनत्वं धर्मो यदि स्यात्तदा किं दृष्टांताग्रहेण । प्रत्यक्षतोऽपि वक्तुं शक्यत्वात् । नहि वन्हेरौष्ण्यं दृष्टांतेन वक्तव्यम् । यदि न वस्तुतो धर्मोऽस्ति तदा किं दृष्टांतेन । बाधितस्य दृष्टांतसहस्रेणापि दुःसाध्यत्वात् । अतः स्वतो निरालंबनत्वोक्तौ सालंबनत्वानुभवबाधभिया त्वयाऽनुमातुमारब्धम् । तथापि बाधो न मुंचतीत्यर्थः ' ।

ननु प्रत्यक्षादिप्रतीतिर्भ्रमरूपा भविष्यति युक्तिबाधितत्वादिति चेन् न प्रत्यक्षादिविरोधयुक्तीनामेवाभासत्वोपपत्तेः इति (ब्र. वि. भरणे) इति भाष्य भामती रत्नप्रभा ब्रह्मविद्याभरण वाक्यैः स्तंभादिजाग्रत्प्रत्ययाः असदालंबनाः ( मिथ्यापदार्थविषयकाः ) प्रत्ययत्वात् स्वाप्नप्रत्ययवत् इत्यनुमानस्य जागरितप्रत्ययानां सदालंबनत्वग्राहकानुभवविरोधेन बाधितत्वात् न तेनानुमानेन जाग्रत्प्रत्ययानां निरालंबनत्वं सिध्यतीति जाग्रत्प्रत्ययानां अनुभवानुसारेण सदालंबनत्वं [ सत्यपदार्थविषयकत्वं = जगतः सत्त्वं ] अंगीकरणीयमिति बौद्ध-

मतं निराकुर्वद्भिः शंकराचार्यप्रभृतिभिः विमतं ( जगत् ) मिथ्या दृश्यत्वादित्याद्यनुमानेन जगतः मिथ्यात्वबोधकाद्वैतमतमपि निराकृतम्। प्रत्यक्षादि प्रमाणविरोधेन युक्तीनां आभासत्वात्।

## [३०] ॐ न भावोऽनुपलब्धेः ॐ

विनाऽप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्प्यते इति यद्बौद्धैरुक्तं तस्य "न भावो वासनानामुपपद्यते त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानाम्। अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति। अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासाना भवेयुः:" इति वाक्येन अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं वासाना भवन्ति। बाह्यानामर्थानामनुपलब्धेर्वासनायाः उत्पत्तिरेव न संभवति इति शंकराचार्योक्तदूषणोपरि बाह्यार्थानुपलब्धावपि पूर्वपूर्ववासन.बलात् उत्तरोत्तरविज्ञानवैचित्र्यमस्तु बीजांकुरवदनादित्वादिति बौद्धेन परिहारे शङ्किते, 'अनादित्वेऽप्यन्धपरंपरान्यायेनाप्रतिष्ठैवानवस्था व्यवहारविलोपिनी स्यान्नाभिप्रायासिद्धिः इति यद्दूषणमुक्तं तदद्वैतमतेऽपि समम्। तथाहि–अध्यासभाष्ये 'अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः' इति शांकरभाष्यम्। तस्य व्याख्या भामती-'स्यादेतत् आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः, समारोपनिबन्धना च प्रतीतिरिति दुर्वारं परस्पराश्रयत्वमित्यत आह-नैसर्गिक इति-स्वाभाविकोऽनादिरयं व्यवहारः व्यवहारानादितया तत्कारणस्याध्यासस्यानादितोक्ता। ततश्च पूर्वपूर्वविज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वात् बीजाङ्कुरवत् न परस्पराश्रयत्वमित्यर्थः-इति भाष्यतद्व्याख्यानभामतीग्रंथाभ्यां विज्ञानवादिबौद्धवत् बाह्यपदार्थानां सत्यानाम

भावेऽपि पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासं प्रति कारणत्वोक्त्या अंधपरंपरान्यायेन (यथा एकेन नीलं पय इत्युपदिष्टे कथं त्वया पयसो नैल्यमवगतमिति पृष्टे ममान्धान्तरेणोपदिष्टमिति, तं प्रति पृष्टे तेनाप्यन्धान्तरेणैवोपदिष्टमित्येवमन्धपरंपरान्यायेन) जगद्भ्रम एव न सिध्यति। उक्ता च भ्रमस्यानुपपत्तिः ४-१-३ ब्रह्मसूत्रभाष्यव्याख्यानभामत्यां 'निरंशस्यापि चानाद्यनिर्वाच्याविद्यातद्वासनासमारोपितविविधप्रपंचात्मनः सांशस्येव कस्यचिदंशस्याग्रहणात् विभ्रम इव' इति वाक्येन पूर्वपूर्वभ्रमेण उत्तरोत्तरभ्रमो जात इवावभासते इति प्रदर्श्य अंधपरंपरान्यायेन भ्रमो न संभवतीति बौद्धमतोपर्युक्तं दोषं स्मृत्वा "परमार्थस्तु न विभ्रमो नाम कश्चित्, नच संसारो नाम, किंतु सर्वमेतत्सर्वानुपपत्तिभाजनत्वेनानिर्वचनीयं (वक्तुमशक्यं) इति युक्तमुत्पश्यामः" इति वाक्येन जगद्भ्रमासंभवः स्वीकृतः।

स्वोक्तभ्रमासंभवविषये तदनेनाभिसंधिनोक्तं — 'यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रतिबोध' इति वाक्येन शंकराचार्याणां संमतिरपि दर्शिता।

अन्येऽप्याहुः—भ्रमासंभवेन द्वैतस्य प्रमत्त्यभावेन द्वैतध्वंसरूपे अद्वैते यदि न तोपोऽस्ति सर्वदा त्वं मुक्त एवासि द्वैतरूपबंधाभावादित्यर्थकं 'यद्यद्वैते न तोपोऽस्ति मुक्त एवासि सर्वदा' इति प्राचीनाचार्याणां वाक्यमुदाहृत्य भ्रमासंभवः प्रदर्शित इति अद्वैतमतेऽपि जगद्भ्रमस्यासंभव एवेति। तथाच बौद्धान् प्रति उक्तं दूषणमद्वैतमतेऽपि सममिति 'न भावोऽनुपलब्धेः' इति सूत्रं शंकरभाष्यरीत्या यथा बौद्धमतनिरासकं तथा अद्वैतमतनिरासकं तयोर्मतयोः वैषम्याभावात्।

शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते । न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारः अन्यत्त्वमनधिगम्य शक्यतेऽपन्होतुम् । अपवादाभावे उत्सर्गप्रसिद्धेरिति शून्यवादिमतनिरासकं २-२-३१ शांकरभाष्यं भामतीकारा एवं व्याचक्रुः...“अर्थज्ञाने सत्त्वेन तावद्विचारं न सहेते, नाप्यसत्त्वेन असतो भासनायोगात्, नोभयत्वेन विरोधात्सदसतोरेकत्रानुपपत्तेः, नाप्यनुभयत्वेन एकनिषेधस्येतरविधाननान्तरीयकत्वात् । तस्माद्विचारासहत्वमेवास्तु तत्त्वं वस्तूनाम्”। यथाहुः...‘इदं वस्तुबलायातं यद्वदन्ति विपश्चितः । यथा यथाऽर्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥’ इति न कचिदपि पक्षे व्यवतिष्ठत इत्यर्थः । तदेतन्निराचिकीर्षुराह ॥ “शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते’॥ लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते । सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति । तथाच सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते” इति वाक्यैः सत्त्वेन तावद्विचारं न सहते (सन्न भवति) नाप्यसत्त्वेन विचारं सहते । नोभयत्वेन विरोधात् । नाप्यनुभयत्वेन एकनिषेधस्येतरविधाननान्तरीयकत्वात् विचारासहत्वमेव तत्त्वं वस्तूनामिति बौद्धमतमयुक्तम् । सदसतोश्च विचारासहत्वस्य सर्वप्रमाणविप्रतिषिद्धत्वादिति बौद्धमतोपरि यद्दूषणमुक्तं तदद्वैतमतेऽपि समम् । अद्वैतिभिरपि पदार्थानां सत्त्वाद्यभावस्यांगीकृतत्वादिति अद्वैतमतमपि बौद्धमतवदेवाप्रामाणिकं प्रमाणविरुद्धं च ।

'तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते न सांव्यवहारिकम् । तथाच भिन्नविषयत्वात् न सर्वप्रमाणप्रतिषेध इति बौद्धेन मन्मते निषेध्यमानं सत्त्वं पारमार्थिकं, प्रमाणेन गृह्यमाणं सत्त्वं सांव्यवहारिकमिति निषेध्यपारमार्थिकसत्त्वस्य प्रमाणग्राह्यव्यावहारिकसत्त्वेन भिन्नत्वात् पारमार्थिकसत्त्वनिषेधकस्यास्मन्मतस्य व्यावहारिकसत्त्वविषयकेण प्रमाणेन न विरोध इति नास्मन्मतं प्रमाण विरुद्धमिति बौद्धेनोक्तौ तन्निराकरणार्थं प्रवृत्तं " न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपन्होतुम् " इति भाष्यमित्थं व्याचकुर्भामतीकाराः... " प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते । अतात्त्विकत्वं तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यम् । न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते । बाधकं चातात्त्विकत्वमेषां तद्गोचरविपरीततत्त्वोपदर्शनेन दर्शयेत् । यथा शुक्तिकेयं न रजतं मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि । तद्वदिहापि समस्तप्रमाणगोचरविपरीततत्त्वान्तरव्यवस्थापनेनातात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्शनीयम् । न त्वव्यवस्थापिततत्त्वान्तरेण प्रमाणानि शक्यानि बाधितुम् " इति । तस्य चायमभिप्रायः —

प्रमाणानि स्वविषयाणां पारमार्थिकसत्त्वमेव गृण्हन्ति न व्यावहारिकसत्त्वं, बाधके सति तद्विषयस्यापारमार्थिकत्वमवगंतव्यम् । इदं रजतमित्यादिरूपस्य रजतादेः पारमार्थिकसत्त्वं गृण्हतः ज्ञानस्य शुक्तिकेयं न रजतमित्यादिज्ञानेन बाधितत्वात् अपारमार्थिक (मिथ्या) विषयकत्वावगमवत् । प्रकृते च जगतः पारमार्थिकत्वावगमकप्रमाणस्य बाधकं नोपलभ्यत इति न जगतः पारमार्थिकत्वनिषेधः व्यावहारि-

कत्वांगीकरणं च युक्तमिति। तथा च जगतः विचारासहत्वं = व्यावहारिकत्वं = पारमार्थिकसत्त्वाभावं स्वीकुर्वद्बौद्धमतस्य सर्वप्रमाणविरोधो दुष्परिहर एवेति यद्दूषणमुक्तं यद्दूषणं जगतः § विचारासहत्वं= व्यावहारिकसत्त्व=मिथ्यात्वं प्रमाणानि विषयीकुर्वन्ति, वयं प्रमाणसिद्धं व्यावहारिकसत्त्वमंगीकृत्य पारमार्थिकसत्त्वं निषेधाम इति नास्मदीय-मतस्य प्रमाणविरोध इति वदतामद्वैतिनां मतेऽपि सममिति अद्वैति-मतस्य जगतः पारमार्थिकसत्यत्वग्राहकसर्वप्रमाणविरोधः बौद्धमत-स्येव दुर्वारः।

किंच 'विचारासहत्वं वस्तूनां तत्त्वं व्यवस्थापयत् बाधकं, (प्रमाणं) अतात्त्विकत्वं प्रमाणानां दर्शयति' इति बौद्धेन पारमार्थिकसत्त्वग्राहकप्रमाणस्य बाधो वर्तत इति जगतः पारमार्थिकत्वं न ग्राह्यमित्युक्तौ "किं पुनरिदं विचारासहत्वं वस्तूनां यत्तत्वम-भिमतं, किं तद्वस्तु परमार्थतस्सदादीनामन्यतमत् केवलं विचारं न सहते। अथ विचारासहत्वेन निस्तत्त्वमेव। तत्र परमार्थतः सदादीनामन्यतमत् विचारं न सहत इति विप्रतिषिद्धम्। न सहते चेन्न सदादीनामन्यतमत् अन्यतमच्चेत् कथं न विचारं सहते। अथ निस्तत्वं चेत्, कथमन्यतमत्तत्वमव्यवस्थाप्य शक्यमेवं वक्तुम्। न च निस्तत्त्वतैव तत्वं भावानाम्। तथा सति हि तत्त्वाभावः स्यात्, सोऽपि च विचारं न सहते इत्युक्तं भवद्भिः" इति वाक्येन विकल्पपूर्वकं बौद्धमते यद्दूषणमुक्तं तदद्वैतमतेऽपि समम्।

---

§ प्रत्येकं सदसत्वाभ्यां विचारपदवीं न यत्। गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः इति (चित्सुखी)

"अपि चारोपितं निषेधनीयम्। आरोपश्च तत्त्वाधिष्ठानो दृष्टो यथा शुक्तिकादिषु रजतादेः—न चेत् किंचिदस्ति तत्वं कस्य कस्मिन्नारोपः-" इति वाक्यैः बौद्धमते तत्वभूताधिष्ठानाभावेन भ्रमासंभव उक्तः—स (भ्रमासंभवो) न युक्तः। शून्यवादिनामपि शून्यताया एव सत्यत्वात् (शां. भा. भाम. १-१-१) इति भामतीवाक्येन, 'द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना। लोके संवृतिसत्यं च सत्यं च परमार्थतः' इत्यादिबौद्धवाक्यैश्च शून्यवादिबौद्धमते शून्यस्य तत्वतांगीकारावगमात् तस्यैव भ्रमाधिष्ठानत्वसंभवात्। नच शून्यं तत्वमित्यस्मिन्विषये प्रमाणाभावात् कथं शून्यस्य तत्त्वतांगीकार इति वाच्यम्। अद्वैतमतेऽपि ब्रह्मणः अज्ञेयत्वांगीकारेण निर्गुणं ब्रह्म तत्वमित्यस्मिन् विषये प्रमाणाभावेन निर्गुणं ब्रह्म तत्वमित्यंगीकारस्याप्ययोगात्। नच शून्यस्याज्ञेयत्वे निर्धर्मकत्वे च अधिष्ठानत्व (भ्रमविशेष्यत्व) प्रयोजकानां सामान्यज्ञानविशेषाज्ञानसामान्यधर्मविशेषधर्मारोप्यसादृश्यानामभावेन शून्ये जगदारोपासंभव इति वाच्यम्। अद्वैत्यभिमते निर्गुणे ब्रह्मण्यपि निर्धर्मकत्वेनाज्ञेयत्वेन च अधिष्ठानत्वप्रयोजकानां सामान्यज्ञानादीनामसंभवेन भ्रमासंभवस्य तुल्यत्वात्। तथाच "तस्मान्निष्प्रपंचं परमार्थसद्ब्रह्म अनिर्वाच्यप्रपंचात्मना आरोप्यते" इत्युक्तिः अयुक्तैवेति॥ 'तच्च तत्वं व्यवथाप्य अतात्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपद्यते' इत्युक्तेरसंभवेन यथा शून्यवादिमते जगतः पारमार्थिकसत्त्वग्राहिप्रमाणस्य बाधासंभवेन जगत् पारमार्थिकं न व्यावहारिकमिति त्वयोक्तं तथा अद्वैतमतेऽपि जगतः पारमार्थिकसत्त्वग्राहिप्रमाणस्य बाधासंभवेन जगत्पारमार्थिकमेव न व्यावहारिकमिति सिध्यतीति बौद्धमतवत् अद्वैतमतमपि सर्वप्रमाणविप्रतिषिद्धमेवेति।

"शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्धः तन्निराकरणाय नाद-रःक्रियते" इति (ब्र. शां. भा. २-२-३१) वाक्यमिदं ब्रह्म-विद्याभरणकाराः 'शून्यपदेन सर्वप्रपंचातीतं भावरूपं किंचित्तत्त्वं विवक्षितमुताभावरूपम् । नाद्यः । तथा सति वाचोयुक्त्यंतरेण ब्रह्मवाद एवाश्रितः । यदि द्वितीयः पक्षः तदा सर्वप्रमाणविरोधः । सर्वप्रमाणैः प्रपंचे उपलभ्यमाने तदभावःतत्त्वमिति निरूपयितुम-शक्यमिति दूषणस्य स्फुटतया तन्निराकरणाय न सूत्रकृता सूत्राण्या-रचितानि ' इति व्याचक्रुः ।

तत्र शून्यं भावरूपमिति प्रथमकल्पे वाचोयुक्त्यंतरेण शून्य-वादिबौद्धैः ब्रह्मवाद एवाश्रित इति शून्यवादिबौद्धमतसाम्यमद्वैतमतस्य अद्वैतिभिरेवांगीकृतमिति नाद्वैतमतनिराकरणमस्माभिः प्रत्येकं कार्यं बौद्धमतनिराकरणेनैव तन्निरासात् । बौद्धैः शून्यं प्रपंचाभावरूपमिति द्वितीयपक्षांगीकारे प्रपंचस्य प्रमाणैरुपलभ्यमानत्वेन प्रपंचाभाव एव तत्त्वमिति पक्षस्य साधयितुमशक्यत्वमिति यद्दूषणं बौद्धमतोपरि अद्वैतिभिरुक्तं तदद्वैतमतेऽपि समम् । तैरपि ब्रह्मणः प्रपंचाभावरूप-त्वांगीकारात् । तथाहि तद्वाक्यानि

' प्रपंचनिषेधाधिकरणीभूतब्रह्मस्वरूपत्वात् निषेधस्य तात्विक-त्वेऽपि नाद्वैतहानिकरत्वम् ' ( अद्वैतसिद्धिः )

' भावेऽप्यभावानतिरेकस्वीकारादेवाद्वैताव्याघातः अस्माभिरपि ब्रह्मव्यतिरिक्ताभावानंगीकारात् नाद्वैतव्याघातः इति । (खंडनखंडखाद्यं)

एतेन यत् कैश्चिदुक्तं सांख्यादिमतनिराकरणार्थं भगवता-बादरायणेन यथा सूत्राण्यारचितानि तथा अद्वैतमतनिराकरणार्थं

सूत्राणि न रचितानि अतः सूत्रकारणामद्वैतमतं संमतमिति तदपि निराकृतम् ।

अद्वैतिभिर्ब्रह्मणः प्रपंचाभावरूपत्वांगीकारेण " सर्वप्रमाणैः प्रपंचे उपलभ्यमाने तदभाव एव तत्वमिति निरूपयितुमशक्यमिति दूषणस्य स्फुटत्वेन तन्निराकरणाय न सूत्रकृता सूत्राणि रचितानीति शून्यवादि-बौद्धमतनिरासकसुत्राणामरचनमिव अद्वैतमतनिरासकसुत्राणामरचन-संभवात् ।

ननु ' प्रत्यक्षादिप्रतीतिर्भ्रमरूपा भविष्यति युक्तिबाधितत्वात् ' इति वाक्येन प्रत्यक्षादिप्रतीतेः भ्रमत्वेन तया सिध्यत् पारमार्थिकत्वं नांगीकारार्हमिति बौद्धाक्षेपस्य प्रत्यक्षादिप्रमाणविरोधे युक्तीनामेवा-भासत्वोपपत्तेः इति ( ब्र. वि. भ. ) वाक्येन प्रत्यक्षबाधकत्वं युक्तेर्न संभवतीति जगत् सदित्येवांगीकरणीयमिति यत् निराकरणं कृतं तस्याद्वैतमतेऽपि साम्येन बौद्धवदद्वैतिभिरपि जगतः सत्त्वमंगीकर-णीयमेवेति ॥ बौद्धाद्वैतमतयोस्साम्यात् अद्वैतिनां बौद्धमतोपरि यद्दूषणं तदद्वैतमतेऽपि प्राप्नोति । यः परिहारः अद्वैतिनां, स परिहारो बौद्धमतेऽपि सम इति बौद्धमतनिरासकानि सुत्राणि अद्वैतमतनिरासका-नीति अद्वैतमतं बौद्धमतवत् सकलप्रमाणविरुद्धमिति बौद्धमतवत् अद्वैतमतमपि सकलप्रमाणविरुद्धत्वादास्तिकैर्न ग्राह्यमेवेति ।

## ३२ ॐ सर्वथाऽनुपपत्तेश्च ॐ

" किं बहुना सर्वप्रकारेण यथा यथाऽयं वैनाशिकसमय उप-पत्तिमत्त्वाय परीक्ष्यते तथा तथा सिकताकूपवद्विदीर्यत एव न कांचि-

दप्यत्रोपपत्तिं पश्यामः । ततश्चानुपपन्नो वैनाशिकतंत्रव्यवहारः" इति उपपत्त्युपलब्ध्यभावेन अनुपपन्नत्वरूपं यद्दूषणमुक्तं बौद्धमतोपरि शंकराचार्यैः, तदद्वैतमतेऽपि समं अद्वैतमतस्यानुपपन्नत्वात् । अद्वैतिभिः कण्ठत एव स्वमतस्यानुपपन्नतायाः ( उपपत्तिविरुद्धताया ) अंगीकृतत्वेन अस्माकं अनुपपन्नता ( उपपत्तिविरुद्धता ) प्रदर्शनपरिश्रमभारः तैरेव अवरोपितः । तथाहि अद्वैतमतस्य उपपत्तिविरुद्धतानुमोदनपराणि तद्वाक्यानि–

( अद्वैतसिद्धिः ) 'तस्य मायिकत्वेन मायायाश्च......... सर्वानुपपत्तेर्भूषणत्वात्' इति ।

( ब्रह्मानंदी ) भूषणत्वादिति । उक्तं हि खण्डने 'अनवस्थादयो दोषाः सत्तां निघ्नंति वस्तुनः । अद्वैतिनां ते सुहृदः प्रपंचे तत्प्रसंजकाः ॥' इति । सत्तां निघ्नंति=सत्ताभावं ज्ञापयंति । तत्प्रसंजकाः= सत्वाभावज्ञापकाः ।

[ भामती ] अस्तु वा अनुपपत्तिरेव कार्यकारणयोर्मायात्मकत्वात् । अनुपपत्तिर्हि मायामुपोद्बलयति अनुपपद्यमानार्थत्वान्मायायाः ( ब्र. सु. १-४-२२)

( कल्पतरुपरिमले ) मायायामनुपपत्तिरलंकार इति न मायावादे अत्यंतमुपपादनार्थं प्रयतितव्यमिति ( ब्र. सु. १-४-२२ )

( भामती ) परमार्थस्तु-न भ्रमो नाम कश्चित् नापि संसारो नाम-किंतु सर्वमेतत् **सर्वानुपपत्ति** भाजनत्वेन अनिर्वचनीयमिति युक्तमुत्पश्यामः'

' दुर्घटत्वमविद्याया भूषणं न तु दूषणम् । कथंचिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ' इति। इत्याद्यव्दैतिवाक्यानि स्वमतस्यानुपपन्नतां (उपपत्तिराहित्यं=उपपत्तिविरुद्धतां च ) दर्शयंति ।

किंच बौद्धमतोपरि " अपिच बाह्यार्थविज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसंबद्धप्रलापित्वं " इति वाक्येन इतरेतरविरुद्धोपदेशकर्तृत्वेन सुगतस्यासंबद्धप्रलापित्वरूपं यद्दूषणमुक्तं तत् अद्वैतमतोपरि समम् । १ परिणामवाद विवर्तवाद द्वैतोपशांतिवादत्रयं २ जीवाभासतानाभासतावादव्दयं. ३ जीवैकत्वानेकत्ववादद्वयं ४ तत्त्वमसीत्यादिवाक्यानां जीवब्रह्मैक्यबोधकत्व चिन्मात्रबोधकत्व बोधकत्वाभावरूपवादत्रयं एवमेवानेकवादान् परस्परं विरुद्धान् उपदिशता अव्दैतिनाऽपि आत्मनोऽसंबद्धप्रलापित्वस्य स्पष्टीकृतत्वात् ।

ननु भगवतः शंकरस्य पुराणेषु शंकराचार्यत्वप्रसिद्धेः तस्य कथं असंबद्धप्रलापित्वमिति शंकरविषये आक्षेपः सर्वज्ञस्य भगवतो वासुदेवस्येतिहासपुराणयोर्बुध्दत्वप्रसिध्देस्तस्यासंबध्दप्रलापित्वं कथमिति बुध्दविषये आक्षेपेण समानः ।

बुद्धविषये प्रद्वेषो वा प्रजासु ( वैदिकपथविरुध्दप्रजासु ) विरुध्दार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति यत् शांकरं समाधानं तच्छंकरविषयेऽपि समम् । " द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । दैवो विस्तरशः प्रोक्तः आसुरीं पार्थ मे श्रुणु ।। दैवी संपद्विमोक्षाय निबंधायासुरी मता ( गीता ) " इत्यादिसूक्तवैदिकपथविरुध्दप्रजासु विरुध्दार्थप्रतिपत्त्या=' ईश्वरोऽहं ' ' असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरं' इत्यादिगीतासु आसुरमतत्वेनोक्तः यः अहमीश्वरः (जीवो ब्रह्मैव नापरः)

जगन्मिथ्या इत्यादिर्वेदविरुध्दोऽर्थः तस्य प्रतिपत्त्या विमुह्येयुरिमाः तामसाः प्रजाः इति प्रद्वेषेण विरुध्दोपदेशकरणात् इति ।

तथा च शंकरोक्तयुक्तिभिः यथा सर्वथाऽप्यनादरणीय एवायं सुगतसमयः श्रेयस्कामैरिति सिध्यति तथा सर्वथाऽप्यनादरणीय एव अव्दैतसमयः श्रेयस्कामैरित्यपि सिध्यति । एवमिदमधिकरणं शंकर-भाष्याद्युक्तरीत्या बौद्धमतस्येव अव्दैतमतस्य प्रमाणविरुध्दत्वादिकथन-द्वारा श्रेयस्कामैरनादरणीयत्वं बोधयतीति अद्वैतमतमनुपादेयमेवेति ।

स्याद्वादिमतनिरासके षष्ठेऽधिकरणे, " नचैषां पदार्थानाम-वक्तव्यत्वं संभवति । अवक्तव्याश्चेन्नोच्येरन् । उच्यंते चावक्तव्याश्चेति विप्रतिषिध्दमित्यादिदूषणं यत्स्याद्वादिमतोपरि दत्तं तद्दूषणं पदार्था-नामनिर्वाच्यत्ववादिनामव्दैतिनामपि समम् । तैरपि पदार्थानामनिर्वा-च्यत्व ( अवक्तव्यत्व ) मुक्त्वा पुनः पदार्थानां कथ्यमानत्वात् इत्याद्य-नेकानि दूषणानि स्याव्दाद्याद्युपरि उक्तानि अद्वैतिमते संभवंति । ग्रन्थगौरवभयात् उपरम्यते इति ।

## ३७ ॐ पत्युरसामंजस्यात् ॐ

इति सूत्रभाष्ये " इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रति-षिध्यते । तत्कथमवगम्यते । ' प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ' ' अभिध्योपदेशाच्च ' (ब्र. सू. १-४-२३,२४ ) इत्यत्र प्रकृतिभावेना--धिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्येण प्रतिष्ठापितत्वात् । यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत पूर्वोत्तरविरोधा-द्व्याहताभिव्याहारस्सूत्रकार इत्येतदापद्येत " इति वाक्येन सूत्रकार

ईश्वरस्य प्रकृतित्वं (उपादानकारणत्वं) निमित्तकारणत्वं च 'प्रकृतिश्चे' त्यादि (१-४-२३, २४) सूत्रैः अवदत् । तद्विरुद्धमीश्वरस्य केवल-निमित्तकारणत्वं निषेधत्यस्मिन्नधिकरणे इति यदुक्तं तदयुक्तम् । तद्बोधकानां पदानामविद्यमानत्वेन 'निर्विकारोऽक्षरश्शुद्धः' इत्यादि-श्रुत्या निर्विकारत्वेन सिद्धस्य ब्रह्मणः उपादानकारणत्वानुपपत्त्यादिना च सूत्रकारैर्ब्रह्मण उपादानकारणत्वं प्रकृत्यधिकरणे नोक्तमिति तत्सूत्र-भाष्यखण्डनावसरे समर्थितत्वात् ।

केवलं निमित्तकारणमीश्वर इत्येष पक्षः वेदान्तविहितब्रह्मात्मैक-त्वपक्ष प्रतिपक्षत्वात् यत्नेनात्र प्रतिषिध्यते इति च यदुक्तं तदप्यसाधु । अद्वैतबोधकतयांगीकृतानां तत्त्वमस्यादिवाक्यानां बोधजनकत्वस्यैवा-द्वैतिभिरनंगीकृतत्वेन बोधकत्वांगीकारेऽपि; चिदित्येतावन्मात्रबोधकत्वां (अखण्डार्थबोधकत्वां) गीकारेण—

निर्गुणे (सकलधर्मरहिते) असंगे चिद्रूपे ब्रह्मणि शब्दप्रवृत्ति-प्रयोजकानां रूढियोगलक्षणागौणीवृत्तीनां मध्ये कस्या अपि वृत्तेर-संभवात् केनापि शब्देन चिद्रूपब्रह्मोपस्थितेरसंभवेन च तत्त्वमस्यादि-वाक्यैः ब्रह्मैकत्वप्रतिपत्तेरेवाद्वैतमते अयोगात् । ब्रह्मैकत्वस्य वेदांत-विहितत्वाभावेन "केवलंनिमित्तकारणमीश्वर इत्येष पक्षः वेदान्तविहित-ब्रह्मैकत्वप्रतिपक्षत्वात् यत्नेन प्रतिषिध्यते" इत्युक्तेरसंभवात् ।

यथान्येषां मतानि क्वचित्क्वचिद्विषये अप्रमाणानि प्रमाण-विरुद्धान्यपि न ह्यद्वैतिमतवत् सर्वांशे अप्रमाणानि प्रमाणविरुद्धानि स्वव्याहत्याद्यशेषदोषयुक्तानि च । अद्वितीयस्य निर्विकारस्य उदासी-

नस्य ( कर्तृत्वादिरहितस्य ) शशविषाणसोदरस्य अप्रामाणिकस्य अद्वै-त्यभिमतब्रह्मणः प्रकृतित्वं अधिष्ठातृत्वं वदद्द्वैतमतं अप्रमाणं प्रमाण-विरुद्धं स्वव्याहत्यादिसकलदोषयुक्तं च । स्वीकृतमद्वैतिभिरेव अस्मन्मतं ( अद्वैतिमतं ) स्वव्याहत्यादिदोषयुक्तमनुपपन्नमिति—

'पत्युरसामंजस्यात् इति सूत्रस्य पत्युरीश्वरस्य प्रधानपुरुष-योरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते । कस्मात् । असामंजस्यात् । किं पुनस्सामंजस्यम् ? हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसंक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत ' इति यद्व्याख्यानं तदप्ययुक्तमेव । अद्वैतिनां पक्षे हीनमध्यमोत्तमभावेन प्राणिभेदान्विदधत ईश्वरस्य रागादिदोषप्रसक्तेः 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ' ( ब्र. २-१-३४ ) इत्यादिसूत्रैः कर्मापेक्ष-त्वेन परिहारवत् केवलाधिष्ठात्रीश्वरकारणवादेऽपि दोषस्य परिहर्तुं शक्यत्वात् ।

ननु केवलाधिष्ठात्रीश्वरकारणवादे प्राणिकर्मापेक्षत्वात् वैषम्यनैर्घृ-ण्यादिदोषपरिहारः कर्तुं न शक्यते । इतरेतराश्रयदोषात् । अनादित्वां-गीकारे अन्धपरम्परान्यायापत्तेरिति चेन् तर्हि एवमेव ब्रह्मणः कारण-त्ववादिनां अद्वैतिनां पक्षे 'वैषम्यनैर्घृण्ये' इति सूत्रेण कृतस्यापि दोषपरिहारस्यायुक्तत्वापत्तेः तत्र बीजांकुरन्यायेनोपपत्तेर्न कश्चिद्दोषोऽस्तीति यत्समाधानं तत्समाधानस्य ईश्वरस्य केवलं कर्तृत्ववादिनां मतेऽपि समत्वात् । तथाच ईश्वरस्य कर्तृत्वं वदतां सेश्वरसांख्यादीनां मतेषु ईश्वरस्य कारणत्वनिरासे अद्वैत्युक्तप्रकारो न युक्तः ।

## ३८ ॐ सम्बन्धानुपपत्तेश्च ॐ

इति सूत्रस्य भाष्ये " पुनरप्यसामंजस्यमेव । न हि प्रधानपुरुष-व्यतिरिक्त ईश्वरोऽन्तरेण तम्बन्धं प्रधानपुरुषयोरीशिता । न तावत्संयोगलक्षणः सम्बन्धः संभवति प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च । नापि समवायलक्षणः संबन्धः आश्रयाश्रयिभावानिरूपणात् । नाप्यन्यः कश्चित्कार्यगम्यः संबन्धः शक्यते कल्पयितुम् कार्यकारण-भावस्यैवाद्याप्यसिद्धत्वात् " इति यत् दूषणं तदद्वैतमतेऽपि समं । निर्विशेषस्य ' असंगो ह्ययं पुरुष ' इति श्रुत्या असंगस्य ब्रह्मणः प्रकृतिशब्दवाच्यया अविद्यया संबन्धानुपपत्तेः—

नच तादात्म्यलक्षणसंबन्धेनोपपत्तिरिति वाच्यम् । असंगस्य निर्विशेषस्य ब्रह्मणः केनापि कस्यापि संबन्धस्यानुपपत्तेः । प्रकृतीश्वरयोः सत्यत्ववादीश्वरवादिमतापेक्षया अद्वैतमते सत्यभूतब्रह्मणो मिथ्याभूतेन त्रिकालेऽप्यसता शशविषाणायितेन जगता तादात्म्यसंबन्धा (अभेदा) नुपपत्तिरूपाधिकदोषाच्च ।

ननु " अपि च आगमबलेन ब्रह्मवादी ( अद्वैती ) कारणादि-स्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्य-मिति नियमोऽस्ति । परस्य तु दृष्टांतबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः " इति चेन्न । ब्रह्मवादिना ( अद्वैतिना ) ब्रह्मातिरिक्तस्य सर्वस्य जगतश्शशविषाण-वन्नास्ति नासीन्न भविष्यतीति बोध्यमानत्रैकालिकनिषेधप्रतियोगि-त्वांगीकारेण जगदन्तर्गतकारणादिस्वरूपस्यापि मिथ्यात्वेन तद्विषये आगमस्य प्रामाण्यासंभवात् ' न निरोधो न चोत्पत्तिर्न बद्धो नच

साधकः । न मुमुक्षुर्न वै मुक्तः ' इति गौडपादोक्तरीत्या उत्पत्त्यादेरेव शशविषाणवदसत्त्वेन तत्कारणताया ब्रह्मणि वक्तुमशक्यत्वाच्च । ईश्वरवादिनामपि जगत्कारणत्वबोधकानां सर्वज्ञप्रणीतागमानां सद्भावाच्च । नच आगमप्रत्ययात्सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरितीतरेतराश्रयत्वप्रसंगस्तार्किकेश्वरवादे इति वाच्यम् । अद्वैतमतेऽपि ' आरोप्यस्य वेदस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः समारोपनिबन्धना च प्रतीतिः ' इति भामतीभाष्याद्युक्तरीत्या परस्पराश्रयत्वस्य दुर्वारत्वात् । ननु अनादित्वात् ' अनवस्थादयो दोषाः अद्वैतिनां सुहृदः ' इत्यस्मदाचार्योक्तरीत्या अस्माकं ( अद्वैतिनां ) अनवस्थान्योन्याश्रयचक्रकादीनां सुहृत्त्वाच्च परस्पराश्रयो न दोष इति चेत्–ईश्वरकारणवादिभिरपि परस्पराश्रयत्वादीनां सुहृत्त्वान्न ते दोषा इति वक्तुं शक्यत्वात् ।

ननु न वयं परस्पराश्रयादीनां सुहृत्त्वं निरर्थकमंगीकुर्मः । किंतु ब्रह्मातिरिक्तस्य सर्वस्यासत्त्वं ब्रह्मणश्चाज्ञेयतया अवाच्यतया च शशविषाणसोदरतां च वदतामस्माकं साधनीयस्याभावेन परस्पराश्रयादीनां अस्मदिष्टपदार्थसत्तानाशजनकत्वेन तेषां सुहृत्त्वमंगीकुर्मः । उक्तं हि खण्डनखण्डखाद्यकृता–" अनवस्थादयो दोषाः सत्तां निघ्नंति वस्तुनः ।। अद्वैतिनां ते सुहृदः प्रपंचे तत्प्रसंजकाः ।। " इति ब्रह्मकारणत्वादिरूपजगत्सत्तानाशकत्वेनेतिचेत्तर्हि ब्रह्मातिरिक्तं ब्रह्मणः कारणत्वरूपस्नानसंध्याजपदेववेदयज्ञपुण्यपापस्वर्गलोकभागीरथ्यादितीर्थादिकं सर्वमपि सत्तारहितं ( असत् ) इति वदता अद्वैतिना निर्मूलीकृतः आस्तिकवादः । अस्ति परलोकः अस्ति च फलदाता ईश्वरः इत्यादिबुद्धिर्यस्य तस्यास्तिकत्वेन, नास्ति परलोकः फलदाता ईश्वरो नास्ति

पुण्यं नास्ति पापं नास्तीति बुद्धिर्यस्य तस्य नास्तिकत्वेन ये प्रत्यक्ष-ग्राह्यपदार्थानां सत्तामंगीकृत्यापि अतींद्रियधर्माधर्मस्वर्गनरकादीनां सत्तां नांगीकुर्वन्ति ते नास्तिकाः । अद्वैती तु प्रत्यक्षग्राह्याणामपि सत्तां नांगीकारोतीति नास्तिकनास्तिकः ( महानास्तिकः ) इति । अलं महानास्तिकेन आस्तिकवत् नटनं कुर्वता अद्वैतिना प्रसंगेन ।

एवं संबन्धानुपपत्त्यादिदोषाणां अद्वैतमतेऽपि विद्यमानत्वेन सांख्ययोगवादिनामीश्वरकल्पनायाः दुष्टत्ववत् अद्वैतवादिनां ब्रह्मकल्प-नाऽपि दुष्टैवेति ।

## ३९ ॐ अधिष्ठानानुपपत्तेश्च ॐ

इति सूत्रस्य " इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः कुंभकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत् । न चैवमुपपद्यते । न ह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति मृदादिवैलक्षण्यात् " इति तार्किकपरिकल्पितेश्वरकारणत्वनिरा-करणपरतया यत् व्याख्यानं तदप्ययुक्तम् । इत्थमेव अद्वैतिपरिकल्पिते-श्वरकारणत्वनिराकरणपरतया योजयितुं शक्यत्वेन स्वमतसाधारण-दूषणेन परमतनिराकरणस्यायुक्तत्वात् ।

ननु तार्किकैः ईश्वरकारणत्वस्य सत्यत्वांगीकारात् सत्यकारण-त्वस्य अधिष्ठानाद्यपेक्षत्वात् अधिष्ठानाद्यसंभव ईश्वरकारणत्वं न संजा-घटीति । अस्मन्मते ( अद्वैतिमते ) जगद्रूपं कार्यं मिथ्या ईश्वररूप-कारणं मिथ्या तस्येश्वरस्य कारणत्वमपि मिथ्या – नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगीति ( असन्निति ) अधिष्ठानाद्य-

पेक्षाभावात् अधिष्ठानाद्यनुपपत्तौ न किंचिद्बाधकं प्रत्युत " दुर्घटत्वम-विद्याया भूषणं न तु दूषणम् । कथंचिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् " इत्यस्मदाचार्योक्तरीत्या अविद्याया अविद्याकल्पितस्य च अनुपपत्तेर्भूषणत्वेनांगीकारात् अधिष्ठानाद्यनुपपत्तेर्भूषणत्वमेवेति चेन्न । दोषस्यापि भूषणत्वं वदतः हेयोपादेयरहितस्य तव वादित्वासंभवेन असंभाष्यत्वात् ।

## ४० ॐ करणवच्चेन्न भोगादिभ्यः ॐ

इति सूत्रस्यापि " स्यादेतत्— यथा करणग्रामं चक्षुरादिक-मप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्य-तीति । तथापि नोपपद्यते । भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते । न चात्र भोगादयो दृश्यन्ते । करणग्रामसाम्ये वाभ्युपगम्य-माने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन् " इत्यादि तार्कि-कपरिकल्पितेश्वरकारणनिराकरणपरतया व्याख्यानं पूर्वोक्तन्यायेन अद्वैतमतेपि दोषप्रसक्त्यादिना-निरस्तम् ।

## ४१ ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ

इति सूत्रस्य यत्तार्किकपरिकल्पितेश्वरकारणवादनिरासपरतया ' इतश्च ...... कारणवाद ' इति यद्व्याख्यानं कृतं तदयुक्तम् । तार्कि-केश्वरपक्षे उक्तदोषाणामयुक्तत्वात् । अद्वैतमतेऽपि तेषां दोषाणां प्राप्तेः । तथा हि " स हि ( तार्किकपरिकल्पितः ईश्वरः ) सर्वज्ञस्तैरभ्युपगम्य-तेऽनन्तश्च । अनन्तं च प्रधानमनन्ताश्च पुरुषा मिथो भिन्ना अभ्युप-गम्यन्ते । तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छि-

द्येत वा न वा परिच्छिद्येत । उभयथापि दोषोऽनुषक्त एव । कथम्—पूर्वस्मिंस्तावद्विकल्पे इयत्ता परिच्छिन्नत्वात्प्रधानपुरुषेश्वराणामन्तवत्त्वमवश्यं भावि, एवं लोके दृष्टत्वात् । यद्धि लोक इयत्तापरिच्छिन्नं वस्तु घटादि तदन्तवद् दृष्टं तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत्स्यात् । संख्यापरिमाणं तावत्प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम् । स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति । पुरुषगता च महासंख्या । ततश्चेयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारान्मुच्यन्ते तेषां संसारोऽन्तवान् संसारित्वं च तेषामन्तवत् । एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात् । प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेय संसारित्वेनाभिमतं तच्छून्यतायामीश्वरः किमधितिष्ठेत् । किंविषये वा सर्वज्ञतेश्वरते स्याताम् ? प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सति आदिमत्त्वप्रसंगः । आद्यन्तवत्त्वे च शून्यवादप्रसंगः । अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत, न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिपरो दोषः प्रसज्येत " इति वाक्येन सर्वज्ञः ईश्वरः प्रधानस्य पुरुषाणामात्मनश्च इयत्तां जानाति वा न वा । न जानाति चेत् सर्वज्ञत्वाभ्युपगमहानिः इति यद्दूषणमुक्तं तदयुक्तम् । सर्वज्ञत्वं हि विद्यमानाशेषविशेषज्ञानवत्त्वं । यदीश्वरः स्वात्मप्रधानपुरुषेषु विद्यमानामियत्तां न जानाति चेत् विद्यमानेयत्ताज्ञानाभावेन असर्वज्ञः स्यात् । स्वात्मप्रधानपुरुषेषु नास्त्येवेयत्तेति पक्षे ईश्वरस्य असार्वज्ञप्रसक्तिः कथम् ?

विद्यमानविषयकज्ञानाभावात् हि असर्वज्ञो भवति । न हि शशविषाणाद्यज्ञानात् असर्वज्ञो भवन् दृष्टः । नच प्रधानादयः संख्यापरि—

माणवन्तः द्रव्यत्वात् माषादिवत् इत्यनुमानादस्तीयत्तेति तदज्ञाने चासर्वज्ञता भवत्येवेति वाच्यम् । ब्रह्मवाद्यद्वैतमतेऽपि द्रव्यत्वाद्यनुमानेन इयत्तायाः साधयितुं शक्यत्वेन ब्रह्मणः तदज्ञाने असर्वज्ञत्वाद्यापत्तेः दुर्वारत्वात् । नच अद्वैतमते आगमगम्यत्वेन ईश्वरस्य आगमबाधात् नैतदनुमानं प्रवर्तते इति वाच्यम् । अद्वैतमते ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वात्तद्विषये वेदस्याप्रमाणत्वेन अनुमानबाधकत्वासंभवात् ।

सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणां चेयत्ता ज्ञायते (परिच्छिद्यते) इति प्रथमपक्षे प्रधानपुरुषेश्वराः अन्तवन्तः संख्यापरिमाणान्यतररूपे-यत्तापरिच्छिन्नत्वात् पटादिवदित्यनुमानेन अन्तवत्त्वस्य सिध्द्या आदि-मत्त्वप्रसंगः । तथाच आद्यंतवत्त्वे शून्यवादप्रसंग इति चेत् अद्वैतमतेऽपि साम्यात् ।

न चाद्वैतिमते ब्रह्मातिरिक्तस्य सर्वस्यानिर्वचनीयत्वेन (इत्थ-मितिवक्तुमशक्यत्वेन) प्रधानपुरुषेश्वराणां इयत्ता परिच्छिद्यते--इति न परिच्छिद्यत इति वा न वदामः । तूष्णीं स्थास्याम इति वाच्यम् । वदतीति हि वादी - किमप्यवदतो वादित्वानुपपत्तेः—तस्मात् तार्किक-परिगृहीतेश्वरकारणवादोक्तदोषाणां अद्वैतिस्वीकृतब्रह्मकारणवादेपि सा-म्यात् । एवं स्वव्याहतदोषदानं असंगतमेवेति ।

## ४२ ॐ उत्पत्त्यसंभवात् ॐ

इति सूत्रस्य "येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते । ननु श्रुतिसम-त

श्रयणेनाप्येवंरूप एवेश्वरः प्राङ् निर्धारितः प्रकृतिश्चाधिष्ठाता चेति । श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः । तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति । उच्यते । यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्यस्ति तु अंशांतरं विसंवादस्थानमित्यतस्तत्प्रत्याख्या-नायारंभः । तत्र भागवता मन्यन्ते । भगवानेवैको वासुदेवो निरञ्जन ज्ञानस्वरूपः परमार्थतत्वं, स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेव-व्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मोच्यते । संकर्षणो नाम जीवः प्रद्युम्नो नाम मनः । अनिरुद्धो नामाहंकारः । तेषां वासुदेवः पराप्रकृतिरितरे संकर्षणादयः कार्यं तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशत-मिष्ट्वा क्षीण–क्लेशो भगवन्तमेव प्रतिपद्यते इति । तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मनात्मान-मनेकधा व्यूह्यावस्थित इति तन्न निराक्रियते 'स एकधा भवति त्रिधा भवति, (छां. ७।२६।२)' इत्यादिश्रुतिभ्यः परमात्मनोऽने-कधाभावस्याधिगतत्वात् । यदपि तस्य भगवतोऽभिगमनादिलक्षण-माराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते तदपि न प्रतिषिध्यते । श्रुति-स्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात् । यत्पुनरिदमुच्यते वासुदेवात्सं कर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानिरुद्ध इति । अत्र ब्रूमः । न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति । अनित्यत्वादिदोषप्रसंगात् । उत्पत्तिमत्वे हि जीवस्यानित्य त्वादयो दोषाः प्रसज्येरन् । ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात् । कारणप्राप्तौ कार्यस्य प्रविलयप्रसंगात् । प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिं—'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः (ब्रह्मसू. २।३।१७)'

इति तस्मादसंगतैषा कल्पना " इति ग्रंथेन । तत्र भागवता मन्यन्ते– वासुदेवः साक्षात् परमात्मा संकर्षणो जीवः प्रद्युम्नो नाम मनः अनिरुद्धो नाम अहंकारः तत्र वासुदेवः कारणं--संकर्षणादयः कार्यम् । तमित्थंभूतं परमेश्वरं भगवन्तं (१) अभिगमन (२) उपादान (३) इज्या (४) स्वाध्याय (५) योगैर्वर्षशतं इष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते इति यत्प्रतिपाद्यतें, तत्र श्रुति स्मृत्यादिप्रमितत्वात् भगवंतं अभिगमनादिना वर्षशतमिष्ट्वा क्षीणक्लेशो भगवंतमेव प्रतिपद्यतें इत्येवंरूपं भागवतमतमनुमोद्य वासुदेवात् संकर्षणो नाम जीवो जायतें इत्येतं भागवतमतांशं वासुदेवात्परमात्मनः संकर्षणसंज्ञकजीवस्य उत्पत्तिर्न संभवति जीवस्योत्पत्तिमत्त्वे अनित्यत्वादयोदोषाः प्रसज्येरन् । तथा अस्य जीवस्य भगवत्प्राप्तिरूपो मोक्षो न स्यादिति सूत्रकारो निराचकारेति उत्पत्त्यसंभवात् इतिसूत्रस्यार्थवर्णनं शंकराचार्यणां न तद्युक्तम् ।

(१) वासुदेवात्संकर्षणो नाम जीवो जायतें संकर्षणात्प्रद्युम्नसंज्ञकमनो जायतें प्रद्युम्नादनिरुद्धसंज्ञकोऽहंकारो जायतें इति पूर्वोदाहृतपंचरात्रवाक्यस्य वक्ष्यमाणरीत्या अनेकाबाधितार्थानां संभवेन अद्वैतवादिभिरपि प्रमाणत्वेन स्वीकृतेंषु महाभारतादिग्रंथेष्वपि पञ्चरात्रागमवत् जीवादिविषयेषु उत्पत्त्यादिबोधकानां वाक्यानां सत्वेन तेंषामप्रामाण्यमनुक्त्वा पंचरात्रस्यैवाप्रामाण्यकथनायोगात् ।

(२) भारत एव पञ्चरात्रस्य प्रामाण्यं वदद्भिः सूत्रकारै ब्रह्मसूत्रेषु पंचरात्रप्रामाण्यं निराक्रियत इत्युक्तेः सूत्रकाराणां व्याहतभाषित्व

टिप्पणी :- (१) अभिगमनं = वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनं (२) उपादानं = पूजाद्रव्याणामार्जनं (३) इज्या = पूजा (४) स्वाध्यायः = नारायणाष्टाक्षरादिमंत्रजपः (५) योगः = ध्यानं ।

संपादकत्वेनायोगात् । नहि सूत्रकाराणां व्याहतभाषित्वमंगीकर्तुमर्हं प्रस्थानत्रयप्रामाण्यवादिभिर्वैदिकंमन्यैः ।

(३) 'यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ॥ ज्ञेयः स एव राजेंद्र जीवः संकर्षणः प्रभुः' ( महा. भा. शा. ३३९।४० ) इत्यस्मिन्वाक्ये वासुदेवस्य संकर्षणरूपतायाः उक्तत्वात् तथा केशवादिचतुर्विंशतिनामसु विश्वादिविष्णुसहस्रनामस्वपि वासुदेवात्मकपरमात्मनः संकर्षण इति नाम्नश्च सत्वात् ।

'अहं हि जीवसंज्ञो वै' ॥ 'जीवः संकर्षणः प्रभुः' ॥ (महा. भा. शां. ) इति वाक्ययोः परमात्मनः जीव इति संज्ञायाः कथितत्वात् । जीवप्राणधारण इति धातुपाठानुसारेण प्राणधारकत्वगुणयोगेन जीवशब्दस्य परमात्मवाचकत्वसंभवात् ।

जनीप्रादुर्भावे इति धातुपाठानुसारेण जायत इत्यस्य प्रादुर्भवतीत्यर्थकत्वेन वासुदेवात्संकर्षणो नाम जीवो जायत इति पंचरात्र वाक्यस्य वासुदेवात्परमात्मनः जीवः प्राणधारकत्वहेतुना जीवशब्दवाच्यं संकर्षणनामकं भगवद्रूपं जायते अभिव्यक्तो भवति इति इतरप्रमाणानुसारिणोऽर्थस्य संभवाच्च ।

(४) संकर्षणपदेन जीव एव पञ्चरात्रे उक्त इति स्वीकारेऽपि बाधकाभावात् । तथाहि—

१ यतो वा इमानि भूतानि जायन्ते २ सर्व एते आत्मनो व्युच्चरंति ३ चंद्रमा मनसो जातश्चक्षोः सूर्योऽजायत मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ४ जन्माद्यस्य यतः ५ अहं प्रजाः सिसृक्षुस्तु तपस्त-

स्त्रा सुदुश्चरं ॥ पतिं प्रजानामसृजं महर्षीनादितो दश ॥ (मनुस्मृ. ३-३४) ६ बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥ ( गी. ४-५ ) ७ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ (गी. २-५ ) ८ सह-यज्ञाः प्रजाः सृष्ट्वा (गी. ३-१०) ९ मया सृष्टः पुरा ब्रह्मा ( मदा. भा. शां. ३३९-६० ) इत्यादिषु प्रमाणतया अंगीकृतेषु ग्रंथेषु जीवस्यो-त्पत्तेः कथितत्वेन ग्रंथानां जीवोत्पत्तिप्रतिपादकपञ्जरात्रस्येवाप्रामाण्यस्य वक्तव्यत्वापातात् ।

नच यतो वेत्यादिवाक्येषु जीवस्योत्पत्तिर्नाम देहसंबंध एव कथ्यते न तु स्वरूपोत्पत्तिः अतो नाप्रामाण्यं श्रुत्यादीनामिति वाच्यम्। श्रुत्यादीनामिव पंचरात्रस्यापि जीवस्य देहसंबंधरूपोत्पत्तिबोधकत्वेन प्रामाण्यसंभवात् । पंचरात्रसमानार्थकस्यापि वेदादेः प्रामाण्यं पंचरात्रस्या-प्रामाण्यमित्यस्य अर्धजरतीयन्यायेनायोगात् ।

## ४३ ॐ न च कर्तुः करणं ॐ

इति सूत्रस्य कर्तुः संकर्षणात् जीवात् प्रद्युम्ननामकं करणं मनः प्रजायतें यस्मान्न हि लोके कर्तुर्देवदत्तादेः ( सकाशात् ) करणं परश्वादि उत्पद्यमानं दृश्यते इति यत् व्याख्यानं तत् बालानामपि उपहासकरं किमु प्रौढानां। तथाहि जीवः मनोरूपकरणोत्पादको न भवति। कर्तृत्वात् । यः कर्ता स करणोत्पादको न भवति यथा देवदत्तः कर्ता न परशुरूप-करणोत्पादको भवति इति खलु अनुमानमुक्तं भवति। तन्न युक्तं अनेकशिल्पपर्यवदातस्य करणरूपं परशुं कृत्वा तेंन पलाशच्छेदनक्रिया-कर्तृतायाः दर्शनेन व्यभिचारात् कर्तुः सकाशात् करणं नोत्पद्यतें इति

अनुमातुं शक्यते यः यस्यां क्रियायां कर्ता स तया क्रियया तत्क्रिया-करणं कर्तुं न शक्नोति यथा छेदनक्रियाकर्त्रा देवदत्तेन तया च्छेदन-क्रियया च्छिदाकरणस्य परश्वादेः कर्तुमशक्यत्वेऽपि क्रियांतरेण परशुं कृत्वा स्वकृतेन परशुना करणेन पलाशच्छेदनक्रियां कर्तुं शक्यत एव।

प्रकृते च ज्ञानरूपक्रियोत्पत्तौ जीवः कर्ता मनः करणं पंचरात्रे ज्ञानरूपक्रियाकर्त्रा जीवेन ज्ञानरूपक्रियया तत्क्रिया ( ज्ञान ) करणभूतं मनः जायते इति यद्युच्यते तदायं दोषः स्यात् । यः यत्क्रियाकर्ता तेन तत्क्रियया तत्क्रियाकरणं नोत्पद्यते लोके अदृष्टत्वात् इति न तथोक्तं पंचरात्रे । किन्नाम जीवान्मनो जायत इत्येवोक्तं । तस्मान्नेदमनुमानं साधु इति सुज्ञेयमेतत् बालानामपि ।

किंच महाभारते 'संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते' ( म. भा. शां. ३३९।४० ) ' स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् । ( महाभा. ७३ ) इत्यादौ संकर्षणात् प्रद्युम्नसंज्ञकमनस उत्पत्तिरुक्ता सा च ' मयैव कथितं सम्यक् तव मूर्तिचतुष्टयं ( महाभा. शां. ३३९।४६ ) इति वासुदेवसंकर्षणप्रद्युम्नानिरुद्धानां परमात्मस्वरूपता-प्रतिपादनात् परमात्मन :उत्पत्त्यभावेन अनुपपन्नेव । यद्यपि भारते तथापि तत्र यथा प्रद्युम्नसंज्ञकस्य भगवद्रूपस्य संकर्षणरूपादभिव्यक्ति-रूपां जनिं स्वीकृत्य प्रामाण्यं समर्थ्यते तथा पंचरात्रवाक्यस्यापि प्रामाण्योपपादनसंभवात् ।

प्रद्युम्नसंज्ञकान्मनसः अनिरुद्धसंज्ञक अहंकारो जायते इति पंच रात्रोक्ते विषये न काप्यनुपपत्तिः प्रदर्शिता शंकरभाष्ये । न संति च अनुपपत्तयः अहंकारस्य मनस उत्पत्तिं बोधयतः संप्रतिपन्नप्रमाणभावस्य भारतवाक्यस्येव तथाविधपंचरात्रस्यापि प्रामाण्यमुपपाद्यत एव ।

किंच भारते 'प्रद्युम्नाद्योऽनिरुद्धस्तु सोहंकारः स ईश्वरः (महाभा. ३३९।४१) 'प्रद्युम्नादनिरुद्धोहं सर्गो मम पुनः पुनः [७३] अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः' [७४] इत्यादिवाक्यैः अहंकारस्य ईश्वरत्वस्यचतुर्मुखब्रह्मजनकत्वस्य चोक्तत्वेन अहंकारस्येश्वरत्वोक्तेर्नाप्रामाण्यं तथा पंचरात्रस्य अहंकारपदेन ईश्वररूपबोधकत्वेऽपि नाप्रामाण्यं

## ४४ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ

इति सूत्रस्य अथापि स्यान्न चैते संकर्षणादयो जीवादिभावेनाभिप्रयन्ते किंतर्हि ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वरैर्धर्मैरन्विता अभ्युपगम्यन्ते । वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति तस्मान्नायं यथावर्णित उत्पत्त्यसंभवे दोषः प्राप्नोतीति । अत्रोच्यते । एवमपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः । प्रकारान्तरेणेत्यभिप्रायः । कथं । यदि तावदयमभिप्रायः परस्परभिन्ना एवैते वासुदेवादयः चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति ततोऽनेकेश्वरकल्पनानर्थक्यमेकेनैवेश्वरेणेश्वरकार्यसिद्धेः सिद्धांतहानिश्च भगवानेको वासुदेवः परमार्थतत्वमित्यभ्युपगमात् । अथायमभिप्रायः एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति तथापि तदवस्थ एवोत्पत्त्यसंभवः । नहि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्यातिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन यथा मृद्घटयोः । न ह्यसत्यतिशये कार्यं कारणमित्यवकल्पते । नच पंचरात्रसिद्धांतिभिर्वासुदेवादिष्वेकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते । वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते नचैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन् ब्रह्मादिस्तंबपर्यंतस्य समस्तस्यैव जगतो भगवद्व्यूह-

त्वावगमात् । इति व्याख्यानेन पंचरात्रोक्तस्य वासुदेवसंकर्षणप्रद्युम्ना-निरुद्धानां भगवद्रूपत्वस्य अयुक्तत्वात् । तत्प्रतिपादकं पंचरात्रमप्रमाण-मिति यदुक्तं तन्न युक्तं । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपाणां परमात्म-स्वरूपताबोधकपंचरात्रवाक्यस्य तथाविधभारतवाक्यसंवादित्वेन प्रामाण्यो-पपत्तेर्बाधकाभावाच्च । न चानेकेश्वरकल्पनानर्थक्यदोषः । भागवतैर्वा-सुदेवा एव हि सर्वे व्यूहा इति वासुदेवादिरूपाणामभेदांगीकारात् । नच भागवतैः तेषां भगवद्रूपाणां विशेषानंगीकारात् एकस्य कारण-त्वमपरस्य कार्यत्वं विशेषाभावेन संजाघटीत इति वाच्यं । नहि भागवता एकस्माद्भगवद्रूपादपरं भगवद्रूपं जायते इत्यभ्युपयंति येन त्वदुक्तदोषः स्यात् । किन्नाम स्वेच्छया अभिव्यज्यत इति ‘ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ॥ अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ’ इति गीतोक्तेः ।

वासुदेवा एव हि सर्वे व्यूहाः निर्विशेषा इष्यन्ते (भागवतैः) इत्यत्र व्यूह शब्दस्य संकर्षणप्रद्युम्नादिरूपपरत्वं स्वीकृत्य सर्वे व्यूहाः संकर्षणादिरूपाणि वासुदेवा एव इत्यर्थो भवतीति मत्वा तस्य यद्दू-षणमुक्तं शंकराचार्यैः ‘ न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन् ब्रह्मादिस्तंबपर्यंतस्य समस्तस्यैव जगतः भगवद्व्यूहत्वावगमादिति ’ तदयुक्तं । वासुदेवसंकर्षणप्रद्युम्नानिरुद्धानामेव भगवद्रूपत्वं नान्येषामिति कुत्राऽपि नोक्तं । प्रत्युत मत्स्यादिदशरूपाणि केशवादिचतुर्विंशतिरू-पाणि विश्वादिसहस्ररूपाणि इत्यनेकशो मूर्तीनां भगवद्रूपत्वमुक्तं इति ‘ चतुःसंख्यायामेवावतिष्ठेरन् इत्युक्तिरनुक्तोपालंभरूपैव ।

यच्चोक्तं ब्रह्मादिस्तंबपर्यंतस्य समस्तस्य जगतः भगवद्व्यूहत्वावग-मादिति तत्सकलशास्त्रविरुद्धं अद्वैतमतविरुद्धं च । कस्मिन्नपि शास्त्रे

( वेदे सूत्रेषु गीतायां वा ) जडस्य जगतः भगवद्रूपत्वानभिधानात् जन्यजनकभावेनाधाराधेयभावेन सर्वज्ञत्वासर्वज्ञत्वाभ्यां पूर्णशक्त्यल्पशक्तिभ्यां च भगवता भेदस्यैवोक्तत्वात् । अद्वैतमतरीत्या असत्यस्य जगतः सत्येन ब्रह्मणा अभेदस्यायोगाच्च । ' मयैतत्कथितं सम्यक् तव मूर्तिचतुष्टयं ' ॥ इति भारते भगवव्द्यूहस्य ( भगवद्रूपाणां ) चतुष्टस्योक्तत्वेन त्वदुक्तरीत्या तस्याप्यप्रामाण्यप्राप्तेः । तस्मात् नेदं व्याख्यानं युक्तं ।

## विप्रतिषेधाच्च

इति सूत्रस्य विप्रतिषेधश्चास्मिन्शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः आत्मान एवैतें भगवन्तो वासुदेवा इत्यादिदर्शनात्... तस्मादसंगतैषा कल्पनेति सिद्धं इति यद्व्याख्यानं तदप्ययुक्तं । भिन्नभिन्नोपनिषत्सु सत्यज्ञानानंदादीनां ब्रह्मरूपताप्रतिपादकानां सत्यं ज्ञानमित्यादिवाक्यानां, परमात्मगुणत्वप्रतिपादकानां ' तदैक्षत ' ' परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ' इत्यादिवाक्यानां एकस्यामेवोपनिषदि : ' आनंदो ब्रह्मेति व्यजानात् ' ' आनंदं ब्रह्मणो विद्वान् ' इत्यादीनां गुणगुणित्वबोधकानां वाक्यानां चोपलंभेन प्रकाशस्वरूपस्यापि सवितुः प्रकाशत इति व्यवहारसिद्धप्रकाशाश्रयत्ववत् ईक्षणादि ( ज्ञानादि ) रूपस्यापि ब्रह्मणः ऐक्षत इत्याद्युक्तक्षणाद्याश्रयत्वमुपपाद्य यथा अविप्रतिषिद्धत्वं कथ्यते शंकराचार्याद्यैः तथा ' ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणा आत्मान एवैते भगवन्तो वासुदेवा' इति एकस्यैव गुणगुणित्वप्रतिपादकपंचरात्रस्यापि अविप्रतिषिद्धतां संपाद्य प्रामाण्यं वक्तव्यं । अन्यथा एकस्यैव

गुणगुणित्वप्रतिपादकानां पूर्वोदाहृत वेदवाक्यानामप्यप्रामाण्यप्रसंगात् न चान्यतरपक्षपाते कारणमस्ति ।

यच्चोक्तं विप्रतिषेधाच्च इति सूत्रस्य यत् वर्णनान्तरं वेदविप्रतिषेधश्च भवति चतुर्षु वेदेषु परं श्रेयो लब्ध्वा शांडिल्य इदं शास्त्रमधिगतवानित्यादि वेदनिंदादर्शनात् तस्मादसंगतैषा कल्पना इति तदप्ययुक्तं । एवंरीत्या वेदनिंदाबोधकानां बहूनां वाक्यानां वेदे पुराणेषु च दर्शनात् । तथाहि छांदोग्ये 'अधीहि भगव इति होपससाद सनत्कुमारं नारदस्त ँ होवाच यद्वेत्थ तेन मोपासीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ऋग्वेदं भगवो अध्येमियजुर्वेद ँ सामवेदमाथर्वणं ...... सोऽहं भगवो मंत्रविदेवास्मि नात्मवित्' । इति सनत्कुमारंप्रत्यध्ययनार्थं नारदो गतः । तदा सनत्कुमारस्तमाह किं भवता अधीतं तन्मह्यं निवेदय तत ऊर्ध्वं उत्तरग्रंथान् तेऽहं वक्ष्यामि इति । ततो नारदः प्रत्याह । ऋग्वेदाद्याः सर्वे वेदाः शिक्षादिवेदांगानि अन्यानि सर्वाण्यपि शास्त्राणि मयाधीतानि तथापि मन्त्रविदेवास्मि न मोक्षसाधनात्मज्ञानवान् । इति वेदनिंदा श्रूयते ।

'यदि विद्याच्चतुर्वेदान्सांगोपनिषदान् द्विजः ॥ नचेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः' ॥ इति पुराणे सांगोपनिषत्सर्ववेदार्थज्ञानेऽपि पुराणज्ञानमन्तरा पण्डितो न भवतीति वेदनिन्दा श्रूयते ।

यदि वेदनिंदाश्रवणमात्रेण पंचरात्रमप्रमाणं स्यात् । छांदोग्यादिकमप्यप्रमाणं प्रसज्येत ।

ननु ऋग्वेदादयो महागुरूपदेशमन्तरा न समीचीनज्ञानजननाय प्रभवन्ति गहनार्थत्वात् ।

तथा ' इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ' ॥ इत्युक्त्यनुसारेण उपबृंहकेतिहासपुराणाभावे वेदः बिभेति न समग्रं स्वार्थं प्रकटयति अतः ब्रह्मसूत्रैरिव इतिहासपुराणाभ्यामपि वेदस्योपष्टंभनमावश्यकमिति सूचयत् ' न चेत्पुराणं ' इति पुराणवाक्यं वेदानां अतिगंभीरार्थत्वं प्रकटयत् न निन्दति इति चेत् पंचरात्रमपि शांडिल्यगाथामुखेन वेदानामतिगंभीरार्थत्वादल्पमतीनां चतुर्भिरपि वेदैर्ज्ञानासंभवात् एतच्छास्त्रमधिगंतव्यमिति बोधयत् वेदानतिगंभीरार्थत्वेन स्तौति न तु निन्दति इति न पंचरात्रे वैदविप्रतिषेधः क्रियते । इति न पंचरात्रस्याप्रामाण्यं सिध्यति । तस्मान्नेदं युक्तं व्याख्यानम् ॥

इति द्वितीयाध्यायस्य द्वितीयः पादः

श्रीः

# अथ द्वितीयाध्याय तृतीयपादशंकरभाष्यविचारः

१ "न वियदश्रुतेः" २ "अस्ति तु" ३ गौण्य-संभवात्" ४ "शब्दाच्च" ५ "स्याच्चैकस्य ब्रह्मशब्दवत्" इति सूत्रैः आकाशस्यानुत्पत्तिं पूर्वपक्षयित्वा, ६ "प्रतिज्ञाहानि-रव्यतिरेकाच्छब्देभ्यः" ७ "यावद्विकारं तु विभागो लोकवत्" इति सूत्राभ्यां आकाशस्याप्युत्पत्तिं सिद्धान्तयामासुः शंकराचार्याः। तत्र पूर्वपक्षकथनरीतिरयुक्तापि न विचार्यते तस्य (पूर्वपक्षस्य) सिद्धांतत्वाभावात्। तत्र यस्सिद्धान्तः कृतः स न युक्तः। तथा हि-- "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (छां. ६-१-१) इति 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' (बृ. ४-५-६) इति 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मुण्ड. १-१-३) इति 'न काचन मद्बहिर्धा विद्याऽस्ति' इति चैवंरूपा प्रतिवेदांतं प्रतिज्ञा विज्ञायते। तस्याः प्रतिज्ञाया एव--महानिरनुपरोधः स्यात् यद्यव्यतिरेकः कृत्स्नस्य वस्तु-जातस्य विज्ञेयाद्ब्रह्मणः स्यात्। व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इति इयं प्रतिज्ञा हीयेत। स चाव्यतिरेके एवमुपपद्यते। यदि कृत्स्नं वस्तुजातं एकस्मात्ब्रह्मण उत्पद्येत--शब्देभ्यश्च प्रकृति-विकाराव्यतिरेकरूपन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते। तथाहि--'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादन-परैः प्रतिज्ञैषा समर्थ्यते--तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्ये-

दमग्र आसीदेकमेवाद्वितीयम् ’ ( छां.६-२-१ ) ‘ तदैक्षत, ’ ‘ तत्तेजोऽसृजत ’ ( छां. ६-२-३ ) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति – ‘ ऐतदात्म्यमिदं सर्वम् ’ ( छां. ६-८ ७ ) इत्यारभ्या–प्रपाठकपरिसमाप्तेः । तद्यद्याकाशं न ब्रह्मकार्यं स्यान्न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत, ततश्च प्रतिज्ञाहानिः स्यात् । न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं वक्तुम् । तथाहि–प्रतिवेदांतं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां स्थापयंति ‘ इदं सर्वं यदयमात्मा ’ ( बृ. २-४-६ ) ‘ ब्रह्मैवेदममृतं पुरस्तात् ’ ( मुण्ड. २-२ ११ ) इत्येवमादयः । तस्माज्ज्वलनादिवदेव गगनमप्युत्पद्यते ” इति वाक्यैः येनाश्रुतं श्रुतं भवतीति, ब्रह्मज्ञानेन जगज्ज्ञानप्रतिज्ञया जगद्ब्रह्मणोरभेदसिद्धिः जगद्ब्रह्मणोरभेदस्य च आकाशादिजगतः ब्रह्मकार्यत्वमंतरा असिद्धेः । आकाशस्योत्पत्तिसिद्धिरित्येवंरीत्या आकाशस्योत्पत्तिसमर्थनं यत्कृतं तत्तावदयुक्तम् ।

‘ येनाश्रुतं श्रुतं भवति ( ६-१-१ ) इति वाक्यव्याख्यावसरे स्वयमेव ( शंकराचार्यैरेव ) “ तमादेशं विशिनष्टि येनादेशेन श्रुतेनाश्रुतमप्यन्यच्छ्रुतं भवत्यमतं मतमतर्कितं तर्कितं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति । सर्वानपि वेदानधीत्य सर्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते ” इति येनाश्रुतं श्रुतं भवतीति वाक्यव्याख्यानेन वेदाध्ययने कृतेऽपि ब्रह्मान्यवेदार्थे सर्वस्मिन् ज्ञातेऽपि यावत्कालपर्यन्तं ब्रह्मज्ञानं न भवति तावत्पर्यन्तमकृतार्थ एव भवतीति जगद्ज्ञानस्य ब्रह्मज्ञानं फलं इत्येव प्रतिज्ञा कृता वेदेन इति ज्ञायते, न तु ब्रह्मज्ञानेन जगतः ज्ञानं भवतीति । तथाच ‘ येनाश्रुतं श्रुतं

भवति ' इति प्रतिज्ञया जगद्ज्ञानस्यैव ब्रह्मज्ञानं फल (कार्य) मित्युक्त्या जीवब्रह्मणोर्भेद एव सिध्यति न त्वैक्यम्। इति ब्रह्मज्ञानेन जगद्ज्ञानं भवतीति प्रतिज्ञाया अभावेन तदन्यथानुपपत्त्या आकाशस्योत्पत्तिसमर्थनमयुक्तमेव ।

किंच ब्रह्मजगतोः परिणाम्युपादानोपादेयभावांगीकर्तृमते परिणाम्युपादानोपादेययोरभेदात् परिणाम्युपादानभूतब्रह्मज्ञानेन उपादेयजगतः ज्ञानं भवतीति यथाकथंचित् वक्तुं शक्येत। विवर्तोपादानवादिनां (ब्रह्मणि जगत् कल्पितमिति वादिनां) अद्वैतिनां मते न हि अधिष्ठानभूतब्रह्मज्ञानेन जगतः ज्ञानं संभवति। अध्यस्तं वस्तु, यावत्पर्यन्तं अधिष्ठानं न भासते तावत्पर्यन्तमेव भाति। यथा शुक्त्यज्ञानकाल एव रजतं भासते, शुक्तौ ज्ञातायां शुक्त्यज्ञानकल्पितस्य रजतस्य रजतज्ञानस्य च निवृत्तिरेव भवति (न भासते) तथा ब्रह्मणः जगत्प्रति अधिष्ठानत्वेन ब्रह्माज्ञानस्थितिपर्यन्तमेव ब्रह्मज्ञानकल्पितं जगत् भासते। अधिष्ठाने ब्रह्मणि ज्ञाते ब्रह्माज्ञानकल्पितं जगत् जगज्ज्ञानं च नश्यतीति न जगद्भासते। उक्तं हि अधिष्ठाने ब्रह्मणि ज्ञाते अध्यस्तं न ज्ञायते इति शंकराचार्यैः केनोपनिषद्भाष्ये " अथवा हेत्वर्थ उत्तरार्धोऽविज्ञातमित्यादिः " इति। तद्व्याख्याने च—" अथवा हेत्वर्थ इति लोके शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तं रूप्याद्यविज्ञातं भवति। अजानतामेव त्वध्यस्तं विज्ञातं भवतीति प्रसिद्धम्। तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यन्तीत्यर्थः " इति

विशेषविचारस्तु प्रकृत्यधिकरणे कृतो द्रष्टव्यः—एतेनैव 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति ' (बृ. ४.५ ६) ' कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ' (मुं. १-१-३)

इति प्रतिज्ञे अपि आकाशादिजगतः ब्रह्मणा अभेदबोधनद्वारा आकाशस्य ब्रह्मकार्यत्वं गमयत इति कथनं निरस्तम् । ब्रह्मण उपादान-कारणत्वाभावेन, अद्वैतमतरीत्या विवर्तोपादानत्वांगीकारेऽपि अधिष्ठान-ज्ञानेन अध्यस्तज्ञानस्य अदर्शनेन प्रत्युत तन्निवृत्तेरेव दर्शनेन च ब्रह्मज्ञानेन जगद्ज्ञानासंभवात् तदन्यथानुपपत्त्या आकाशरूपजगतः कार्यत्वसिद्धेरसंभवेन तेन आकाशस्य उत्पत्तिसाधनस्यायुक्तत्वात् ।

' न काचन मद्बहिर्धा विद्याऽस्ति ' इति वाक्यरूपप्रतिज्ञाया अपि ' सर्वे वेदा यत्पदमामनंति ' ' वेदैश्च सर्वैरहमेव वेद्यः ' (गी. १५) इति श्रुति गीतादिवाक्यानुसारेण मत् बहिर्धा=मदविषयी कुर्वाणा (परमात्माविषयिका) विद्या शास्त्रं नास्ति इत्यर्थकत्वेन शांकर-भाष्यव्याख्यानकर्त्रा ब्रह्मविद्याभरणे तथैव व्याख्यातत्वेन च ब्रह्मज्ञा-नेन जगद्ज्ञानं भवतीत्यप्रतिपादकत्वेन न तेनाकाशस्य कार्यत्वसिद्धिः । पूर्वोक्तरीत्या ब्रह्मज्ञानेन जगद्ज्ञानासंभवश्चेति ।

किंच " येनाश्रुतं श्रुतं भवति " इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते तत्साधनायैव चोत्तरे शब्दाः ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । ' (छां. ६-२-१) ' तदैक्षत ' ' तत्तेजोऽसृजत ' ( छां. ६-२-३ ) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयंति–' ऐतदात्म्यमिदं सर्वम् ' ( छां. ६-८-७ ) इत्यारभ्याप्रपाठकपरिसमाप्तेः । तद्यद्याकाशं न ब्रह्मकार्यं स्यान्न ब्रह्मणि विज्ञात आकाशं विज्ञायेत, ततश्च प्रतिज्ञाहानिः स्यात् । नच प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं वक्तुम् " इति वाक्येन मृदादिदृष्टांतैः सर्वं कार्यजातं ब्रह्मणा भवतीति प्रदर्श्य ' ऐतदात्म्यमिदं

सर्वं ( छां. ६-२-३ ) इति वाक्येन कार्यजातस्य ब्रह्मणाऽव्यतिरेकः प्रदर्शितः । आकाशस्य ब्रह्मकार्यत्वाभावे च ब्रह्मज्ञानेन आकाशज्ञानं न स्यात् । ततश्च ब्रह्मज्ञानेन सर्वज्ञानं भवतीति प्रतिज्ञायाः हानिः ( अविद्यमानार्थप्रतिपादकत्वं ) स्यात्–तथाच वेदस्याप्रामाण्यं स्यात् । नांगीकर्तव्यं च वेदस्याप्रामाण्यमिति ब्रह्मज्ञानेन सर्वज्ञानं भवतीति प्रतिज्ञावाक्यस्य प्रामाण्यसिध्यर्थं आकाशादिरूपजगतः ब्रह्मानन्यत्वं वक्तव्यं-ब्रह्मानन्यत्वं चाकाशादेः ब्रह्मकार्यत्वमन्तरा न संभवतीत्याकाशस्य कार्यत्वं ( जन्यत्वं ) सिद्धमिति यदुक्तं तन्न युक्तं बहुदोषग्रस्तत्वात् । तथाहि-वेदस्य प्रामाण्यं नाम विद्यमानवस्तुविषयकज्ञानजनकत्वम् । ब्रह्म, ब्रह्मातिरिक्तं जगत् इति वस्तुद्वयम् । तत्र अद्वैत मते सत्यभूतस्य ब्रह्मणः अज्ञेयत्वांगीकारेण सकलधर्मरहितत्वेनांगीकृते ब्रह्मणि धर्मनिमित्तकप्रवृत्तिमतां शब्दादिप्रमाणानां प्रवृत्त्यसंभवेन च वेदस्य ब्रह्मविषयकप्रमितिजनकत्वरूपं प्रामाण्यं वक्तुं नैव शक्यते अद्वैतिभिः । ' स्वप्नमाये यथा दृष्टे गंधर्वनगरं यथा । तथाविश्वमिदं दृष्टं न निरोधो नचोत्पत्तिः न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तः ( गौ. पा. का. ) ' द्वैतस्यासत्त्वं सिद्धं सतो ह्युत्पत्तिः प्रलयो वा स्यात् । नासतः शशविषाणादेः ( गौ. का. शां. भा. ) इत्यादि गौडपादकारिकायां तद्भाष्यानशंकरभाष्ये च जगतश्शशविषाणवद–सत्त्वांगीकारेण तद्विषयप्रमितेरेवासंभवेन वेदस्यासत्त्वेन च जगद्विषयकप्रमितिजनकत्वरूपप्रामाण्यस्य वेदे वक्तुमशक्यत्वेन वेदे प्रामाण्यस्यैवानंगीकारेण वेदप्रामाण्यान्यथानुपपत्त्या आकाशस्योत्पत्तिरंगीकार्या इत्युक्तेरद्वैतमते अयुक्तत्वात् ।

यत्तूक्तं मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते इति तदपि न युक्तम् । अद्वैतमते मृदि घटादीनां कल्पितत्वांगीकारेण रजतस्य शुक्तिकार्यत्वाभाववत् घटादीनां मृत्कार्यत्वासंभवात् ।

यच्च ' तथाहि प्रतिवेदांतं ते ते शब्दास्तेन तेन दृष्टांतेन तामेव प्रतिज्ञां स्थापयंति ' इदं सर्वं यदयमात्मा ' ( बृ. २-४-६ ) ब्रह्मैवेदममृतं पुरस्तात् ' ( मुं. २-२-११ ) इत्येवमादयः ' इति तदप्ययुक्तम् । वाक्यान्वयाधिकरणे एतासां श्रुतीनां कार्यकारणयोरभेदप्रतिपादकत्वाभावस्य समर्थितत्वात् ।

यच्चोक्तं ' न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम् । मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते ' इति तदपि न युक्तम् । ' निर्विकारोऽक्षरः शुद्धः' इत्यादिश्रुतिभिः ब्रह्मणो निर्विकारत्वावगमेन अद्वैतिभिर्ब्रह्मणः विकारानंगीकारेण च प्रकृतिविकारन्यायेन ब्रह्मज्ञानेन जगज्ज्ञानस्य वक्तुमशक्यत्वात् ।

यच्चोक्तं ' नच वेदस्य पुरुषाणामिव मायालीकवंचनादिभिरर्थावधारणमुपपद्यते ' इति तदद्वैतिमते न संभवति; ब्रह्मण अद्वैतमते प्रमाणागम्यत्वेन वेदप्रतिपाद्यत्वं नास्ति । जगतस्तु मायिकत्वेन अज्ञानिनःप्रति मोहनार्थमेवोक्तत्वात् । उक्तंहि शंकराचार्यैस्तत्रतत्र— " वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः " ( बृ. शां. भा. १-३-१९ ) इत्याद्यनेकवाक्यैः कर्मविध्यादिवेदवाक्यानि अज्ञानिनः प्रत्येवोक्तानीति तथा च अद्वैतिमतरीत्या ब्रह्मणि अध्यस्ततया

स्वीकृतस्य जगतः ब्रह्मज्ञानेन ज्ञानासंभवात् ब्रह्मज्ञानेन जगज्ज्ञानान्यथा-नुपपत्त्या आकाशादिजगतः ब्रह्मकार्यत्वं न वक्तुं शक्यत इति ।

## ७ ॐ 'यावद्विकारन्तु विभागो लोकवत्' ॐ

इति सूत्रं यद्यपि आकाशस्योत्पत्तिसाधकानुमानपरतया व्याचक्रुः शंकराचार्यादयः । सा उत्पत्तिरप्यस्माकं संमतैव । तथापि 'आकाश-दिक्कालमनःपरमाणवः विकाराः विभक्तत्वात् (विभागवत्त्वात्) घटशरावोदंचनादिवत्' इत्यनुमानेन आकाशादीनां विकारत्वसिद्धिः । नन्वात्मापि आकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटा-दिवत् प्राप्नोति अन्यथा व्यभिचारापत्तेरिति । तन्न । यदि ह्यात्मापि विकारः स्यात् परमन्यन्न श्रुतमिति आकाशादि सर्वं कार्यं निरात्मकं आत्मनः कार्यत्वे स्यात् । तथाच शून्यवादः प्रसज्येत । अत आत्मनो विकारो नांगीकरणीयः । तथाच विभक्तत्वादित्यनुमानस्य व्यभिचारपरिहारार्थं आत्मान्यत्वस्य वा धर्मिसत्तासमानसत्ताकत्वस्य वा विशेषणदानेन व्यभिचारः परिहरणीय इति साधनरीतिरनुपपन्नैव । तथाहि एकस्यात्मनः ज्ञानेन जगतः ज्ञानं भवतीति प्रतिज्ञा आत्म-जगतोरभेदमन्तरा न संभवतीति जगतः परमात्माभेदस्य पूर्वसूत्रे अद्वैतिभिरेवोक्तत्वेन आत्मान्यत्वे सति विभक्तत्वात् इति हेतूकरणे स्वरूपासिद्धेः । पक्षे आकाशादौ आत्मान्यत्वस्याभावात्—

धर्मिसत्तासमानसत्ताकत्वविशेषणदानमप्ययुक्तम् । अद्वैतिभिः 'स्वप्नमाये यथा दृष्टे……न निरोधो न चोत्पत्तिः' (गौ.पा.का.) 'द्वैतस्यासत्त्वात्' (गौ. शां. भा.) इत्यादिवाक्यैः आकाशादिजगतः

असत्त्वस्वीकारावगमेन धर्मिणः (आकाशादेः) सत्ताया एवाभावात् धर्मिसत्तासमानसत्ताकत्वं विभागे नास्त्येवेति धर्मिसत्तासमानसत्ताक-विभागवत्त्वस्य असिद्धत्वप्राप्तेः। विकारशब्दस्य पराधीनसत्ताक इत्यर्थस्य कल्पतरौ कृतत्वात् नानेनानुमानेन आकाशादीनामुत्पत्तिसिद्धिः। अनुत्पन्नस्यापि पराधीनसत्ताकत्वसिद्धेः।

यच्चोक्तं 'यदि ह्यात्मापि विकारः स्यात्। तस्मात्परमन्यन्न-श्रुतमित्याकाशादि सर्वं निरात्मकं (निरुपादानकं) आत्मनः कार्यत्वे स्यात्, तथाच शून्यवादः प्रसज्येत' इति तदप्यसमंजसम्। तथाहि अद्वैतमते शुद्धात्मा विशिष्टात्मा चेति द्वौ आत्मानौ। तत्र विशिष्टा-त्मा विकारःमिथ्या, तस्मात् अन्यत् परं अद्वैत्यभिमतं निर्विशेषं ब्रह्म शून्यवत् प्रमाणागम्यत्वात् न श्रुतमिति ब्रह्मवादः शून्यवाद एवेति शून्यवादः प्रसज्येत इत्यापादनस्य अयुक्तत्वात्।

उक्तंहि ब्रह्मविद्याभरणे—'शून्यं भावरूपं वा अभावरूपं वा? नाद्यः। शून्यस्य भावरूपत्वे ब्रह्मवाद एवाश्रित इति शून्यस्य भाव-रूपत्वे शून्यवादस्य ब्रह्मवादत्वं। शून्यस्य प्रपंचाभावरूपत्वेऽपि अद्वैति-भिरपि ब्रह्मणः प्रपंचाभावरूपत्वांगीकारात् प्रपंचाभावरूपब्रह्मवादः प्रपंचाभावरूपशून्यवाद एवेति।

किंच यच्चोक्तं अद्वैतिभिः 'न ह्यात्मा आत्मनः प्रमाणमपेक्ष्य सिध्यति' तदुक्तं सुरेश्वराचार्यैः – 'प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा। यस्य प्रसादात् सिध्यन्ति तत्सिद्धौ किमपेक्ष्यते॥' इति तथा श्रुतिराह-- 'पुरुषः स्वयं ज्योतिः' 'तस्य भासा सर्वमिदं विभाति इति च' इति तन्न युक्तम्। ब्रह्मणः प्रमाणमनपेक्ष्य सिद्ध्यं-

गीकारे शशविषाणवंध्यापुत्रादीनामपि प्रमाणमनपेक्ष्य सिद्धिः स्यात् शशविषाणादिविषयेऽपि ' प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा । यस्य प्रसादात् सिध्यंति तत्सिद्धौ किमपेक्ष्यते ' इति वक्तुं शक्यत्वात् ।

नच शशविषाणस्य असतः प्रसाद ( इच्छाविशेषः गुणान्तरं वा ) एव नास्ति । कथं शशविषाणस्य प्रसादात् सिध्यतीत्युक्तिः समंजसा स्यादिति वाच्यम् । निर्विशेषस्य ब्रह्मणोऽपि प्रसादो नास्त्येवेति ब्रह्मविषयेऽपि ' यस्य प्रसादात् ' इत्युक्तिरयुक्तैव ।

अपिच–यत् स्वप्रकाशं ( इतरप्रमाणागम्यं ) शुद्धं ब्रह्म अद्वैतिभिरंगीक्रियते तस्मिन् विषये ' पुरुषः स्वयंज्योतिः ' इति । ' तस्य भासा सर्वमिदं विभाति ' इति च श्रुत्युदाहरणं अयुक्तम् ) अद्वैत्यभिमतनिर्धर्मकब्रह्मणः मुख्यवृत्त्या वा अमुख्यवृत्त्या वा एतच्छ्रुत्यप्रतिपाद्यत्वात् । यत्किंचिद्धर्मवत्येव श्रुत्यादिप्रमाणानां प्रवृत्तेः ।

अपिच-आत्मा मानाधीनसिद्धिकः किं न स्यात् इति शंकापरिहारार्थं 'आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यतीति' यदुक्तं तदपि स्वव्याहतं । अनेन वाक्येन आत्मा प्रमाणादिव्यवहारात् प्राक् सिध्यति प्रमाणादिव्यवहाराश्रयत्वात् इति अनुमानरूपप्रमाणेन आत्मसिद्धिमुक्त्वा प्रमाणानधीन-सित्ध्युक्तिः स्वव्याहता । नहीदं वाक्यं अनुमानरूपप्रमाणसूचकं नेति वक्तुं शक्यं प्रमाणमन्तरापि सिद्धौ शशविषाणादिकं प्रमाणमन्तरा सिध्यतु इत्युक्तदोषानिवृत्तेः । ब्रह्मसिद्धौ प्रमाणानपेक्षायां यस्य कस्यापि वस्तुनः सिद्धौ प्रमाणापेक्षाया अभावेन प्रमाणानां वैयर्थ्यापत्तेः । तत्तद्वाद्यभिलषितपदार्थानां यथेच्छं सित्ध्यापत्त्या परस्परविरुद्धानां सर्वमतानामपि अंगीकार्यत्वापत्तेश्च ।

अद्वैत्यभिमते निर्धर्मके ब्रह्मणि प्रमाणादिव्यवहाराश्रयत्वमसिद्धं चेत्याद्यनेकदोषयुक्तत्वात् एतत्प्रणाल्या आकाशस्य कार्यत्वसाधनमयुक्तम् ।

## ८ ॐ एतेन मातरिश्वा व्याख्यातः ॐ

इत्यधिकरणीयशांकरव्याख्यानमपि वियदधिकरणभाष्यनिराकरणन्यायेनैव निराकृतं भवति सिद्धांतस्य समत्वात् .

## ९ ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ

इति सूत्रं ब्रह्मणोऽपि आकाशवायुवत् उत्पत्तिशंकायां ब्रह्मण उत्पत्त्यभावप्रतिपादकतया व्याख्यातम् । यद्यपि जगत्कारणस्य ब्रह्मण उत्पत्तिर्नास्ति तथापि अद्वैतमतरीत्या उत्पत्त्यनुपपत्तिप्रतिपादनं न युक्तमेवेति प्रदर्शयामः । यच्चोक्तं शांकरभाष्ये-' स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ' ( श्वे. ६-९ ) इति च ब्रह्मणो जनयितारं वारयति ' इति तदद्वैतमतरीत्या अयुक्तम् । तथाहि-

सः = ब्रह्म, कारणम् = जगतउत्पादकं, कारणाधिपाधिपः = ये कारणाधिपाः जीवाः तेषामधिपः, अस्य ब्रह्मणः कश्चिज्जनयिता नास्ति अधिपश्च नास्ति इति खलु अद्वैतमतरीत्या श्रुत्यर्थः । तथाच अद्वैतमतरीत्या एतच्छ्रुतिप्रतिपादितं ब्रह्म निर्गुणं वा सगुणं वा । न तावन्निर्गुणं; तस्मिन् कारणत्वकारणाधिपजीवाधिपतित्वादीनामसंभवात् । सगुणं चेत् तस्य निर्गुणे ब्रह्मणि कल्पितत्वेन निर्गुणे कल्पितस्य आकाशादेः उत्पत्तिकथनवत् सगुणब्रह्मणः उत्पत्तिकथनसंभवात् । नैतस्याः श्रुतेः उत्पत्त्यभावे प्रमाणतया उदाहरणमद्वैतिनां युक्तम् ।

## १० ॐ तेजोऽतस्तथा ह्याह ॐ

इति सूत्रेण तेजसो मातरिश्वनः जनिरुक्ता सा समीचीनैव। उत्पत्तिप्रकारचिन्ता अयुक्ताऽपि प्रकृतानुपयुक्तत्वात् न निराक्रियते। तत्र "दर्शयति च ब्रह्मणो विकारात्मना अवस्थानं 'तदात्मानं स्वयमकुरुत' (तै. २-७-१) इति वाक्येन श्रुतिमुदाहृत्य ब्रह्मणो विकारात्मना या अवस्थितिः भाष्ये उक्ता सा निर्विकारश्रुतिविरुद्धा च। अद्वैतमते हि ब्रह्मणः जगद्भ्रमं प्रति अधिष्ठानत्वमुक्तं न तु विकारात्मनाऽवस्थानमिति।

## ११ ॐ आपः ॐ

## १२ ॐ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॐ

इति सूत्रे अग्नेरप्सृष्टिं अद्भ्यः पृथिवीसृष्टिं प्रतिपादयतः इति शंकराचार्याणां यत्सृष्टिकथनं तद्युक्तमेव। परंतु सा सृष्टिः कल्पितरूपेति यत् कथ्यते तदयुक्तमिति तत्र तत्र वर्णितं तदनुसंधेयमत्रापि।

## १३ ॐ तदभिध्यानादेव तु तल्लिंगात्सः ॐ

इति सूत्रस्य "किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्त्याहोस्वित् परमेश्वर एव तेन तेनात्मनाऽवतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति संदेहे सति प्राप्तं तावत् स्वयमेव सृजन्तीति। कुतः? 'आकाशाद्वायुर्वायोरग्निः' इत्यादिस्वातंत्र्यश्रवणात्। नन्वचेतनानां स्वतंत्राणां प्रवृत्तिः प्रतिषिद्धा, नैष दोषः, 'तत्तेज ऐक्षत ता आप ऐक्षन्त' (छां. ६-२-४) इति च भूतानामपि चेतनत्व-

श्रवणादिति । एवं प्राप्तेऽभिधीयते—स एव परमेश्वरस्तेन तेनात्मनाऽवतिष्ठमानोऽभिध्यायंस्तंतं विकारं सृजतीति । कुतः ? तल्लिंगात् । तथाहि शास्त्रम्– 'यः पृथिव्यां तिष्ठन् यः पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' ( बृ. ३-७-३ ) इत्येवं जातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति । तथा 'सोऽकामयत बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत्' 'तदात्मानं स्वयमकुरुत' (तै. २-६-१) इति च तस्यैव च सर्वात्मभावं दर्शयति । यत्त्वीक्षणश्रवणमप्तेजसोस्तत्परमेश्वरावेशवशादेव द्रष्टव्यम् । 'नान्योऽतोऽस्ति द्रष्टा ( बृ. ३-७-२३ ) इतीक्षित्रन्तरप्रतिषेधात् । प्रकृतत्वाच्च सत ईक्षितुः–'तदैक्षत बहु स्यां प्रजायेय' इत्यत्र" इति यद् व्याख्यानं शंकराचार्याणां तदयुक्तम् । तथाहि–वियदादिभूतानां चेतनत्वश्रवणात् स्वयमेव स्वविकारान् सृजतीति पूर्वपक्षोऽसंभावित एव । चेतनानां देवतानां स्वविकारसर्जनस्यासंभावितत्वात् । परमेश्वरस्तेन तेनात्मनाऽवतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति सिद्धांतोऽप्ययुक्तः । परमेश्वरस्य तेन तेनात्मना (आकाशवाय्वादिस्वरूपेण) स्थितेरयोगात् । न हि परमेश्वरः आकाशवाय्वादिजडरूपेण आकाशवाय्वाद्याभिमानिविशिष्टदेवतारूपेण वा अवतिष्ठते । नहि चेतनस्य परमात्मनः अचेतनरूपेण वा विशिष्टदेवतारूपेण भवनं वा संभावनार्हं अद्वैतिभिरनंगीकृतं च– 'तल्लिंगात् । तथाहि शास्त्रं–'यः पृथिव्यां तिष्ठन्यः पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति (बृ. ३-७-३) इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति इति परमेश्वरः तेन तेनात्मना अवतिष्ठमानः तं तं विकारं सृजतीति अस्मिन् विषये

हेतुतया यदुक्तं तदप्यसमंजसम् । अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् (ब्र. सू. १-२-१८) इति सूत्रभाष्ये यं पृथिवी न वेद-इति च पृथिवीदेवतायाः अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यं अंतर्यामिणं दर्शयति इति वाक्येन तथा ' तत्र यं पृथिवी न वेद ' यं सर्वाणि भूतानि न विदुः ' इति चान्ये नियन्तव्याः विज्ञातारोऽन्यो नियन्ता सर्वान्तर्यामीति उपनिषद्भाष्यवाक्येन च पृथिव्याद्यभिमानिदेवताभ्यः अंतर्यामी ईश्वरः अन्य इति स्पष्टं परमेश्वरस्य पृथिव्याद्यभिमानिदेवताभ्यः भेदस्य उक्तत्वेन ' यः पृथिव्यां तिष्ठन् ' इति श्रुतेः परमेश्वरस्तेन तेनात्मनावतिष्ठमानः इत्यस्मिन् विषये (अभेदविषये) उदाहरणस्यायुक्तत्वात्--

किंच साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयतीति वाक्येन स्वयमेव शंकराचार्यैः भूताभिमानिदेवतानां परमात्मना नियम्यनियामकभावेन भेदस्य कथितत्वेन तेन तेनाऽऽत्मनाऽवतिष्ठमानः ' इति भूतरूपेण ( भूताभेदेन ) स्थितिकथनं स्वव्याहतम् ।

किंच तथा ' सोऽकामयत बहु स्यां प्रजायेय ' इति प्रस्तुत्य ' सच्चत्यच्चाभवत् ' ' तदात्मानं स्वयमकुरुत ' (तै. २-७) इति च तस्यैव सर्वात्मभावं दर्शयति इति यदुक्तं भाष्ये तत् श्रुत्यर्थाज्ञानमोहनान्यतरमूलं-श्रुतौ परमात्मनः सर्वात्मभावानुक्तेः । तथाहि—

' सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंच तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् ' इत्यादिश्रुतेः ।

सः = परमात्मा

अहं = अहं

बहुस्यां = बहुरूपी स्यां
( तदर्थं )

प्रजायेय = सर्जनं कुर्यां

इति = एवंप्रकारेण

अकामयत = इच्छां कृतवान्
( अनन्तरं )

सः = परमात्मा

तपः = आलोचनं

अतप्यत = अकरोत्

सः = परमात्मा

तपः = आलोचनं

तप्त्वा = कृत्वा

यत् = प्रमाणसिद्धं यत्किंच

इदं किंच = जगदस्ति

इदं सर्वम् = तत् समस्तं जगत्

असृजत = सृष्टवान्

तत् = सर्वं जगत्

सृष्ट्वा = निर्माय

तदेव = सृष्टं जगत्

अनुप्राविशत् = नियामकरूपेण प्रविष्टवान्

तत् = जगत्

अनुप्रविश्य = प्रवेशं कृत्वा

सत् = सच्छब्दवाच्यगुणयोगेन सदिति शब्दवाच्यः

त्यत्च = त्यच्छब्दवाच्यगुणयोगेन त्यच्छब्द वाच्यश्च

अभवत् = अभूत्

इति हि शब्दात्प्रतीयमानोऽर्थः एतच्छ्रुत्युक्तार्थे—

'तदप्येष श्लोको भवति असद्वा इदमग्र आसीत् ततो वै सदजायत तदात्मानं स्वयमकुरुत तस्मात्तत् सुकृतमुच्यत इति—' इति मंत्रः प्रमाणतया उदाहृतः। श्रुत्या एतस्य मंत्रस्य पूर्वमंत्रार्थे प्रमाणतया उदाहृतत्वेन पूर्वमंत्रस्य योऽर्थः स एवार्थो वक्तव्य इत्यविवादमिति पूर्वं पूर्वमंत्रार्थं निर्धार्य ततः 'आत्मानं स्वयमकुरुत' इति मंत्रार्थो निर्धार्यते।

'सोऽकामयत बहु स्यां प्रजायेय' इति प्रस्तुत्य 'सच्च त्यच्चाभवत्' इति वाक्यग्रहणं केवलं पूर्वोत्तरवाक्याज्ञानिनां मोहनार्थमेव

कृतं शंकराचार्यैः । तथाहि सोऽकामयत बहु स्यां प्रजायेय इति ' सच्च त्यच्चाभवत् ' इति वाक्यमध्यवर्तिनः " इति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्रविशत् तदनुप्रविश्य " इति वाक्यस्य अग्रहणात् । शंकरत्यक्तवाक्येन हि ' बहु स्यां प्रजायेय ' इति कामनां कृत्वा स परमात्मा आलोचनं कृतवान्, आलोचनं कृत्वा यत् किंचित् जगदस्ति तत्सर्वं जगत् सृष्टवान् । तादृशं जगत् सृष्ट्वा तस्मिन् जगति परमात्मा ' यः पृथिव्यां तिष्ठन् यः पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, एष त आत्मान्तर्याम्यमृतः ' ( बृ. ३-७-३ ) ' योऽप्सु तिष्ठन् ' ४. ' योऽग्नौ तिष्ठन् ' ५. ' योऽन्तरिक्षे तिष्ठन् ' ६. ' यो वायौ तिष्ठन् ' ७. ' यो दिवि तिष्ठन् ' ८. ' य आदित्ये तिष्ठन् ' ९. ' यो दिक्षु तिष्ठन् ' १०. ' यश्चन्द्रतारके तिष्ठन् ' ११. ' य आकाशे तिष्ठन् ' १२. ' यस्तमसि तिष्ठन् ' १३. ' यस्तेजसि तिष्ठन् ' १४. ' यः सर्वेषु भूतेषु तिष्ठन् ' १५. ' यः प्राणे तिष्ठन् ' १६. ' यो वाचि तिष्ठन् ' १७. ' यश्चक्षुषि तिष्ठन् ' १८. ' यः श्रोत्रे तिष्ठन् ' १९. ' यो मनसि तिष्ठन् ' २०. ' यस्त्वचि तिष्ठन् ' २१. ' यो विज्ञाने तिष्ठन् ' ( य आत्मनि [ जीवे ] तिष्ठन् ' २२. ' यो रेतसि तिष्ठन् ' इत्यादिबृहदारण्यकवाक्यानुसारेण ) नियामक रूपेण प्रवेशं कृतवान् इति नियम्यस्य प्रवेश्यस्य च पृथिव्यादि-सर्वजगतः नियामकेन प्रवेष्ट्रा परमात्मना भेद एवोक्तो भवति न तु पृथिव्यादिसर्वजगद्रूपत्वमिति ( सर्वात्मभावमिति ) स्वेनोच्यमान सर्वात्मभावविरुद्धार्थः प्रतिपाद्यते इति तस्य भागस्य वंचनार्थं त्यागः। सच्च त्यच्चाभवदिति वाक्येन ब्रह्मणः न सत्त्यदादिजगद्रूपत्वं कथ्यते ।

ब्रह्मणः सत्त्यदादिभवनात्प्रागेव ' इदं सर्वमसृजत यदिदं किंच ' इति मूर्तामूर्तादिशब्दवाच्यजगत्सृष्टेः कथितत्वात् । तथा ' तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् ' इति जगत्सृष्ट्यनन्तरं जगत्प्रवेशस्य जगत्प्रवेशानन्तरं सत्त्यदादिभवनस्य चोक्तेः । तथाच ' १ सच्च त्यच्चाभवत् ' इति वाक्योक्तं ब्रह्मणः सत्त्यदादिभवनं २ विश्वोपादनरूपं न ३ विश्वोत्पत्त्युत्तरकालीनत्वात् । ४ या क्रिया यत्क्रियोत्तरकालीना नासावसौ ५ यथा भुक्त्वा चरतीत्युक्तं चरणं न पूर्व कालीनभोजनरूपमिति अनुमानविरुद्धत्वात् ब्रह्मणः सत्त्यदादि भवनस्य विश्वोपादानरूपतायाः । यथा न हि घटाद्यात्मना जायमानं मृत्सुवर्णादिकं घटरुचकादि सृष्ट्वा तदनुप्रविश्य तद्भवति । तथा न हि जगदात्मना जायमानं ब्रह्म जगत्सृष्ट्वा जगत्प्रविश्य सत्त्यदादिजगद्रूपं भवतीति । जगत्सृष्ट्यनन्तरकालीनसत्त्यदादिभवनकथनं न ब्रह्मणः सर्वात्मभावं प्रतिपादयति प्रत्युत भेदमेवेति ।

' सोऽकामयत बहु स्यां प्रजायेय ' इति वाक्यस्य केवलजगदात्मना भवनेच्छाकथने तात्पर्ये सोऽकामयत बहु स्यां इत्यनेनैवालं प्रजायेय इति व्यर्थम् । प्रजायेय इत्यस्यापि उत्पन्नो भवेयं इत्यर्थकत्वात् । तस्मात् बहु स्यामित्यस्य तत्तत्पदार्थनियामकबहुरूपी स्यां इति संकल्प्य तदर्थं नियम्यप्रजाः प्रजायेय इति संकल्प्य नियम्यजगत् सृष्ट्वा पूर्वसंकल्पानुसारेण तत्तन्नियामकरूपेण तत्र तत्र प्रवेशं कृतवान् इत्यर्थस्यैव तद्वाक्यान्यथानुपपत्त्या प्रतीतेः न जगदभेदोऽनेन वाक्येनोच्यते । यदि ब्रह्मणः जगदात्मना भवनमेव इष्टं स्यात् तथा ब्रह्म यद्यकृत तदा सोऽकामयत प्रजायेयेति स तपोऽतप्यत

१ पक्षः २ साध्यं ३ हेतुः ४ व्याप्तिः ५ दृष्टांतः

स तपस्तप्त्वा इत्यनन्तरं इदं सर्वमसृजत इति वा सच्च त्यच्चाभवदिति वा वक्तव्यं स्यात् । न तूभयं एकस्य वैयर्थ्यापत्तेः । तदात्मानं स्वयम. कुरुत इति वाक्यन्तु तदप्येष श्लोको भवतीति पूर्वोक्तार्थे प्रमाणतया उदाहृतवाक्यान्तर्गतत्वेन पूर्ववाक्ये जगत् सृष्ट्वा नियामकरूपेण तत्र तत्र प्रवेशेन आत्मनः नियामकबहुभावस्योक्तत्वेन आत्मानं नियामकरूपेण स्वयं स्वेच्छया अकुरुत=कृतवान् इत्यर्थस्यैव कर्तव्यतया नेदमपि वाक्यं ब्रह्मणो जगदात्मभावं कथयति । निर्विकारस्य ब्रह्मणः जगदात्मना भवनस्यासंभवात् । अद्वैतिभिरपि निर्विकारस्य ब्रह्मणः जगदात्मना विकारानंगीकाराच्च ।

किंच अद्वैतिभिः ब्रह्मणि जगतः अध्यस्तत्वांगीकारात् ब्रह्मणः जगद्रूपेण भवनेच्छाया वक्तुमशक्यत्वेन बहु स्यामित्यस्य लक्षणया अहं (ब्रह्म) बहुरूपेण भ्रांतः (भ्रान्त्याश्रयः) स्यामिति वा बहुरूपेण भ्रांतिविषयः स्यामिति वा इच्छां कृतवान् । इच्छानन्तरं तपः आलोचनं कृतवान् । आलोचनं कृत्वा इदं सर्वमसृजत इत्यस्य इदं सर्वं जगत् असृजत तत्प्रकारकभ्रमविशेष्यकभ्रमाश्रयः अभूत् इति वा तत्प्रकारकभ्रमविशेष्यः अभूदित्यर्थो वा वक्तव्यः । स चायुक्तः ।

(१) निर्धर्मके ब्रह्मणि अध्यासप्रयोजकानां सामान्यधर्मविशेषधर्मसामान्यधर्मप्रकारकज्ञानविशेषधर्मप्रकारकज्ञानाभावारोप्यमाणजगत्सादृश्यादीनामभावेन अध्यासासंभवात् ।

(२) अध्यासांगीकारेऽपि अहं जगत्प्रकारकभ्रमवान् स्यामितीच्छाया वा जगत्प्रकारकभ्रमविशेष्यः स्यामितीच्छायाः कस्याप्यसंभवात् ।

( ३ ) ' स तपोऽतप्यत स तपस्तप्त्वा ' इति तपश्शब्दोक्तालोचनरूपज्ञानस्य भ्रमोत्पत्तिं प्रति उपयोगाभावात् प्रत्युत ज्ञानस्य भ्रमोत्पत्तिं प्रति प्रतिबन्धकत्वाच्च ।

( ४ ) ' इदं सर्वमसृजत ' इत्यस्य इदं सर्वं जगत् असृजत भ्रमविषयमकरोत् इत्यर्थासंभवाच्च ।

तस्मात् ' सोऽकामयत ' इति वाक्यं सर्वात्मभावं न ब्रह्मणः प्रतिपादयति । किंतु यः पृथिव्यां तिष्ठन्नित्यादिश्रुत्युक्तदिशा परमात्मा नियामकबहुरूपेण भवामि इतीच्छां कृत्वा नियामकबहुरूपार्थं नियम्यपृथिव्यादिरूपं जगत् सृजामीतीच्छां कृत्वा नियम्यपृथिव्यादिभूतानि सृष्ट्वा तेषु नियामकरूपेण प्रविश्य ' सच्च त्यच्चाभवत् साधु–गुणादियुक्तत्वेन सत्त्यदादिशब्दवाच्योऽभूदित्येवार्थः इति नेदं वाक्यं ब्रह्मणः सर्वात्मभावे प्रमाणम् ।

अपि च ' यत्त्वीक्षणश्रवणं अप्तेजसोस्तत् परमेश्वरवशादेव द्रष्टव्यं नान्योऽतोऽस्ति द्रष्टा ' ( बृ. ३-७-२३ ) इति ईक्षित्रन्तरस्य प्रतिषेधात् इति यदुक्तं तन्न । नान्योऽतोऽस्ति द्रष्टेति वाक्यं ईक्षित्रंतरं न वारयति । ' अदृष्टो द्रष्टा ' इति पूर्ववाक्येन परमात्मनः धर्मादिवत् दर्शनायोग्यत्वस्य कथितत्वेन अतः=दर्शनायोग्यत्वात् अन्यः परमात्म–द्रष्टा नास्ति इत्यर्थपरतया द्रष्ट्रन्तरनिषेधकत्वाभावस्य पूर्वं बहुवारं व्यवस्थापितत्वात् । ' आत्मा वारे द्रष्टव्यः श्रोतव्यः ' इत्यादौ परमा–त्मदर्शनस्य विधानाच्च । तदैक्षत बहु स्यां प्रजायेयेति सत ईक्षितृत्वमुक्त्वा तदुत्तरवाक्ये ' तत्तेज ऐक्षत ता आप ऐक्षन्त ' इति तेजआदीनां ईक्षितृत्वनिषेधायोगाच्च । तथाच पूर्वपूर्वभूतानां जडानां उत्तरोत्तरभूतंप्रति

उपादान ( परिणाम ) कारणत्वं पूर्वपूर्वभूताभिमानिदेवतानां उत्तरोत्तर-भूतं प्रति परमात्माधीनतया कारणत्वं परमात्मनः स्वातंत्र्येण कारणत्व-मिति परमेश्वरः तत्तद्भूतभावेन ( भूतरूपतया ) तं तं विकारं सृजति, इति व्याख्या न युक्तेति ।

## १४ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ

इति सूत्रं यत् विपर्ययेण तु प्रलयक्रमः इत्यर्थपरतया व्याख्यातं शंकराचार्यैः तद्युक्तमेव । परंतु यदुक्तं " यत्पृथिव्यद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयादापश्च तेजसो जाताः सत्यस्तेजोऽपीयुः, एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यं " इति तन्न युक्तम् । तत्परिणतं वस्तु प्रलये तस्मिन् लीयते न तु तन्निमित्त-कारणकं वस्तु तस्मिन् लीयते । मृत्परिणतो घटः मृदि लीयते न तु दण्डनिमित्तकारणको घटो दण्डे लीयते । पृथिव्यादीन् प्रति जलादीनां प्रकृत्यन्तानामुपादानकारणत्वात्तेषु तेषु तेषां लयक्रमेण अंततः प्रकृतौ प्रकृतिजातसर्वपदार्थानां लयेऽपि ब्रह्मणो निमित्तकारणत्वात् ब्रह्म-निमित्तकारणकपदार्थानां तद्रूपताभवनरूपलयो न संभवतीति सर्वं कार्यजातं परमकारणं परमसूक्ष्मं ब्रह्माप्येतीत्युक्तिरयुक्तैव पृथिव्या-दीनां जलादिषु उपादानकारणेषु लयोऽपि पृथिव्यादेर्जलादिकं परिणाम्युपादानकारणमिति मते युक्तः । अद्वैतमते यथा एकस्यां शुक्तिकायां रजतसीसवंगादीनां अनेकेषां भ्रमः एवं पृथिव्यादीनां सर्वेषां ब्रह्मण्येव भ्रमः इत्यंगीकारेण पृथिव्यादीनामपि न जला-दावप्ययसंभव इति ।

## १५ ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॐ ।

इतीदं सूत्रं भूतकरणोत्पत्तिश्रुत्योरविरोधबोधकमित्युक्तं भाष्ये तदयुक्तं । अद्वैतमतरीत्या सर्वस्य कल्पितत्वात् । उत्पत्तिश्रुतेर्विरोध-प्रसक्तेरभावात् । तत्परिहारकथनं तु दूर एवेति प्रकृतानुपयुक्तत्वाद्वि-शेषविचारो न क्रियते ।

## १६ ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ

इति सूत्रस्य जीवस्य जन्ममरणव्यपदेशो भाक्तः । स्थावरजंगम-शरीरविषयकजन्ममरणशब्दः तत्स्थे जीवे उपचरितः । शरीरप्रादुर्भाव तिरोभावयोः सतोः जन्ममरणशब्दौ जीवे भवतः नासतोः इति जीवस्य शरीरोत्पत्तिनाशप्रयुक्तोत्पत्तिनाशशब्दः नतु स्वत इत्येतत्परतया यच्छांकर व्याख्यानं तद्युक्तमेव । परन्तु सर्वं कल्पितमितिवदतामद्वै-तिनां मते न युक्तमिति तत्र तत्र वर्णितमिति पुनरत्र न विचार्यते ।

'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति श्रुति-गतजीवशब्दस्य जीवपरत्वे तया श्रुत्या जीवस्य नित्यत्वसिद्धावपि न बाधकमस्माकं किंचित् । वस्तुतः परमात्मपरएव अयं जीवशब्दः न अल्पज्ञत्वादिविशिष्टजीवपर इत्युत्तराधिकरणे वक्ष्यामः ।

# १७ ॐ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॐ

एतत्सूत्रस्य कासुचिच्छ्रुतिषु अग्निविष्फुलिंगादिनिदर्शनैर्जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते । कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते । नचोत्पत्तिराम्नायते इति श्रुतिविप्रतिपत्तेः जीवाख्यः आत्मा ब्रह्मणः व्योमादिवदुत्पद्यते–आहोस्वित् ब्रह्मवदेव नोत्पद्यते इति संशये जीवः उत्पद्यते इति पूर्वपक्षयित्वा नोत्पद्यते इति सिद्धांतः इति शंकराचार्याणां यद्व्याख्यानं तद्युक्तमेव । परंतु पूर्वपक्षावसरे उक्तौ प्रथमद्वितीयहेतू अयुक्तौ, सिद्धांतकथनरीतिश्च अयुक्ता । पूर्वपक्षे जीवस्य उत्पत्तिविषये एकस्मिन्विदिते सर्वमिदं विदितं, इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत । तत्त्वांतरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत इति प्रतिज्ञानुपरोधरूपः यः प्रथमहेतुरुक्तः सः नोत्पत्तिसाधक इति पूर्वमेव प्रतिपादितमिति ।

नचाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात् । अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः। विभक्तत्वादाकाशादिवदस्य विकारित्वसिद्धिः । यावान्ह्याकाशादिः स सर्वो विकारः । तस्य चाकाशादेः उत्पत्तिः समधिगता । जीवात्माऽपि पुण्यापुण्यकर्मा सुखदुःखयुक्प्रतिशरीरं प्रविभक्त इति तस्यापि प्रपंचोत्पत्त्यवसर उत्पत्तिर्भवितुमर्हति इति द्वितीयो हेतुरप्रयोजकः । जीवपरमात्मनोर्लक्षणभेदेन भेदे सिद्धेऽपि नहि परमात्मभेदः उत्पत्तिसाधकः । " प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि " इति गीतया अनादिनित्यतया प्रमितायामपि प्रकृतौ परमात्म ( ब्रह्म ) भेदस्य

सत्त्वात् । अन्यथा (ब्रह्मभेदमात्रस्य उत्पत्तिसाधकत्वे) ब्रह्मभिन्नत्वेन शशविषाणवंध्यासुतादेरपि उत्पत्तिप्रसंगात् ।

( इति पूर्वपक्षहेतुनिरासः )

आत्मा जीवः नोत्पद्यते इत्यस्मिन् विषये नित्यत्वाच्च ताभ्यः । चशब्दादजत्वादिभ्यश्च नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथाऽजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनाऽवस्थानं ब्रह्मात्मना चेति । नचैवंरूपस्योत्पत्तिरुपपद्यते । ताः काः श्रुतयः । 'न जीवो म्रियते' (छां. ६-११-३) 'स वा एष महानज आत्माऽजरोऽमृतोऽभयो ब्रह्म' ( बृ. ४-४-२५ ) 'न जायते म्रियते वा विपश्चित्' ( कठ २-१८) 'अजो नित्यः शाश्वतोऽयं पुराणः' (कठ २-१८) 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. २-६-१ ) 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. ६-३-२) 'स एष इह प्रविष्ट आनखाग्रेभ्यः (बृ. १-४-७) 'तत्त्वमसि' (छां. ६-८-७) अहं ब्रह्मास्मि' (बृ. १-४-१०) 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ. २-५-१९ ) इत्येवमाद्याः नित्यत्ववादिन्यः सत्यः जीवस्योत्पत्तिं प्रतिबध्नंति । इति यो उत्पत्त्यभावविषये हेतुः उक्तः सोऽप्ययुक्तः ।

अयमात्मा ब्रह्म सर्वानुभूः (बृ. २-५-१९) इति वाक्यं अयं प्रमाणसिद्धः आत्मा परमात्मा, ब्रह्म पूर्णं, सर्वानुभूः सर्वं अनुभवति (जानाति) इति वा, सर्वं अनुभावयति (उत्पादयति) इति वा सर्वानुभूः सर्वज्ञः सर्वजगदुत्पादक इति परमात्मनः पूर्णत्वं सर्वज्ञत्वं सर्वोत्पादकत्वं प्रतिपादयति नतु जीवस्योत्पत्त्यभावम् इति जीवस्य उत्पत्त्यभावे एतच्छ्रुत्युदाहरणमयुक्तम् ।

तत्त्वमसीति वाक्यमद्वैतमतरीत्या बोधकमेव न, बोधकत्वेऽपि चित् इत्यखण्डार्थबोधकं नतु जीवस्योत्पत्त्यभावबोधकमिति जीवस्योत्पत्त्यभावे तत्त्वमसीतिवाक्योदाहरणमप्ययुक्तम् ।

एवमेव अहं ब्रह्मास्मीति वाक्यमपि न जीवोत्पत्त्यभावबोधकमिति जीवोत्पत्त्यभावे एतच्छ्रुत्युदाहरणमयुक्तम् । ' स एष इह प्रविष्ट आनखाग्रेभ्यः ' ( बृ. १।४।७ ) इति वाक्यमपि सः एषः परमात्मा इह स्वसृष्टे प्रविष्ट इति परमात्मनः जगति प्रवेशं बोधयति नतु जीवस्योत्पत्त्यभावम् । ' सेयं देवतैक्षत हंताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ( छां. ३।२ ) वाक्यमपि न जीवस्योत्पत्त्यभावं वक्ति । सा इयं देवता सदाख्या ऐक्षत आलोचनं कृतवती, अहं इमाः तिस्रो देवताः=तेजोभिमानिदेवतां अबभिमानिदेवतां अन्नाभिमानिदेवतां च अनेन जीवेन जीवनामकेन अनिरुद्धरूपेण प्रवेशं कृत्वा नामरूपे नामात्मक रूपात्मकप्रपंचं करवाणि इति परमात्मनः ' सुप्तं कर्म प्रबोधयन्ति' ति प्रमाणानुसारेण तेजआदितत्वप्रवेशेन जगत्सृष्टिमेव प्रतिपादयति नतु जीवस्योत्पत्त्यभावमिति इदमपि जीवस्योत्पत्त्यभावे न प्रमाणम् । विशेषविचारस्तु तत्त्वमसिवाक्यार्थनिरूपणे द्रष्टव्यः।

'तत्सृष्ट्वा तदेवानुप्राविशत् ' ( तै. २।६।१ ) इति वाक्यमपि परमात्मा जगत्सृष्ट्वा ' यः पृथिव्यां तिष्ठन् ' ' योऽप्सु तिष्ठन् ' इत्यादिश्रुत्युक्तरीत्या नियामकरूपेण तत्र तत्र प्रवेशं कृतवानित्येव बोधयति नतु जीवस्योत्पत्त्यभावम् ।

" स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म " इति श्रुतिः परब्रह्मणः अजरत्वादिकं वक्ति नतु जीवस्योत्पत्त्यभावमिति नैतदपि वाक्यं जीवस्योत्पत्त्यभावे प्रमाणं भवितुमर्हति ।

जीवस्य ब्रह्मत्वात् (जीवब्रह्मणोरभेदात्) ब्रह्मण उत्पत्त्यभावे तदभिन्नस्य जीवस्य उत्पत्त्याद्यभावःसिध्यतीति आशा, ईश्वरोऽहं (गी. १७।१४) इति गीतोक्तरीत्या तामसत्वात् त्याज्या। अत्यागे 'आसुरीं योनिमापन्ना मूढाः जन्मनि जन्मनि । मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिं' (गी. १८) इति गीतोक्ता तामसी गतिर्वा प्राप्या। 'न जायते म्रियते वा विपश्चित् नायं... 'अजो नित्यः शाश्वतोऽयं पुराण... [क. २-१८] इति वाक्यं 'न जीवो म्रियते' इति वाक्यं च जीवनित्यत्व [उत्पत्त्यभाव] प्रतिपादकं भवतु न नः काचित्क्षतिः। अस्माभिरपि जीवस्य नित्यत्वांगीकारात्।

परंतु 'स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इति पूर्ववाक्ये जीवेन युक्तस्य मोदमानत्वं 'स एष' इतिपदोक्तस्य वक्ति। मोदमानत्वं च न जीवमन्तरा संभवतीति मोदमानः जीव एवेति मोदमानत्वेन स एष इति पदोक्तस्य वृक्षस्य जीवत्वं सिध्यति। तथाच स एष वृक्षजीवः जीवेन जीवनामकेन आत्मना परमात्मना अनुप्रभूतः पेपीयमानः मोदमानः दृष्टःसन् तिष्ठति । वृक्षजीवतन्नियामकजीवाख्यपरमात्मनोः प्रसक्तत्वात् 'न जीवो म्रियते' इति वाक्यस्थ जीवशब्दः न सुखदुःखादिभोक्तृजीवपरः, किंतु 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति श्रुतेः भगवत्पर एवेति 'न जीवो म्रियते' इति वाक्यं जीवस्य उत्पत्त्यभावं न प्रतिपादयत्यतो जीवोत्पत्त्यभावविषयेऽस्य वाक्यस्योदाहरणमयुक्तमेवेति।

यच्चोक्तं 'ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यते इत्युक्तम्। अत्रोच्यते—नास्य प्रविभागः स्वतोऽस्ति; 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे. ६-११) इति श्रुतेरि'ति। तदप्ययुक्तम्।

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वे. ६-११)

इति श्रुतिः, एकः एके मुख्यान्यकेवला इत्यादिप्रमाणानुसारेण प्रधानः असहायः जीवजडात्मकप्रपंचाद्भिन्नः (सजातीयविजातीयरहितः) देवः क्रीडादिगुणविशिष्टः, सर्वभूतेषु गूढः अज्ञेयः सन् अंतस्स्थितः, सर्वव्यापी सर्वभूतान्तरात्मा=सर्वभूतेषु अंतः नियामकतया स्थितः, कर्माध्यक्षः=तत्तत्प्राणिकृतकर्मणां फलदाता, सर्वभूताधिवासः=सर्वभूताश्रयः, साक्षी=साक्षाद्द्रष्टा, चेता–चेतयिता, केवलः जडामिश्रः, निर्गुणः–सत्त्वादिगुणरहितः इति व्याप्यव्यापकभावादिना आधाराधेयभावेन च कर्मफलदातृत्वकर्मफलग्रहीतृत्वादिना च जीवब्रह्मणोर्भेदं (विभागं) कथयतीति अस्याः श्रुतेर्जीवब्रह्माविभागे [अभेदे] प्रमाणतयोदाहरणस्यायुक्तत्वात् ।

बुद्ध्याद्युपाधिनिमित्तो भेदः न स्वभावतः इत्येतत्पूर्वमेव उपाधिसंबंधायोगादिना निराकृतमिति नेह पुनर्विचार्यते । 'अत ऊर्ध्वं विमोक्षायैव ब्रूही' ति वाक्येन मोक्षसाधनकथनविषयकप्रार्थनैव बोध्यते नतु जीवस्य परमात्मभाव इति 'परमात्मभावप्रतिपादनात्' इत्युक्तिरज्ञजनप्रतारणायैवेति ।

## १८ ॐ ज्ञोऽत एव ॐ

इति सूत्रे आत्मा आगन्तुकचैतन्यः उत नित्यचैतन्यरूप इति शंकायां आगन्तुकचैतन्य आत्मा इति पूर्वपक्षे ज्ञः नित्यचैतन्योऽमात्मा इति नित्यचैतन्यस्वरूपत्वं यत् सिद्धांतितं तद्युक्तमेव । परंतु अत

एवेति हेतुवाक्यस्य परमेव ब्रह्म अविकृतं उपाधिसम्पर्कात् जीवभावेनावतिष्ठमानत्वादित्यर्थकरणमत्यन्तमसमंजसम् । ब्रह्मणो जीवभावप्रतिपादकप्रमाणाभावात् । प्रत्युत श्रुतिसूत्रगीताभिः जीवब्रह्मणोर्भेदस्यैव सिद्धत्वेन, नित्यचैतन्यस्वरूपब्रह्माभिन्नत्वहेतुना जीवस्य नित्यचैतन्यस्वरूपत्वसाधनस्यायुक्तत्वात् ।

किंच जीवस्य स्वप्रकाशता श्रुतितोऽपीत्युक्त्वा 'असुप्तः सुप्तान् अभिचाकशीति' इति श्रुत्युदाहरणं यत्कृतं तदप्ययुक्तम् । असुप्तः सुप्तानभिचाकशीति इतिवाक्यस्य 'स्वप्नेन शारीरमभिप्रहत्य' इतिपूर्वभागः, 'हिरण्मयः पुरुषः एकहंसः' इति उत्तरभागः । तथाच तस्यायमर्थः-हिरण्मयः एकहंसः प्रधानहंसरूपः पुरुषः=पूर्णषड्गुणः, परमात्मा स्वप्नेन=सुषुप्त्या शारीरं=जीवं, अभिप्रहत्य=संयोज्य, स्वयं असुप्तः=सुप्तिशून्यः सुप्तान्-सुप्त्यवस्थागतान् जीवान् अभिचाकशीति–पश्यति इति । तथाच अनया श्रुत्या असुप्तः (अलुप्तदृगादिशक्तिमान्) शारीरं (जीवं) सुप्त्या संयोजयति इति परमात्मनः अलुप्तदृगादिशक्तिमत्त्वं जीवस्य लुप्तदृगादिशक्तिमत्त्वमेव बोध्यते, नतु जीवस्य सुषुप्त्यवस्थायां ज्ञानवत्त्वं बोध्यते इति नेयं श्रुतिर्जीवस्य अलुप्तदृगादिशक्तिमत्त्वे प्रमाणं भवितुमर्हति । न च शारीरमित्यस्य शरीरमित्यर्थकत्वेन शरीरस्यैव स्वप्नेन सम्बन्धो बोध्यते नतु जीवस्येति वाच्यम् । तथा सति शारीरमिति अण्प्रत्ययस्य वैयर्थ्यापत्तेः ।'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इत्याद्यनेकस्थलेषु जीवे शारीरशब्दप्रयोगाच्च इति ।

## १९ ॐ उत्क्रांतिगत्यागतीनाम् ॐ

जीवः किमणुपरिमाणः उत मध्यमपरिमाणः आहोस्वित् महा-

परिमाण इति संशये...तत्र प्राप्तं तावत् उत्क्रांतिगत्यागतीनां श्रवणात् परिच्छिन्नो अणुपरिमाणो जीव इति उत्क्रांतिस्तावत् ' स यदा अस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ( कौषी. ३।३ ) इति गतिरपि ' ये वै के चास्माल्लोकात्प्रयंति चंद्रमसमेव ते सर्वे गच्छंति' ( कौषी. १।२ ) इति आगतिरपि ' तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' ( बृ. ४।४।६ ) इति आसामुत्क्रांतिगत्यागतीनां श्रवणात् परिच्छिन्नस्तावज्जीव इति प्राप्नोति नहि विभोश्चलनमवकल्प्यत इति । सति च परिच्छेदे शरीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वात् अणुरात्मेति गम्यते [१९]

## २० ॐ स्वात्मना चोत्तरयोः ॐ

उत्क्रांतिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्मक्षयेणावकल्पेत । उत्तरे तु गत्यागती नाचलतः संभवतः। स्वात्मना हि तयोः संबंधो भवति । गमेः कर्तृस्थक्रियात्वात् । अमध्यमपरिमाणस्य च गत्यागती अणुत्व एव संभवतः । सत्योश्च गत्यागत्योरुत्क्रांतिरप्यपसृप्तिरेव देहादिति प्रतीयते । नह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । देहप्रदेशानां चोत्क्रांतावपादानत्ववचनात् ।

' चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ' ( बृ. ४।४।२ ) इति ' स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ' ( बृ. ४।४।१ )

' शुक्रमादाय पुनरेति स्थानं ' [बृ. ४।३।११] इति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः । तस्मादप्यस्याणुत्वसिद्धिः ।२०।

## २१ ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ

अथापि स्यान्नाणुरयमात्मा । कस्मात् । अतच्छ्रुतेः । अणुत्व-विपरीतपरिमाणश्रवणादित्यर्थः । 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ. ४।४।२२)

'आकाशवत्सर्वगतश्च नित्यः' 'सत्यं ज्ञानमनंतं ब्रह्म' [ तै. २-१-१ ] इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति चेत् । नैष दोषः । कस्मात् । इतराधिकारात् । परस्य ह्यात्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः । परस्यैवात्मनः प्राधान्येन वेदांतेषु वेदितव्यत्वेन प्रकृतत्वात् । विरजः पर आकाशादित्येवंविधाच्च परस्यै-वात्मनस्तत्र तत्र विशेषाधिकारात्··· तस्मात्प्राज्ञविषयत्वात्परिमाणान्तर-श्रवणस्य न जीवस्याणुत्वं विरुध्यते । २१

## २२ ॐ स्वशब्दोन्मानाभ्यां च ॐ

इतश्चाणुरात्मा, यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते— 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पंचधा संविवेश' (मु. ३।१।९) इति प्राणसंबंधाच्च जीव एवायमणुरभिहित इति गम्यते । तथोन्मानमपि जीवस्याणिमानं गमयति–' बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः' (श्वे. ५।८) इति । 'आरा-ग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे. ५।८) इनि चोन्मानान्तरम् ।

नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते । दृश्यते च जान्हवीन्हदनिमग्नानां सर्वांगशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरिति । अत उत्तरं पठति–

## २३ ॐ अविरोधश्चन्दनवत् ॐ

यथाहि हरिचन्दनबिन्दुः शरीरैकदेशसंबद्धोऽपि सन्सकलदेहव्यापिनमाल्हादं करोत्येवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति ।

## २४ ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ

अत्राह यदुक्तमविरोधश्चन्दनवदिति, तदयुक्तं दृष्टांतदार्ष्टान्तिकयोरतुल्यत्वात् । सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चंदनदृष्टांतो भवति । प्रत्यक्षं तु चंदनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाल्हादनं च । आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं नैकदेशवर्तित्वम् । ... अत्रोच्यते– नायं दोषः कस्मात् अभ्युपगमात्, अभ्युपगम्यते ह्यात्मनोऽपि चंदनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यम् । कथमित्युच्यते । हृदि ह्येष आत्मा पठ्यते वेदांतेषु ' हृदि ह्येष आत्मा ( प्रश्न ३-६ ) ' स वा एष आत्मा हृदि ' (छां.८-३-३) ' ' कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः ' ( बृ. ४-३-७ ) इत्याद्युपदेशेभ्यः । तस्माद्दृष्टांतदार्ष्टान्तिकयोरवैषम्याद्युक्तमेवैतदविरोधश्चन्दनवदिति ॥

## २५ ॐ गुणाद्वा लोकवत् ॐ

चैतन्यगुणव्याप्तेर्वाऽणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते । यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभापवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति तद्वत् ।

कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत । तर्हि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्येत । अत उत्तरं पठति—

## २६ ॐ व्यतिरेको गन्धवत् ॐ

यथा गुणस्यापि सतो गंधस्य गुणवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति । अप्राप्तेष्वपि कुसुमादिषु गंधवत्सु कुसुमगन्धोपलब्धेः । एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति । अतश्चानैकांतिकमेतद्गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपत्तिरिति ।

## २७ ॐ तथाच दर्शयति ॐ

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव 'आलोमभ्य आनखाग्रेभ्यः' (छां. ८।८।१) इति चैतन्येन गुणेन समस्तशरीरव्यपित्वं दर्शयति ।

## २८ ॐ पृथगुपदेशात् ॐ

'प्रज्ञया शरीरं समारुह्य' (कौषी. ३।६) इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशच्चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ. २।१।१७) इति च कर्तुः शारीरात्पृथग्विज्ञानस्योपदेश एतमेवाभिप्रायमुपोद्बलयति । तस्मादणुरात्मेति ।

एवं दश सूत्राणि जीवस्याणुत्वप्रतिपादकानीति यदुक्तं शंकराचार्यैस्तत्तु समीचीनमेव । अणुत्वप्रतिपादनप्रक्रियायां उदाहृतप्रमाणविषये वैलक्षण्यस्याप्रयोजकत्वात् न विचार्यते । एवं प्रमाणैः सिद्धस्यापि जीवाणुत्वस्य खंडनपरतया

२९ ॐ ' तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ' ॐ

३० ॐ ' यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ' ॐ

३१ ॐ ' पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ' ॐ

३२ ॐ ' नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरानियमो वाऽन्यथा ' ॐ

इतीमानि सूत्राणि व्याचख्युः शंकराचार्याः । तत्र हि तद्गुणसारत्वादिति सूत्रव्याख्याने ' तुशब्दः पक्षं व्यावर्तयति — नैतदस्त्यणुरात्मेति–उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम् — परमेव चेद्ब्रह्म जीवस्तस्माद्यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति-परस्य च ब्रह्मणो विभुत्वमाम्नातम् तस्माद्विभुर्जीवः-' इति वाक्येन परस्य ब्रह्मणो विभुत्वाम्नानात् तदभिन्नजीवस्यापि विभुत्वं ( जीवो विभुः ब्रह्माभिन्नत्वात् ब्रह्मवत् ) इत्यनुमानसूचनद्वारा साधितं, तदयुक्तम् । जीवब्रह्मणोरैक्ये प्रमाणाभावेन जीवस्य ब्रह्माभिन्नत्वाभावात् जीवे ब्रह्माभिन्नत्वरूपहेतोरसिद्धेः । ब्रह्मणः अद्वैतमते निर्धर्मकत्वेन विभुत्वाभावेन दृष्टान्ते ब्रह्मणि साध्यवैकल्याच्च नानुमानं विभुत्वसाधनसमर्थमिति ।

परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् परमेव ब्रह्म जीव इति यदुक्तं तदद्वैतमतरीत्या अत्यन्तमयुक्तम् । " कल्पितं प्रवेशं प्रतिपादितमुपसंहरति तस्मादिति- तस्मात् कार्यस्थस्यात्रोपलभ्यत्वमेव प्रवेश इत्युपचर्यते इत्यादिशांकरबृहद्भाष्यादिवाक्येन अद्वैतमते ब्रह्मणः प्रवेशासंभवस्य कथितत्वात् ।

किंच तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इति यदुक्तं तदप्ययुक्तम् । जीवब्रह्मणोरभेदबोधकोपदेशरूपः तादात्म्योपदेशः खलु जीवस्य ब्रह्मत्वसाधकः । नहि जीवब्रह्माभेदबोधकोपदेशोऽस्ति । अद्वैतिभिस्तत्त्वमस्यादिवाक्यानां बोधकत्वानंगीकारेण बोधकत्वांगीकारेऽपि अखण्डार्थबोधकत्वांगीकारादिना अभेदबोधकोपदेशरूपतादात्म्योपदेशरूपत्वानंगीकारात् । तथाच ब्रह्मणः विभुत्वेऽपि न तद्भिन्नजीवस्य विभुत्वसिद्धिरिति प्रागुक्तप्रमाणैरणुरेव जीव इति ।

किंच " तथा च स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु " ( बृ. ६-४-२२ ) इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवंति इति वाक्येन जीवस्य विभुत्वे तन्महत्त्ववादिश्रुतिस्मृतिवाक्यानि मुख्यार्थानि भवन्तीति यदाह तदप्ययुक्तम् । स वा एष इति श्रुतेः जीवपरत्वाभावेन जीवस्य महत्त्वा ( विभुत्वा ) प्रतिपादकत्वात् । तथाहि–' स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिंच्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणे ' ( बृ. ६-४-२२ ) इति श्रुतिः—

महान् अजः योऽयमात्मा सः सर्वस्य ब्रह्मेंद्रादेः वशी सर्वो हि अस्य वशे वर्तते । उक्तं च 'एतस्य वा अक्षरस्य प्रशासने' इति । न केवलं वशी सर्वस्येशानः ईशिता च, सर्वस्याधिपतिः सर्वभूताधिपतिः भूतपालः, नेति नेति इत्यादिविशेषणयुक्तपरमात्मन एव महच्छब्दोक्तविभुत्वं वक्ति न तु जीवस्य, तस्मिन्नुक्तविशेषणानामयोगात् । प्रत्युत नियम्यनियामकभावेन ईशितृत्वेशितव्यभावेन च विभोः ब्रह्मणःसकाशात् जीवस्य भेदमेव

वक्ति इति नेयं श्रुतिः जीवस्य महत्त्वोक्तौ समर्थिता भवति किंतु कदर्थीकृता भवति । ' नित्यः सर्वगतस्थाणुरि ' ति स्मृतिरपि ' नित्ये सर्वगते विष्णावणुर्जीवो व्यवस्थितः ' इति स्मृत्यंतरानुसारेण सर्वगतस्थश्चासौ अणुश्चेति विग्रहेण जीवस्याणुत्वमेव वक्ति । यच्चोक्तं ' नचाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते तदन्यथानुपपत्त्या जोवस्य विभुत्वं ( महापरिमाणत्वं ) अंगीकार्यं देहानुरूपमध्यमपरिमाणवत्त्वांगीकारे कर्मानुसारेण सूक्ष्मसूक्ष्मतरमहन्महत्तरपिपीलिकादिगजादिनानादेहप्राप्त्या तत्तद्देहानुसारेण परिणामांगीकारे विकारित्वप्राप्त्या नाशप्रसंगः इत्यादिदोषप्रसक्त्या देहानुरूपमध्यमपरिमाणवत्त्वस्य जैनमतनिराकरणावसरे निराकृतत्वात् सर्वदेहावच्छेदेन भोगार्थं विभुत्वमंगीकर्तव्यमिति ' तदयुक्तम् । विभुत्वांगीकारे स्वदेहव्याप्त्या सर्वदेहावच्छेदेन जायमानसुखदुःखादिभोगप्राप्तिवत् सर्वेषु देहेषु व्याप्तिप्राप्त्या सर्वदेहावच्छेदेन जायमानसुखदुःखादिप्राप्तिरूपानिष्टस्यापत्तेः । तस्य चानुभवविरुद्धत्वात् । अणोरपि जीवस्य, ' तद्यथा अणुनश्चक्षुषः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततः अणुर्ह्येवैष ' इति श्रुतौ जीवः स्वरूपतः अणुरेव प्रकाशरूपेण व्याप्त इति स्पष्टं कथनेन प्रकाशरूपेण व्याप्त्या स्वदेहसर्वावयवावच्छेदेन सुखदुःखानुभवोपपत्तेः ।

यथा ' उत्क्रांतिगत्यागतीनाम् ' ' नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ' इत्यादिसूत्रैः स्पष्टं अणुत्वं वर्णितम् । तथा अद्वैतिभिः सिद्धांतप्रतिपादकतयांऽगीकृतेषु ' तद्गुणसारत्वात्तु तद्व्यपदेश ' इत्यादिसूत्रेषु जीवस्य विभुत्वबोधकपदाभावेनावर्णनात् जीवानां विभुत्वसाधनपरतया एतत्सूत्राणामर्थकथनमयुक्तम् । जीवविभुत्ववादस्योत्सूत्रितत्वप्राप्तेः ।

यदुक्तं " कथं तर्हि अणुत्वादिव्यपदेश इत्यत आह--तद्गुणसारत्वात्तु तद्व्यपदेश इति तस्या बुद्धेर्गुणास्तद्गुणा इच्छा द्वेषः सुखं दुखमित्येवमादयस्तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे संभवति स तद्गुणसारस्तस्य भावस्तद्गुणसारत्वम् । न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति । बुध्द्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनः । तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वतः । तथाच 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ' ॥ (श्वे. ५-९) इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह । तच्चैवमेव समंजसं स्याद्यद्यौपचारिकमणुत्वं जीवस्य भवेत्पारमार्थिकं चानन्त्यम् न ह्युभयं मुख्यमवकल्पेत । न चानन्त्यमौपचारिकमिति शक्यं विज्ञातुम्, सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात् " इति तन्न युक्तम् । तद्गुणसारत्वादित्यस्य योऽर्थो वर्णितः स तावदयुक्तः । मृत्परिणामभूतस्य घटस्य यथा मृदो घट इति गुणगुणिभावव्यवहारो नास्ति, किंतु मृद् घट इत्येव व्यवहारोऽस्ति, तथा बुद्धि ( मनः ) परिणतत्वात् इच्छाद्वेषादेः न हि बुद्धेर्गुण इति व्यवहारः किंतु ' कामः संकल्पो विचिकित्सा ह्रीर्धीर्भीः सर्वं मन एव ' इति श्रुत्यनुसारेण बुद्धिरिच्छादिरित्येव व्यवहार इति इच्छादेर्बुद्धिगुणत्वकथनमयुक्तमेव । किंच बुद्धेः पूर्वमप्रसक्तत्वेन तद्गुण इत्यत्र तच्छब्देन बुद्धेः ग्रहणायोगः । अपिच तद्गुणा इच्छाद्वेषादयः सारः प्रधानं यस्यात्मनः संसारित्वे संभवति, इत्यर्थकथनमप्ययुक्तम् । तद्गुणसार इति पदेन एतादृशार्थस्याप्रतीतेः । अयुक्तश्चायमर्थः ।

इच्छादीनामेव संसाररूपत्वेन आत्मनः संसारित्वे इच्छादीनां प्राधान्या-भावात् प्राधान्यमिच्छादीनामात्मनः संसारित्वे वक्तुमशक्यमिति ।

तद्गुणसारत्वादित्यत्र तच्छब्देन बुद्धेर्गृहीतत्वेन तद्व्यपदेश इत्यत्रापि तच्छब्देन बुद्धेरेव ग्राह्यत्वात् तद्व्यपदेश इत्यस्य परिणामव्यपदेश इत्यर्थस्य तदुत्क्रान्त्यादिभिश्च स्वोत्क्रान्त्यादिव्यपदेशः, न स्वत इत्यर्थस्य च सूत्रपदाबोध्यत्वात् तथाऽर्थकरणमत्यन्तमयुक्तम् ।

यच्चोक्तं तदुत्क्रांत्यादिभिश्च ( बुद्ध्युत्क्रांत्यादिभिश्च ) अस्य ( जीवस्य ) उत्क्रांत्यादिव्यपदेशः न स्वतः इति तदयुक्तम् । 'तमुत्क्रातं प्राणोनूत्क्रामति' इति श्रुतौ अद्वैतिभिः उपाधितया कथ्यमानप्राणाख्यबुध्युत्क्रांतेः प्रागेव जीवे उत्क्रांत्युक्तेः तथा 'मन उदक्रामत् मीलित इवाश्नन् पिबन्नास्ते' इत्यादिश्रुतौ मनसः उत्क्रमणेऽपि आत्मनः उत्क्रमणाश्रवणाच्च जीवोत्क्रांत्यादिव्यपदेशस्य बुद्ध्युत्क्रांत्यधीनत्वाभावात् ।

यदुक्तं 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानंत्याय कल्पते' ( श्वे. ५-९ ) इत्यणुत्वं जीवस्योक्त्वा पुनरानंत्यमाहेति तदप्ययुक्तम् ।

'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्य विज्ञेयः स चानन्त्याय कल्पते ॥' ( श्वे. ५-९ ) इति श्रुत्या जीवः बालाग्रशतभागस्य न भागपरिमित इति बालाग्रस्य ( $\frac{1}{10000}$ एकदशसहस्रांश इति ) जीवस्य अणुत्वमुक्तं न तु तस्यैव महत्त्वं (विभुत्वं)। न च 'स चानन्त्याय कल्पते' इति अनन्तत्वमप्युक्तमिति वाच्यम् ।

सः=जीवः, आनन्त्याय=मोक्षाय, कल्पते=समर्थो भवति इति जीवस्य मोक्षयोग्यताकथनात् आनन्त्यपदेन विभुत्वानुक्तेः । यदीदं वाक्यं जीवस्य विभुत्वरूपानन्त्यप्रतिपादने तात्पर्यवत्स्यात्तदा 'स चानन्त' इत्येव वक्तव्यं स्यात् । न त्वानन्त्याय कल्पते इति चतुर्थी । विभुत्व-रूपानन्त्यस्य अद्वैतमतरीत्या सार्वकालिकत्वेन कल्पते इत्युक्तिरसंगता च स्यात् । किंच यद्यौपचारिकमणुत्वं जीवस्य भवेत् पारमार्थिकं चानन्त्यमिति सामंजस्यं भवतीत्युक्तिरपि अद्वैतमतरीत्या अयुक्ता । आनन्त्यस्यापि ब्रह्मातिरिक्ततया मिथ्यात्वेन पारमार्थिकत्वाभावात् । बालाग्रस्य $\frac{1}{10000}$ एकदशसहस्रांशपरिमाणत्वं जीवस्य उपाधिकल्पितं ( मिथ्या ) इति अकथनाच्च । अद्वैतिभिः उपाधितया कल्प्यमानायाः बुद्धेः तादृशपरिमाणाभावेन 'अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं च पापं च' इति श्रुतिः पुण्यपापसंबंधवतः जीवस्य अणुत्वं स्पष्टं वक्ति तस्याः बाधकं च नास्ति, इति 'अणुर्ह्येष' इत्यादिश्रुतेर्दुर्विज्ञेयत्वाद्यौप-चारिकार्थवर्णनस्यायुक्तत्वात् ।

'तेन प्रद्योतेनैष आत्मा निष्क्रामति' इति निष्क्रमणस्य आत्मनिष्ठत्वोक्तेः ।

'तदा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'। इति श्रुतिरपि बुद्धिनिवृत्त्यनंतरमपि ब्रह्मप्राप्त्युक्तेः न जीवस्य ब्रह्मप्राप्तिः बुद्ध्युपाधिका ।

'स तत्र पर्येति' इति श्रुतेः बुध्यादिबन्धरहिते मोक्षेऽपि पर्येतीति संचरणोक्तेः संचरणं न बुद्ध्युपाधिकमिति । तदुपाधिकजीवस्य तादृशपरिमाणकल्पनायाः अयोगाच्च ।

अपिच यच्चोक्तं न चानन्त्यमौपचारिकमिति शक्यं विज्ञातुम् । सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वादिति, तन्न युक्तम् । एकस्यामप्युपनिषदि एकेनापि वाक्येन जीवस्य ब्रह्मभावाप्रतिपादनात् सर्वोपनिषदीत्युक्तेरत्यंतमसंभावितत्वात् । तत्त्वमस्यादिवाक्यानां निर्विषयकब्रह्मरूपज्ञानावरकनिवर्तकताया एवोक्तैः बोधकतानंगीकारात् । बोधकतांगीकारेऽपि चिदित्यखण्डार्थबोधजनकत्वस्वीकारेण तादृशबोधस्य ब्रह्मात्मभावाविषयकत्वात् । चिति लक्षणाद्यसंभवेन तादृशबोधस्याप्यसंभवाच्च । ब्रह्मणः निर्धर्मकत्वेन विभुत्वाभावाच्च । विस्तरस्तु तत्त्वमस्यादिवाक्यार्थविचारे द्रष्टव्यः ।

यदप्युक्तं "तथेतरस्मिन्नप्युन्माने 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे. ५-८) इति च बुद्धिगुणसंबन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मनः इति" तदपि मन्दम् । "अंगुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः । बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यव (प) रोऽपि दृष्टः' (श्वे. ५-८) 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानंत्याय कल्पते' (९) इति पूर्वोत्तरवाक्यसहितेन 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यव (प) रोऽपि दृष्ट' इति वाक्येन अंगुष्ठमात्रः=अंगुष्ठपरिमितः आत्मगुणेन=स्वरूपभूतगुणेन रवितुल्यरूपः=स्वप्रकाशः [प्रकाशरूपः] बुद्धेः=अंतःकरणस्य गुणेन च संकल्पाहंकारसमन्वितः (गोष्ठनिष्ठगोस्वामिनि चैत्रे गोयुक्त इति व्यवहारवत् अंतःकरणनिष्ठसंकल्पाहंकारस्वामिति संकल्पाहंकारसमन्वित इति व्यवहारः) आराग्रमात्रः=सूच्यग्रपरिमितः हि अपि=तस्मादपि [सूच्यग्रपरिमितत्वादपि] अपरः=परमात्मनः सकाशात् अपरः

( भिन्नः ) अथवा अवरः=अधमः, दृष्टः=ज्ञात इति अर्थस्य प्रतीत्या बुद्धिगुणेन आराग्रमात्रत्वा ( अणुत्वा ) नुक्तेः । बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानंत्याय कल्पते । इति उत्तरवाक्येन स्पष्टं बालाग्रस्य $\frac{1}{10000}$ एकदशसहस्रांशपरिमितत्त्वं ( अणुत्वं ) जीवस्य प्रतीतेः तद्विरोधाच्च ।

यच्चोक्तं " तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति- ' स ईक्षांचक्रे । कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि ' ( प्रश्न. ६-३ ) ' स प्राणमसृजत ' ( प्र. ६-४ ) इति । उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते । न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् " इति, तदत्यन्तमयुक्तम् । तथा हि- षट्प्रश्नोपनिषच्छंकरभाष्यं- स ईक्षाचक्रे ईक्षणं चक्रे सृष्टिफलक्रमादि- विषये । कथमित्युच्यते । कस्मिन् कर्तृविशेषे देहादुत्क्रान्ते उत्क्रांतो भविष्यामि । अहमेव, कस्मिन् वा शरीरे प्रतिष्ठितेऽहं प्रतिष्ठास्यामि प्रतिष्ठितः स्याम् ( इत्यालोच्य ) " स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवींद्रियं मनः अन्नमन्नाद्वीर्यं तपो मंत्राः कर्म लोकाः लोकेषु नाम च " । [ प्रश्न. ६-४ ] अस्याः श्रुतेः शंकरभाष्यं- स पुरुषः: उक्तप्रकारेण ईक्षित्वा प्राणं हिरण्यगर्भाख्यं सर्वप्राणिकरणाधारं अंतरात्मानमसृजत सृष्टवान् इत्यादि—

( प्रश्नोपनिषट्टीका च ) सोऽन्यक्रियया आत्मनि क्रियाकामी षोडशकलः पुरुषः प्राणं आधिदैविकं सर्वप्राणिसूत्रभूतमसृजत उत्पादितवान्...प्राणात् उक्तात् हिरण्यगर्भात् भूतसूक्ष्मात् सर्वकारणाद्ब्रह्मणः प्रथमजात् श्रद्धामास्तिक्यबुद्धिमसृजतेति ।

शंकरभाष्यप्रश्नोपनिषद्दीपिकाभ्यां पुरुषः ( परमात्मा ) प्राणं= हिरण्यगर्भं सृष्टवान् । हिरण्यगर्भात् श्रद्धां, खं वायुं ज्योतिः अपः पृथिवीं इंद्रियं मनः अन्नं, अन्नात् वीर्यं तपः § मन्त्राः=ऋग्वेदयजुर्वेद-सामवेदाथर्ववेदान् कर्म लोकाः लोकान् लोकेषु नाम देवदत्तः यज्ञदत्तः इत्यादि असृजत इति परमात्मना प्राणनामकहिरण्यगर्भादीनां सृष्टिः कथ्यते, न तूत्क्रान्त्यादीनां उपाध्यायत्तता । प्राणः ( हिरण्यगर्भः ) न परमात्मनः ( पुरुषस्य ) उत्क्रमणे उपाधिभूतः । अद्वैतिभिरुपाधितयाऽङ्गीकृतस्य बुद्धिपदपर्यायस्य मनसः पृथक् सृष्ट्युक्त्या प्राणपदेन बुद्धिग्रहणानुपपत्तेः ।

अद्वैतिनो हि, विभुर्जीवः अणुभूतबुद्धिरूपोपाधिना परिच्छिन्न इव भूत्वा बुद्धिगमनागमनादिना स्वयं गत इव आगत इव च प्रतीयते। वस्तुत उपाधिभूतायाः बुध्देरेव गमनागमने न जीवस्य इति कथयंति। अद्वैतमते गमनावभासकत्वेन उच्यमानायाः उपाधिभूताया बुद्धेरुत्पत्ति-रनया श्रुत्या नोक्ता । किंतु हिरण्यगर्भादीनामिति नेयं श्रुतिः उत्क्रांत्यादीनामुपाध्यायत्ततां दर्शयति ।

'कस्मिन्न्वहमुत्क्रांते उत्क्रांतो भविष्यामि ( प्र. ६।३ ) इति श्रुत्याऽपि ( वत्से धावति गौर्धावति इति वाक्येन वत्सधावनातिरिक्त-गोधावनस्येव ) बुध्द्युत्क्रांत्यतिरिक्तजीवोत्क्रांतेः प्रतीतेश्च ।

किंच बुद्धेरुत्क्रांतिगत्यागतिप्रयोजकोपाधित्वमपि न संभवति अद्वैतमते । तथाहि– अखण्डं ब्रह्मैव बुध्द्याद्युपाधिसंबंधेन जीवभावं प्राप्य उपाधिगत्यागतिभ्यां गत्यागतिमान् भवतीति वक्तव्यम् । तच्च

§ प्रथमा द्वितीयार्थे

न युज्यते। अद्वैतिमते ब्रह्मण उपाधिसंबंध एव न संभवति। 'असंगो ह्ययं पुरुषः' इति श्रुत्या परमात्मनः असंगत्वांगीकारात्। तुष्यत्विति-न्यायेन उपाधिसंबंधस्वीकारेऽपि उपाधिसंबंध एकदेशस्य किंवा समस्तस्य? । न तावदाद्यः-ब्रह्मणोऽखण्डत्वेन एकदेशाभावात्। न द्वितीयः। अखण्डं ब्रह्म सर्वमपि उपाधिग्रस्तं चेत् पुनः विभुब्रह्मण उपाधिना परिच्छिन्नत्वेन ब्रह्म एकं, उपाधिकृताः अनेके जीवाः इति अनेकत्वानुपपत्तिः ( उपाधिकृतभेदानुपपत्तिः )

किंच उपाधेः एकदेशसंबंधमंगीकृत्य उपाधिसंबंधविशिष्टा अनेके जीवा भवंति। उपाधिगत्यागतिभ्यां जीवस्यापि गत्यागती औपाधिके इत्यंगीकारोऽपि न युक्तः। उपाधिः गच्छन् स्वसंबंधिचिद्भागं गृहीत्वा गच्छति? उत संबद्धं चिद्भागं परित्यज्य? । स्वसंबद्धचिद्भागं गृहीत्वा गच्छतीत्याद्यपक्षे उपाधिसंबद्धचिद्भागस्य तद्देशात् एकपदगमने तत्र चिति छिद्रत्वापत्तिः। उपाधिगमनदेशे चितः द्विगुणीकृत्य स्थित्यापत्तिः। उपाधिः स्वसम्बद्धं चिद्भागं परित्यज्य गच्छतीति पक्षे एकपादद्विपादनिक्षेपे पूर्वं उपाधिसम्बद्धचिद्भागस्य उपाध्यपगमेन शुद्धब्रह्मभावरूपमोक्षापत्तिः। तथाच उपाध्यपगमेन ब्रह्मभावरूपमोक्षार्थं श्रवणमनननिदिध्यासनादिसाधनानामकरणीयत्वापत्तिः। उपाधिसंबद्धैकभागरूपजीवस्य मूत्रपुरीषोत्सर्जनार्थं एकपादविक्षेपेणैव उपाधिसंबंधवियोगप्राप्त्या मोक्षप्राप्तेः। उपाधेः उत्तरदेशे गमनेन तत्रत्यचिद्भागस्य उपाधिसम्बन्धेन जीवस्य उत्पत्त्यापत्तेः। तदेतद्दोषजातमुक्तमभियुक्तैः 'पदे पदे जातकर्म प्रेतकर्म करोति यः' इति।

एकैकपादविक्षेपेण पूर्वजीवस्य ब्रह्मत्वप्राप्त्या तत्तज्जीवैः कृतानां पूर्वकर्मणां नाशेन तत्कृतकर्मणां वैयर्थ्यापत्तेः ( कृतप्रणाशापत्तेः )।

उत्तरदेशसम्बन्धेन जातानां जीवानां पूर्वकृतकर्माभावेन तैरनुभूयमानानां फलानां निष्कारणकत्वापत्तिः ( अकृताभ्यागमप्रसंगः ) ।

किंच उपाधिः सत्यो मिथ्या वा ? सत्यश्चेत् अद्वैतमतरीत्या सत्यस्य निवृत्त्यभावात्, उपाधिनिवृत्त्यभावेन मोक्षाभावापत्तेः । मिथ्या चेत् [ कल्पितं चेत् ] कल्पकः [ भ्रांतः ] कः ? ब्रह्म वा जीवो वा । कल्पनाधिष्ठानं ( भ्रमविशेष्यं ) किं ? परब्रह्म वा जीवो वा । न तावद्-भ्रमाश्रयः ब्रह्म, तस्मिन् भ्रमकारणानां अधिष्ठानसामान्यज्ञानविशेषाज्ञानआरोप्यजगत्सादृश्यज्ञानानाभावात् । नापि जीवः, तस्य भ्रमानंतरभाविकल्पितबुध्द्युपाधिसम्बन्धाधीनसत्ताकत्वेन भ्रमात् पूर्वमसत्त्वात्

नापि भ्रमाधिष्ठानं ( भ्रमविशेष्यं ) ब्रह्म । भ्रमाधिष्ठानत्वप्रयोजकानां सामान्यधर्मवत्त्वारोप्यजगत्सादृश्यानां शुक्ताविवाभावात् ।

नापि भ्रमाधिष्ठानं जीवः । तस्य भ्रमानन्तरकालीनोपाधिसंबंधाधीनसत्ताकत्वेन भ्रमपूर्वभाव्यधिष्ठानत्वासंभवात् । भ्रमकारणानामसंभवात् । भ्रमाभावः उक्तो भामत्यामपि 'परमार्थस्तु न भ्रमो नाम कश्चित् न संसारो नाम । किंतु सर्वमेतत् सर्वानुपपत्तिभाजनत्वात् अनिर्वचनीयमिति युक्तमुत्पश्यामः ' इति वाक्येन ॥

एवमुपाधेः सत्यत्वमिथ्यात्वादिविकल्पपूर्वकदूषणे कृते समाधानस्य वक्तुमशक्यत्वेन असंभवात् उपाधिसंबद्धो जीवः अणुरित्युक्तिरयुक्तैव ।

यत्तूक्तं " जीवस्याणुत्वादिव्यपदेशः प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः:- 'अणीयान् ब्रीहेर्वायवाद्वा ' ( छां. ३-१४-३ ) ' मनोमयः प्राणशरीरः

सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः ' ( छां. ३–१४–२ ) इत्येवंप्रकारस्तद्वत् " इति तदप्ययुक्तम् ।

तथाहि– तत्र तावत् परमात्मनः सगुणेषूपासनेषु इत्युक्तिस्तावदयुक्ता । निर्गुणब्रह्मणोऽज्ञेयत्वात् ( प्रत्यक्षानुमानागमाद्यवेद्यत्वात् ) असत्त्वेन ब्रह्मणि सगुणनिर्गुणभेदाभावात् । ' दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसत् अद्वयं ब्रह्म मन्दबुद्धीनामसदिव भाति ' इति वाक्येन निर्गुणब्रह्मणोऽसत्त्वं भातीति स्वीकृतं, परंतु मन्दबुद्धीनामित्युक्तिस्तु निर्गुणब्रह्मणः प्रमाणाभावेन शशविषाणवदप्रामाणिकस्य असत्त्वावश्यकत्वेन विद्यमानासत्त्वभानवन्तो मन्दबुद्धयो वा शशविषाणवत् असतो निर्गुणब्रह्मणः असत्त्वभानवतां मंदबुद्धित्ववादिनो मंदबुद्धयो वेति प्रेक्षावन्त एव विचारयन्तु ।

श्रुत्युक्तानां सर्वगन्धसर्वरससत्यकामत्वाणुत्वसत्यसंकल्पत्वादीनामुपाधिकल्पितत्वोक्तिः न वेदप्रामाण्यमंगीकुर्वतां शोभते । ' अणीयान् व्रीहेर्वा ' इत्यादिश्रुतिषु बुद्धिकल्पितत्वानुक्तेश्च ।

बाधकाभावात् उक्तप्रमाणैः सिद्धं जीवस्याणुत्वं स्वाभाविकमेव, न तूपाधिकृतम् ।

" स्यादेतत्– यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुध्द्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति अत उत्तरं पठति " इति वाक्येन

## ३० ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ

इति सूत्रमवतार्य तस्य “ नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशंकनीया । कस्मात् । यावदात्मभावित्वाद्बुद्धिसंयोगस्य । यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते तावदस्य बुध्द्या संयोगो न शाम्यति । यावदेव चायं बुध्द्युपाधिसंबंधस्तावज्जीवस्य जीवत्वं संसारित्वं च । परमार्थतस्तु न जीवो नाम बुध्द्युपाधिसंबंधपरिकल्पितस्वरूपव्यतिरेकेणास्ति । न हि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते । ‘ नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता ’ ( बृ. ३-७-२३ ) ‘ नान्यदतोऽस्ति द्रष्टृ श्रोतृ मंतृ विज्ञातृ ’ ( छां. ६-८-७ ) ‘ तत्त्वमसि ’ ( छां. ६-१-६ ) ‘ अहं ब्रह्मास्मि ’ ( बृ. १-४-७ ) इत्यादिश्रुतिशतेभ्यः । कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? । तद्दर्शनादित्याह–तथाहि शास्त्रं दर्शयति–‘ योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव ’ ( बृ. ४-३-७ ) इत्यादि । तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति । प्रदेशान्तरे– ‘ विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयश्श्रोत्रमयः ’ इति विज्ञानमयस्य मनआदिभिस्सह पाठात् । बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते । यथा लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते तद्वत् । ‘स समानः सन्नुभौ लोकावनुसंचरति ’ इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति । केन समानः? तयैव बुद्ध्येति गम्यते, संनिधानात् । तच्च दर्शयति ‘ ध्यायतीव लेलायतीव ’ [बृ. ४-३-७] इति । एतदुक्तं भवति । नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां

बुद्धौ चलतीवेति । अपिच मिथ्याज्ञानपुरस्सरोऽयमात्मनो बुध्द्युपाधि- संबन्धः । न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मात्मतानवबोधस्तावदयं बुध्द्युपाधिसम्बन्धो न शाम्यति । दर्शयति च–‘वेदाहमेतं’ पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय’ इति ” यद्व्या- ख्यानं कृतं शंकराचार्यैः तदयुक्तम् । तथाहि–बुद्धिसंयोगस्य यत्यावदा- त्मभावित्वमुक्तं तत्तावदयुक्तम् । आत्मनो नित्यत्वेन बुद्धिसंयोगस्य ( बाह्यान्तःकरणसंबन्धस्य ) मोक्षपर्यन्तं विद्यमानत्वेन बुद्धिसंयोगस्य यावदात्मभावित्वस्य वक्तुमशक्यत्वात् ।

‘ यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसा- रित्वं न निवर्तते, तावदवश्यं बुध्द्या संयोगो न शाम्यति ’ इत्युक्तिर– प्ययुक्तैव । यावदात्मभावित्वात् इति सूत्रपदार्थत्वाभावात् । यावदा- त्मभावित्वादिति सूत्रपदस्य यावत् आत्मा तिष्ठति तावत्पर्यन्तं तिष्ठति इत्येतावन्मात्रार्थकतया यावदात्मा संसारी भवति ( यावदस्य सम्यग्द– र्शनेन संसारित्वं न निवर्तते ) तावदस्य बुद्धिसंयोगो न शाम्यतीत्यर्थ- कत्वाभावात् । एतदधिकरणीयत्रयोदशसूत्रेषु बुद्धिशब्दस्यैवाभावेन बुद्धिरूपोपाधिसंयोगस्य यावदात्मभावित्वार्थकत्वेन सूत्रव्याख्यानकरण- मप्ययुक्तमिति ।

किंच ‘ परमार्थतस्तु न जीवो नाम बुध्द्युपाधिसंबंधपरिकल्पि- तस्वरूपव्यतिरेकेणास्ति ’ इत्युक्तिरप्ययुक्तैव । जीवस्य कल्पितस्वरूप– व्यतिरेकेणाभावांगीकारे जीवस्य कल्पितत्त्व (असत्त्व) प्राप्त्या कस्यापि मोक्षाभावेन मोक्षार्थं साधनविधायकानां शास्त्राणामप्रामाण्यप्राप्तेः ।

तस्मात् जीवः परमार्थतो नास्तीत्युक्तिरयुक्तैव ।

' नहि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते । ' नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता ' ( बृ. ३-७-२३ ) ' नान्यदतोऽस्ति द्रष्टृ श्रोतृ मंतृ विज्ञातृ ' [ छां. ६-८-७ ] ' तत्त्वमसि ' ( ६-१-६ ) ' अहं ब्रह्मास्मि ' [ बृ. ४-१-७ ] इत्यादिश्रुतिशतेभ्यः ' इत्युक्तिरपि स्वमतविरुद्धा श्रुत्यादिप्रमाणविरुद्धा च ।

अद्वैतमतरीत्या नित्यमुक्तस्वरूपस्य अत एव निर्विशेषस्य ब्रह्मण सर्वज्ञत्वं नियामकत्वरूपमीश्वरत्वं चानुपपन्नम् । नहि शुद्धे धर्माः संति । नच शुद्धे पारमार्थिकधर्माभावेऽपि कल्पिताः ( आरोपिताः ) धर्माः संतीति वाच्यम् । शुद्धे ब्रह्मणि धर्मारोपासंभवस्य बहुवारमुक्तत्वात् । ईश्वरादन्यश्चेतनो वेदान्तार्थनिरूपणायां न ह्युपलभ्यते ' इत्युक्तिः आग्रहमूलैव ।

१. ' पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति '
२. ' द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ' ( श्वे. )
३. ' जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ' ( मुं. )
४. ' परात्परं पुरुषमुपैति दिव्यम् ' ( मुंडक ) इत्यादीनां जीवब्रह्मणोभेदबोधिकानां शंकराचार्यैरपि भेदबोधकतया स्वीकृतानामनंतश्रुतीनामुपलभ्यमानत्वात् ।

' नान्यदतोऽस्ति द्रष्टृ श्रोतृ मंतृ विज्ञातृ ' ( छां. ६-८-७ ) इति वाक्यात् पूर्वतनैः ' एतस्य वा अक्षरस्य प्रशासने गार्गि ' इत्यादिवाक्यैः चन्द्रसूर्यादिसर्वजीवानां प्रशास्तृत्वादिना चंद्रसूर्यादिभिन्नं अक्षरनामकं परमात्मानं साधयित्वा अनेन वाक्येन प्रशासितृसांख्या–

भिमतं प्रधानं किं न स्यादित्याशंक्य अक्षरस्य द्रष्टृत्वश्रोतृत्वकथनात् अतः परमात्मनः अक्षरात् अन्यत् प्रधानं द्रष्टृ श्रोतृ मंतृ न भवतीति प्रधानस्य प्रशास्तृत्वनिषेधकतया शंकराचार्यैरेव व्याख्यातत्वात् नेदं वाक्यं जीवपरमात्मानोरभेदबोधकम् । किंतु भेदबोधकमेव । विशेष-विचारस्तु पूर्वमेवोक्तो द्रष्टव्यः ।

'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता' इति वाक्यात् पूर्वतनैः 'यः पृथिव्यां तिष्ठन्' 'योऽप्सु तिष्ठन्' 'यः सर्वेषु भूतेषु तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्याद्येकविंशतिवाक्यैः अंतर्यामिणः परमात्मनः सकाशात् पृथिव्याद्यभिमानिदेवतानां जीवानां च भेदं 'यं पृथिवी न वेद' 'यं सर्वाणि भूतानि न विदुरि'त्यादिना पृथिव्याद्यभिमानि-देवताऽज्ञेयत्वं च कथितम् । शंकराचार्यैरपि तत्र 'यं पृथिवी न वेद' 'यं सर्वाणि भूतानि न विदु' रिति चान्ये नियन्तव्या विज्ञातारोऽन्यो नियन्ताऽन्तर्यामीति प्राप्तम्' इति स्वभाष्यवाक्येन 'यं पृथिवी न वेद' इत्याद्येकविंशतिवाक्यानि भेदं प्रतिपादयन्तीति स्वीकृतं च ।

'कस्मात्पुनः कारणात् पृथिव्यादिदेवता महाभागाः सत्यः मनुष्यादिवदात्मनि तिष्ठंतम् आत्मनो नियंतारं अंतर्यामिणं न विदु-रित्यत आह । अदृष्टो न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्, स्वयन्तु चक्षुषि सन्निहितत्वात् दृशिस्वरूप इति द्रष्टा' इति शांकर-भाष्यवाक्येन 'अदृष्टो द्रष्टा अश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता' इत्युपनिषद्वाक्यस्य महाभागानां पृथिव्याद्यभिमानिदेवतानां स्वान्तर्गतस्वनियंतृपरमात्मज्ञानाभावः कथं

इत्याशंकानिवर्तकतया प्रवृत्तत्वावगमेन तदंतर्गतस्य 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्यस्य अतः=परमात्मनो धर्मादिवददृष्टत्वात् (चक्षुरादिदर्शनाद्ययोग्यत्वात्) स्वयं द्रष्टृत्वात् अतः परमात्मनोऽन्यः परमात्मद्रष्टा श्रोता मंता विज्ञाता नास्तीति अर्थ इति स्पष्टं प्रतीयमानत्वेन जीवपरमात्मनोर्भेदप्रतिपादकतया 'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्यादिस्वांगीकृतानेकवाक्यविरुद्धं 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिवाक्यस्य अतः परब्रह्मणः अन्यः द्रष्टा, जीवः नास्तीति जीवब्रह्मभेदनिराकरणपरतया व्याख्यानं स्वमताग्रहमूलमेवेत्युपेक्षणीयम्। विशेषविचारः पूर्वमेव कृतस्तत्र द्रष्टव्यः।

'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवाक्यानि बोधजनकान्येव नेति, बोधजनकत्वेऽपि 'चित्' इत्यखण्डार्थबोधकत्वेन जीवब्रह्मणोरभेदबोधकान्येव नेति अद्वैतिभिरेवांगीकृतत्वेन तेषामभेदविषये उदाहरणं न युक्तम्। विशेषविचारः पूर्वमेव कृतो द्रष्टव्यः।

एवमेकस्याप्यभेदबोधकवाक्यस्याभावेन 'इत्यादि श्रुतिशतेभ्यः' इत्युक्तिः अज्ञजनप्रतारणमूलैवेति उपेक्षणीयैव।

अपि च 'मिथ्याज्ञानपुरस्सरोऽयमात्मनो बुध्द्युपाधिसंबंधः' इति यदुक्तं तदप्यप्रामाणिकं प्रमाणविरुद्धं च। आत्मनो बुध्द्युपाधिसंबंधो मिथ्याज्ञानपुरस्सर इत्यस्मिन् विषये न किंचित्प्रमाणमस्ति, प्रत्युत बुद्धिसंबंधस्य श्रुत्यादिप्रमाणसिद्धत्वात् सत्यत्वं च सिध्यतीति मिथ्याज्ञानपुरस्सरत्वोक्तिः प्रमाणविरुद्धा चेति।

तस्मान्नेदं सूत्रं विभोरपि जीवस्य बुद्धिरूपोपाधिप्रयुक्ताणुत्वव्यवहारज्ञापकमिति।

'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' (३०) इति सूत्रस्य "पुंस्त्ववत् बुद्धिसंबन्धोऽपि शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोः आविर्भवति" इति यद्व्याख्यानं तेन जीवस्य इतरेंद्रियसंबंधवत् बुद्धिसंबंध एव सिध्यति । नतु बुद्धेरुपाधित्वम् । अन्यथा इन्द्रियादीनामपि उपाधित्वापत्तेः । इति नेदं सूत्रं बुद्धेरुपाधित्वे प्रमाणं भवितुमर्हति इति ।

## ॐ 'नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा' ॐ

इति सूत्रस्य "तच्चात्मन उपाधिभूतमंतःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते । क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते निश्चयादिवृत्तिकं बुद्धिरिति । तच्चैवंभूतमंतःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम् । अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसंगः स्यात्– । आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां संनिधाने सति नित्यमेवोपलब्धिः प्रसज्येत । अथ सत्यपि हेतुसमवधाने फलाभावस्ततो नित्यमेवानुपलब्धिः प्रसज्येत । न चैवं दृश्यते । अथवाऽन्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः । नचात्मनः शक्तिप्रतिबन्धः संभवति, अविक्रियत्वात् । नापीन्द्रियस्य । नहि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत । तस्माद्यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । तथाच श्रुतिः–'अन्यत्र मना अभूवं नादर्शमन्यत्र मना अभूवं नाश्रौषम्' (बृ. १-५-३) इति । 'मनसा ह्येव पश्यति मनसा शृणोति' (बृ. १-५-३) इति ।

कामादयश्चास्य वृत्तय इति दर्शयति ‘ कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ’ ( बृ. १-५-३ )” इति यत् व्याख्यानं; तत्तु इतरेन्द्रियाणामिव मनसस्सद्भावगमकं स्यात्, नतु मनसः उपाधित्वगमकम् । अन्यथा इंद्रियाणामपि ज्ञानान्वय-व्यतिरेकवत्त्वेन उपाधित्वं स्यात् । तस्मादिदं सूत्रं ‘ अन्यत्र मना अभूवं ’ ‘ मनसा ह्येव पश्यति ’ ‘ कामः संकल्पः ’ इत्यादिश्रुतयश्च बुद्धेर्जीवोपाधित्वे न प्रमाणं भवितुमर्हन्ति, इति नेदमधिकरणं अणुभूत-बुध्द्युपाधिकत्वात् जीवस्याणुत्वव्यवहारः न तु स्वतः; जीवस्य विभुत्वात् इत्यस्मिन् विषये प्रमाणं भवितुं अर्हति इति बाधकाभावात् उत्क्रो-त्क्रान्त्यादिभ्यः जीवोऽणुरेवेति सिद्धम् ।

## ३३ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ

एतत्सूत्रव्याख्याने जीवस्य कर्तृत्वे ( जीवे कर्तरि सति ) ‘ यजेत ’ ‘ जुहुयात् ’ ‘ दद्यात् ’ एवंविधविधिशास्त्रमर्थवद्भवति । अन्यथा तदनर्थकं स्यात् । तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति। नचासति कर्तरि तदुपपद्यते । एवं ‘ एष हि द्रष्टा श्रोता मंता बोद्धा कर्ता विज्ञानात्मा पुरुषः ’ ( प्र. ५-९ ) इति शास्त्रमपि अर्थवद्भवति। इति जीवस्य कर्तृत्वं शंकराचार्यैः साधितम् । तथा–

## ३४ ॐ विहारोपदेशात् ॐ

इति सूत्रव्याख्याने “ स ईयतेऽमृतो यत्रः कामं ” ( बृ. २।१।१८ ) इति जीवस्य विहारोपदेशकश्रुत्युदाहरणेन कर्तृत्वं साधितम् ।

## ३५ ॐ उपादानात् ॐ

इति सूत्रव्याख्याने " तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" ( बृ. २।३।१७ ) ' प्राणान् गृहीत्वा ' ( बृ. २।१।१८ ) इति करणोपादान (स्वीकार) बोधकश्रुत्युदाहरणेन जीवस्य कर्तृत्वं प्रतिपादितम्।

## ३६ ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ

इति सूत्रव्याख्याने " विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" ( तै. २-५-१ ) इति जीवस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं बोधकश्रुत्युदाहरणेनाऽपि जीवस्य कर्तृत्वं प्रतिपादितम् ।

## ३७ ॐ उपलब्धिवदनियमः ॐ

इति सूत्रे ' यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्, सः स्वतंत्रः सन् प्रियं हितं चैवात्मनो नियमेन संपादयेत् । न विपरीतम्। विपरीतं संपादयन्नुपलभ्यते । नच स्वतंत्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यते, ' इति बाधकशंकायां यथात्मा उपलब्धिं प्रति स्वतंत्रोऽपि अनियमेनेष्टमनिष्टं चोपलभते । एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति ' इति जीवस्य कर्तृत्वे बाधकं परिहृत्य कर्तृत्वं स्थापितम् ।

## ३८ ॐ शक्तिविपर्ययात् ॐ

इति सूत्रेऽपि विज्ञान ( बुद्धि ) व्यतिरिक्तस्य जीवस्य कर्तृत्वं स्थापितम् ।

## ३९ ॐ समाध्यभावाच्च ॐ

इति सूत्रे "योऽप्ययमौपनिषदात्म (परमात्म) प्रतिपत्ति-प्रयोजनः समाधिरुपदिष्टो वेदान्तेषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ. २-४-५) "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छां. ८-७-३) "ओमित्येवं ध्यायथ आत्मानं" [मुण्ड. २-२-६] इत्येवंलक्षणः, सोऽप्यसति आत्मनः कर्तृत्वे नोपपद्यते। तस्मादपि जीवस्य कर्तृत्व-सिद्धिरिति कर्तृत्वं साधितम्। एवं जीवकर्तृत्वसाधिकाः श्रुतीरुदाहृत्य एतैः सप्तसूत्रैः जीवस्य कर्तृत्वं स्वीकृतम्। ● तत्तु श्रुतिसूत्र-बोधितत्वात् युक्तमेव। तत्र जीवकर्तृत्वसाधने असंगता अयुक्ताश्च केचन विषयाः प्रतिपादिता अपि प्रकृतानुपयुक्तत्वान्न विचार्यते। परंतु सप्त-सूत्रैस्तथा तद्गृहीताभिः श्रुतिभिः प्रतिपादितस्य स्वेन (शंकराचार्येण) श्रुतिसूत्रप्रतिपाद्यतयांऽगीकृतस्याऽपि जीवकर्तृत्वस्य जीवकर्तृत्वनिषेधक-पदरहितेन प्रत्युत जीवकर्तृत्वव्यवस्थापकेन (कर्तृत्वबोधकेन) "यथा च तक्षोभयथा" इत्युत्तरसूत्रेण मिथ्यात्वं—अविद्याकल्पितत्वं (नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वरूपमसत्त्वं) प्रतिपाद्यते, इति शंकराचार्योक्तिः स्वव्याहता, श्रुतिविरुद्धा, सूत्रविरुद्धा, अप्रामाणिकी च।

स्वव्याहत्यादिकं च 'यथा च तक्षोभयथा' इत्यव्यहितोत्तर सूत्रीयशांकरभाष्यस्य खण्डनावसरे प्रदर्श्यते।

---

● द्रष्टव्यः निदिध्यासितव्य इत्यादि प्रकृतश्रुत्युक्तध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च जीवपरमात्मनोर्भेदश्च स्वीकृतः (ब्र. सू. ३-२-२५) सूत्र-व्याख्याने शंकराचार्यैः।

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः शारीरस्य साधितं कर्तृत्वं स्वाभाविकं ( सत्यं ) वा उपाधिनिमित्तं ( कल्पितं त्रैकालिकनिषेध-प्रतियोगि असत् ) वा इति संशय्य शास्त्रार्थवत्त्वादिभिः स्वाभाविकमेव ( सत्यमेव ) कर्तृत्वमपवादहेत्वभावादिति पूर्वपक्षे च प्राप्ते, आत्मनः कर्तृत्वमस्वाभाविकम्, ( मिथ्या ) कर्तृत्वस्य स्वाभाविकत्वे ( सत्यत्वे ) कर्तृत्वादनिर्मोक्षप्रसंगः इति (कर्तृत्वस्यानिवृत्तिप्रसंगः) यदनिर्मोक्षप्रसंग–भयेन कर्तृत्वस्य मिथ्यात्वं साधितम्, तदसमंजसम् । "यथा च तक्षोभयथा" इतिसूत्रे कर्तृत्वमस्वाभाविकं ( मिथ्या ) इति प्रतिज्ञार्थ-बोधकपदाभावेन तथा अनिर्मोक्षप्रसंगरूपापादनबोधकपदाभावेन च आत्मनः कर्तृत्वं मिथ्या, सत्यत्वे अनिर्मोक्षप्रसंग इत्यर्थस्य उत्सू-त्रितत्वेन ( सूत्राबोध्यत्वेन ) "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुका-रिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इत्युक्त-भाष्यलक्षणाभावेन शांकरव्याख्यानस्याभाष्यत्वप्राप्तेः ।

तथा यदि जीवस्य कर्तृत्वं स्वाभाविकं [ सत्यं ] स्यात् तदा कर्तृत्वात् मोक्षो न स्यात् । भाव्यं च कर्तृत्वान्मोक्षेण (कर्तृत्वनिवृत्त्या) । अतः कर्तृत्वं मिथ्या इति खलु शांकरभाष्यतात्पर्यार्थः ।

तत्र कर्तृत्वस्य स्वाभाविकत्वे कर्तृत्वान्मोक्षः ( कर्तृत्वनिवृत्तिः ) न स्यादित्यापादनमयुक्तम् । कर्तृत्वस्य मोक्षेऽपि इष्टत्वेन ( प्रमाणसिद्ध-त्वेन ) कर्तृत्वानिवृत्त्यभावस्य आपादयितुमशक्यत्वात् अप्रामाणिकमा-पादनीयम् । संति च मोक्षे कर्तृत्वप्रतिपादकानि श्रुतिसूत्रादिप्रमाणानि । तथाहि –

" एष संप्रसाद [ आत्मा ] अस्माच्छरीरात्समुत्थाय परं ज्योति-

रुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते "। 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' ( छां. ८ ) इत्यादि श्रुतयः संचारकर्तृत्व भोजनकर्तृत्व क्रीडाकर्तृत्वादीनि प्रतिपादयन्ति । तथा 'संकल्पादेव तच्छ्रुतेः ( ब्र. सू. ४।४।८ ) इत्यादिसूत्राणि च मोक्षेऽपि कर्तृत्वं प्रतिपादयंति ।

नच मोक्षे कर्तृत्वस्यानिवृत्तौ पुरुषार्थसिद्धिर्न स्यात् । कर्तृत्वस्य दुःखरूपत्वादिति वाच्यम् । कर्तृत्वाद्भिन्नत्वेन तद्रूपत्वासंभवात् । दुःखस्य कर्तृत्वरूपत्वे सृष्टयादिकर्तुरीश्वरस्यापि दुःखित्वापत्तेः ।

नच ब्रह्म द्विविधं नित्यशुद्धबुद्धमुक्तं निर्धर्मकं (निर्गुणं), कर्तृ-त्वादिगुणयुक्तमीश्वरपदवाच्यं चेति । तत्र निर्गुणस्य कर्तृत्वादिकं नास्त्येव । सगुणस्येश्वरस्य भासमानं सृष्टयादिकर्तृत्वं मिथ्यैव [उपाधि-धर्माध्यासनिमित्तं ] न स्वाभाविकमिति न दुःखित्वापत्तिरिति वाच्यम् ।

'पृथगात्मानं च प्रेरितारं च मत्वा' 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यो उन्निनीषते । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते" [कौ. ३।८] "य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति" "यतो वा इमानि भूतानि जायन्ते" ( तै. ३।१ ) इत्याद्यनेकश्रुतिभिः "जन्माद्यस्य यतः" इत्यादिसूत्रैः "अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते" इत्यादिगीतावाक्यैः सिद्धस्य ईश्वरकर्तृत्वस्य मिथ्यात्वे [ असत्त्वे ] अंगीक्रियमाणे असद्भूतकर्तृत्व-प्रतिपादकश्रुतिसूत्रगीतारूपप्रस्थानत्रयस्य अप्रामाण्यस्वीकारापत्त्या तव नास्तिकत्वापत्तेः । हा शान्तं पापं शान्तं पापं-नहि नहि-नास्तिका हि प्रत्यक्षसिद्धार्थानां सत्त्वमंगीकृत्य प्रत्यक्षासिद्धानां स्वर्गनरकपुण्यपापा–

दीनामसत्त्वमंगीकुर्वंति । अद्वैतिनो हि शून्यवादिन इव प्रत्यक्षसिद्धानामप्यर्थानामसत्त्वमंगीकुर्वंति इति न केवलं नास्तिकाः, शून्यवादिबौद्धवत् नास्तिकनास्तिकाः ( महानास्तिकाः ) एव ।

ननु "मिथ्यावादविचारचिन्तनमहो कुर्वंत्यदृष्टात्मका भ्रांता एव न पारगा दृढधियः तूष्णीं शिलावत् स्थिताः । द्वैताद्वैतविवर्जिते समरसे मौनं परं संमतम्" इत्याद्युक्तरीत्या, वयं पदार्थाः संति न संति इत्यस्यां चिन्तायामुदासीनाः । न संति पदार्था इत्युक्तौ खलु नास्तिकत्वम् । कथमुदासीनानां नास्तिकत्वमिति चेत् तर्हि पाषाणकल्प एवासीति न वादार्ह इति ।

कर्तृत्वस्य अस्वाभाविकत्वे यच्चोक्तं—

"तथाच श्रुतिः 'ध्यायतीव लेलायतीव' ( बृ. ४ - ३ - ७ ) इति । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' ( कठ. ३-४ ) इति च उपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति । नहि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते । 'नान्योऽतोऽस्ति द्रष्टा' ( बृ. ४-३-२३ ) इत्यादिश्रवणात्" इति तन्न साधु । 'ध्यायतीव लेलायतीव' इति इवशब्दघटितवाक्येन ध्यानकर्तृत्वस्य चलनकर्तृत्वस्य च मिथ्यात्वासिद्धेः । प्रत्युत सत्यत्वस्यैव सिद्धेः । तथाहि–शंकराचार्यादिभिः 'यत्र हि द्वैतमिव भवति' इति मंत्रव्याख्यावसरे— "ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वमिति" इति ( शां. भा. )

"इवशब्दस्योपमार्थत्वमुपेत्य-शंकते नन्विति-द्वैतेन द्वैतस्योपमीयमानत्वात् दृष्टांतस्य दार्ष्टान्तिकस्य च वस्तुत्वं ( पारमार्थिकत्वं )

स्यात् । उपमानोपमेययोश्चन्द्रमुखयोर्वस्तुत्वोपलंभादित्यर्थः " (आनंद) इति शांकरभाष्यानन्दगिरिवाक्याभ्यां इवशब्दशिरस्कपूर्वपदबोध्यस्य सत्यत्वमवगम्यते इत्युक्तत्वेन अत्रापि 'ध्यायतीव लेलायतीव' इतीवपदशिरस्केन ध्यायतिपदेन तथा लेलायतीतिपदेन च बोध्यमानध्यानकर्तृत्वचलनकर्तृत्वयोः पारमार्थिकत्वमेव सिध्यति इति ।

एवमेव बौद्धमतनिरासकस्य "नाभाव उपलब्धेः" इति सूत्रस्य व्याख्यानावसरे शंकराचार्यैः—"अतश्चैवमेव सर्वे लौकिका उपलभन्ते, यत्प्रत्याचक्षाणा अपि बाह्यार्थमेव व्याचक्षते । यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति । तेऽपि सर्वलोकप्रसिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वंति । इतरथा हि कस्माद्बहिर्वदिति ब्रूयुः । न हि विष्णुपुत्रो वंध्यापुत्रवदवभासत इति कश्चिदाचक्षीत । तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति युक्तमभ्युपगंतुं नतु बहिर्वदवभासत इति " इति वाक्येन इवशब्दसमानार्थकवत्प्रत्ययशिरस्केन 'बहिर्वत्' इति पदेन बोध्यस्य बहिः पदार्थस्य सत्त्वमंगीकरणीयमित्युक्तम् । इवशब्दशिरस्केन ध्यायतीतिपदेन लेलायतीतिपदेन च उक्तयोः ध्यानचलन कर्तृत्वयोः सत्यत्वमेव सिध्यति इति ।

एवमेव 'न चेद्वस्तु उपमानं कथं भवेत्' इति वाक्येन वार्तिककृतापि इवशब्दशिरस्कपदस्य पारमार्थिकवस्तुबोधकत्वमंगीकृतमिति ।

ध्यायतीव लेलायतीव इति वाक्येन ध्यानचलनक्रियाकर्तृत्वस्य मिथ्यात्वं कथ्यते इति तुष्यत्विति न्यायेनांगीकारेऽपि 'आदित्यैनैवायं

ज्योतिषास्ते, पल्ययते, कर्म कुरुते विपल्येति' ' चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येति' 'अग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येति ' ' वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येति ' ' आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येति ' इति पूर्ववाक्यैः अनेककर्तृत्वादीनामुक्तेः । तथा– ' स समानस्सन्नुभौ लोकावनुसंचरति ' " सहि स्वप्नो भूत्वेमं लोकमतिक्रामति " इत्यस्मिन्नेव वाक्ये लोकसंचरणकर्तृत्वस्य स्वप्नभवनकर्तृत्वस्य लोकातिक्रमणकर्तृत्वस्य च उक्त्या ' स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते, स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ' इत्युत्तरवाक्ये चानेकेषामुत्पत्तिकर्तृत्वादीनामुक्तेः ।

तथा– ' यत्कर्म कुरुते ' तदभिसंपद्यते ' ' यजेत ' ' दद्यात् ' इत्याद्यनन्तवेदसूत्रगीताप्रमाणैः जीवस्य : अनन्तकर्तृत्वोक्तेः आत्मनः कर्तृत्वसामान्यमेव मिथ्येति कथनस्यायुक्तत्वात् । एवं इवशब्दः न निषेधार्थक इति इवशब्देन ध्यानचलनकर्तृत्वादीनां सत्यत्वं सिध्यति । बाधकसत्त्वे ध्यायतीवेतिवाक्यसिद्धं सत्यत्वमपह्नियतां परंतु मिथ्यात्वविषये एतद्वाक्योदाहरणमयुक्तम् । यथा रजतसत्यत्वग्राहकं इदं रजतमिति प्रत्यक्षं रजतमिथ्यात्वे न प्रमाणं भवितुमर्हति । तथाच प्रकृतकर्तृत्वादेः न किमपि बाधकमस्तीति जीवस्येश्वरस्य वा ( परमात्मनो वा ) कर्तृत्वं मिथ्या=असत् इति न वक्तव्यमिति ।

किंच ' नहि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते ' इति शंकराचार्योक्तिरत्यन्तमयुक्ता विकल्पासहत्वात् । ( विकल्पे कृते यत्किंचित्पक्षस्यापि स्वीकर्तुमयोग्यत्वात् ) तथाहि—

विवेको हि भेदज्ञानम् । विवेकिनो हि भेदज्ञानवन्तः (भेदज्ञानकर्तारः) विवेकित्वं हि भेदज्ञानकर्तृत्वमिति । तथा च शंकराचार्या विवेकिनो वा अविवेकिनो वा ? ।

न तावद्विवेकिन इति वक्तुं शक्यते । भेदज्ञानित्वप्राप्त्या अद्वैतित्वहानेः । नाप्यविवेकिनः ( भेपज्ञानरहिताः ) ' भेदव्यपदेशाच्च ' ' भेदव्यपदेशाच्चान्यः ' ' स्मृतेश्च ' ' शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ' इत्यादिसूत्राणां, ' द्वासुपर्णा ' इत्यादि श्रुतीनां ' उत्तमः पुरुषस्त्वन्यः ' इत्यादिगीतावाक्यानां च भेदार्थकथनायोगात् । नच मिथ्याभूतविवेकज्ञानित्वेन [ ज्ञानकर्तृत्वेन ] ' भेदव्यपदेशाच्च ' इत्यादिसूत्रादीनां भेदबोधकतया व्याख्याकर्तृत्वं, वास्तवभेदज्ञानकर्तृत्वाभावेन ( अविवेकित्वेन ) अद्वैतित्वमिति वाच्यम् । कर्तृत्वस्य सत्यत्वमिथ्यात्वविषये एव विचारस्य क्रियमाणत्वेन कर्तृत्वस्य मिथ्यात्वात् इति हेतूकरणायोगात् ।

' नान्योऽतोऽस्ति द्रष्टा ' इति वाक्यं परमात्मनः धर्मादिवद् दृष्टत्वात् परमात्मनोऽन्यः परमात्मद्रष्टा नास्तीत्यर्थकत्वेन न द्रष्टृ-जीवनिषेधकम् इति बहुवारमुक्तत्वात् पुनरुक्तिभयान्नात्र विचार्यते ।

यच्चोक्तं " यस्मादन्यश्चेच्चितिमान् जीवः कर्ता बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्, पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत " इत्याशंक्य, " न, अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः " इति । तदसमंजसम् । इदानीं कर्तृत्वभोक्तृत्वे मिथ्याभूते सत्ये वा इति संदेहे कर्तृत्वभोक्तृत्वे सत्यभूते इति पूर्वपक्षे च मिथ्यात्वसाधनार्थं प्रवृत्तेन त्वया कर्तृत्वभोक्तृत्वयोः अविद्याप्रत्युपस्थापितत्वात्

[ मिथ्यात्वात् ] इति संदिग्धस्यैव हेतूकरणायोगात् । पर्वतो वह्निमान्न वेति संदेहदशायां वन्हिमत्त्वसाधनाय पर्वतो वन्हिमानेव वन्हिमत्त्वात् इति वन्हिमत्त्वस्य हेतूकरणस्येवेति ।

तथा कर्तृत्वभोक्तृत्वयोः अविद्याप्रत्युपस्थापितत्वविषये यच्चोक्तं " तथाच शास्त्रम्—' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति ' [ बृ. २-४-१४ ] इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति ' यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् ' ( बृ. २-४-१४ ) इति " तत्तुच्छम् । ' यत्रहि द्वैतमिव भवति ' इति वाक्यं कर्तृत्वभोक्तृत्वादिरूपस्य द्वैतस्य इवशब्देन पारमार्थिकत्व ( सत्यत्व ): मेव वक्तीति शंकराचार्यैरेवोक्तत्वात् मिथ्यात्वविषये तदुदाहरणस्यायुक्तत्वात् । नच ' वाचारंभणं विकारो नामधेयम् ' इति श्रुत्यंतरादिति वाक्येन कर्तृत्वादिद्वैतस्य मिथ्यात्वं साधितमिति वाच्यम् । वाचारंभणमिति श्रुतेः द्वैतप्रपंचमिथ्यात्वप्रतिपादकत्वाभावस्य आरंभणाधिकरणे उक्तत्वात् । तुष्यत्विति न्यायेन वाचारंभणश्रुतेः मिथ्यात्वप्रतिपादकत्वमंगीकृत्य तया श्रुत्या द्वैतमिवेतिश्रुतेः बाधे अंगीक्रियमाणेऽपि यथा इदं रजतमिति प्रत्यक्षस्य नेदं रजतमिति प्रत्यक्षेण बाधेऽपि रजतमिथ्यात्वसाधकत्वाभावेन न रजतमिथ्यात्वे उदाहरणीयत्वं तथा यत्र हि द्वैतमिव भवतीति वाक्यस्य न द्वैतमिथ्यात्वे उदाहरणीयत्वमिति ।

यत्र त्वस्य सर्वमात्मैवाभूदिति वाक्यं विद्यावस्थायां ( मोक्षे ) कर्तृत्वभोक्तृत्वनिवारकं न भवति प्रत्युत कर्तृत्वादीनां सत्यत्वमेव साधयतीति तदनन्यत्वाधिकरणे उक्तं तत्रैवानुसंधेयं पुनरुक्तिभयान्न लिख्यते ।

" तथा स्वप्नजागरितयोरात्मन उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति – ' तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकांतरं ' ( बृ. ४-३-२१ ) इत्यारभ्य ' एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः ' ( बृ. ४-३-३२ ) इत्युपसंहारात्, " इति वाक्येन उपाध्यभिभवोद्भवाभ्यां कर्तृत्वस्य अभिभवोद्भवश्रवणादपि कर्तृत्वस्यौपाधिकत्वं ( मिथ्यात्वं ) इति यदुक्तं तदयुक्तम् ।

एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्त इति वाक्यस्य जीवपरमात्मभेदबोधकत्वेन जीवस्य वेदनकर्तृत्वबोधकत्वेन च उपाधिप्रयुक्तत्वानुक्तेः । शंकराचार्यैरपि ' सुषुप्त्युत्क्रान्त्योर्भेदेन, ( बृ. सू. १-३-४२ ) इति सूत्रव्याख्यावसरे ' प्राज्ञेनात्मना संपरिष्वक्तः ' इति वाक्यं ' सुषुप्तौ उत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात् । सुषुप्तौ तावत् ' अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ' ( बृ. ४-३-२१ ) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति । तत्र पुरुषः शारीरः स्यात्तस्य वेदितृत्वात् बाह्याभ्यन्तरवेदनप्रसंगे सति तत्प्रतिषेधसंभवात् । प्राज्ञः परमेश्वरः, सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् । तथोत्क्रान्तावपि ' अयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति ' ( बृ. ४-३-३५ ) इति जीवाद्भेदेन परमेश्वरं व्यपदिशति । तत्रापि शारीरो जीवःस्याच्छरीरस्वामित्वात् । प्राज्ञस्तु स एव परमेश्वरः, तस्मात् सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् " इति वाक्येन स्पष्टं जीवपरमात्मनोर्भेदं तस्य जीवस्य वेदितृत्वरूपं च प्रतिपादयतीति स्वीकृतं, न तु जीवस्य निष्क्रियब्रह्मरूपत्वं स्वीकृत्य

कर्तृत्वमुपाधिनिमित्तमित्युक्तम् । नच प्राज्ञेनात्मना संपरिष्वक्तः ' इति ( बृ. ४-३-२१ ) मंत्रव्याख्याने शंकराचार्यैरेव " एकत्वमेवाज्ञान-हेतुः तत्कथमिति । उच्यते । दृष्टांतेन हि प्रत्यक्षीभवति विवक्षितोऽर्थ इत्याह--तत्तत्र यथा लोके प्रिययेष्टया स्त्रिया संपरिष्वक्तः कामयन्त्या कामुकः सन्न बाह्यमात्मनः किंचन किंचिदपि वेद मत्तोऽन्यद्वस्त्विति न चान्तरमयमहमस्मि सुखी दुःखी वेति । अपरिष्वक्तस्तु तया प्रविभक्तो जानाति सर्वमेव बाह्यमाभ्यंतरं च । परिष्वंगोत्तरकालं त्वेकत्वापत्तेर्न जानाति । ...सोऽयं पुरुषः प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा संपरिष्वक्तः सम्यक् परिष्वक्तः एकीभूतो निरंतरः सर्वात्मा न बाह्यं किंचन वस्त्वन्तरं नाप्यान्तरमात्मन्ययमहमस्मि सुखी दुःखी वेति वेद । तत्र चैतन्यज्योतिस्स्वभावत्वे: कस्मादिह न जानातीति यदप्राक्षीस्तत्रायं हेतुर्मयोक्त एकत्वं यथा स्त्रीपुंसयोः सम्परिष्वक्तयोः " इति वाक्येन जीवपरमात्मनोरैक्यं अर्थात् कर्तृत्वादेर्विरुद्धधर्मस्य मिथ्यात्वमभ्युक्तमिति वाच्यम् । स्वव्याहतत्वात् । प्राज्ञेनात्मना संपरिष्वक्त इति श्रुतिं स्वेनैव जीवपरमात्मनोर्भेदपरतया जीवस्य वेदनकर्तृत्वपरतया च व्याख्याय पुनरत्रजीवपरमात्मनोरभेद-परतया कर्तृत्वाभावपरतया व्याख्यानस्य तद्विरुद्धत्वात् । ' सुषुप्त्युत्क्रान्त्योर्भेदेन ' इति सूत्रे स्पष्टं भेदस्य वर्णितत्वेन तद्विरोधाच्च ।

एतन्मंत्रव्याख्यानरूपभाष्यस्य शास्त्रीयज्ञानलौकिकज्ञानाभाव-सूचकत्वेन अत्यन्तं हेयत्वम् । तथाहि-' अपरिष्वक्तस्तु तया प्रविभक्तो जानाति ' ' प्रियया स्त्रिया परिष्वंगोत्तरकालं एकत्वापत्तेर्न जानाति ' इत्येतां शांकरोक्तिं श्रुत्वा युवानो युवत्यः बालका बालिका अपि हसंति । स्त्रीपरिष्वगकाले स्त्रीपुरुषयोरेकत्वं कस्यापि कन्या अपि

नानुभवसिद्धम् । प्रत्युत अनुभवविरुद्धं च । एतद्दृष्टांतेन पुरुषः स्वाप-काले परमात्मना सम्परिष्वक्त एकीभूतः न जानातीति कथनमपहा-सास्पदम् । तस्मान्नेयं श्रुतिः कर्तृत्वस्यौपाधिकत्वं वक्तीति ।

किंच कर्तृत्वस्य सत्त्वे अनिर्मोक्षः स्यादित्यादिकं सर्वमुत्सूत्रितम् । सूत्रे एतद्बोधकपदाभावात् इति स्पष्टं ज्ञात्वापि अज्ञजनमोहनार्थं ' तदे-तदाहाचार्यः– ' यथा च तक्षोभयथा ' इति वाक्येन स्वोक्तार्थस्य सूत्रारूढताप्रदर्शनं नाटयति ।

" नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति । यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति । स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसंघातोऽकर्ता सुखी भवति संप्रसादावस्थायाम् । तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्यादीपेन विधूयात्मैव केवलो निर्वृतः सुखी भवति । तक्षदृष्टांतश्चैतावतांशेन द्रष्टव्यः । तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति । स्वशरीरेण त्वकर्तैव । एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना त्वकर्तैवेति । न त्वा-त्मनस्तक्ष्ण इवावयवाः संति । यैर्हस्तादिभिरिव वास्यादीनि तक्षा मन-आदीनि करणान्यात्मोपाददीत न्यस्येद्वा " इति वाक्येन ' तक्षदृष्टांत-श्चैतावतांशेन द्रष्टव्यः, यथा तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारे-ष्वपेक्ष्यैव प्रतिनियतानि करणादीनि कर्ता भवति, स्वशरीरेण त्वकर्तैव ।

एवमयमात्माऽपि सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना त्वकर्तैव ' इति यदुक्तं तेन हि कर्तृत्वं मिथ्येति न सिध्यति । यथा हि तक्षा करणादिकारकाण्यपेक्ष्य कर्ता भवति तथा जीवोऽपि मनआदिकरणकारकाण्यपेक्ष्य कर्ता भवतीति सिध्यति । क्रियायाः (कर्तृत्वस्य) "कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥" इति षट्कारकसापेक्षत्वस्वभावत्वात् । नहि अन्यसापेक्षत्वमात्रेण कर्तृत्वं मिथ्या भवति । उक्तं हि शंकराचार्यैरेव–' उपलब्धिवदनियमः ' ( ब्र. सू. २-३-३७ ) इति सूत्रभाष्ये–" न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते ( मिथ्या भवति ) भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम् " इति वाक्येन करणादीतरसापेक्षतामात्रेण कर्तृत्वं मिथ्या न भवतीति ।

यदा चैत्रः पचति, मैत्रः चैत्रं पाचयति तदा चैत्रस्य प्रयोज्य–पाककर्तृत्वं मैत्रस्य प्रयोजककर्तृत्वं । यदा तक्षा ( चैत्रः ) तक्षति, गृहस्वामी तक्षयति तदा चैत्रस्य ( तक्ष्णः ) प्रयोज्यतक्षणकर्तृत्वं गृह–स्वामिनः प्रयोजककर्तृत्वं दृष्टम् । एवमेव ' एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते ' ( कौषी. ३-८ ) ' य आत्मनि तिष्ठन्नात्मानमंतरो यमयति ' ( बृ. ) इति श्रुत्युक्तरीत्या जीवः कर्म करोति परमात्मा कारयतीति जीवः प्रयोज्यकर्ता, परमात्मा प्रयोजककर्ता ( जीवस्य प्रयोज्यकर्तृत्वं ) इति ' यथा च तक्षोभयथा ' इति सूत्रं वक्ति, नतु जीवकर्तृत्वस्य मिथ्यात्वमिति । तथाचास्य सूत्रस्य तथा शांकर–व्याख्यानमयुक्तमेवेति ।

" कर्तृत्वादिप्रतिपादकानां श्रुत्यादीनां मिथ्याभूतानुवादकत्वमेव ।

कर्तृत्वबोधने तात्पर्यं नास्ति । जीवस्य हि सत्यभूतकर्तृत्वबोधने तात्पर्ये कर्तृत्वरहितादीश्वरात् भेदः स्यात् । भेदेऽङ्गीक्रियमाणे च ब्रह्मात्मत्वोपदेशः (जीवस्य ब्रह्मरूपत्वव्यपदेशः) न स्यात् । तस्मात् मिथ्याभूतकर्तृत्वं स्वीकृत्यैव विधिशास्त्रं ( ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमस्नानसंध्यायज्ञदेवतावेदगंगादितीर्थस्वर्गवैकुण्ठादिलोककर्तृत्वभोक्तृत्वादिप्रतिपादकं शास्त्रं ) प्रवर्तते । सर्वं मिथ्यैव । " न निरोधो न चोत्पत्तिर्नबद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता । " इति कारिकायाः व्याख्याने द्वैतस्य शशविषाणवदसत्त्वादिति वदन्तश्शंकराचार्याः अप्रामाण्य ( तत्प्रतिपाद्यानामसत्त्व ) कथनेन वेदाप्रामाण्यवादिबौद्धवत् कंठतः वेदः अप्रमाणमित्यनुक्त्वा अर्थाद्वेदस्याप्रामाण्यं कथितवन्त इति न ते वैदिकाः अतो न तैस्सह विवादः कार्य इति ।

ननु वयमवैदिका बौद्धा एव, तथाप्यस्माभिरुक्तदोषाणां निरासो युष्माभिः कार्यः ( विवादः कार्यः ) इति चेत् अवैदिकबौद्धमतदोषनिरासः ' नाभाव उपलब्धेः ' इत्यादिसूत्रैः बौद्धमतनिराकरणावसरे शंकराचार्यैरेव प्रदर्शित इति नास्माभिस्तन्मतनिराकरणाय प्रयतितव्यमिति ।

यदुक्तं " स्वप्नकाले आत्मनः विहारोपादानयोः कर्तृत्वं श्रुती गमयत इति जीवस्य कर्तृत्ववाचित्वं यदुक्तं तत् विहारोपादानकर्तृत्वं समनस्कस्यैव न तु केवलस्य जीवस्येति न ताभ्यां श्रुतिभ्यां जीवस्य कर्तृत्वसिद्धिः । 'स हि स्वप्नो भूत्वेमं लोकमतिक्रामति ' (बृ. ४-३-७) इति, ' इन्द्रियाणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ॥ ' [ स्मृतिः ] इत्यादिश्रुतिस्मृतिभ्यः " इति शंकराचार्यैः, तत् " नच सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते " इत्यादि

वाक्ये तैरेव मनआदिसहकारिसत्त्वमात्रेण कर्तृत्वनिवृत्त्यभावबोधनेन निराकृतम् ।

किंच ' उतेव स्त्रीभिः सह मोदमानः जक्षदुतेव भयानि पश्यन् ' ( बृ. ४-३-१३ ) इतीवकारानुबद्धमेव स्वप्नव्यापारं वर्णयति इति यदुक्तं तन्न । इवशब्दस्य मिथ्यार्थकत्वाभावात् । स्वप्ने सच्च भसच्च पश्यति इति स्वप्ने सत्यपदार्थस्यापि दृष्टत्वोक्तेः, स्वप्ने इवकारानुबद्धानामपि बहूनामुक्तेः । विशेषविचारः पूर्वं कृतो द्रष्टव्यः ।

किंच " लौकिका अपि तथैव स्वप्नं कथयन्ति । आरुरुक्षुमिव गिरिशृंगमद्राक्षमिव वनराजिम् ' इति यदुक्तं तदप्यसमंजसम् । स्ववाक्य-विरुद्धत्वात् । स्वयमेव " नाभाव उपलब्धेः " ( ब्र. सू. २-२-२८ ) इति बौद्धमतनिरासकसूत्रव्याख्याने " अतश्चैवमेव सर्वे लौकिकाः उपलभन्ते यत्प्रत्याचक्षाणा अपि बाह्यार्थं एवमेव व्याचक्षते यदन्तर्ज्ञेय-रूपं तद्बहिर्वदवभासत " इति इवकारसमानार्थकवत्कारानुबद्धपदार्थस्य सत्यत्वस्थापनात् । अत्र इवकारानुबद्धपदबोध्यत्व मात्रेण पदार्थानां मिथ्यात्वासिद्धेः ।

किंच वयं नहि सर्वेषां स्वप्नपदार्थानां सत्यत्वं ब्रूमः, किंतु अबा-धितानामेव । यद्बाधितं तन्मिथ्या भवतु । केचन लौकिकाः स्वैः स्वप्ने दृष्टपदार्थानां बाधे तथा वदन्तु । नहि, सर्वे तथा वदन्ति इति नियमः ।

किंच " विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते " (तै. २-५-१) इति वाक्यं स्पष्टं सर्वे देवाः विज्ञानरूपं ज्येष्ठं ब्रह्म उपासते इति परब्रह्मोपासनाकर्तृत्वं जीवस्य वक्ति । तस्मात्कर्तृत्वमात्मनः स्वाभाविकं

( सत्यमेव ) न मिथ्या- ( असत् ) । कर्तृत्वस्यासत्त्वे ' परात्तु तच्छ्रुतेः इत्युत्तरसूत्रे तस्येश्वराधीनत्वोक्तेरसंगत्यापत्तेः । नहि मिथ्याभूतो बंध्यासुतो वा शशविषाणं वा ईश्वराद्यधीनमिति कथ्यते इति ।

## ४१ ॐ परात्तु तच्छ्रुतेः ॐ

" यत्......कर्तृत्वं जीवस्याभिहितं तत्किमनपेक्ष्येश्वरं भवत्याहोस्विदीश्वरापेक्षमिति संशये जीवः कर्तृत्वे नेश्वरमपेक्षते इति पूर्वपक्षे ' परात्तु तच्छ्रुतेः, अविद्यावस्थायां कार्यकारणसंघाताविवेकदर्शिनो जीवस्याविद्यातिमिरांधस्य सतः परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति । कुतः तच्छ्रुतेः = ' एष ह्येव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति, तं यमधो निनीषते ' ( कौषी. ३-८ ) ' य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति ' इत्यादिरूपायाः श्रुतेः । एतच्छ्रुतिषु सर्वप्रवृत्तिष्वपीश्वरो हेतुः कर्तेति प्रतिपाद्यत इति ।

एवमीश्वरस्य कारयितृत्वे वैषम्यनैर्घृण्ये स्याताम् । अकृताभ्यागमश्च जीवस्य स्यात् इत्याशंकापरिहारार्थं प्रवृत्तस्य–

## ४२ ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॐ

इति सूत्रस्य " जीवकृतधर्माधर्मवैषम्यापेक्ष एवेश्वरः जीवानां

शुभाशुभं विदधाति । नच जीवस्य परायत्ते कर्तृत्वे कृतप्रयत्नापेक्षत्वमेव नोपपद्यते इति वाच्यम् । यतः परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः, कुर्वन्तं हि तमीश्वरः कारयति अतः ॥ अपिच पूर्वप्रयत्नमपेक्ष्येदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयत् इति अनादित्वात्संसारस्येत्यनवद्यम् इति ।

कृतप्रयत्नापेक्ष ईश्वरः शुभाशुभं ददातीति कुतः, विहितप्रतिषिद्धावैयर्थ्यादिभ्यः = एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य च अवैयर्थ्यं भवति । अन्यथा तदनर्थकं स्यात् ।

तथा विहितकारिणमप्यनर्थेन संसृजेत्, प्रतिषिद्धकारिणमप्यर्थेन । ततश्च प्रामाण्यं वेदस्यास्तमियात्" इति व्याख्याने ईश्वरस्य श्रुत्यादिसिद्धं कर्माध्यक्षत्वं सर्वभूताधिवासत्वं साक्षित्वं चेतयितृत्वं, । ईश्वरानुज्ञया जीवस्य कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च ज्ञानेन मोक्षसिद्धिः । 'एष ह्येव साधु कर्म कारयति' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इत्यादिश्रुतिसिद्धं ईश्वरस्य हेतुकर्तृत्वम् । 'स्वर्गकामो यजेत' इति विहितस्य, ब्राह्मणो न हन्तव्यः' इति प्रतिषिद्धस्य च ईश्वरो जीवकृतकर्मापेक्षया फलं ददातीति स्वीकारे अवैयर्थ्यं भवति । ईश्वरस्य जीवप्रयत्नापेक्षया फलदानांगीकारे विहितप्रतिषेधबोधकशास्त्रस्य प्रामाण्यं भवति । अन्यथा अप्रामाण्यं स्यात्' इत्येवमादि यदुक्तं शंकराचार्यैः, तत्सर्वमास्तिकैः स्वीकरणीयत्वात् वेदादिप्रमाणसिद्धत्वाच्च आस्तिकत्वं गमयति । यच्च मध्ये मध्ये जीवस्य कर्तृत्वमविद्यावस्थायामुपाधिनिबन्धन (कल्पित)

मित्युक्तिः ‘ न वेदा न यज्ञा न देवाः ’ ‘ न शास्ता न शास्त्रं ’ ‘ न पुण्यं न पापम् ’ इत्यादिना वेदस्य वेदप्रतिपाद्यस्य सर्वस्य, वेद-प्रामाण्यस्य च असत्त्वोक्तिश्च

‘ मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
परेशजीवयोरैक्यं .... मायावादमवैदिकम् ’

इत्यादिपुराणोक्त्यनुसारेण “ द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । ” “ दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ” “ असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ” ईश्वरोऽहं ” “ इत्यज्ञान-विमोहिताः ” “ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ” इत्यादिगीतोक्तरीत्या आसुराः ‘ ईश्वरोऽहं ’ ‘ जगन्मिथ्या ’ इत्यादितामसज्ञानं संपाद्य तमः प्राप्नुयुरिति परमात्माज्ञानुसारेण बौद्धमतरूपमद्वैतमतं शंकराचार्याः प्रसारयामासुरिति गमयति इति किं पुनः पुनः कथनेन । एवं च ‘ परात्तु तच्छ्रुतेः ’ ‘ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ’ इति सूत्रे तद्गृहीतश्रुतयश्च जीवब्रह्मणोर्भेदं, जीवस्य कर्तृत्वं, परमात्मनः कारयितृत्वमीश्वरस्य बन्धमोक्षदातृत्वं, वेदस्य प्रामाण्यमित्यादीन् द्वैतमतसिद्धानेव विषयान् प्रतिपादयंतीति द्वैतिनामनुकूलाः अद्वैतिनां प्रतिकूला एवेति ।

## ४३ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ

इति सूत्रस्य उपकार्योपकारकभावः संबद्धयोरेव । सच संबन्धः स्वामिभृत्ययोरीशित्रीशितव्यत्वरूपः अग्निविस्फुलिंगयोरंशांशित्वरूपो दृष्टः--प्रकृते च जीवेश्वरयोः उक्तोपकार्योपकारकभावप्रयोजकसंबन्धः नियामकाभावेन स्वामिभृत्यवत् ईशित्रीशितव्यभावरूपो वा अग्निविष्फुलिंगवत् अंशांशित्वरूपो वा इति संदेहे अथवा स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात् ईशित्रीशितव्यभाव एव सम्बन्ध इति पूर्वपक्षे वा प्राप्ते—

जीवः अंशः = ईश्वरांशः भवितुमर्हति अग्नेर्विस्फुलिंग इव । कुतः ● नानाव्यपदेशात् 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छां. ८-७-१ ) 'एतमेव विदित्वा मुनिर्भवति' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवं जातीयकभेदनिर्देशस्य असति भेदे अयोगात् । एतदुपरि नानाव्यपदेशः स्वामिभृत्यसारूप्ये (ईशित्रीशितव्यत्वे ) युज्यते-इति कथं अंशित्वसाधकं भवेदित्याशंक्य, न केवलं वयं नानाव्यपदेशेन अंशत्वं साधयामः, किंतु 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मकितवाः' 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वंचसि त्वं जातो भवसि विश्वतोमुखः' ( श्वे. ४-३ ) इति 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति च । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिब्रह्माभेद ( ब्रह्मात्मत्व ) बोधकश्रुतेश्चेति । तथाच भेदाभेदबोधकश्रुतिबलात् जीवः ब्रह्मांशः अंशसदृशः ( अंशो यथा अभिन्नः तथा अभिन्नः ) इति सिध्यति । तथा जीवो ब्रह्मैव चेतनत्वात् ब्रह्मवदित्यनुमानेन च ब्रह्माभिन्नत्वरूप—

● अंश इवांशो न हि निरवयवस्य मुख्योंऽशस्संभवति । कस्मात् पुनर्निरवयवत्वात्स एव न भवति ( भाष्यं )

ब्रह्मांशसादृश्यसिद्धिरिति यत्नूक्तम्, तत्र " य आत्मनि तिष्ठन्" " सोऽन्वेष्टव्यः स विजिज्ञासितव्यः " " एतमेव विदित्वा मुनिर्भवति " इत्येवंजातीयको जीवब्रह्मणोर्भेदनिर्देशः नासति भेदे युज्यते इति वाक्येन जीवब्रह्मणोर्यद्भेदकथनं तद्युक्तमेव। परंतु जीवब्रह्मणोरभेदकथनमयुक्तम्। नच ' ब्रह्मदाशा ब्रह्मदासा ब्रह्म कितवाः ' ' त्वं स्त्री पुमानसि त्वं कुमारः उत वा कुमारी त्वं जीर्णो दण्डेन वंचसि त्वं जातो भवसि विश्वतोमुखः ' [ श्वे. ४-३ ] ' सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते ' ( तै. ब्रा. ) ' नान्योऽतोऽस्ति द्रष्टा ' ( बृ. ४-७-२३ ) इत्यादिश्रुतिभिः ब्रह्मणो जीवेनाभेदोऽप्युक्त इति वाच्यम्। एतच्छ्रुतीनां जीवब्रह्मणोरभेदबोधकत्वासंभवात्। तथाहि- ' ब्रह्मदाशा ' इति श्रुतिगतब्रह्मशब्दबोध्येन ' अथ कस्मादुच्यते ब्रह्मेति बृहति बृंहयति च ' इति श्रुतिसिद्धबृंहणादिगुणविशिष्टेन ब्रह्मणा दास दाश कितव पदबोध्यानां विशिष्टानां जीवानां च विरुद्धधर्मवत्त्वेन ऐक्यासंभवात्। विशिष्टयोरभेदस्य अद्वैतिभिरनंगीकृतत्वाच्च। नच मुख्यवृत्त्या ब्रह्मदासादिपदबोध्यानां विशिष्टानामैक्यासंभवेऽपि लक्षणया बोध्यानां शुद्धचितामैक्यं संभवतीति वाच्यम्।

( १ ) मुख्यार्थासंभवे लक्षणावृत्त्या बोध्यतया स्वीक्रियमाणस्यार्थस्य इतरप्रमाणानुकूलतायाः प्रमाणान्तराविरोधस्य चावश्यकत्वेन प्रकृते अभेदबोधकप्रमाणस्यैवाभावेन ऐक्यरूपस्यार्थस्येतरप्रमाणानुकूल्याभावेन प्रत्युत इतरप्रमाणविरुद्धत्वेन च लक्षणया ऐक्यबोधकत्वांगीकारायोगात्।

( २ ) लक्षणावृत्त्या बोधनीयस्यार्थस्य पूर्वं ज्ञातत्वस्यावश्यकत्वेन अद्वैतिभिरज्ञेयत्वेनांगीकृतायाश्चितः पूर्वं ज्ञानस्यैवाभावाल्लक्षणावृत्त्या चिद्बोधस्यानुपपत्तेः।

( ३ ) शक्यसंबन्धवत एव लक्षणया बोध्यमानत्वेन अद्वैतिभिः ‘ असंगो ह्ययं पुरुषः ’ इति श्रुत्या असंगतया अंगीकृतायां चिति शक्यसंबन्धस्यैवायोगेन लक्षणावृत्त्या चितो बोधासंभवाच्च ।

( ४ ) अभेदसंबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्य कारणतया घटो घट इति वाक्यात् घटे घटस्याभेदसंबन्धेन शाब्दबोधाजननवत् चितश्चिति अभेदसंबन्धेन भानासंभवाच्च ● ।

( ५ ) चित् चिन्नेति विपर्ययस्य चित् चिन्न वेति संशयस्य वा कस्याप्यभावेन चित् चिदेवेति ज्ञातत्वेन च ‘ चित् चिदसि ’ इति कथने कारणाभावात् ।

( ६ ) चितश्चिदभेदबोधनेऽपि जीवब्रह्मणोरैक्यासिद्धेः ।

( ७ ) ‘ तत्त्वमसी ’ त्यादिवाक्यानामद्वैतमतरीत्या अखण्डार्थबोधकत्वस्वीकारेण चिदित्येव बोधनेन चितश्चिदभेदासिद्धेः ।

( ८ ) “ ज्ञानं च तस्मिन् परात्मभावनिवृत्तिरेव···स्वाभाविको यः स केवलो भवतीत्यात्मा ज्ञायत इत्युच्यते ” इति [बृ. ४-४-२०] शांकरभाष्येण, “ परस्मिन् देहादावात्मभावस्यारोपितस्य निवृत्तिरेव वाक्येन क्रियते, तथाचात्मनि परिशिष्टे स्वाभाविकमेव स्फुरणं प्रतिबन्धविगमात्प्रकटीभवतीति भावः ” इत्यानन्दगिरिवाक्येन, “ अविद्यानिवृत्तिफलदर्शनात् ” [ब्र. शां. भा. २-१-१४] इति भाष्य-भामत्या ‘ नहीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति येन नान्त्या

● टाटाचजी

स्यात् । किंत्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते ' इति वाक्येन, " महावाक्याद्यद्विषयकं ज्ञानं भवति तद्ब्रह्मेति न वयं प्रतिपादयामः, किंतु महावाक्याद्यज्ज्ञानं भवति तज्ज्ञानमेव ब्रह्मेति । ... नच महावाक्याज्जायमानं ज्ञानमेव ब्रह्मेत्युक्तम् । तथा सति ज्ञानरूपस्य ब्रह्मण उत्पत्तिः स्वीकार्या स्यादिति वाच्यम् । तज्ज्ञानं नैव जायते, किंतु तदानीं केवलं तदावरकाज्ञाननिरास एव जायते । तन्मूलक एव तदानीं ज्ञानं जायत इति व्यवहारः " इति सिद्धांतबिंदुटीकावाक्येन च तत्त्वमस्यादिमहावाक्यानामद्वैतिभिर्बोधकत्वमेव नांगीक्रियते, इत्यवगमेन तेषामभेदबोधकत्वस्य दूरोत्सारितत्वाच्च । तथाच ' तत्त्वमसि ' ' ब्रह्मदासाः ' इत्यादिवाक्यजातं जीवानां ब्रह्मत्वमाहेत्युक्तिरयुक्तैव । तथा ' त्वं स्त्री त्वं पुमानसि ' इत्यादिवाक्येनापि पूर्वोक्तरीत्या विशिष्टयोरैक्यायोगेन त्वंशब्दवाच्यविशिष्टब्रह्मणः स्त्र्यादिशब्दवाच्यविशिष्टजीवैरैक्यासिद्धेः । समुद्रमथनादिकाले परमात्मन एव स्त्र्यादिरूपत्वोक्तेश्च नेदमपि वाक्यं जीवब्रह्मणोरैक्यबोधकम् ।

अभेदभ्रामकसामानाधिकरण्यादिरहितायाः प्रत्युत स्पष्टं कार्यकारणभावेन भेदबोधिकायाः " सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते " इति श्रुतेरभेदविषये उदाहरणं तु अतीव मौढ्यज्ञापकम् ।

धीरः = परमात्मा, सर्वाणि रूपाणि = रूपात्मकं (अर्थात्मकं) प्रपंचं, विचित्य = सृष्ट्वा, नामानि = नामात्मकप्रपंचं च, कृत्वा = निर्माय, व्यवहरन् वर्तते, तं विद्वानमृतो भवति ' इत्यर्थबोधिकया ' सर्वाणि रूपाणी ' तिश्रुत्या नामरूपात्मकप्रपंचकारणत्वेन ज्ञातृज्ञेय-

भावेन च जीवब्रह्मणोर्भेदस्यैव बोधनात् । नच रूपात्मकप्रपंचं सृष्ट्वा तत्र प्रविश्यास्ते इति प्रवेशोक्त्या ऐक्यसिद्धिरिति वाच्यम् । एतस्यां श्रुतौ प्रवेशबोधकपदाभावात् । प्रवेशबोधनेऽपि प्रवेष्टृप्रवेश्ययोर्भेदस्यावश्यकत्वाच्च ।

" नान्योऽतोऽस्ति द्रष्टा " इति वाक्यस्यापि " अदृष्टो द्रष्टा " इति पूर्ववाक्ये परमात्मा इतरकर्तृकदर्शनायोग्यः स्वयं द्रष्टा इत्युक्तत्वेन " अतः = इतरकर्तृकदर्शनायोग्यत्वात् स्वयं द्रष्टृत्वात्, अन्यः परमात्मनोऽन्यः, द्रष्टा = परमात्मद्रष्टा नास्ति " इति परमात्मकर्मकदर्शनकर्ता नास्तीत्यर्थकतया सामान्यतो दर्शनकर्तैव नास्तीति नार्थः इत्येतयापि श्रुत्या ब्रह्मान्यजीवनिषेधाकरणेन ऐक्यासिद्धेः । सामान्यतो द्रष्टुरेव निषेधे परमात्मान्यद्रष्टृबोधकानां " आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यः " इत्यादिवाक्यानामप्रामाण्यापत्तेः । नचाद्वैतमते व्यावहारिकद्रष्टृत्वस्वीकारात् तत्पराणि तद्वाक्यानीति वाच्यम् । 'नान्योऽतोऽस्ति द्रष्टा ' इति सामान्यतो द्रष्टा नास्तीति द्रष्टृत्वावच्छिन्नस्य निषेधानुपपत्तेः । विशेषविचारः पूर्वमेव कृतस्तत्र द्रष्टव्यः ।

" चैतन्यं चाविशिष्टं " इत्यादिवाक्येन जीवः ब्रह्मैव चेतनत्वात् ब्रह्मवत् ' इत्यनुमानं यत्सूचितं तदप्ययुक्तम् । ' जीवोऽचेतनः पदार्थत्वाद्धटवत् ' ' अन्नं पुरीषं पदार्थत्वात्पुरीषवत् ' इत्याद्याभाससमानयोगक्षेमत्वेन अप्रयोजकतया निर्धर्मके अद्वैत्यभिमते ब्रह्मणि चेतनत्वस्याभावेन दृष्टांते साधनवैकल्येन च असाधकत्वात् ।

तथाच जीवब्रह्मणोर्भेदस्य प्रमाणसिद्धत्वेऽपि अभेदे प्रमाणाभावात् भेदाभेदावगमरूपहेत्वसिद्धेर्भेदाभेदावगमाभ्यामंशत्वसिद्धिरित्येतदप्युक्तम् ।

किंचेदं शंकराचार्यैः साध्यमानमंशत्वं न तावत् अग्नेर्विष्फुलिंगवदवयवत्वं ( एकदेशत्वं ) निरवयवस्य ब्रह्मणो जीवो मुख्योंऽशो न भवति इति शंकराचार्यैरेव भाष्ये निराकृतत्वात्। नापि जीवो ब्रह्मांश इव तत्तन्त्रतया न त्वंश इति भामत्युक्तरीत्या अंशत्वम्। तत्तन्त्रत्वे पर्यवसितमंशसादृश्यरूपम्। तदधीनत्वरूपतत्तन्त्रतायाः भेदव्याप्तत्वेन भेदव्याप्ततत्तन्त्रत्वरूपांशत्वसाधनार्थमभेदव्यपदेशस्य हेतूकरणायोगात्।

## ४४ ॐ मन्त्रवर्णाच्च ॐ

इति सूत्रस्य "मन्त्रवर्णश्चैतमर्थमवगमयति- ' तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि '॥ ( छां. ३-१२-६ ) इति। अत्र भूत-शब्देन जीवप्रधानानि स्थावर-जंगमानि निर्दिशति। ' अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः ' इति प्रयोगात् अंशः पादो भाग इत्यनर्थान्तरम्। तस्मादप्यंशत्वावगमः" इति यच्छंकराचार्याणां व्याख्यानं तद्युक्तमेव। स्वयमेव अंश इति पदस्य ' अंश इवांशः नहि निरवयवस्य मुख्योंऽशः संभवति। कस्मात्पुनर्निरवयवत्वात् स एव न भवति ' इति वाक्येन निरवयवस्य ब्रह्मणो विष्फुलिंगादिवत् मुख्यांशत्वासंभवेन अंशसदृश इति व्याख्यातत्वेन भेदस्यैव सिद्धेः। परंतु अद्वैत्यभिमताभेदपर्यवसाय्यंशत्वे ' मंत्रवर्णादि' ति सूत्रस्य ' पादोऽस्य विश्वा भूतानि ' इति मंत्रवर्णस्य च ( वेदस्य ) उदाहरणमयुक्तम्।

## ४५ ॐ अपि स्मर्यते ॐ

" ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते- ' ममैवांशो

जीवलोके जीवभूतस्सनातनः ' ( गी. १५-७ ) इति । तस्मादप्यंशत्वा-वगमः " इति व्याख्यानमपि पूर्वसूत्रवदेव अंशसादृश्यं वक्ति, न तु मुख्यांशत्वमभेदपर्यवसन्नमित्यद्वैतिनामननुकूलमेव ।

यत्तूक्तं " स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्धः" इति वाक्येन अत्यन्तभिन्नेषु अनंशिषु ईशित्रीशितव्यभावप्रसिद्धेः, ब्रह्माभिन्नस्य अत एवांशिनो जीवस्य कथमीशितव्यत्वमित्याशंक्य, ' यद्यप्येषा लोके प्रसिद्धिस्तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्य-भावश्च निश्चीयते ' इति वाक्येन यद्यपि ईशित्रीशितव्यत्वं भिन्नयोरेव न त्वभिन्नयोः, तथाप्यनन्यथासिद्धाभेदशास्त्रबलात् कल्पितभेदेन ईशित्रीशितव्यभावोपपादनं कार्यमिति यत्समाधानमभिहितं न तत्समं-जसम् । पूर्वोक्तरीत्या अभेदग्राहकप्रमाणाभावेन [ अभेदं विनानुपपद्य-मानशास्त्रस्यैवाभावेन ] जीवब्रह्माभेदस्य वन्ध्यासुतोपमितत्वेन तादृश-वंध्यासुतसदृशाभेदनिर्वाहाय प्रामाणिकस्य ( अनेकश्रुतिसूत्रगीताप्रमाणैः सिद्धस्य ) श्रुत्यादिसिद्धत्वेन स्वेनैव ( शंकराचार्यैः ) स्वीकृतस्य ईशित्री शितव्यभावस्य भेदस्य च कल्पितत्वांगीकरणस्य तथा भेदादिबोधक-श्रुत्यादीनामविद्यमानार्थ ( कल्पितार्थ ) प्रतिपादकत्वरूपाप्रामाण्यांगी-करणस्य च वैदिकैः स्वीकर्तुमशक्यत्वात् । तथा स्वीकारे बौद्धत्वप्राप्तेः ।

यच्चोक्तं " औपाधिके ( कल्पिते ) ईश्वरस्य नियंतृत्वे जीव एवेश्वरनियन्ता किं न स्यात्, ईश्वरनियन्तृत्वस्यापि जीवे कल्पना-संभवादित्याशंक्य, निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्नान् जीवान् प्रशास्तीति न किंचिद्विप्रतिषिध्यते " इति वाक्येन ईश्वरो-पाधिर्निरतिशयः, जीवोपाधिर्निहीनः [ नितरां हीनः ] इति निहीनो-पाधिसंपन्नजीवनियन्तृत्वं निरतिशयोपाधिसंपन्नस्येश्वरस्य संभवति ननु

निरतिशयोपाधिसंपन्नेश्वरनियन्तृत्वं, निहीनोपाधिसंबद्धस्य जीवस्य संभवति इति, तदप्यसाधु । अद्वैतिभिर्जीवेश्वरयोः संबद्धतयांऽगीक्रियमाणयोरुपाध्योः कल्पितत्वेन तयोर्निरतिशयत्वनिहीनत्वायोगात् । कल्पितोपाध्योस्तयोः कल्पितनिरतिशयत्वहीनत्वयोश्शशविषाणवदसत्वेन तादृशयोरुपाध्योर्नियन्तृत्वनियम्यत्वप्रयोजकत्वासंभवाच्च ।

ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभोगेनांशिन ईश्वरस्यापि दुःखित्वं स्यात् । ● यथा लोके हस्तपादाद्यन्यतमांगगतेन दुःखेनांशिनो देवदत्तस्य दुःखित्वं तद्वत् । ततो वरं पूर्वावस्थः संसार एवास्तु इति सम्यग्दर्शनानर्थप्रसंगः इत्याशंक्य तदुत्तरतया,

## ४६ ॐ प्रकाशादिवन्नैवं परः ॐ

इति सूत्रमवतार्य तस्य सूत्रस्य " परः = ईश्वरः, नैवं = यथा जीवः संसारमनुभवति तथेश्वरः संसारं नानुभवति । जीवो ह्यविद्यावेशवशात् देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःखी अहमित्यविद्यया कृतं दुःखोपभोगमभिमन्यते । नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वाऽस्ति । जीवस्याप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो नतु पारमार्थिकोऽस्ति ... तस्मान्नास्ति सम्यग्दर्शनस्यानर्थक्यप्रसंगः " इति वाक्येन अंशिनो देवदत्तस्य अंशगतसुखदुःखानुसंधाने भ्रांतिकामकर्मरूपदुःखसामग्रीमत्त्वं प्रयोजकं न त्वंशित्वं प्रयोजकम् । ब्रह्मणि चांशिनि भ्रांतिकामकर्मरूपदुःखसामग्रीमत्त्वस्याभावात् नांशगतदुःखादिप्राप्तिः । तथाच ' ईश्वरः स्वांशगतदुःखैर्दुःखी अंशित्वाद्देवदत्तवत् ' इत्यनुमानस्य भ्रांतिकामकर्म-

---

● ईश्वरः स्वांशदुःखैः दुःखी अंशित्वाद्देवदत्तवत् इति ।

रूपदुःखसामग्रीमत्त्वरूपोपाधियुक्तत्वेन दुष्टत्वान्नांशगतदुःखवत्त्वस्य अंशिनि परमेश्वरे सिद्धिरिति यद्व्याख्यानं तदत्यन्तमयुक्तम् ।

तथाहि– अद्वैतमते एकस्यैव ब्रह्मणः सत्त्वात् तदतिरिक्तजीवादिवस्त्वभावात्, जीवस्य दुःखादिप्रसक्तेरेवाभावेन परमेश्वरस्य दुःखादिमत्त्वशंकैव नोदेतीति तत्परिहारस्यानावश्यकत्वात् ।

नचोपाधिकल्पितभेदाज्जीवस्य दुःखादिप्रसक्तिरिति अंशिनः परमेश्वरस्यापि दुःखादिमत्त्वप्रसक्तिरिति वाच्यम् । ब्रह्मातिरिक्तस्य सर्वस्यासत्त्वं वदतामद्वैतिनां मते उपाधिर्नास्ति, तत्प्रयुक्तभ्रमो नास्ति, भ्रमविषयो भेदो नास्ति, अंशत्वं नास्ति, दुःखादिकं नास्ति इतीश्वरस्य दुःखादिमत्त्वप्रसंजकाभावेन ईश्वरस्य दुःखादिमत्त्वशंकाया एवानुदयात् ।

जीवस्य भ्रांतिकामकर्मरूपदुःखसामग्रीमत्त्वात्दुःखवत्त्वं ईश्वरस्य तदभावान्न दुःखादिमत्त्वमिति समाधानं चायुक्तम् । असतां भ्रांतिकामकर्मणां दुःखकारणत्वासंभवात् । नहि असत् शशविषाणं कस्यापि कारणं भवितुमर्हति । असतां भ्रांतिकामकर्मणां दुःखादिकारणत्वे ईश्वरस्यापि दुःखादिकारणत्वं स्यात् । असत्त्वाविशेषात् । नच जीवे भ्रांतिकामकर्मणामारोपितत्वेन दुःखादिकारणत्वं संभवतीति वाच्यम् । ब्रह्मण्यपि भ्रांतिकामकर्मणां दुःखकारणानामारोपसंभवात् । नहि जीवे आरोपे ब्रह्मण्यारोपाभावे विशेषकारणं पश्यामः । अद्वैतमते मायाया मायिकभ्रमादेश्चानुपपन्नतायाः भूषणत्वांगीकारेण अनुपपन्नताया भ्रमविघटकत्वासंभवादिति ।

जीवस्याप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो नतु पारमार्थिकोऽस्ति । यथाच स्वदेह--

गतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रांत्याऽनुभवति, तथा पुत्र-मित्रादिगोचरमपि दुःखं तदभिमानभ्रांत्यैवानुभवत्यहमेव पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेनपुत्रमित्रादिष्वभिनिविशमानः। ततश्च निश्चितमे-तदवगम्यते। मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति यदुक्तं तत्तुच्छम्। अद्वितीयस्यासंगस्य ब्रह्मणः अविद्याद्युपाधिसंबन्धायोगेन तदतिरिक्तवस्तुनः भ्रान्त्याश्रयस्याभावेन देहाद्यभेदभ्रमस्यायोगात्। 'मम देहः मम चक्षुः' इत्यादिभेदज्ञानस्य पशुपक्ष्यादीनामपि विद्य मानत्वेन देहेन्द्रियादिषु 'अहं देहः, अहं चक्षुः, अहं पुत्रः अहं मित्र-मित्याद्यविवेकस्यैवायोगात्। गृहाश्वादिषु नष्टेषु तथा स्वीयत्वाभिमानात् दुःखादि,: तथा देहेन्द्रियपुत्रमित्रादिषु स्वीयत्वाभिमाननिमित्तमेव दुःखादिकं,नतु देहेन्द्रियादिषु अभेदाभिमाननिमित्तकम्। नहि गृहमेव अहं, अश्व एवाहमिति अभेदभ्रान्त्या गृहाश्वादिषु नष्टेषु दुःखाद्यनुभवि-तारो दृष्टाः इति।

यच्चोक्तं "यथा चोदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते, एवं अविद्याप्रत्युपस्थापिते बुध्या-द्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते। जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम्। तथाचविद्यानिमित्त-जीनभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयंति वेदान्ताः 'तत्त्व-मसि' इत्येवमादयः। तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखि-त्वप्रसंग," इति, तत्तुच्छम्। बिम्बप्रतिबिम्बयोर्भेदात् प्रतिबिम्बस्य चलनेऽपि बिम्बचलनप्रसक्तेरेवाभावात्। तद्वत् जीवब्रह्मणोरैक्ये प्रमा-णाभावेन भेदे प्रमाणसत्त्वेन च जीवब्रह्मणोर्भेदाज्जीवस्य दुःखित्वेऽपि ईश्वरस्य दुःखप्रसक्तेरेवाभावेन जीवदुःखादेर्भ्रान्तिकल्पितत्वकथने कारणा-भावात् भ्रांतिकल्पितत्वायोगाच्च।

तत्त्वमसीत्यादयः जीवस्याविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावप्रतिपादिका न भवन्तीति अद्वैतिभिरेवोक्तमिति पुनः पुनस्तत्त्वमसीत्यादय ऐक्यप्रतिपादकाः इत्युक्तिरयुक्तैवेति ।

## ४७ ॐ स्मरन्ति च ॐ

'स्मरंति' इति शब्देन "तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा ॥ कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः ॥" इति व्यासादिस्मृतिं, चशब्देन, "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" (श्वे. ४-६) "एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" (कठ. ५-११) इति श्रुती च गृहीत्वा जैवेन दुःखेन परमात्मा न दुःखायते" इति यद्व्याख्यानं शंकराचार्याणां तद्द्वैतमतानुकूलं अद्वैतमतनिरासकतया अद्वैतिनामननुकूलमेव । तथाहि–

'द्वा सुपर्णा' इति श्रुतौ 'अन्यः अन्यः' इति पदाभ्याम् अशनानशनरूपविरुद्धधर्माभ्यां च भेदस्य कथनेन शंकराचार्यैरपि 'द्वा सुपर्णेति श्रुतिः भेदबोधिकेति' 'स्थित्यदनाभ्यां च' (ब्र. सू. १-३-७) इति सूत्रव्याख्याने कथितत्वेन च जीवब्रह्मणोर्भेदात् जीवस्य दुःखित्वेऽपि जीवगतदुःखस्य जीवभिन्ने ईश्वरेऽयोगस्य द्वैतमते युक्तत्वात्, जीवब्रह्मणोरभेदवादिनां जीवदुःखेन परमात्मा न दुःखीभवितुमर्हति इति साधनताय जीवेश्वरयोर्भेदबोधिकाया द्वासुपर्णेत्यादिश्रुतेरुदाहरणस्यायुक्तत्वात् ।

एवं “एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः” ( कठ. ५-११ ) इति श्रुतिरपि परमात्मनः सर्वभूतान्तरात्मेतिपदेन सर्वभूतेषु जीवेषु अंतर्विद्यमानः आत्मेति सर्वजीवांतस्थत्वोक्त्या भेदमुक्त्वा, लोकदुःखेन भिन्नानां लोकानां जनानां दुःखेन परमात्मा न लिप्यते इति जीवपरमात्मनोर्भेदमत एव जीवदुःखासंबद्धत्वं वक्तीति द्वैतिनामनुकूला अद्वैतिनां प्रतिकूलैव ।

नच सर्वभूतान्तरात्मेति सर्वभूत ( जीव ) स्वरूपत्वमुक्तमिति वाच्यम् । सर्वभूतात्मा इत्युक्तौ यथाकथंचित् आत्मशब्दस्य स्वरूपार्थकत्वस्वीकारेणाभेदः बोधितः स्यात्, नतु तथोक्तम् । किंतु सर्वभूतान्तरात्मेति । तथाच तेन पदेन सर्वभूतेष्वन्तर्विद्यमान आत्मा इत्याधाराधेयभावेन भेदस्यैव प्रतीतेः । “तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा ॥ कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः” इति स्मृतिरपि निर्गुणत्वसगुणत्वाभ्यां, तत्रेतिपदेन जीवपरयोर्मध्ये इति निर्धारणेन च अपर इति शब्देन च जीवपरमात्मनोर्भेदं कथयित्वा परमात्मनो दुःखभोक्तृत्वाभावं बोधयतीत्यद्वैतिनामननुकूला द्वैतिनामनुकूलैव ।

तथाच– स्मरंति चेति सूत्रं तद्गृहीताः श्रुतिस्मृतयः अभेदवादिनामद्वैतिनामननुकूला एव ।

## ४८ ॐ अनुज्ञापरिहारौ देहसंबंधाज्ज्योतिरादिवत् ॐ

इति सूत्रस्य “यदि तर्ह्येक एव सर्वेषां भूतानामन्तरात्मा स्यात्

कथमनुज्ञापरिहारौ ( ' ऋतौ भार्यामुपेयात् ' इत्यनुज्ञा । गुर्वंगनां नोपगच्छेत् ' इति परिहारः- एवमादिरूपौ अनुज्ञापरिहारो ) स्याता-मित्याशंक्य, आत्मन एकत्वाभ्युपगमेऽपि देहसंबंधात् = देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययात् ( भ्रमात् ) अनुज्ञापरिहारौ अवकल्प्येते ज्योतिरादिवत् । यथा ज्योतिष एकत्वेऽपि अग्निः क्रव्यात् ( क्रव्यं मांसमत्तीति ) श्मशानाग्निः परिन्हियते नेतरः । यथा भौमाः प्रदेशा वज्रवैडूर्यादय उपादीयन्ते । भौमा अपि संतो नरकलेवरादयः परिन्हियन्ते । यथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते तदेव जात्य-न्तरे परिवर्ज्यते तद्वत् " इति यद्व्याख्यानं शंकराचार्याणां तत्रावतरणं तावदयुक्तम् । तथाहि– ' एक एव सर्वेषां भूतानामन्तरात्मा स्यात् ' । इत्यनेन जीवाः परस्परं भिन्नाः, परमात्मा नियामकः, अंतरात्मा जीवाद्भिन्नः इति सर्वेषां भूतानामित्यनेन भूतपदवाच्यजीवानां बहुत्वं, अंतरात्मा इत्यनेन परमात्मनो बहुजीवनियामकत्वोक्त्या जीवानां परस्परं भेदः परमात्मना च भेद एवोक्तो भवति इति अनुज्ञापरिहार-योरसंभवाशंकैव नोदेति ।

नच अनंशत्वमपि जीवस्य अभेदवादिन्यः श्रुतयः प्रतिपादयंति । ' तत्सृष्ट्वा तदेवानु प्राविशत् ' ( तै. २-६-१ ) नान्योऽतोऽस्ति द्रष्टा ' [बृ. ३-७-२] ' मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ' [ बृ. ४-४-१९] ' तत्वमसि; ' ' अहं ब्रह्मास्मि, ' इत्येवंजातीयका इति परमात्मन एकत्वात् अनुज्ञापरिहारासंभवशंका आयास्यतीति वाच्यम् । ' तत्सृष्ट्वा ' ' तत्त्वमसि ' ' अहं ब्रह्मास्मि ' इत्यादिवाक्यानामभेद-प्रतिपादकत्वाभावस्याद्वैतिभिरेव स्वीकृतत्वात् । वस्तुतोऽभेदप्रतिपादक-त्वाभावात् च ताभिः श्रुतिभिरैक्यासिध्या अनुज्ञापरिहारासंभवशंकाया अप्रसरात् । तदर्थं सूत्रप्रवृत्तिरिति कथनमयुक्तम् ।

आत्मन एकत्वेऽपि देहसंबन्धात् देहादिरयं संघातः अहमेवेत्यात्मनि भ्रमात् 'ऋतौ भार्यामुपेयात् ।' इत्याद्यनुज्ञापरीहारौ संभवत इति सिद्धांतकरणमप्ययुक्तम् । मम देहः, मम चक्षुः मे मनः इत्यादिभेदप्रत्यक्षस्य सर्वेषां विद्यमानत्वेन तद्विपरीतस्य आत्मनि देहाद्यभेदभ्रमस्यासंभवात् ; अद्वैतमतरीत्या भ्रमकारणाभावेन भ्रमस्यैवानुदय इति शांकरब्रह्मसूत्रभाष्यभामत्यादिग्रन्थेषु उक्तत्वेन देहात्मत्वभ्रमेण अनुज्ञापरिहारयोः संभवकथनायोगाच्च ।

गवां मूत्रपुरीषं शुद्धत्वाद्गृह्यते, मनुष्यादिजात्यंतराणां मूत्रपुरीषमशुद्धत्वात्त्यज्यते । गोमूत्रपुरीषयोः मनुष्यादिजात्यंतरमूत्रपुरीषयोः परस्परं भिन्नत्वेन एकस्य शुद्धत्वं अन्यस्याशुद्धत्वं युज्यते । एवमेव नरकलेवरादिभ्यो भिन्नाः वज्रवैडूर्यादयः सुन्दराश्शुद्धाः सुखहेतव इति परिगृह्यन्ते । वज्रवैडूर्यादिभ्यो भिन्नाः नरकलेवरादयः अशुद्धा न सुखसाधनाः निषिद्धा इति परित्यज्यन्ते । एवं परस्परं भिन्नानां ग्राह्यताप्रयोजकधर्मवत्त्वतदभावाभ्यां ग्राह्यत्वाग्राह्यत्वमात्रेण तद्दृष्टान्तेन अद्वैतमते अभिन्नतया स्वीकृतानां जीवानामनुज्ञापरिहारयोः संभावितत्वकथनमद्वैतिनामयुक्तमेव ।

स्यातामनुज्ञापरिहारौ एकस्याप्यात्मनः देहविशेषयोगात् । देहविशिष्टस्य स्वर्गादिभोगायोगात् स्वरूपस्यैव स्वर्गादिभोक्तृत्वस्यांगीकार्यत्वेन स्वरूपे भेदाभावे स्वर्गी नरकी इत्यादिव्यवस्था न सिध्येत् । तत्सिद्ध्यर्थमात्मस्वरूपभेदः अंगीकार्य इति शंकानिवृत्तये प्रवृत्तस्य—

## ४९ ॐ असन्ततेश्चाव्यतिकरः ॐ

इति सूत्रस्य " भवेत्तदा सांकर्यं यद्यनुपहितात्मन एव भोक्तृत्वं

स्यात् । न त्वेतदस्ति । स्थूलदेहोपहितत्वाभावेऽपि आमोक्षं अविद्यात-दुत्थान्तःकरणादिसंबंधात् तद्विशिष्टस्यैव स्वर्गनरकादिभोक्तृत्वात् । असंततेः स्वर्ग भोक्तुरंतःकरणादिसंबंधस्य नरकभोक्तरि अभावात् । अव्यतिकरः = कर्मव्यतिकरो वा फलव्यतिकरो वा न भविष्यति ” इति यत् शंकापरिहारकतया व्याख्यानं तदयुक्तम् । असंगस्याद्वितीयस्य परब्रह्मणः अविद्यांतःकरणादिसंबंधायोगादेरुक्तत्वेन अविद्यान्तःकरणाद्युपाधिनिवृत्तावपि मोक्षे ‘ स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा ’ इत्यादिवाक्यैः कर्तृत्वादीनां भेदस्य चोक्त्या ‘ अविद्यान्तःकरणाद्युपाधिसंबंधात् परब्रह्मैव जीवभावमापद्यते । स एव कर्मकर्ता स्वर्गादिफलभोक्ता ’ इत्युक्तेरयोगात् ।

‘ अंशो नाने ’ त्याद्यसूत्रे जीवस्यांशत्वं घटाकाशस्येव उपाध्य-वच्छेदबुध्योक्तं संप्रति एवकारेण अवच्छेदपक्षारुचिं सूचयन् ‘ रूपं रूपं प्रतिरूपो बभूव ’ इत्यादिश्रुतिसिद्धं प्रतिबिंबपक्षमुपन्यस्यति भगवान् सूत्रकारः ’ ( रत्नप्रभा ) इत्यवतार्य प्रसक्तस्य—

## ५० ॐ आभास एव च ॐ

इति सूत्रस्य ‘ आभास एव चैष जीवः परस्यात्मनो जलसूर्य-कादिवत्प्रतिपत्तव्यः, न स एव साक्षात् नापि वस्त्वन्तरम् । अतश्च ’—

इति यद्व्याख्यानं कृतं तत्र जीवः परमात्मनः प्रतिबिंबः जलसूर्य-कादिवत् इत्यस्मिन् विषये ‘ न स एव साक्षात् ’ इत्यभेदाभावो हेतूकृतः, स युक्त एव । जलसूर्यकस्य गगनस्थसूर्यादभेदाभावात्, तत्स-दृशत्वेन तदधीनत्वेन च प्रतिबिंबत्ववत् जीवस्यापि परमात्मना अभेदा-

भावात् परमात्माधीनत्वे सति परमात्मसदृशत्वेन प्रतिबिंबत्वसंभवात् । अद्वैतमतरीत्या स न युक्तः । अद्वैतमते जीवब्रह्मणोरभेदांगीकारात् । ' नापि वस्त्वन्तरं इति भेदाभावः हेतूक्तः, सोऽप्ययुक्तः ।

जीवब्रह्मणोर्भेदस्य अनेकश्रुतिसूत्रगीताप्रतिपाद्यत्वेन शंकराचार्यैः अनेकश्रुतिसूत्रगीतानां भेदप्रतिपादकतया स्वीकृतत्वेन च जीवस्य ब्रह्मणा भेदाभावरूपहेतोरसिद्धत्वात् । जलसूर्यकस्य गगनस्थसूर्यप्रतिबिंबत्वे यथा भेदस्य प्रयोजकत्वं न त्वैक्यस्य, तथा जीवस्य परमात्मप्रतिबिंबत्वे जीवब्रह्मणोर्भेदस्यैव प्रयोजकत्वेन, पर्वतो वन्हिमान् जलादिति वन्हि-साधनार्थं प्रयुक्तस्य जलस्य साध्याभाव ( वन्ह्यभाव ) साधकत्वेन विरुद्धत्ववत् प्रतिबिंबत्वसाधने प्रयुक्तस्य भेदाभावरूपहेतोः विरुद्धत्वाच्च । तेन ( परमात्मना भेदभावेन ) परमात्मप्रतिबिंबत्वसाधनायोगात् ।

यद्यपि वयं जीवस्य तदधीनत्वे सति तत्सादृश्यरूपं भेदव्याप्तं परमात्मप्रतिबिंबत्वमंगीकुर्मः । परंतु अद्वैत्यभिमतं बिंबभूतपरमात्मा-भिन्नत्वरूपं प्रतिबिम्बत्वं नांगीकुर्मः, प्रमाणाभावात् प्रमाणविरोधाच्च । भेदव्याप्ततदधीनत्वे सति तत्सदृशत्वरूपप्रतिबिम्बत्ववतां (प्रतिबिंबानां) जीवानां परस्परं बिम्बभूतपरमात्मना च भेदवत्त्वेन एकस्मिन् चैत्रे जीवे यत्किंचित्कर्मफलसंबन्धे सति न तद्भिन्नानां मैत्रादीनां न वा तद्भिन्नस्य परमात्मनः कर्मफलसंबन्धः प्रसज्यते इति कर्मफलसंबंधप्रस-क्त्यभावार्थं श्रुत्यादिप्रमाणसिद्धस्य भेदस्य प्रतिबिंबितत्वस्य कर्मसंबंधस्य सुखदुःखादिकर्मफलसंबंधस्य मिथ्यात्वं वेदस्य मिथ्यात्वं वेदप्रामाण्यस्य मिथ्यात्वं एवं सर्वेषां मिथ्यात्वकल्पनं प्रच्छन्नबौद्धत्वमेव मायिनां ज्ञापयति । बौद्धास्तु वेदो नास्ति, वेदप्रामाण्यं नास्ति, वेदबोध्याः पदार्था न संति, कर्म नास्ति, कर्मफलं नास्ति, भोक्ता नास्ति, भोग्यं

नास्ति, स्वर्गसुखादिकं नास्ति, स्वर्गो नास्ति, दुःखं नास्ति, दुःखसाधनीभूतं नरकादिकं नास्ति इत्युक्त्वा वयमवैदिका इति स्पष्टं कथयंति। एते मायिनस्तु वयं वैदिकाः वेदप्रामाण्याभ्युपगन्तारः वयमास्तिकाः अस्ति परलोकः, फलदाता ईश्वरोऽस्ति इति जनवंचनार्थं जिव्हाग्रभागे वदंति। वेदादीनां सर्वेषामपि मिथ्यात्वं [नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वरूपमसत्त्वं] "न शास्ता न शास्त्रं न पुण्यं न पापं न देवा न वेदा न यज्ञाः न तीर्थं, न निरोधो नचोत्पत्तिः न बद्धो नच साधकः। न मुमुक्षुर्न वै मुक्तः" इत्यादिवाक्यैः बौद्धवदेव अंगीकुर्वंति इति प्रच्छन्नबौद्धत्वमेषाम्।

बौद्धानां हि 'वचस्येकं मनस्येकं कर्मण्येकं' इत्युक्तरीत्या वेदादिकं कर्मादिकं च नास्तीति वचसा असत्त्वकथनं, मनस्यपि वेदादिकं कर्मादिकं च नास्तीति ज्ञानं, वचसा कर्मणः असत्त्वोक्तिवत् मनसि कर्मणः असत्त्वज्ञानवच्च वेदोक्तकर्माकरणं इति मनोवाक्कर्मस्वेकरूपता। अद्वैतिनान्तु वचसा वेदादीनां सत्त्वकथनं मनसि वेदादीनामसत्त्वज्ञानं कर्मण्येकं (वेदोक्तकर्मणामाचरणं) मनोवाक्कर्मसु भिन्नरीतिरिति। "वचस्यन्यत् कर्मण्यन्यद् दुरात्मनाम्। वचस्येकं मनस्येकं कर्मण्येकं सदात्मनाम्॥ इत्युक्तिं स्मारयन्ति अद्वैतिनः।

एतत्सूत्रव्याख्यान एव—'येषान्तु बहव आत्मानः तेच सर्वे सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोतीत्यारभ्य......ततश्च हेत्वविशेषात् फलाविशेष इत्येकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि सुखदुःखित्वं प्रसज्येतेति जीवानां विभुत्ववादिसांख्यकणादपक्षनिराकरणं कृतम्। तदस्माकमपि संमतमेवेति शंकरकृतदूषणे युक्तायुक्तत्वविचारो न क्रियते।

एवमेव "अदृष्टानियमात्" "अभिसंध्यादिष्वपि चैवम्" "प्रवेशादिति चेन्नान्तर्भावात्" इति त्रिसूत्र्यामपि जीवो विभुरिति वदतां सांख्यकणादादीनां मतनिराकरणं कृतम्। तदप्यस्माकं संमतमेवेति न शंकरकृतनिराकरणे युक्तायुक्तत्वविचारः क्रियते। "तस्मात् जीवो ब्रह्मांश इव तत्तन्त्रतया न त्वंश इति तात्पर्यार्थः" इति भामत्युक्तरीत्या जीवाः परमात्मनो भिन्ना एवेति पक्ष एव साधुः। सर्वदोषरहितत्वात् प्रमाणसद्भावाच्च। न त्वात्मैकत्वपक्षः (जीवब्रह्मणोरैक्यपक्षः) सर्वदोषास्पदत्वात्प्रमाणाभावाच्चेति।

इति शंकरभाष्यखण्डने द्वितीयाध्यायस्य तृतीयः पादः।



# द्वितीयाध्यायचतुर्थपादशंकरभाष्यपरीक्षा
## ( विचारः )



"तथा प्राणाः" ( २-४-१ ) "गौण्यसंभवात् २" "तत्प्राक्श्रुतेश्च ३" "तत्पूर्वकत्वाद्वाचः ४" इति चतुस्सूत्रात्मकमेकमधिकरणम् । तत्र 'तथा प्राणा' इति प्रथमसूत्रस्य 'तत्तेजोऽसृजत' इत्यादिषु उत्पत्तिप्रकरणेषु प्राणस्योत्पत्तेरकथितत्वात् 'असद्वा इदमग्र आसीत्' इत्यत्रासतः स्थितिमुक्त्वा असच्छब्दवाच्यस्य प्राणत्वकथनेन प्राणानां प्रलयकाले सत्त्वसिद्धौ अनुत्पत्तेरप्याम्नानात् । यथाग्नेर्ज्वलन्तः क्षुद्रा विष्फुलिंगा व्युचरंति एवमेवैतस्मादात्मनः सर्वे प्राणाः' इति 'एतस्माज्जायते प्राणः' (मुं.) इति सप्तप्राणाः प्रभवंति तस्मात् । (मुं.) इत्यादिश्रुतौ प्राणस्योत्पत्तेराम्नानात् प्राण उत्पद्यते न वेति संशये, अथवा प्रागुत्पत्तेः सद्भावश्रवणात् 'प्राणाः नोत्पद्यन्ते उत्पत्तिश्रुतिर्गौणी' इति पूर्वपक्षे वा प्राप्ते,

## १ ॐ तथा प्राणाः ॐ

इति सूत्रं प्रवृत्तम् । तस्य च 'यथा आकाशादयः परस्य ब्रह्मणो विकाराः [ ब्रह्मण उत्पद्यंते ] तथा प्राणा अपि ब्रह्मणो विकारा (उत्पद्यन्ते)' इति यद्व्याख्यानं तत्र प्राणस्योत्पत्तिः या समर्थिता सा युक्तैव । यथा कुलालात् मृदा घटो जायते इति मृदो घटं प्रत्युपादानकारणत्वं, कुलालस्य निमित्तकारणत्वं तथा प्रकृते प्राणादिकं

प्रति परंपरया [ महदादिद्वारा ] उपादानकारणत्वात् ब्रह्मणो निमित्त-कारणत्वात् । परंतु प्राणो ब्रह्मविकार इति ब्रह्मविकाररूपाउत्पत्तिर्या उक्ता सा अयुक्तैव । " निर्विकारोऽक्षरश्शुद्धः " इत्यादिश्रुत्या निर्विकार-त्वेनावगतस्य ब्रह्मणः परिणामरूपोपादानकारणत्वायोगेन आकाशादि-वत् प्राणा अपि ब्रह्मणो विकारा इत्युक्तेरयोगात् ।

नच ' यथा शुक्तिकोपादानकं, तथा ब्रह्मण्यारोपितं आकाश-प्राणादिकं ब्रह्मोपादानकमित्यभिप्रायेणैव आकाशप्राणादयः ब्रह्मणो विकारा इत्युक्तमि ' ति वाच्यम् । शुक्तिकायामारोपिते रजते शुक्ति-विकारत्वव्यवहाराभाववत् ब्रह्मण्यरोपिततया अंगीक्रियमाणेषु आकाशा-दिषु ब्रह्मणो विकारा इति कथनायोगात् । वस्तुतो निर्धर्मके ब्रह्मणि आकाशप्राणाद्यारोपायोगाच्च । स्वीकृतश्चाद्वैतिभिर्भामतीकारादिभिः " परमार्थस्तु न भ्रमो नाम " इत्यादिग्रन्थेन निर्धर्मके ब्रह्मणि भ्रमा संभवः । विशेषविचारस्तु ' न वियदश्रुतेः ( २-३-१ ) इत्यधिकरणे कृतो द्रष्टव्यः ।

## २ ॐ गौण्यसंभवात् ॐ

इति द्वितीयसूत्रस्य ' एतस्माज्जायते प्राणः ' इत्याद्युत्पत्तिश्रुति-र्गौणी न भवति । गौणत्वस्यासंभवात् । उत्पत्तिश्रुतेर्गौणत्वांगीकारे ' कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ' ' येनाश्रुतं भवति' इत्याद्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः हानिप्रसंगात् ' इति यद्व्या-ख्यानं कृतं तदप्ययुक्तम् । शुक्तावध्यस्तं रजतं शुक्त्यज्ञानदशायामेव भासते । शुक्तिज्ञाने सति रजतं निवर्तते । रजतज्ञानमपि निवर्तते । तथा ब्रह्मणः अज्ञानदशायामेव ब्रह्मणि कल्पितं आतत्वादिजगद्भासते ।

ब्रह्मणि ज्ञाते ब्रह्मण्यध्यस्तं निवर्तते इति ' विज्ञातमविजानतां ' (केन.) इत्यादिश्रुतिव्याख्याने शंकराचार्यानन्दगिर्यादिभिरेवोक्तत्वेन वस्तुतस्तथैवानुभवेन च ब्रह्मणि ज्ञातेब्रह्मण्यध्यस्तपदार्थज्ञानासंभवात् । एक ( ब्रह्म ) विज्ञानेन सर्वस्य ( ब्रह्मण्यध्यस्तजगतः ) ज्ञानप्रतिज्ञाया एव शशविषाणायितत्वेन शशविषाणायितप्रतिज्ञाघटनाय जगतो ब्रह्मविकारत्वस्वीकारस्यायोगात् । अत एव [ एकब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयोगादेव ] ' येनाश्रुतं श्रुतं भवति ' । इति वाक्यव्याख्यावसरे ' तमादेशं विशिनष्टि, येन आदेशेन श्रुतेन अश्रुतमपि अन्यत् श्रुतं भवति, अमतं मतं अतर्कितं तर्कितं भवति अविज्ञातं विज्ञातं भवतित् अनिश्चितं निश्चितं भवति इति । सर्वानपि वेदान् अधीत्य सर्वं च अन्यवेद्यमधिगम्यापि अकृतार्थ एव भवति यावदात्मतत्त्वं न विजानातीत्याख्यायिकातोऽवगम्यते ' इति वाक्येन वेदाध्ययनस्य वेदार्थभूतजगज्ज्ञानस्य च ब्रह्मज्ञानमेव फलं ब्रह्मज्ञानाभावे वेदाध्ययनं व्यर्थम् । वेदार्थभूतब्रह्मान्यजगज्ज्ञानं च व्यर्थमेव ( अकृतार्थ एव भवति ) इति जगतः ज्ञानस्य ब्रह्मज्ञानं फलम् इत्युक्तम् । नतु ब्रह्मज्ञानेन जगज्ज्ञानं भवतीति उक्तं शंकराचार्यैः । विशेषविचारस्तु वियदधिकरण एव कृतो द्रष्टव्यः ।

## ३ ॐ तत्प्राक्श्रुतेश्च ॐ

इति सूत्रस्य ' प्राणानामुत्पत्तिश्रुतिर्मुख्यैव । ' एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी ॥ ' इत्याद्युत्पत्तिवाक्येषु जायत इति शब्दः प्राणे प्राक् श्रुतः । स एव शब्द आकाशादिषु अनुवर्तते । तत्राकाशादिष्वनुवर्तमानः जायते इति शब्दः मुख्यार्थक एव । आकाशस्योत्पत्तेर्वियधिकरणे व्यवस्थापि-

तत्वात् । तथाच एकत्र मुख्यार्थकः जायते इति शब्दः प्राणेष्वपि मुख्य एवेत्यंगीकृत्य " न ह्येकस्मिन् प्रकरणे एकस्मिन् वाक्ये एकःशब्दः सकृदुच्चरितः बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौणः इत्यध्यवसातुं शक्यम्, वैरूप्यप्रसंगात् " इति यदुक्तं तदप्यसमंजसम् । यथा एकस्मिन् ब्रह्मप्रकरणे ' अन्नं ब्रह्म ' ' आनन्दो ब्रह्म ' इति वाक्ययोः श्रुतस्य ब्रह्मशब्दस्यान्ने गौणत्वं आनन्दे मुख्यता । यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो गौण्या वृत्त्या प्रयुज्यते ( गौणः ) विज्ञेये ब्रह्मणि मुख्यः इत्यद्वैतिभिरंगीकृतत्वेन तथा जायते इति शब्दस्यापि प्राणे गौणत्वस्य [ अमुख्यत्वस्य ] आकाशादिषु मुख्यत्वस्य संभवात् । नच अन्ने श्रूयमाणो ब्रह्मशब्दः भिन्नः, आनन्दे श्रूयमाणो ब्रह्मशब्दो भिन्न इति तत्र भिन्नभिन्नार्थताया युक्तत्वेऽपि अत्र जायते इत्येकस्यैव पदस्य आकाशादिषु मुख्यार्थकतायाः स्वीकारात् कथं प्राणे अमुख्यार्थस्वीकार इति वाच्यम् । " पदस्यानुषंगो न पदार्थस्य, तद्धि क्वचिन्मुख्यं क्वचिदौपचारिकं संभवासंभवाभ्यां वक्तुं शक्यत्वात् " ● आस्तामयमयुक्तत्वविचारः । प्राणोत्पत्तिप्रतिपादनं युक्तमेवेति ।

प्राणस्य उत्पत्यश्रवणमिति यदुक्तम् तन्न युक्तं । वाक्प्राणमनसां तेजोऽबन्नपूर्वकत्वोक्तेरित्याह—

## ४ ॐ तत्पूर्वकत्वाद्वाचः ॐ

इति एतत्सूत्रस्य ' वाक्पदं वाक्प्राणमनसामुपलक्षणम् । तथाच वाचः = वाक्प्राणमनसां ' अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक् " इति ब्रह्मप्रकृतिकतेजोऽबन्नपूर्वकत्वाभिधानात् ' इति

● भामतीकारेणापि एवमेव समाहितम् ।

यत् तेजोऽबन्नानां ब्रह्मप्रकृतिकत्वं ( ब्रह्मविकारित्वं ) उक्तं, तन्न युक्तम्। निर्विकारस्य ब्रह्मणस्तेजोऽबन्नोपादानत्वासंभवस्य उक्तत्वादिति ।

## ५ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ

## ६ ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ

इति सूत्रद्वयात्मकेऽधिकरणे प्राणाः सप्त वाऽष्ट वा नव वा इत्यादिसंख्याविषयकश्रुतिविरोधः परिच्छिद्यते इति नात्र विवादविशेष इति न युक्तायुक्तत्वविचारः क्रियते ।

## ७ ॐ अणवश्च ॐ

इति सूत्रेऽपि प्राणानामणुत्वस्थापनस्य क्रियमाणत्वात् तत्र विवादविशेषाभावात् न युक्तायुक्तत्वविचारः क्रियते । परंतु एताभ्यामधिकरणाभ्यां प्राणानां सप्तसंख्यावत्त्वसाधनात् असतः संख्यावत्त्वायोगात् सत्यत्वं सिध्यतीति एते अधिकरणे मिथ्यात्ववादिनां प्रतिकूले एव ।

## ८ ॐ श्रेष्ठश्च ॐ

इति सूत्रस्य " मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकार एव । " " एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च " [ मुं. ] इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात् " इति व्याख्यानमप्ययुक्तम् । निर्विकारस्य ब्रह्मणः प्राणरूपेण विकारासंभवस्य पूर्वमेव व्यवस्थापितत्वादिति ।

९ ॐ न वायुक्रिये पृथगुपदेशात् ॐ

१० ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ

११ ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ

१२ ॐ पंचवृत्तिर्मनोवद्व्यपदिश्यते ॐ

इति चतुस्सूत्रात्मकाधिकरणस्य प्रथमसूत्रे प्राणो वायुरूपो वा करणव्यापाररूपो वा इति संशये, न प्राणो वायुरूपः न वा करणव्यापाररूपः, वायोः करणव्यापाराच्च पृथक् (भिन्नतया) उपदेशादिति सिद्धांतः कृत इति नात्र द्वैतिभिर्विवदितव्यमस्ति। प्रत्युत प्राणवाग्व्यादीनां भेदबोधनात् अधिकरणमिदं द्वैत्यनुकूलमेव सर्वाभेदवादिनामद्वैतिनां प्रतिकूलमेव चेति।

चक्षुरादिवदिति द्वितीयसूत्रे च शरीरे जीवस्येव प्राणस्य स्वातंत्र्यशंकायां चक्षुरादीनि यथा जीवस्य कर्तृत्वभोक्तृत्वे प्रति उपकरणानि न स्वतंत्राणि, तथा प्राणोऽपि जीवस्य सर्वार्थकारित्वेन उपकरणभूतो न स्वतंत्रः। तर्हि प्राणस्य श्रेष्ठत्ववाचः का गतिरिति चेत्, इतरकार्यकर्तृषु मंत्री प्रधानोऽपि राजानमपेक्ष्य अस्वतंत्रः तथा प्राणः इतरकरणापेक्षया श्रेष्ठोऽपि जीवे अस्वतंत्र इति। कुतः, तत्सहशिष्ट्यादिभ्यः, तैः चक्षुरादिभिःसह कथनात्। अस्वातंत्र्येण समानधर्मवतां हि सहकथनमिति, प्राणस्य जीववद्देहे स्वातंत्र्यशंकानिवृत्तिः कृता। इदमपि सूत्रं पूर्वसूत्रवत् प्राणादीनां भेदबोधनात् सत्यत्वबोधनाच्च द्वैतिनामनुकूलमद्वैतिनां प्रतिकूलमेव।

'अकरणत्वाच्च न दोषस्तथाहि दर्शयति' इति तृतीयसूत्रस्य "यदि चक्षुरादिवत्प्राणस्य जीवं प्रति करणत्वं स्वीक्रियेत तदा यथा चक्षुरादीनां रूपादयः विषयाः संति, तथा प्राणस्यापि विषयांतर कल्पनाप्रसंगः। यथा रूपालोचनादीनि एकादश कार्याणि संति इति तन्निर्वाहार्थं चक्षुराद्येकादशेन्द्रियाणि संगृहीतानि तथा द्वादशमपरं कार्यं नास्ति इति प्राणाः द्वादशः इत्यंगीकारो व्यर्थ इति पूर्वपक्षे, चक्षुरादीनां करणत्वात् विषयस्य सत्त्वमावश्यकम्। प्राणस्य अकरणत्वान्न विषयसत्त्वस्यावश्यकताख्यदोषोऽस्ति। नच प्राणस्य कार्याभावात् वैयर्थ्याख्यदोषः। 'अथ ह प्राणा अहं श्रेयसे व्यूदिरे' इत्यादिश्रुतयः वागाद्युत्क्रमणे वागादिव्यापाररहितं जीवनं दर्शयित्वा प्राणोत्क्रमणे शरीरपातः वागादीन्द्रियशैथिल्यमित्यादिरूपं कार्यान्तरं दर्शयंति इति न कार्याभावदोषः" इति व्याख्यानं पूर्ववत् अद्वैतमताननुकूलं द्वैतिनामनुकूलमेवेति।

'पंचवृत्तिर्मनोवद्व्यपदिश्यते' इति चतुर्थसूत्रस्य प्राणस्य प्राणापानव्यानोदानसमानरूपपंचवृत्तित्वं मनोवद्व्यपदिश्यते। पंचवृत्तीनां च प्राणः प्राग्वृत्तिः उच्छ्वासादिकर्मा, अपानोऽर्वाग्वृत्तिः निश्श्वासादिकर्मा, व्यानस्तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः, उदानः ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वंगेषु योऽन्नरसान्नयतीति इति कार्यभेदश्च व्यपदिश्यते इति व्याख्यानमपि पूर्वसूत्रवदेवाद्वैतिनां प्रतिकूलं द्वैतिनामनुकूलमेव। अवान्तरयुक्तत्वायुक्तत्वविचारः प्रकृतानुपयुक्तत्वान्न क्रियते इति।

## १३ ॐ अणुश्च ॐ

इति सूत्रस्य 'अणुश्चायं मुख्यः प्राणः' इति अणुत्वं च

सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वमिति व्याख्यानमपि प्राणस्य अणुत्वकथनादिना सत्यत्वं महत्परिमाणवतः परमात्मनः भिन्नत्वं च कथयतीति अद्वैतिनां प्रतिकूलं द्वैतिनामनुकूलमिति ।

## १४ ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ
## १५ ॐ प्राणवता शब्दात् ॐ
## १६ ॐ तस्य च नित्यत्वात् ॐ

इति सूत्रत्रयात्मकमधिकरणम् । तत्र प्रथमसूत्रे 'ते प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवंति आहोस्वित् देवताधिष्ठिताः (स्वनियामकदेवताप्रेरिताः) सन्तः प्रभवंति इति संशये, ज्योतिराद्यधिष्ठानं ज्योतिरादिभिः = अग्न्याद्यभिमानिनीभिर्देवताभिः, अधिष्ठितं वागादिकरणजातं स्वकार्येषु प्रवर्तत इति, कुतः, तदामननात् श्रुतौ अभिमानिदेवतानां तत्तद्व्यापारप्रवर्तकतया प्रवेशकथनादिति ।

'प्राणवता शब्दात्' इति द्वितीयसूत्रे देवतानां प्राणादिप्रेरकत्वे सुखदुःखभोक्तृत्वं तासामेव स्यात् नतु शारीरस्य (जीवस्य) इति शंकां परिहरति 'प्राणवता शब्दात्' इति । देवतानां प्राणाधिष्ठातृत्वेऽपि, प्राणवता = कार्यकारणसंघातस्वामिना शारीरेण जीवेनैव एषां प्राणानां संबन्धः, शब्दात् = शारीरेणैव प्राणानां संबन्धबोधकश्रुतेः ।

'तस्य च नित्यत्वात्' इति तृतीयसूत्रस्य "तस्य च जीवस्य शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसंभवात् सुखदुःखोपभोगसंभवाच्च, न देवतानाम् । ता च देवताः परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिन् शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति । श्रुतिश्च भवति—

'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ' ( बृ. १-५-३) इति। तस्मात् सतीष्वपि करणानां नियंत्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति " । इति व्याख्यानेन करणानि संति, तेषां प्रेरकदेवताः संति ताभिः प्रेरिताः प्राणाः स्वं स्वं कर्म कुर्वन्ति, तादृश-कर्मजन्यं फलं जीव एव भुंक्ते नतु देवताः भुंजते, तासामुच्चपदे स्थितत्वात् । अधमजीवशरीरे स्थित्वा नीचफलं कथं भुंजीरन् ?। जीव-शरीरे स्थित्वा तत्कृतनीचफलं न भुंजते, किंतु पुण्यफलमुपभुंजते इत्याद्युक्त्या इदमधिकरणं शंकरव्याख्यानं च अद्वैतिनां प्रतिकूलं द्वैतिनामनुकूलमेवेति ।

## १७ ॐ त इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ

पूर्वाधिकरणेषु मुख्यः प्राण एकः इतरे चैकादश प्राणाः प्रसक्ताः । तत्र संदेहः इतरे प्राणाः किं मुख्यस्यैव प्राणस्य स्वरूपाणि उत तत्त्वान्तराणि ( भिन्नानि ) इति ।

'हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन् ' (बृ. १-५-२१ ) इति सर्वेषां प्राणानां मुख्यप्राणात्मकत्वकथनात् । मुख्यप्राणस्येतरप्राणानां च प्राणशब्दवाच्यत्वात् वागाद्याः प्राणाः मुख्यप्राण स्वरूपाण्येवेति पूर्वपक्षे, वागादीन्द्रियाणि (एकादशप्राणाः) मुख्यप्राणात् भिन्ना एव । तद्व्यपदेशात्= भेदेन व्यपदेशात् । ' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ' (मुं. २-१-३) इत्येवंजातीयकासु श्रुतिषु पृथक् प्राणो व्यपदिश्यते पृथक्चेन्द्रियाणीति । तस्मात्तत्त्वान्तरभूता एव वागादयः मुख्यप्राणादिति ।

## १८ ॐ भेदश्रुतेः ॐ

भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते, 'ते ह वाचमूचुः' । ( बृ. १-३-२ ) इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्योपसंहृत्य वागादिप्रकरणम्, 'अथ हेममासन्यं प्राणमूचुः' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात् । तथा 'मनो वाचं प्राणं तान्यात्मनेऽकुरुत' इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे इति ।

## १९ ॐ वैलक्षण्याच्च ॐ

१ सुप्तेषु वागादिषु मुख्यः प्राणो जागर्ति इत्येवं सुप्तिमत्त्व-जागरणवत्त्वरूपौ विरुद्धधर्मौ ।

२ प्राणस्य मृत्युना अनाप्तत्वम् । इतरेषां वागादीनां मृत्युना आप्तत्वम् ।

३ प्राणस्य देहादुत्क्रान्त्या देहस्य पतनं ( प्राणस्य स्वोत्क्रान्त्या देहपतनहेतुत्वं ) इतरेन्द्रियाणामुत्क्रान्त्यापि देहस्य अपतनम् ( देहपतनाहेतुत्वम् )

४ इन्द्रियाणां विषयालोचनहेतुत्वं न मुख्यप्राणस्य इत्याद्या बहवो लक्षणभेदाः प्राणानामिन्द्रियाणां चेति, विरुद्धधर्मवत्त्वात् मुख्य-प्राणस्य इतरवागादिभ्यो भेदः सिध्यति, इति त्रिसूत्र्या मुख्यप्राणस्य इतरेन्द्रियेभ्यो भेदं व्यवस्थाप्य 'त एतस्यैव सर्वे रूपमभवन्' इति प्राणरूपत्वाभिधायकश्रुतेः श्रेष्ठत्व, कनिष्ठत्व मृत्य्वनभिभूतत्वादि विरुद्ध-धर्मवत्त्वेन अभेदबोधकत्वासंभवात् श्रुतावुक्तं प्राणरूपताभवनं वागादिषु

परिस्पन्दलाभस्य मुख्यप्राणाधीनत्वेन योज्यं नतु तदेकतारूपम् ( तादात्म्यं ) इति व्यवस्थापयामासुश्शंकराचार्याः ।

भामतीकारा अपि—" एवं ( इन्द्रियाणां मुख्यप्राणरूपत्वमिति पूर्वपक्षे) प्राप्ते उच्यते-मुख्यात्प्राणात् तत्त्वान्तराणीन्द्रियाणि, तत्र तत्रभेदेन व्यपदेशात् , मृत्युप्राप्ताप्राप्तत्वलक्षणविरुद्धधर्मसंसर्गश्रुतेः, अर्थक्रिया-भेदाच्च । याऽपि च प्राणरूपतामिन्द्रियाणामभिदधाति श्रुतिः, तत्रापि पौर्वापर्यालोचनायां भेद एव प्रतीयते इत्युक्तं भाष्यकृता । तस्माद्बहु-श्रुतिविरोधात्पूर्वापरविरोधाच्च प्राणरूपताभिधानमिन्द्रियाणां प्राणाय-त्ततया भाक्तं गमयितव्यम् " इति वाक्यैः विरुद्धधर्मवत्त्वादिना वागादीन्द्रियाणां मुख्यप्राणाद्भेदं व्यवस्थाप्य अभेदबोधकानां वाक्यानां ' राजा राष्ट्र मिति वाक्यस्य राष्ट्रस्य राजाधीनत्वेन राष्ट्रस्य यथा राज्ञा सामानाधिकरण्यव्यपदेशः न त्वभेदेन, तथा इतरेन्द्रियाणां प्राणा-धीनत्वेन प्राणभवनव्यपदेशो न तु प्राणरूपतये"ति, कथयामासुः– इत्येवमेतदधिकरणेन प्राणस्येतरेन्द्रियाणां च भेदकधर्मसत्त्वं तेन च तेषां भेदः साधितः । तद्विरुद्धत्वादभेदबोधकतया भासमानानां श्रुती-नामभेदबोधकत्वासंभवात् तदधीनत्वाद्यर्थकथनं इत्यादि यदुक्तं तद्द्वैति-नामनुकूलम् । सर्वमिथ्यात्ववादिनां सर्वभेदवादिनामद्वैतिनां प्रति-कूलमेव ।

एतदधिकरणन्यायेनैव अहं ब्रह्मास्मीत्यादिवाक्यैः जीवब्रह्मणोर-भेद इति पूर्वपक्षे प्राप्ते मुख्यात् ब्रह्मणः ( परब्रह्मणः ) जीवा भिन्नाः । तत्र तत्र भेदेन व्यपदेशात्, अपहतपाप्मत्वपापवत्त्वसर्वज्ञत्वाल्पज्ञत्वाद्य-नेकविरुद्धधर्मोपदेशात् अर्थक्रियाभेदाच्च । या अपि च ब्रह्मरूपतां जीवानामभिदधति श्रुतयः, तत्रापि पौर्वापर्यालोचनायां भेद एव

प्रतीयते । तस्माद्बहुश्रुतिविरोधात् पूर्वापरविरोधाच्च ब्रह्मरूपताभिधानं जीवानां तदधीनतया गमयितव्यम् इति साधयितुं शक्यत्वात् अत्यन्तं प्रतिकूलमेवेदमधिकरणमद्वैतिनाम् इति सिध्यति । तत्त्वमस्यादिवाक्यानां ऐक्यप्रतिपादकत्वं भासते इत्यंगीकृत्य प्रसक्तिं कृत्वा निराकृतम् । वस्तुतोऽभेदप्रसक्तिरेवाद्वैतमतरीत्याः नास्ति । तत्त्वमस्यादिवाक्यानां बोधकत्वस्यैवाद्वैतिभिरनंगीकारेण बोधकत्वेऽपि लक्षणया चित् इत्येव भेदविषयकबोधस्यांगीकारेण चिदितिबोधस्यापि लक्षणाया असंभवादिना उत्पत्त्यसंभवेन 'ईश्वरोऽह' मित्यादिगीतावाक्यैः अभेदज्ञानिनो निन्दनाच्च अभेदबोधकतया भासमानवाक्यान्येव न सन्तीति । प्रत्युत जीवब्रह्मणोर्भेद एव 'पृथगात्मान' मित्यादिश्रुतिभिः, 'उत्तमः पुरुषस्त्वन्यः' इत्यादिगीतावाक्यैः, 'भेदव्यपदेशाच्च' 'भेदव्यपदेशाच्चान्य' इत्यादिब्रह्मसूत्रैश्च सिध्यति इति ।

एवंरीत्या जीवब्रह्मणोर्भेदरूपप्रमेयव्यवस्थायामपि एतदधिकरणोक्तन्यायः द्वैतिनामनुकूलः अद्वैतिनां प्रतिकूल एवेति ।

## २० ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ

'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' (छां. ६-३-२) तत्र संशयः, किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित्परमेश्वरकर्तृकमिति । तत्र प्राप्तं तावज्जीवकर्तृकमेवेदं नामरूपव्याकरणमिति । कुतः ? अनेन जीवेनात्मना इति विशेषणात् । यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानीत्येवंजातीयके प्रयोगे चारकर्तृकमेव सत् सैन्यसंकलनं हेतुकर्तृत्वाद्राजात्मन्यध्यारोपयति संकलयानीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सत्

नामरूपव्याकरणं हेतुकर्तृत्वाद्देवतात्मन्यध्यारोपयति व्याकरवाणीत्युत्तम-पुरुषप्रयोगेण । अपिच डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम् । तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्ते अभिधत्ते—संज्ञामूर्तिक्लृप्तिः नामरूपव्याकरणं, त्रिवृत्कुर्वतः=तेजोऽबन्नानामेकैकं त्रिभिर्मिश्रं कुर्वतः परमात्मन एव, कुतः उपदेशात्=' सेयं देवतैक्षत ' इत्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मण एव नामरूपव्याकरणो ( निर्माणो ) पदेशात् ' इति । ' नच गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति । येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत् ' इति यद्व्याख्यानं तद्युक्तमेव। परंतु ' नच जीवो नाम परमेश्वरादत्यंतभिन्नश्चार इव राज्ञः, आत्मनेति विशेषणात् उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति । परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः ' इति वाक्येन जीवपरमात्मनोरभेदात् जीवकृतमपि व्याकरणं परमेश्वरकृतमिति यदुक्तं तदतितुच्छम् । जीवब्रह्मणोरैक्यबोधकप्रमाणाभावात् नामरूपव्याकरणविशिष्टस्य जीवस्य त्रिवृत्करणादिविशिष्टेन परमेश्वरेण ऐक्यायोगाच्च । विरुद्धधर्मविशिष्टयोरैक्यासंभव इति स्वीकृतं च शंकराचार्यैः—

" सर्वेशत्वस्वतंत्रत्वसर्वज्ञत्वादिभिर्गुणैः । सर्वोत्तमस्सत्यकामः सत्यसंकल्प ईश्वरः ॥ तत्पदार्थस्त्वमर्थस्तु किंचिज्ज्ञो दुःखजीवनः । संसार्ययं तद्गतिको जीवः प्राकृतलक्षणः ॥ कथमेकत्वमनयोर्घटते विपरीतयोः । प्रत्यक्षेण विरोधोऽयं " ( सर्व० वेदांतसारसं० ) इत्यादिना ।

तथाच नामरूपव्याकरणस्य जीवकर्तृकत्वं स्वीकृत्य जीवब्रह्मणोरभेदात् परमेश्वरकर्तृयमपि भवतीत्यंगीकरणं स्वव्याहतम् ।

## २१ ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ

' अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ( छां. ६-५-१ ) इति श्रुत्या मांसादि = मांसमनःपुरीषाणि, भौमं = भूमित्रिकृताद्यमानान्नकार्यम्, एवं इतरयोः = अप्तेजसोः यथाशब्दं कार्यमवगंतव्यम् । मूत्रं लोहितं प्राणाश्चापांकार्यम् । अस्थि मज्जा वाक् तेजसः इति ।

एतदुपरि--' तासां त्रिवृतं त्रिवृतमेकैकामकरोत् ' इति श्रुतेःसर्वमेवत्रिवृत्कृतं भूतभौतिकमिति किं कृतस्तर्ह्ययं विशेषव्यपदेशः इदं तेजः इमा आपः इदमन्नमिति तथा आध्यात्म्यमिदमन्नस्याशितस्य कार्यं मांसादि, इदमपां पीतानां कार्यं लोहितादि; इदं तेजसोऽशितस्य कार्यमस्थ्यादि इति शंकायां प्रवृत्तं सूत्रं—

## २२ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ

इति । " सत्यपि त्रिवृत्करणे क्वचित् कस्यचित् भूतधातोः भूयस्त्वमुपलभ्यते । अग्नेस्तेजोभूयस्त्वम् । उदकस्याब्भूयस्त्वं, पृथिव्या अन्नभूयस्त्वमिति भूयस्त्वरूपवैशेष्यनिमित्तकमेव । इदं तेजः इमा आपः इदमन्नमिति विशेषव्यपदेश इति " इति यद्व्याख्यानं तत्तु द्वैतिनामनुकूलम् । परंतु सर्वं जगत् परब्रह्मणि शुक्तिकायां रजतमिव कल्पितमिति वदतामद्वैतिनां प्रतिकूलमेव । कल्पिते शशविषाणवन्मिथ्याभूते वस्तुनि नहि कश्चिद्विशेषस्तिष्टति इति । तस्मात् अद्वैतिनामेतत्पादीयसूत्राणां व्याख्यानमप्रामाणिकं प्रमाणविरुद्धं चेत्युपेक्षणीयमेव प्रेक्षावद्भिरिति दिक् ।

इति द्वितियाध्याय चतुर्थपाद शांकरभाष्यायुक्तत्वप्रदर्शनम् ।

॥ श्रीः ॥

श्रीवेदव्यासप्रणीतानि

# श्रीमद्ब्रम्हसूत्राणि

(तृतीयाध्यायः)

जगद्गुरुश्रीमदुत्तरादिमठाधीश अभिनवानन्दतीर्थ प्रातःस्मरणीय

श्री श्री सत्यध्यानतीर्थविरचित

# भेदपराण्येव खलु ब्रम्हसूत्राणि च

तृतीयो भागः

॥ श्रीः ॥

श्रीवेदव्यासप्रणीतानि

# श्रीमद्ब्रम्हसूत्राणि

(तृतीयाध्यायः)

जगद्गुरुश्रीमदुत्तरादिमठाधीश अभिनवानन्दतीर्थ प्रातःस्मरणीय

श्री श्री सत्यध्यानतीर्थविरचित

# भेदपराण्येव खलु ब्रम्हसूत्राणि च

तृतीयो भागः

# तृतीयाध्याय प्रथमपाद शांकरभाष्यविचारः



( अधिकरणं १ )

१. तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्- २. त्र्यात्मकत्वात्तु भूयस्त्वात्. ३. प्राणगतेश्च. ४. अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्. ५. प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः. ६. अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः. ७. भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति.

इति सप्तसूत्रात्मकमेकमधिकरणम्. तत्र जीवः देहबीजभूतैः असंपरिष्वक्तो गच्छत्याहोस्वित् संपरिष्वक्तः (युक्तः) गच्छति इति संशये, करणस्वीकारवत् भूतस्वीकारश्रवणात् भूतैरसंपरिष्वक्त एव गच्छतीति पूर्वपक्षे वा प्राप्ते, तदन्तरप्रतिपत्ताविति प्रथमसूत्रेण देहान्तरप्रतिपत्त्यर्थं जीवः भूतसंपरिष्वक्त एव गच्छति कुतः प्रश्ननिरूपणाभ्यां 'वेत्थ यथा पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नेन, 'इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इति निरूपणेन च ( उत्तरेण च ) अद्भिः परिवेष्टितो गच्छतीति ज्ञायमानत्वात्' इति यदुक्तं तद्युक्तमेव। परन्तु अद्वैतमतस्याननुकूल. देहादीनां मरणस्य भूतानां च सत्यत्वसिद्धेः। न हि कल्पितस्य रंहणादिकमुपपद्यते ।।

उदाहृताभ्यां प्रश्ननिरूपणाभ्यां केवलाभिरद्भिः संपरिष्वक्तो गच्छतीत्येवावगम्यते । अपूशब्दश्रवणादित्याशंकायां प्रवृत्तस्य 'त्र्यात्मकत्वात्तु भूयस्त्वा'ति द्वितीयसूत्रस्य अपां त्र्यात्मकत्वात्

पृथिवीतेजोजलरूपत्वात् बाहुल्याच्च मरणकाले अद्भिः सह गमन-सिद्धौ भूतत्रयेण गमनं सिध्यतीति व्याख्यानमपि भूतानां त्रिवृत्कर-णादीनां च सत्यत्वसाधकतया अद्वैतिनां प्रतिकूलमेव ।

'प्राणगतेश्चे' ति तृतीयसूत्रेण ' तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ. ४-४-२) इति श्रुत्या जीवः यदा उत्क्रामति तदा जीवोत्क्रमणमनुसृत्य प्राण उत्क्रामति उत्क्रामन्तं प्राणमनुसृत्य सर्वे प्राणा उत्क्र मन्ति इति जीवेन सह प्राणो-त्क्रमणश्रवणात् प्राणस्य चाश्रयमंतरा स्थित्यसंभवेन आश्रयीभूतानां भूतान्तरोपसृष्टानामपामपि गतिः सिध्यतीति कथनमपि प्राण, प्राणगति, भूताश्रयत्वादिनां सत्यत्वसाधकतया अद्वैतिनां प्रतिकूल-मेवेति । न हि सर्वेषां मिथ्यात्वे मिथ्याभूतप्राणगत्यादिना भूताश्रयत्वं सिध्यति ।

' तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ' इति श्रुतिः जीवोत्क्रमणम-नुसृत्य प्राण उत्क्रामति इति जीवोत्क्रमणं पूर्वं अनन्तरं प्राणोत्क्रमणं बोधयतीति सिध्या जीवस्य विभुत्वमंगीकृत्य कथं तस्योत्क्रमणादिकं ? न हि विभोरुत्क्रमणं संभवतीत्याशंक्य उपाधिभूतप्राणोत्क्रमणे जाते तदुपाधिके जीवे उत्क्रमणं गौणमिति जीवोत्क्रमणस्य प्राणोत्क्रमणा-नंतरभावित्ववक्तारोऽद्वैतिनो निरस्ताः । ' तमुत्क्रामन्तं प्राणोऽनूत्क्रा-मति ' इति श्रुतौ प्राणोत्क्रमणस्य जीवोत्क्रमणानुसारित्वोक्त्या तद्विरुद्धत्वादिति ।

' अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ' इति चतुर्थसूत्रे 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' (बृ. ३-२-१३) इति श्रुत्या प्राणानां अग्न्यादीन् प्रति गमनश्रवणात् जीवस्य प्राणेन सह गमनाभावात् प्राणाश्रयाणामपां जीवेन सह गमनमयुक्तमिति

'अग्न्यादिगतिश्रुतेरिति चेत्' इति पूर्वभागेन आक्षिप्य, 'न भाक्तत्वात्' इत्युत्तरभागेन प्राणानामग्न्यादीन् प्रति गमनश्रुतिर्न मुख्या किन्तु भाक्ता, 'उपकारकं न भवती, त्यभिप्रायेण गौणी। तस्मात् प्राणानां जीवेन सह गतिर्युक्तेति तदाश्रयतया अपामपि जीवेन सह गमनं स्वीकर्तव्यमिति कथनमपि प्राणगत्यादीनां सत्यत्व-स्थापकतया अद्वैतिनां प्रतिकूलम्।

'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः इति पंचमसूत्रे 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुव्हति' (छां० ५-४-२) इति प्रथमाग्नौ होमकाले श्रद्धाया एव श्रवणेन अपामश्रवणात् न जीवः अब्विशिष्टः गच्छतीत्ययुक्तमिति चेत्, इति प्रथमेऽश्रवणादिति प्रथम-भागेनाक्षिप्य 'न ता एव ह्युपपत्ते' रित्युत्तरभागेन आप एव श्रद्धा-शब्देन अभिप्रेयन्ते - कुतः ? उपपत्तेः = श्रद्धाशब्देनापां ग्रहणे उप-क्रमोपसंहारमध्यस्थवाक्यानां एकार्थत्वोपपत्तेः इत्युत्तरभागेन प्रथमाग्नौ होमकाले अब्विशिष्टत्वं समर्थितम्। इदमप्यद्वैतिनां अपां सह-गमनादिकथनादिना सत्यत्वप्रापकतया प्रतिकूलं। द्वैतिनामनुकूलम्।

'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते' रितिषष्ठसूत्रेण 'भूतसंपरिष्वक्ता जीवा गच्छन्तीति न युक्तं जीवस्य गमनाश्रवणात् इति अश्रुतत्वादिति वाक्येनाशंक्य 'न इष्टादिकारिणां प्रतीते' रित्युत्तरभागेन जीवानां गमनप्रतीतेः इति समाहितम् - इदमपि पूर्व-वदेव अद्वैतिनां प्रतिकूलं, द्वैतिनामकूलम्।

इष्टादिकारिणां स्वकर्मफलभोगाय रंहणप्रतिज्ञा न युक्ता - 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' (छां. ५-१०-४) 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वा-पक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति' (बृ. - ६-२-१६) इत्यादिश्रुतिभिः

इष्टादिकारिणां देवान्नत्वं (देवभक्ष्यत्वं) कथ्यते। न च व्याघ्रादिभिरिव देवैः भक्ष्यमाणानामुपभोगस्संभवति इति शंकायां प्रवृत्तं 'भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति' इति सूत्रम् - अस्य च सूत्रस्य "इष्टादिकारिणां यदन्नत्वमुक्तं तन्न मुख्यम्। किं तु भाक्तं (गौणं) यथा विशोऽन्नं राज्ञां पशवोऽन्नं विशामिति राज्ञोऽन्नत्वं वैश्यानां वैश्यानामन्नत्वं पशूनामुपभोगसाधनत्वं न मोदकादिवच्चर्वणीयत्वं एवमेव इष्टस्त्रीपुत्रमित्रभृत्यादिभिरिव गुणभावोपगतैः इष्टादिकारिभिर्यत्सुखविहरणं देवानां तदेवैषां भक्षणमभिप्रेतं न मोदकादिवच्चर्वणं निगरणं वा। अत एव 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' (छां. ३-६-१) इति देवानां चर्वणादिव्यापारं वारयति, तेषां चेष्टादिकारिणां देवान् प्रति गुणभावोपगतानामप्युपभोग उपपद्यते राजोपजीविनामिव परिजनानाम्। अनात्मवित्त्वाच्चेष्टादिकारिणां देवोपभोग्यभाव उपपद्यते। तथा हि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति— 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' (बृ. १-४-१०) इति-स चास्मिन्नपि लोक इष्टादिभिः कर्मभिः प्रीणयन् पशुवद्देवानामुपकरोत्यमुष्मिन्नपि लोके तदुपजीवी तदादिष्टं फलमुपभुंजानः पशुवद्देवानामुपकरोति इति गम्यते इति तस्माद्भूतैः संपरिष्वक्तो गच्छति" इति यद्व्याख्यानं तदप्यद्वैतिनां प्रतिकूलमेव। तेन परलोक, देव, भोग्यभोजकत्वादीनां सत्यत्वसिद्धेः। किं च 'अथ योऽन्यां देवतामुपास्तेऽ, न्योऽसावन्योऽहमस्मीति न स वेद यथा पशु' रिति वाक्यं जीवब्रह्मणोर्भेदनिषेधकमिति तत्र तत्र यद्वदन्ति अद्वैतिनः तदप्यनेन भाष्यवाक्येन उपनिषच्छांकरव्याख्यानेन च निराकृतं भवति। 'अथ योऽन्यां देवतामुपास्ते' इति कर्मिणां परब्रह्माज्ञानवतां पशुवद्देवभोग्यत्वं दर्शयतीति अनात्मविदां कर्मिणां निन्दाश्रवणेन भेदस्य निषेधासिद्धेः। विशेषविचारस्तु एतच्छ्रुतिविचारावसरे कृतोद्रष्टव्यः।

( अधिकरणं २ )

## ८ ओं कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ओम्

इति सूत्रस्य " चन्द्रमण्डलमधिरूढाः कर्मफलमशेषं भुक्त्वा कर्म रहिताः आयास्यन्ति उत शेषकर्माण आयास्यन्तीति संशये, कर्म रहिता एवायास्यन्तीति पूर्वपक्षे, कृतात्यये = कृतस्येष्टादेः कर्मणः फलभोगेनोपक्षये सति सानुशयाः = कर्मसहिता एव अवरोहन्ति। दृष्ट-स्मृतिभ्यां = तथा श्रुतेः स्मृतेश्च " इति यद्व्याख्यानं तदपि कर्मणां फलस्य भोगस्य अवरोहणारोहणयोः सत्यत्वव्यवस्थापकत्वात् अद्वैतिनां प्रतिकूलं, द्वैतिनामनूकूलमेवेति ।

## ९. ओं चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ओम्

इत्यस्य सूत्रस्य "तद्य इह रमणीयचरणाः रमणीयां योनिमापद्यन्ते " इति श्रुतिः चरणाद्योन्यापत्तिं दर्शयति न कर्मण इति अवरोहणे न कर्मशेषज्ञापिकेति न तया श्रुत्या कर्मसहितानां आगमनसिद्धिरिति पूर्वपक्षे, चरणशब्दः कर्मोपलक्षणार्थ इति कर्मसहितस्यैवावरोहणं गमयतीति कार्ष्णाजिनिः " इति व्याख्यानमपि पूर्ववदेवाद्वैतिनामननुकूलं द्वैतिनामनुकूलम् ।

## १०. ओं आनर्थक्यमिति चेन्न तदपेक्षत्वात् ओम्

इति सूत्रस्य " चरणशब्दस्य कर्मोपलक्षणार्थत्वं न वक्तव्यम् । चरणशब्दोक्तशीलस्यापि शुभाशुभयोनिप्राप्तिः फलं भविष्यति,अन्यथा

शीलस्यानर्थक्यमिति चेन्न । तदपेक्षत्वात् = कर्मणोऽपि शुभाशुभ कारणत्वे चरणापेक्षत्वात्– 'आचारहीनं न पुनन्ति वेदाः' इति स्मृतेः–तस्मात् कर्मैव शीलोपलक्षितं (आचारोपलक्षितं) योन्यापत्तौ कारणमिति" इति यद्व्याख्यानं तदपि शास्तृ, शासन, पुण्य, पाप, परलोक, कार्यकारणभावादीनां सत्त्वं वदत् 'न शास्ता न शास्त्रं' 'न पुण्यं न पापं' इत्यादिना शास्त्रपुण्यपापतत्फलानामसत्त्वं वदतां अद्वैतिनां प्रतिकूलमेव । जगत्सत्यत्ववादिनां द्वैतिनामनुकूलमेवेति ।

## ११. ओं सुकृतदुष्कृते एवेति तु बादरिः ओम्

इति सूत्रस्य "सुकृतदुष्कृते एव कपूयचरणाः रमणीयचरणा इति श्रुतिघटकचरणशब्देन बोध्येते इति चरणशब्दोक्तकर्मविशेषः सन्नेव भायास्यति इति बादरिराचार्यो मन्यते" इति व्याख्यानमपि अद्वैतिनां प्रतिकूलं, द्वैतिनां पूर्ववदेव अनुकूलम् ।

( अधिकरणम् ३ )

## १२. ओं अनिष्टादिकारिणामपि च श्रुतम् ओम्

इष्टादिकारिणः (यज्ञं कुर्वतः) चन्द्रमसं गच्छन्तीत्युक्तं । अनिष्टादिकारिणः चन्द्रमसं गच्छन्ति न वेति सन्देहे, 'ये वैकेचास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौषी० १-२) इति श्रुतौ सर्वेषां चान्द्रमसलोकप्राप्तिश्रवणात्, पुरुषस्योत्पत्तौ 'पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इति आहुतिसंख्यानियमश्रवणेन चान्द्रमसलोकं प्रति प्राप्तिमन्तरा आहुतिनियमानुपपत्तेश्च इष्टादिकारिणः अनिष्टादिकारिणः सर्वे चान्द्रमसलोकं गच्छन्ति इति 'अनिष्टादिकारिणा'मिति सूत्रेण पूर्वपक्षे––

# १३. ओं संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ओम्

इति सूत्रस्य "इष्टादिकारिण एव चन्द्रमसं गच्छन्ति न त्वनिष्टादिकारिणः। तेषां तत्र भोगाभावात्। किं तु संयमने स्वकृतपापानुसारेण यमकृताः यातनाः अनुभूय अवरोहन्ति। एवंरूपावेवारोहावरोहौ इतरेषामनिष्टादिकारिणां "न साम्परायः प्रतिभाति बालं प्रमाद्यंतं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे॥" (कठ. २-६) इति तद्गतिदर्शनात् = मृत्वा गच्छतां मम प्राप्तिश्रवणात्" इति यद्व्याख्यानं तद्द्वैतिनामत्यन्तं प्रतिकूलम्। उदाहृतश्रुतौ अद्वैतिनां यमप्राप्तिश्रवणात्। श्रुत्यर्थस्तु— सांपरायः = (सम्यक् परस्तात् प्राप्यते इति संपरायः परलोकः. तदुपायः) परलोकसाधनं, बालं = मूर्खं प्रति, प्रमाद्यंतं = अज्ञं प्रति वित्तमोहेन मूढं प्रति, न प्रतिभाति = न भासते. (बालः कः इत्याशंकायां) अयं लोको नास्ति = दृश्यमानं जगन्नास्ति (मिथ्या) परलोकः = स्वर्गवैकुण्ठादिलोकः पुण्यप्राप्यः, पापप्राप्यो नरकादिलोकः, नास्तीतिवादी, (तस्य किमनिष्टं भवतीत्याशंकायां) 'पुनः पुनर्वशमापद्यते मे' यमाधीनतां प्राप्नोति (यमलोकं प्राप्य यातनाः अनुभवति) इति। तथा च अनया श्रुत्या दृश्यादृश्यजगतः मिथ्यात्वं वदतां परलोकप्राप्त्युपायमविजानतां यमनियम्येषु रौरव कुंभीपाकादि नरकेषु यातना भवन्ति इति निन्दा सिध्यति। एतल्लोकपरलोकादीनां नास्तित्वं (मिथ्यात्वं) वदन्तः अद्वैतिन एव खलु! इति.

## १४. ओं स्मरन्ति च ओम्

इति सूत्रस्य " अपि च मनुव्यासप्रभृतयशिशष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु " इति व्याख्यानमपि पूर्ववदेव अद्वैतिनां प्रतिकूलम्. ।

## १५. ओम् अपि च सप्त ओम्

इति सूत्रस्य "अपि च सप्तनरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन न स्मर्यन्ते पौराणिकैः-ताननिष्टादिकारिणः प्राप्नुवन्ति कुतस्ते चन्द्रं प्राप्नुयुरित्यभिप्रायः " इति व्याख्यानमपि पूर्ववदेवाद्वैतिनां प्रतिकूलम्. ।

ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति । यावता तेषु रौरवादिष्वन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति - इति शंकानिरासकतया प्रवृत्तमिति अवतारितस्य –

## १६. ओं तत्रापि च तद्व्यापारादविरोधः ओम्

इति सूत्रस्य "तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः - यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते " इति व्याख्यानमपि सप्तनरकाणां, यमस्य मुख्यनियंतृतायाः, चित्रगुप्तादीनां तदधीननियन्तृतायाश्च,, (नानापदार्थानां ) सत्त्वसाधकत्वेन अद्वैतिनां प्रतिकूलमेव ।

## १७. ओम् विद्याकर्मणोरिति तु प्रकृतत्वात् ओम्

इति सूत्रस्य अनिष्टादिकारिणां चन्द्रमसोऽप्राप्तिः कथ्यते इति व्याख्यानं—

देहलाभाय आहुतिसंख्यानियमात् अनिष्टादिकारिणां चांद्रमस-लोकाप्राप्तौ आहुतिसंख्यापूर्त्यभावेन देहलाभो न स्यात् । तदर्थं अनि-ष्टादिकारिणामपि चांद्रमसलोकप्राप्तिर्वक्तव्येत्याशंकानिवर्तकतया अवतारितस्य ।

## १८. ओं न तृतीये तथोपलब्धेः ओम्

इति सूत्रस्य तृतीये = कृमिकीटादिक्षुद्रजंतौ देहलाभार्थं न पंचाहुतिनियमः तथा = आहुतिसंख्यानियमं विना उपलब्धेः = जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं ( छां. ५–१०–८ ) इति तृतीयस्थानप्राप्तेः उपलब्धेरित्यादिव्याख्यानं–

## १९. ओं स्मर्यतेऽपि च लोके ओम्

इति सूत्रस्य द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां च अयोनिजत्वं स्मर्यते । द्रोणस्य योषिद्विषया एकाहुतिर्नास्ति–– धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे अप्याहुती न स्तः–बलाकाप्यन्त-रेणैव रेतस्सेकं गर्भं धत्त इति यथा तत्र तत्र आहुतिसंख्यानादरः एवमन्यत्रापि भविष्यतीति पंचाहुतिसंख्यानियमसिध्द्यर्थम् अनिष्टादि-कारिणां चान्द्रमसगतिर्न वक्तव्ये" ति यत् व्याख्यानम्––

## २०. ओं दर्शनाच्च. ओम्

इति सूत्रस्य "स्वेदजोद्भिज्जयोः ग्राम्यधर्ममन्तरा उत्पत्तिदर्श-नात् आहुतिसंख्यानादरः" इति यत् व्याख्यानम्

ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति 'अण्डजं जीवजमुद्भिज्जम्' (छां. ६-३-१) इति त्रिविधभूतग्रामस्य श्रवणात् कथं जरायुजांडजस्वेदजोद्भिज्जानां चतुर्णां ग्रहणमित्याशंकानिवर्तक-तया अवतारितस्य–

## २१. ओं तृतीयशब्दावरोधः संशोकजस्य. ओम्

इति सूत्रस्य "संशोकजस्य = स्वेदजस्य, तृतीयशब्दावरोधः = तृतीयेन उद्भिज्जशब्देन स्वीकार इति न विरोध" इति यत् व्याख्यानं तदेतत्सर्वं व्याख्यानं पूर्ववदेव अद्वैतिनां प्रतिकूलम्। अनेकेषां पदार्थानां सत्त्वव्यवस्थापकत्वात्। न हि श्रुतिः तदर्थनिर्णायकसूत्रैः तात्पर्येण प्रतिपादिता अर्थाः मिथ्या इति वक्तुं शक्यते।

(अधिकरणं ४)

## २२. ओं साभाव्यापत्तिरुपपत्तेः. ओम्

इति सूत्रस्य इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन् यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम्। अवरोहप्रकारस्तु 'अतथैमेवाध्वानं पुनर्निवर्तते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' (छां.५-१०-५) इति तत्र अवरोहन्तः आकाशादिस्वरुपमेव प्रतिपद्यंते, किं वा आकाशादिसाम्यमिति संशये, आकाशादिस्वरूपमेव प्रतिप्रद्यन्त इति पूर्वपक्षे, आकाशादिसाम्यं प्रतिपद्यन्ते, अन्यस्य अन्यभावासंभवात् आकाशादिसाम्यांगीकार एव उपपत्तेरिति व्याख्यानमपि पूर्ववदेव अद्वैतिनां प्रतिकूलं। द्वैतिनामनुकूलम्। तेन अनेकेषां सत्यत्वसिद्धेः।

( अधिकरणम् ५ )

## २३. ओं नातिचिरेण विशेषात्. ओम्

इति सूत्रस्य 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इत्यादिना उक्तं आकाशसादृश्यानंतरं वायुसादृश्यं दीर्घं दीर्घं कालं प्राप्नोति, उत अल्पमल्पमिति संशये, नातिचिरेण = अल्पमल्पं कालमाकाशादिसादृश्येन स्थित्वा वाय्वादिसादृश्यमाप्नोति, कुतः ? विशे-

षात् = व्रीहिभावान्निस्सरणस्य दुःखतरत्वप्रदर्शनेन आकाशादिभावान्निस्सरणे सुखं दर्शयति। आकाशादिभावान्निस्सरणे सुखं व्रीह्यादि भावान्निस्सरणे दुःखं च निस्सरणयोः कालाल्पत्वबहुत्वप्रयुक्तमेवेति व्रीह्यादिभावान्निस्सरणस्य क्षिप्रत्वसिद्धिरिति यद्व्याख्यानं तदपि अनेकेषां सत्यत्वज्ञापनात् अद्वैतिनां प्रतिकूलमेवेति ।

( अधिकरणम् ६ )

## २४. ओं अन्याधिष्ठितेषु पूर्ववदभिलापात् ओम्

इति सूत्रस्य "त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते" (छां. ५-१०-६) इति यदुक्तं तत्र संशयः— अनुशायिनः स्थावरसुखदुःखभाजो भवन्ति जीवान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं वा गच्छन्तीति संशये. व्रीह्यादिस्थावरजात्यापन्नाः अनुशायिनः (कर्मविशिष्टाः) स्थावरसुखदुःखभाजो भवन्ति इति पूर्वपक्षे, अन्याधिष्ठितेषु = अन्यैर्जीवैः अधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशायिनः प्रतिपद्यन्ते - न तत्सुखदुःखभाजो भवन्ति - पूर्ववत् = वायुधूमादिभावस्य संश्लेषमात्रत्ववत् तद्वदेवाभिलापात्" इति व्याख्यानमपि पूर्ववदेवाद्वैतिनां प्रतिकूलम् ।

## २५. ओं अशुद्धमिति चेन्न शब्दात् ओम्

इति सूत्रस्य "आध्वरिककर्मणः हिंसादियोगात् अशुद्धत्वात् इष्टादिकारिणः व्रीह्यादिजन्म अस्तु, इति शंकायां, शब्दात्- यागादिकर्मणः शास्त्रेण विहितत्वात् न तस्याशुद्धत्वमिति न व्रीह्यादिजन्म कर्मिणः इति" इति व्याख्यानमपि पूर्ववदेवाद्वैतिनां प्रतिकूलम् ।

## २६. ओं रेतस्सिग्योगोऽथ. ओम्

इति सूत्रस्य "व्रीह्यादिभावो नाम व्रीह्यादिसंबंध एव न तु व्रीह्यादिरूपत्वं यतः 'यो यो ह्यन्नमत्ति यो रेतांस्सिचति तद्भूय एव भवति' ( छां. ५-१०-६ ) इति श्रुतौ कर्मशेषवतः पुरुषस्य रेतस्सिग्भावः (रेतस्सेककर्तृपुरुषभावः) कथ्यते– अद्यमानान्नानुगतोऽनुशायी चिरजातप्राप्तयौवनरेतस्सिग्रूपो भवितुं नार्हति इति तत्र रेतस्सिक्संयोगो वक्तव्यः–तथा व्रीह्यादिभावोऽपि व्रीह्यादिसंबंधरूप एव वक्तव्यः" इति व्याख्यानमपि पूर्ववदेवाद्वैतिनां प्रतिकूलम् ।

## २७. ओं योनेश्शरीरम्. ओम्

इति सूत्रस्य " अथ = रेतःसिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि योनेश्शरीरमनुशायिनां (कर्मिणां) अनुशयफलोपभोगाय जायते इत्याह शास्त्रम्. तथा च भोगार्थं शरीरप्राप्त्युक्त्या व्रीह्यादिभावावसरे व्रीह्यादिशरीरमेव भोगसाधनमिति न वक्तव्यमिति व्रीह्यादिसंश्लेष एव व्रीह्यादिभाव." इति व्याख्यानमपि पूर्ववदेवाद्वैतिनां प्रतिकूलमिति।

इति शंकरकृतशारीरकमीमांसाभाष्यखंडने
तृतीयाध्यायस्य प्रथमः पादः



ब्रह्मसूत्रीय

# तृतीयाध्याय द्वितीयपाद शंकरभाष्यस्य खंडनम्

( अयुक्तत्वप्रदर्शनम् )

( अधिकरणम् १ )

## १. ओम् सन्ध्ये सृष्टिराह हि ओम्

" न तत्र रथा न रथयोगा न पन्थानो भवत्न्यथ रथान् रथयोगान् पथः सृजते " (बृ. ४-३-१०) इत्यादि. तत्र संशयः--किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति – तत्र तावत्प्रतिपद्यते सन्ध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति. कुतः? यतः प्रमाणभूता श्रुतिरेवमाह--"अथ रथान् रथयोगान् पथः सृजते" (बृ.४-३-१०)इत्यादि, स हि कर्तेति चोपसंहारादेवमेवावगम्यते ।

## २. ओम् निर्मातारं चैके पुत्रादयश्च ओम्

अपि चैके शाखिनोऽस्मिन्नेव सन्ध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति--'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क. ५-८) इति. पुत्रादयश्चात्र कामा अभिप्रेयन्ते......... प्राज्ञं चैन निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः– प्राज्ञस्य हीदं प्रकरणं–'अन्यत्र धर्मादन्यत्राधर्मात्' (क. २-१४) इत्यादि- तद्विषय एव च वाक्यशेषोऽपि– ' तदेव शुक्रं तद्ब्रम्ह तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रितास्सर्वे तदु नात्येति कश्चत ' ( क. ५-८ ) इति-

प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया, तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति......तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति.

एवं सूत्राभ्यां श्रुत्यादिप्रमाणानुसारेण साधितं स्वाप्नपदार्थानां सत्यत्वं पूर्वपक्षत्वेन मत्वा (३) ओं **मायामात्रन्तु कार्त्स्न्ये-नानभिव्यक्तस्वरूपत्वात्** ओम्" इति सूत्रं सिद्धान्तसूत्रमिति भ्रान्तः सन् स्वाप्नपदार्थानां मिथ्यात्वप्रतिपादकतया व्याख्यातवान् शंकराचार्यः -- तद्व्याख्यानं 'तदनन्यत्वमारंभणशब्दादिभ्यः' (२-१-१४) इति सूत्रस्य शंकराभिमतार्थनिराकरणप्रसंगे निराकृतं-तत्रैव द्रष्टव्यम्-

स्वेनैव 'अत्रैष देवः स्वप्ने......सच्चासच्च पश्यति' (षट्. ४-५) इति षट्प्रश्नव्याख्यावसरे 'सच्च परमार्थोदकादि - असच्च मरीच्युदकादि' इत्यादिना स्वाप्नोदकादेः परमार्थत्वस्य कथितत्वेन सर्वस्वाप्न-पदार्थानां मिथ्यात्ववर्णनं स्वव्याहतमिति ।

## ४. ओम् सूचकश्च हि श्रुतेराचक्षते च तद्विदः ओम्

इति सूत्रस्य "स्वप्नस्य मायामात्रत्वे परमार्थगन्धो नास्ति किमित्याशंक्य, नेत्युच्यते (परमार्थगन्धो वर्तत इत्युच्यते) सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः-- तथा हि श्रूयते-- 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने ।।' (छां. ५-२-९) तथा पुरुषं कृष्णं कृष्ण-दन्तं पश्यति स एनं हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यते इति श्रावयति, आचक्षते स्वाप्नाध्यायविदः- 'कुंजरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि' इति - मन्त्रदेवताद्रव्य-विशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते-

तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमानत्वादित्यभिप्रायः–तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्" इति यद्व्याख्यानं तदयुक्तम्.

तथा हि– लोके परमार्थः (सन्) अपरमार्थः–(असन्) इति द्विविधः पदार्थः- न तु तृतीयः कश्चन पदार्थः– शंकराचार्याद्यद्वैतिभिरपि परमार्थ एकः अपरमार्थस्तु द्वितीयः––न तृतीयः पदार्थ इति "शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते - न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपन्होतुमपवादाभाव उत्सर्गप्रसिद्धेः" इति (ब्र. सू. शां. भा. २-२-३१) शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते - लौकिकानि हि प्रमाणानि सदसत्त्वगोचराणि–– तैः खलु सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते - असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं व्यवस्थाप्यते - सदसतोश्च विचारासहत्वं व्यवस्थापयता सर्वप्रमाणविप्रतिषिद्धं व्यवस्थापितं भवति। तथा च सर्वप्रमाणविप्रतिषेधान्नेयं व्यवस्थोपपद्यते। यद्युच्येत तात्त्विकं प्रामाण्यं प्रमाणानामनेन विचारेण व्युदस्यते, न सांव्यवहारिकम् तथा च भिन्नविषयत्वान्न सर्वप्रमाणविप्रतिषेध इत्यत आह––न ह्ययं सर्वप्रामाणसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपन्हौतुम्–प्रमाणानि हि स्वगोचरे प्रवर्तमानानि तत्त्वमिदमित्येव प्रवर्तन्ते - अतात्त्विकत्वन्तु तद्गोचरस्यान्यतो बाधकादवगन्तव्यम् - न पुनः सांव्यवहारिकं नः प्रामाण्यं न तु तात्त्विकमित्येव प्रवर्तन्ते- बाधकं चातात्त्विकत्वमेषां तद्गोचरविपरीततत्वोपदर्शनेन दर्शयेत् - यथा शुक्तिकेयं न रजतं, मरीचयो न तोयमेकश्चन्द्रो न चन्द्रद्वयमित्यादि, तद्वदिहापि समस्तप्रमाणगोचरविपरीततत्वांतरव्यवस्थापनेनातात्त्विकत्वमेषां प्रमाणानां बाधकेन दर्श-

नीयंनत्व व्यवस्थापिततत्वांतरेण प्रमाणानि शक्यानि बाधितुं" (भामती) इत्यादिभाष्यभामतीवाक्यैः स्वीकृतत्वेन परमार्थगन्ध इत्यनेन किं विवक्षितं स्वप्नपदार्थानां सत्त्वं वा असत्त्वं वा - सत्त्वं विवक्षितमिति चेत् स्वप्नस्य सत्यत्वसिध्या मायामात्रत्वोक्तिरयुक्ता-भवति - असत्त्वोक्तौ तस्य भविष्यत्साध्वसाधुफलविषयज्ञानजनकत्व-रूपसूचकत्वाद्युक्तिरयुक्ता — नह्य् सतः ज्ञानाव्यवहितप्राक्क्षणवृत्ति-त्वरूपं वा शक्तिविशेषवत्त्वरूपं वा ज्ञानजनकत्वं संभवति - उक्तं च श्रुतौ सूत्रे च स्पष्टं सूचकत्वं, स्वप्नाध्यायविद्भिश्च तदन्यथानुप-पत्त्या सत्त्वमंगीकरणीयं स्वप्नार्थानामिति ।

प्राज्ञकर्तृकत्वस्य श्रुतत्वाच्च स्वाप्नपदार्थः जाग्रत्पदार्थवत् सत्यो भवितुमर्हति - न हि प्राज्ञकर्तृकत्वस्य बाधकमस्ति ।

न च 'य एष सुप्तेषु जागर्ति' (कठ.) इति प्रसिद्धानुवादात् जीव एवायं कामानां निर्माता संकीर्त्यते इति वाच्यम् । य एष सुप्ते ष्विति जीवानां सुप्ति (इन्द्रियव्यापारोपरमं) उक्त्वा स्वाप्नपदार्थसृ-ष्टिकर्तुः ब्रम्हत्वोक्तेः 'स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तानभिचा-कशीति' (बृ. ३-३-११) इति श्रुतावपि शारीरस्य (जीवस्य) स्वप्न-संबंधं कारयित्वा परमात्मा असुप्तस्सन् सुप्तान् पश्यतीति परमात्मन एव स्वप्नपदार्थस्रष्टृत्वोक्तेः- 'तदेव शुक्रं तद्ब्रम्हे' ति स्वप्नस्रष्टुर्ब्रह्म-त्वोक्तेश्च ।

न च तत्त्वमसीत्यत्र यथा जीवस्य ब्रह्मत्वमुच्यते तथा स्वप्नस्रष्टु जीवस्य ब्रह्मत्वं तद्वाक्येन उच्यत इति वाच्यम् । तत्त्वमसीति वाक्यं जीवस्य ब्रह्मत्वं न बोधयतीति अद्वैतिभिरेव बहुधा उक्तत्वात् वस्तुतो जीवब्रह्मैक्यबोधकत्वासंभवेन तद्बोधकत्वाभावस्य अस्माभिर्बहुवार-मुपपादितत्वाच्च ।

यच्चोक्तं 'अस्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः न प्रतिषिध्यते- तस्य सर्वेश्वरत्वात् सर्वास्ववस्थासु अधिष्ठातृत्वोपपत्तेरि'ति तद्युक्त- मेव । (प्रामाणिकमेव) परन्त्वद्वैतिनां मते तस्य 'प्राज्ञेनात्मना संपरिष्वक्त' इत्यादिवाक्येन निर्गुणब्रह्मत्वेन उक्तेः निर्गुणस्य तस्य सर्वेश्वरत्व सर्वावस्थाधिष्ठातृत्वादेरसंभवात् ।

वियदादिसर्गवत् संध्याश्रयः सर्गो न पारमार्थिकः इत्येतत्प्रति- पाद्यते इति यदुक्तं तदयुक्तम् अद्वैतिमते वियदादिसर्गस्यापि पारमार्थि- कत्वास्वीकारात् ।

न च वियदादिसर्गस्यापि आत्यन्तिकं सत्यत्वं न मयांगीकृतमिति 'तदनन्यत्वमारंभणशब्दादिभ्यः' (ब्र. सू. २-१-१४) इत्यत्रोक्तमिति वाच्यम् । तत्सूत्रशांकरभाष्यनिराकरणावसरे वियदादिसर्गस्य आत्य- न्तिकसत्त्वाभावस्य अप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च निरा- कृतत्वात् ।

यदुक्तं 'स्वप्नप्रपंचयोरुभयोरपि पारमार्थिकत्वाभावे को विशेष इत्याशंक्य, वियदादि प्रपंचो ब्रह्मात्मत्वदर्शनाद्बाध्यते इति व्यावहा- रिकः, संध्याश्रयस्तु प्रपंचः प्रतिदिनं ब्रह्मज्ञानेतरेण बाध्यते इति प्राति- भासिक इति विशेषः–' इति–तन्न–बौद्धेन जगतः व्यावहारिक- सत्त्वं प्रमाणेन गृह्यते इत्युक्तौ प्रमाणं सदिति वा असदिति वा गृण्हाति। न तु व्यावहारिकसत्त्वमिति जगतो व्यावहारिकसत्वं नांगीकरणीय- मिति " क्षणिकत्वाच्च (ब्र. सू. २-२-३१) इति सूत्रव्याख्यानावसरे शंकरभाष्यभामतीग्रन्थैरुपपादितत्वेन जगतः व्यावहारिकसत्त्वं प्रमाणेन गृह्यते इति स्वीकारे अपसिद्धान्तापत्तेः–

किं च तद्विषयकं ज्ञानं तद्विषयकाज्ञानं प्रति विरोधि (निवर्तकं– बाधकं) दृष्टं-यथा शुक्तिज्ञानं शुक्त्यज्ञानविरोधि प्रकृते न ब्रह्मविषयकं ज्ञानं जगतः विरोधि इति ब्रम्हज्ञानस्य जगद्बाधकत्वानुपपत्तेः.

न च जगतो ब्रह्माज्ञानकल्पितत्वेन ब्रह्मज्ञानेम ब्रह्माज्ञाननिवृतौ ब्रह्माज्ञानकल्पितजगतोऽपि निवृत्तिः (बाध) इति वाच्यम् । जगतो ब्रह्माज्ञानकल्पितत्वे प्रमाणाभावात् । इदमिति सामान्यरूपेण रजत-सदृशतया च ज्ञाते शुक्तितत्वरूपविशेषरूपेण अज्ञाते शुक्तिकाशकले रजतभ्रमः शुक्तितत्वेन रूपेण शुक्तौ ज्ञातायां रजतभ्रमनिवृत्तिर्दृष्टा। प्रकृते सामान्यरूपेण जगत्सदृशतया च ब्रह्मणि ज्ञाते ब्रह्मत्वादिविशेष-रूपेण अज्ञाते ब्रह्मणि जगद्भ्रमो वक्तव्यः । विशेषरूपेण ज्ञाते ब्रम्हणि विशेषरूपेण ब्रह्माज्ञाननिवृत्त्या जगद्भ्रमो निवर्तते इति च वक्तव्यम्। तथा च अद्वैतमते ब्रह्मणः सामान्यविशेषधर्मरहितत्वेन अज्ञेयत्वेन च भ्रमकारणस्य सामान्यरूपेण जगत्सदृशतया च ब्रह्मज्ञानस्य विशेष-रूपेण ब्रह्माज्ञानस्य च असंभवेन भ्रमासंभवः—विशेषरूपेण ब्रह्म-ज्ञानस्य च अबोधकतया अखण्डार्थबोधकतया वा अद्वैतिभिः स्वीकृ-तैस्तत्त्वमस्यादिवाक्यैः असंभव इति भ्रमाभावेन भ्रमनिर्वतकाभावेन च ब्रह्मात्मत्वदर्शनेन जगद्बाध्यते इत्युक्तेरयोगात् ।

तथा च व्यावहारिक प्रातिभासिकविभागोऽयुक्त एवेति-स्वप्नो-ऽपि जगदिव पारमार्थिक (सत्य) एवेति ।



# ॐ ५. पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ

इति सूत्रस्य "अथाऽपि स्यात् परस्यैव तावदात्मनोंऽशो जीवः अग्नेरिव विस्फुलिंगः। तत्रैवं सति यथा अग्निविस्फुलिंगयोः समाने दहनप्रकाशनशक्ती भवतः एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती ततश्च जीवस्य ऐश्वर्यवशात् स्वप्ने रथादिसृष्टिः भविष्यतीति। अत्रोच्यते। सत्यपि जीवेश्वरयोः अंशांशिभावे प्रत्यक्षमेव जीवस्य ईश्वरविपरीतधर्मत्वम्। किं पुनः जीवस्य ईश्वर-समानधर्मत्वं नास्त्येव। न नास्त्येव। विद्यमानमपि तत्तिरोहितं अविद्यादि व्यवधानात्। तत्पुनः तिरोहितं सत् परमेश्वरम् अभिध्यायतः यतमानस्य जन्तोः विधूतध्वान्तस्य तिमिरतिरस्कृता इव दृक्शक्तिः औषधवीर्याद् ईश्वरप्रसादात् संसिद्धस्य कस्यचिदाविर्भवति, न स्वभावतः सर्वेषां जन्तूनाम्। कुतः। ततो ईश्वरात् हेतोः अस्य जीवस्य बन्धमोक्षौ भवतः। ईश्वरस्वरूपापरिज्ञानाद् बन्धः तत्स्व-रूपपरिज्ञानात्तु मोक्षः" इति श्रीशंकराचार्याणां यद्व्याख्यानं तद्-युक्तम्। तथा हि। यद् अग्निविस्फुलिंगयोरिव जीवेश्वरयोः अंशां-शिभावः, उक्तः तद् "निर्विकारोऽक्षरः" इत्यादिप्रमाणविरूद्धम्। व्याहतं च। 'ममैवांशो' जीवलोके जीवभूतः सनातनः" इत्यस्य व्याख्याने 'अंश इव अंशः' इति शंकराचार्यैरेव जीवस्य ईश्वरांशत्व-निषेधात्। यत्पुनः ईश्वरस्यैव जीवगतबन्धमोक्षयोः हेतुत्वमुक्तं तत् अनुमतमेव। भेदसापेक्षत्वात्। अद्वैतिनां तु प्रतिकूलमेव।

# ६. ॐ देहयोगाद् वा सोऽपि ॐ

कस्मात् पुनः जीवः परमात्मांशः एव सन् तिरस्कृतज्ञानैश्वर्यः भवति। युक्तं च ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिंगस्येव दहन-प्रकाशनयोरिति। उच्यते। सत्यमेवैतत्। सोऽपि तु जीवस्य ज्ञानै-श्वर्यतिरोभावः देहयोगाद् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद् भवति। अस्ति च अत्र उपमा। यथा अग्नेः दहनप्रकाशनसंपन्नस्यापि अरणिगतस्य दहनप्रकाशने तिरोहिते भवतः यथा वा भस्मछन्नस्य" इति यद्व्याख्यानं, तदसत्। पूर्वमेव जीवस्य ईश्वरांशत्वं निराकृत-मिति तदवष्टंभेन अत्र पुनः आक्षेपसमाधाने उभे अपि अनुपपन्ने एव।

यत्पुनः "वा शब्दः जीवेश्वरान्यत्वशंका व्यावृत्यर्थः। ..... न ह्यन्यत्वं जीवस्य ईश्वरादुपपद्यते। 'सेऽयं देवता ऐक्षत' इत्युपक्रम्य 'अनेन जीवेन आत्मना अनुप्रविश्य इत्यातमशब्देन जीवस्य पराम-र्शात्।" इत्युक्तं तत्तुच्छम्। सूत्रगतवासशब्दं भित्वा वा इति भिन्नं पदं परिकल्प्य पूर्वसूत्रे नपुंसकेन प्रकृतं तिरोहितपदं 'सोऽपि तिरोभावः' इति पुल्लिगेन सूत्रे परामर्शः असंगतः। "वा शब्दः जीवेश्वरान्य-त्वशंका व्यावृत्यर्थः," इति व्याख्यानं सूत्राक्षरबाह्यं केवलं काल्प-निकमेव 'न ह्यक्षरबाह्यः स्वेनैः वाक्यार्थः भवति' इति स्वयमे-वोक्तत्वात्। उदाहृतश्रुतिरपि न जीवेश्वराभेदबोधिका। 'हन्त इमास्तिस्रः देवता अनेन जीवेन आत्मना अनुप्रविश्य' इत्यत्र देवता-शब्दः जीवपरः 'जीवेनात्मना' इत्यस्यापि जीवपरत्वे जीवरूपेण जीवं प्रविशति इत्यर्थः स्यात्। तदयुक्तम्। कर्तृकर्मणोः भेदव्याप्त-त्वात् अयमपि अर्थः अद्वैतिनां प्रतिकूलमेव। 'जीव इति भगवत अनिरुद्धस्य आरण्या' इति श्रुतेः अत्र जीवशब्दः चेष्टकभगवद्रूपपर एव।

# ७. ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि हि ॐ

अस्य सूत्रस्य 'तदभावः स्वप्नदर्शनाभावः' सुषुप्तं नाडीषु पुरीतति ब्रह्मणि च। तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैवत्वेके सुषुप्तिस्थानम्। 'सता सोम्य तदा संपन्नो भवति' इति श्रुतेरिति यद्व्याख्यानं तत् नाडिमन्योन्यं पुरीतता परिवेष्टनेन, एवं आश्रितस्य जीवस्याधारभूतेन सच्छब्दवाच्यब्रह्मणा च भेदस्यैव प्रतिपादनात् अद्वैतिनां प्रतिकूलमेव।

यत्पुनरत्रोक्तं, ब्रह्माधारत्वं श्रुत्युक्तं नैवाधाराधेयभावेन किंतर्हि तादात्म्याभिप्रायेणेति तत्तुच्छम्। तादात्म्यार्थस्य श्रुत्यक्षरबाह्यत्वेन अतदर्थत्वात्। 'न हि अक्षरबाह्यः वाक्यार्थः' इति न्यायस्य स्वेनैवात्रोपपादितत्वात्। स्वव्याहतं च। 'यः पृथिव्यां तिष्ठन्' इत्याद्येकविंशतिवाक्यानाम् आधाराधेयभाववर्णनद्वारा पृथिव्यादिदेवतात्मनां ब्रह्मणा भेदप्रतिपादकत्वमेवेति स्वेनैवमन्तर्यामिनये भाषितत्वात्। एवं 'भेदनिर्देशात्, सता सोम्य तदा सम्पन्नो भवति इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशः जीवादधिकं (अन्यत्) ब्रह्म दर्शयति (ब्र. सू. २-१-२२) इति अस्यैव सुप्तिप्रकारप्रतिपादकवाक्यस्य भेदपरत्वेन व्याख्यानाच्च।

यच्च 'स्वं ह्यपितो भवति' इति वाक्यशेषः अभेदाभिप्रायक इति तदपि हेयम्। अपीतशब्दस्य अभेदः अर्थः न, तावदवयववृत्त्या। अपिह्यपिधाने वर्तते। इण् गतौ निष्ठाप्रत्ययश्चाकर्तरि। तथा च अपिहितस्य गतिः प्राप्तिः प्रवेशे सति संभवतीति अपीत इति प्रविष्टः इत्येवार्थः। अखण्डवृत्तौ अपीत शब्दः ऐक्यपर्यायः अंगीकार्यः। तस्य च अक्रियार्थत्वात् भवतेश्चाकर्मकत्वात् कर्मानपेक्षायां स्वमिति कर्मार्थद्वितीया नोपपद्यते। सहयोगे तृतीया विधानात्

एकीभावविवक्षांया स्वेनेति निर्देशः स्यात् । तथा च श्रुतद्वितीया-हानिरश्रुततृतीयाकल्पनाचापद्येते ।

## ८. ॐ अतः प्रबोधोऽस्मात् ॐ

एतस्य सूत्रस्य "यस्मादात्मैव सुप्तिस्थानम् अतः सुप्तस्य प्रबोधः आत्मन एव न तु पुनर्नाडीभ्यः नापि पुरीततः" इति व्याख्यानं पूर्ववद् भेदपरमेव । विश्लेषावधिभूताद् ब्रह्मणः विश्लिष्टस्य जीवस्य भिन्नत्वावश्यंभावात् ।

(अधिकरणम् ३)

## ९. ॐ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॐ

इत्यस्य सूत्रस्य "स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति नान्यः कर्मशेषानुष्ठानदर्शनात् सोऽहमस्मीत्यनुस्मरणात् स्वापप्रबोधाधिकारपठितश्रुतिभ्यः कर्मविद्याविधिभ्यश्चे" ति यद् व्याख्यानं तदपि पूर्वं सुप्तः एवोत्तिष्ठति नैवान्यः इति वर्णनेन जीवानां परस्परं भेदपरमेव ।

यत् पुनः उक्तं "सुप्तः परेण एकत्वमापन्नः" इति तदत्यन्तम् अयुक्तमेव । तथा हि ।

इति ' एतस्मादात्मनः सर्वे प्राणा ' इति श्रुत्या कथ्यते-इति व्याख्यानेन जीवपरमात्मनोर्भेदसिद्धेः '- स्वीकृतं च स्वेनैव (शंकराचार्येणैव) ' सता सोम्य तदा सम्पन्नो भवती ' त्यादि श्रुतेर्जीवपरमात्मनोर्भेदज्ञापकत्वम् अधिकंत्विति २-१-२२ सूत्र भाष्ये--

न च सतासच्छब्दवाच्यया प्रकृतया देवतया संपन्नो भवति संगतः एकीभूतो भवति इत्यपि उपनिषद्भाष्ये शंकरायायैंरुक्तमिति वाच्यम्। स्वव्याहतत्वात्। सम्पन्न इति शब्दस्य संपूर्वकात् गत्यर्थकात् पदधातोर्निष्पन्नत्वेन प्राप्त्यर्थकतया तस्य एकत्वाबोधकत्वात् प्राज्ञेनात्मना संपरिष्वक्त ' इति श्रुत्या स्पष्टं सुषुप्तिकाले परमात्मना भेदस्योक्तेः स्वेनैव (शंकराचार्येणैव) (ब्र. सू. १-३-४२) सूत्रभाष्ये "सुषुप्तौ उत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात्, सुषुप्तौ तावत् अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तः। (बृ. ४-३-२१) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति" इति वाक्येन प्राज्ञेनात्मना संपरिष्वक्त इति श्रुतेः जीवपरमात्मनोर्भेदबोधकतया व्याख्यातत्वाच्च।

न च प्राज्ञेनात्मना संपरिष्वक्त इति वाक्यव्याख्यानपरे उपनिषद्भाष्ये 'यथा प्रियया स्त्रिया संपरिष्वक्त ' इति दृष्टांतकथनपूर्वकं प्राज्ञेन परेण ज्योतिषा संपरिष्वक्तः सम्यक् परिष्वक्तः एकीभूत इति. एकत्वं यथा स्त्रीपुंसयोः संपरिष्वक्तयोः इत्यादि वाक्येन अभेदोऽप्युक्तश्शंकराचार्यैरिति वाच्यम्. स्वयमेव एकत्र भेदपरतया व्याख्याय अन्यत्र अभेदपरतया कृतस्य व्याख्यानस्य स्वव्याहतत्वेनानादरणीयत्वात्। यथा प्रियया स्त्रिया संपरिष्वक्त इत्यस्य प्रियया स्त्रिया एकीभूत इति व्याख्यानस्य स्त्रीपुरुषपश्वादीनामपि रतिकाले स्त्रिया एकीभावस्य अननुभवेन प्रत्युत भेदस्यैवानुभवेन सर्वानुभवविरुद्धत्वाच्च।

सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रकारेण 'प्राज्ञेनात्मना संपरिष्वक्त इति श्रुतिः जीवपरमात्मनोर्भेदं बोधयति इति कथितत्वेन स्वयं शंकरा-

चार्येणापि सूत्रकारः प्राज्ञेनात्मना संपरिष्वक्त इति श्रुतिं जीवपरमात्मनोर्भेदविषये उदाहरत् इति कथितत्वेन अभेदबोधकतया व्याख्यानस्य तद्विरुद्धत्वाच्च ।

'स्वमपीतो भवति' (छां. ६-८-१) इति वाक्यस्य स्वशब्देनात्माऽभिलप्यते स्वरूपमापन्नः सुप्तो भवतीत्यर्थः इत्युक्तम्। तत्र स्वरूपमापन्न इत्यस्य परमात्मस्वरूपं प्राप्त इत्यर्थकत्वे प्राप्यप्राप्तृभावेन भेदसिद्धेः युक्तश्चायमर्थः। - अपिपूर्वकस्य इण्धातोर्निष्पन्नस्य अपीतशब्दस्य अपि = इतराज्ञेयः सन्, इतः = प्राप्तो भवतीत्यर्थकत्वात्, स्वरूपमापन्न इत्यस्य परमात्मैव सम्पन्नः (परमात्मत्वं प्राप्तः) इत्यर्थस्तु न युक्तः— अपीतशब्देन तथा अर्थाप्रतीतेः— इत्यादि किंचित् किंचिदसंबद्धम् अयुक्तम् च उक्तम् तस्य पूर्वं खण्डितत्वात्प्रकृतविचारासंबद्धत्वाच्च न दूष्यते इति ।

जीवस्य सुषुप्तौ सद्रूपब्रह्मरूपतायाः प्राप्तेः प्रमाणाभावात्, प्रत्युत प्रमाणविरुद्धत्वात्— 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (ब्र.सू.१-३-४२) इति सूत्रे अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरम् इति श्रुतिः— सुषुप्तौ शारीरात् (जीवात्) परमेश्वरस्य भेदबोधिका इति शंकराचार्यैरेव व्यवस्थापितत्वाच्च ।

तथा 'अधिकं तु भेदनिर्देशात्' (ब्र. सू. २-१-२२) इति सूत्रव्याख्याने 'सता सोम्य तदा सम्पन्नो भवति' (छां. ६-८-१)....... इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशः जीवादधिकं (भिन्नं) ब्रह्म दर्शयतीति श्रुतिसूत्रयोः सुषुप्तिकाले जीवपरमात्मनोर्भेदबोधकताया शंकराचार्यैः कथितत्वात् । तथा अविद्याविशिष्टचिद्रूपजीवस्य शुद्धेन ब्रह्मणा ऐक्यासंभवाच्च । तथा च सुषुप्तिकाले जीवस्य परमात्मना ऐक्याभावात् स एवोत्तिष्ठति अन्यो वेति शंकाया एवाप्रसरात् ।

जलराशौ प्रक्षिप्तस्य जलबिन्दोः जलराशिना ऐक्यप्राप्तौ पुनरुद्धरणे च स एव जलबिन्दुर्भवतीति दुःसंपादमिति दृष्टांतकथनमप्ययुक्तम्। 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति श्रुत्या एवकारेण ऐक्यं निषिध्य सादृश्यस्यैव कथनेन जलराशौ प्रक्षिप्तस्य जलबिन्दोः पूर्वजलेन सादृश्यस्यैव सद्भावेन ऐक्याभावात्–– 'अवस्थितेरिति काशकृत्स्नः' (ब्र.सू. १-४-२२) इति सूत्रभाष्यव्याख्याने भामतीकल्पतर्वादिग्रन्थेषु नदीजलस्य समुद्रजलेन ऐक्यनिषेधाच्च ।

यथा ग्रामं प्राप्तः (ग्रामसंबद्धः) पुरुषः कंचित् कालं स्थित्वा पुनर्ग्रामाद्बहिरायाति तथा जीवः सुषुप्तिकाले नाडीस्थपरमात्मनः रूपविशेषं प्राप्तः जाग्रत्कालप्राप्तौ नाडीस्थपरमात्मनः रूपविशेषं त्यक्त्वा बहिरायाति, यः पूर्वं सुषुप्तः स एव जाग्रत्कालीन इत्येतत्समीचीनमेव। सुषुप्तजाग्रत्कालीनयोरैक्यविषये उक्ताः कर्मानुस्मृतिशब्दविधिरूपाः हेतवः समीचीना एव । परन्तु अद्वैतिनां प्रतिकूलाः–– कर्मणां स्मरणस्य शब्दस्य विधेः सत्यत्वसिद्धेः ।

" अपि च न जीवो नाम कश्चित् परस्मादन्यो विद्यते यो जलबिन्दुरिव जलराशेः सतो विविच्येत. सदेव (ब्रह्मैव) तूपाधिसंपर्काज्जीव इत्युपचर्यत इत्यसकृत्प्रपंचितम्" इति, तदयुक्तम् - जीवः परमात्मनो भिन्नः न परमात्मरूपः इति, अद्वैतमते उपाधिः उपाधिसंपर्कश्च न संभवति इति चासकृत्साधितम् ।

( अधिकरणम् ४ )

अवस्थाश्चतस्रः जाग्रत्, स्वप्नः, सुषुप्तिः, मरणमिति. न तु पंचमी काचनावस्था श्रुतौ स्मृतौ वा प्रसिद्धेति. मोहावस्था (मूर्च्छा) चतसृणामेवावस्थानामन्यतमेति प्राप्ते प्रवृतम् ।

## १० ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॐ

इति सूत्रम्। तस्य च 'परिशेषान्मूर्छावस्थायाः जाग्रदवस्थात्व स्वप्नावस्थात्व सुषुप्त्यवस्थात्व मरणावस्थात्वानामसंभवात् मूर्च्छावस्था अर्धसंपत्तिरूपा पंचमावस्थेति' इति यद्व्याख्यानं तत्र विशेषविचारणीयभागो नास्ति। परंतु पूर्ववदेव अवस्थानां तत्तदवस्थाकालीनकार्यस्य च सत्त्वसिध्द्या अद्वैतिनां प्रतिकूलमेवेदमधिकरणम्, द्वैतिनामनुकूलमेवेति।

(अधिकरणम् ५)

## ११ ॐ न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि ॐ

इति सूत्रस्य "अत्र ब्रह्मस्वरूपं विचार्यते – सन्त्युभयलिंगा श्रुतयो ब्रह्मविषयाः 'सर्वकर्मा सर्वकामस्सर्वगन्धः सर्वरसः' (छां. ३-१४-२) इत्येवमाद्याः सविशेषलिंगाः। 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ. ३-८-८) इत्येवमाद्याश्च निर्विशेषलिंगाः। अत उभयलिंगं सविशेषं निर्विशेषं च ब्रह्म किं वा अन्यतरलिंगं- अन्यतरलिंगत्वेऽपि सविशेषं निर्विशेषं वा इति संशये, उभयलिंगश्रुत्यनुग्रहात् उभयलिंगं ब्रह्मेति पूर्वपक्षे, न तावत्स्वत एव परस्य ब्रह्मण उभय लिंगम्। एकस्य वस्तुनःसविशेषत्वनिर्विशेषत्वयोः विरुद्धधर्मयोः सत्त्वासंभवात्। नापि पृथिव्यादिस्थान (उपाधि) योगात् उभयरूपत्वम्। न ह्युपाधियोगादपि अन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावस्संभवति। न हि स्वच्छःसन् स्फटिकः अलक्तकाद्युपाधियोगात् अस्वच्छो भवति। भ्रममात्रत्वात् अस्वच्छताभिनिवेशस्य उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्– अतश्चान्यतरलिंगपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम्. न तद्विपरीतम्। सर्वत्र

हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' (कठ.३-१५) इत्येवमादिषु अपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते." इति यद्व्याख्यानं, तत्र सविशेषलिंगाः श्रुतयः ब्रह्मविषयाः 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छां. ३-१४-२) इत्येवमाद्याः सन्तीति यदुक्तं तत्सम्यक्। न केवलं काश्चन ब्रह्मविषयकश्रुतयः सविशेषलिंगाः– किन्तु यावत्यो ब्रह्मविषयाः श्रुतयः तास्सर्वा अपि सविशेषलिंगा एव। निर्विशेषप्रतिपदिकाया एकस्या अपि श्रुतेरभावात्-वाक्यस्य शक्यतावच्छेदकादिकं कंचिद्धर्मं निमित्तीकृत्यैव वस्तुबोधकत्वेन 'श्रुतिबोध्यं निर्विशेष' मित्यस्य 'मम माता वन्ध्ये'ति वाक्यवद् व्याहतत्वात्। 'यः सर्वज्ञः सर्ववित्' 'पृथगात्मानं प्रेरितारं च मत्वा 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' 'स कारणं कारणाधिपाधिपः' 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्येवमाद्या ब्रह्मविषयकाः सर्वाः श्रुतयः ब्रह्मणः सर्वज्ञत्व सर्ववित्त्व पृथक्त्व प्रेरकत्व रुक्मवर्णत्व कर्तृत्वेशितृत्व पूर्णषड्गुणत्व (पुरुषत्व) चतुर्मुखकारणत्व कारणाधिपाधिपत्व शासकत्व सर्वेशत्व स्वतंत्रत्व सर्वोत्तमत्व सत्यसंकल्पत्व सत्यकामत्वादीन् उत्कृष्टत्वप्रयोजकान् सकलधर्मान् कथयन्तीति ब्रह्म सविशेषमेव न तु निर्विशेषमिति।

तत्र 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ.३-८-८) 'अशब्दमस्पर्शमरूपमव्ययम्' (कठ. ३-१५) इत्याद्या निर्विशेषप्रतिपादिकाः श्रुतयः सन्तीति यदुक्तं तन्न युक्तम्। अस्थूलमनण्वितिश्रुतेः अस्थूलत्वादि यत्किंचिद्गुणनिषेधकत्वेऽपि श्रुतिसिद्धसर्वज्ञत्वादिगुणनिषेधकत्वाभावेन तया श्रुत्या निर्विशेषत्वासिद्धेः। वस्तुतः 'अणोरणीयान् महतो महीयान्' 'एष म आत्मान्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्मा अन्तर्हृदये ज्यायान्

पृथिव्या ज्यायान् अंतरिक्षाज्ज्यायान् दिवो ज्यायान् एभ्यो 'लोकेभ्यः' (छां. ३-१४-३) इत्यादि श्रुतिभिः अणुत्वमहत्त्वयोर्बोधनेन तद्विरोधात् अणुत्वमहत्त्वनिषेधकं 'अस्थूलमनणु' इति वाक्यं अणुत्वस्थूलत्वनिषेधकमपि न भवति ।। अणुत्वानणुत्वादिविरुद्धधर्मसमावेशः अयुक्त इति चेत् न 'अस्थूलमनणु' इत्यादिभिः सत्त्वरजस्तमोगुणात्मकप्रकृतिकार्यस्थूलत्वादिगुणनिषेधात् 'अणोरणीयान्' इत्यादिना अप्राकृताणुत्वादीनां स्वीकारात् श्रुत्युक्ताणुत्वानणुत्वयोर्विरोधाभावात् ।

अणुत्वानणुत्वयोः प्राकृताप्राकृतभेदेन वैलक्षण्यं कथयित्वा विरोधपरिहारः अपूर्वो दृष्ट इति चेत् - नायमपूर्वः- शंकराचार्यादिभिः- "पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि च ।।" (गी. ११-५). इत्यादिश्लोकव्याख्याने दिव्यानि = अप्राकृतानि इति रूपादीनामप्राकृतत्वोक्तेः ।

न च रूपादीनामप्राकृतत्वमुक्तं न तु सत्वरजस्तमोगुणकार्यत्वाभाव इति वाच्यम् - 'मयाध्यक्षेण प्रकृति' (गी. ११-१०) इति गीताश्लोकव्याख्यानकाले 'त्रिगुणात्मिका अविद्यालक्षणा प्रकृतिः' इति प्रकृतेः सत्त्वरजस्तमोगुणरूपत्वोक्तेः । एतेन (प्रकृतेस्सत्त्वरजस्तमोरूपाविद्यात्वोक्त्या ब्रह्मसम्बन्धिरूपादीनाम् अप्राकृतत्वोक्त्या) ब्रह्मगुणानाम् अविद्याकल्पितत्वरूपमिथ्यात्वाभावश्चोक्तो भवति ।

यत्तूक्तम्, 'अशब्दमस्पर्शमरूपमव्ययं' (कठ.१-३-१५) इत्येवमादिषु अपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यत इति तदतीव मन्दम्। अस्यां श्रुतौ केषांचित् शब्दस्पर्शगन्धदिगुणानां निषेधेऽपि सर्वज्ञत्वादिगुणानाम् अनिषेधात् -प्रत्युत 'महतः परं ध्रुवं' (कठ. १-३-१५) 'अणोरणीयान् महतो महीयान्' (कठ. १-२-२०) 'ईशानो भूतभव्यस्य' (कठ. २-१-१२) 'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति। तं देवास्सर्वेऽर्पितास्तदु नात्येति कश्चन' (कठ. २-१-९) एको वशी

सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति' (कठ. २-२-१२) 'नित्यो नित्यानां चेतनश्चेतनानां' (कठ. २-२-१३) 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदि संनिविष्टः' (कठ. २-३-१७) इत्यादि काठकवाक्यैरेव बहुगुणानामुक्तेः नैतद्वाक्यं (अशब्दमस्पर्शमरूपमव्ययमिति वाक्यं) ब्रह्मणस्सर्वधर्मनिषेधकमिति ।

'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' इति सूत्रे ब्रह्मणो निर्विशेषत्वबोधकपदाभावाच्च वाक्यस्य निर्विशेषवस्तुप्रतिपादकत्वाभावेन सविशेषवस्तुप्रतिपादकत्वनियमेन च 'सर्वत्र हि' इति वाक्यस्य सर्वत्र निर्विशेषमेव ब्रह्म प्रतिपाद्यते इत्यस्य 'मम माता वंध्या' इति वाक्यवत्स्वव्याहतत्वेन सर्वत्र सविशेषमेव ब्रह्म प्रतिपाद्यते इत्यर्थकरणस्यैव युक्तत्वाच्च ।

## १२. ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ

इति सूत्रस्य "न = यदुक्तं निर्विकल्पकमेकलिंगमेव नास्य स्वतः स्थानतो वा उभयलिंगत्वमिति तन्नोपपद्यते. भेदात् = भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते— 'चतुष्पाद् ब्रह्म' 'षोडशकलं ब्रह्म' 'वामनीत्वादिलक्षणं ब्रह्म' इत्येवंजातीयकाः— तस्मात्सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यमिति चेत् - न, प्रत्येकमतद्वचनात् = प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रम्— 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' (बृ. २-५-१) इत्यादि- अतश्च न भिन्नाकारयोगो ब्रह्मणश्शास्त्रीय इति शक्यते वक्तुम्-भेदस्योपासनार्थत्वादभेदे तात्पर्यात्" इति यद् व्याख्यानं तत्र प्रत्युपाधिभेदम्

अभेदवचनादिति यदुक्तं, तद्युक्तमेव। 'एको देवस्सर्वभूतेषु गूढस्सर्व-व्यापी सर्वभूतांतरात्मा' 'यः पृथिव्यां तिष्ठन्' 'योऽप्सुतिष्ठन्, 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव सोऽयमात्मा' स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्यादि श्रुतिभिः सर्वत्र नियामक-तया विद्यमानस्य एकत्वावधारणात् पृथिव्यन्तर्यामिणः अबाद्यन्त-र्यामिणः अभेद एव न तु स्वगतभेदः- स्वगतभेदाभ्युपगमे (परमात्म-स्वरूपाणां भेदाभ्युपगमे) 'एतस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भवति' इति परमात्मरूपाणां भेदज्ञानिनः (स्वगतभेदज्ञानिनः) नर-काद्यनर्थरूपभयश्रवणात् ।

परमात्मरूपाणां श्रुतिषु परस्परभेदाश्रवणेऽपि 'भेदः कथ्यते इति भ्रान्त्या श्रुत्यादिना श्रूयमाणो भेदः उपासनार्थः' इति गतिकथनं चायुक्तम्। "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यां" इत्यसदुपासनायाः निषिद्धत्वात् न ह्यत्र सूत्रे जीवेशाभेदः कथ्यते- किन्तु परमात्मरूपाणामभेदः इति 'न भेदादिति चेन्न' इति सूत्रं द्वैतिनामनुकूलमेव ।।

## १३. ॐ अपि चैवमेके ॐ

इति सूत्रस्य "अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनस्समामनन्ति– 'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' (कठ.४-११) इति-तथान्येऽपि "भोक्ताभोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" (श्वे.१-१२) इति यद्व्याख्यानं,तत्र भेददर्शननिन्दापूर्वकम् अभेददर्शनमेवैके शाखिनः समामनन्ति-'मनसैवेदमाप्तव्यं' इत्यादि यदु-क्तम्, तत्र भेददर्शननिन्दापूर्वकमित्यनेन अद्वैतिनाम् किं विवक्षितं-

परमात्मरूपाणां परस्परभेदनिन्दापूर्वकमिति (स्वगतभेदनिन्दापूर्वकमिति) विवक्षायां द्वैतिनामिष्टमेव । परमात्मरूपाणां परस्परभेदानंगीकारात् । जीवब्रह्मणोर्भेदनिंदापूर्वकमिति विवक्षायां, तत्साधनार्थं ' मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' इति 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इति च श्रुत्युदाहरणमयुक्तम् । एतस्यां श्रुत्यां जीवब्रह्मणोर्भेदस्य अनिन्दनात् । तथा हि-'मनसैवेदमाप्तव्य' मिति श्रुत्युदाहरणं तावदयुक्तम् । 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' इति पूर्ववाक्येन 'यत् = वस्तु, इह = अस्मिन् लोके, अस्ति, तत् एव वस्तु, अमुत्र = परलोके, यत् अमुत्र = परलोके, तत् = तदेव इह = लोके विद्यते–'यः = पुरुषः, इह = परमात्मरूपयोः, नाना = भेदं, इव = भेदाभेदं च, पश्यति,सः = पुरुषः,मृत्योः = यमात्, मृत्युं = मरणं,प्राप्नोति,इति एतल्लोकपरलोकस्थितपरमात्मरूपयोः, अभेदमुक्त्वा भेदद्रष्टृणां निंदायाःकृतत्वात्-मनसैवेदमिति प्रकृतवाक्यपि 'इदं = परमात्मरूपं मनसैव आप्तव्यम् = ज्ञातव्यम् .इह = परमात्मरूपे, किंचन = स्वगुणप्रतियोगिको वा स्वक्रियाप्रतियोगिको वा स्वावयवप्रतियोगिको वा, नाना = भेदः, नास्ति । यः भेदं जानाति स यमात् मरणं प्राप्नोति' इति परमात्मनः स्वगतगुणादिना भेदनिषेधात् । जीवादिना भेदानिषेधात् अस्मिन् वाक्ये पूर्वोत्तरवाक्ययोश्च जीवब्रह्मणोर्भेदस्य कथितत्वाच्च । तथा हि–' मनसैवेदमाप्तव्यं' इति वाक्येन ज्ञातृज्ञेयभावेन जीवब्रह्मणोर्भेदः कथितः । ' ईशानो भूतभव्यस्य' इति पूर्वतनीयपंचममंत्रे भूतस्य भव्यस्य उपलक्षणया वर्तमानस्य (सर्वस्य) ईशानः = स्वामी इति चेतनाचेतनात्मकजगतः परमात्मना ईशितृत्वेशितव्यत्वाभ्यां भेद उक्तः– ' यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवास्सर्वेऽर्पिताः तदु नात्येति कश्चन

एतद्वैतत् ॥' इति पूर्वतने नवमे मन्त्रे सूर्योदयास्तमयकारणत्वसर्वदेवाश्रयत्वादिभिः सूर्यादिदेवानां परमात्मना भेदः कथितः। एवमुत्तरवाक्ये 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' इति द्वादशे मन्त्रे जीवांतःस्थितत्वोक्त्या भूतभव्यचेतनाचेतनात्मकजगत्स्वामित्वोक्त्या च भेदः कथ्यते । एवं पूर्वोत्तरवाक्यैः स्वेन च जीवेश्वरयोर्भेदस्य प्रतिपादनात् 'मनसैवेदमाप्तव्य'मिति वाक्यं भेदनिन्दां करोतीत्युक्तिः पूर्वोत्तरवाक्यवाक्यार्थाज्ञानमूला मनसैवेदमाप्तव्यमिति श्रुत्यर्थाज्ञानमूलैवेति ।

एवं अभेदविषये 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इति श्रुत्युदाहरणमप्ययुक्तम् । तस्यामपि जीवपरमात्मनोर्भेदस्यैव बोधनात्। अभेदस्याबोधनाच्च। तथा हि-पूर्ववाक्यसहिता श्रुतिः'एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातःपरं वेदितव्यं हि किंचित्। भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्॥' इति-तस्यार्थस्तु-- भोक्ता = भोक्तारं जीवं, भोग्यं = प्रपंचं, प्रेरितारं = उभयप्रेरकं परमात्मानं, एतत् सर्वं प्रोक्तं = त्रिविधं मत्वा = विचार्य, एतत् = पूर्वमुक्तं, नित्यं सदा आत्मसंस्थं = आत्मनि = जीवे, संस्थं = विद्यमानं, ब्रह्म = परमात्मा एव ज्ञेयमिति । (ब्रह्ममेतु मां इति प्रयोगदर्शनात् ब्रह्मशब्दोऽकारांत नपुंसकलिंगः) तथा च–अनया श्रुत्या ब्रह्मणः जीवेन ज्ञेयत्वोक्त्या ज्ञातृज्ञेयभावेन जीवब्रह्मणोर्भेदः, तथा आत्मसंस्थमिति जीवस्थितत्वोक्त्या 'य आत्मनि तिष्ठन्' (बृ.) इति श्रुतिवत् जीवपरमात्मनोर्भेदः प्रतिपाद्यते । नत्वैक्यम्–अभेदबोधकपदाभावात् । इति जीवपरमात्मनोर्भेदनिन्दापूर्वकाभेददर्शनं केऽपि शाखिनोः न समामनंति इति ।

कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति' इत्यवतार्य।

# १४. ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ

रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यं, न रूपादिमत्-कस्मात् ? तत्प्रधानत्वात् 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ. ३-८-८) 'अशब्दमस्पर्शमरूपमव्ययम्' (कठ. ३-१५. मुक्ति. २-७२) 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म' (छां. ८-१४-१) 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' (मुं. २-१-२) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूः' (बृ. २-५-१९) इत्येवमादीनि वाक्यानि निष्प्रपंचब्रह्मात्मतत्वप्रधानानि नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं 'तत्तु समन्वयात्' (ब्र. सू. १-१-४) इत्यत्र । तस्मादेवं जातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम्। इतराणित्वाकारवद् ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि–उपासनाविधिप्रधानानि हि तानि–तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम्। सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीति। एष विनिगमनायां हेतुः। येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते' न पुनर्विपरीतमिति' इतीदं सूत्रं यद् व्याचक्रुः। तत्र रूपाद्याकाररहितमित्यनेन यत्किंचिद्धर्मराहित्यविवक्षायां निर्विशेषत्वासिद्धेः। सकलधर्मराहित्यस्यैव विवक्षणीयतया तस्मिन्विषये उदाहृतश्रुतीनां प्रमाणत्वासंभवात्। तथा हि–'अस्थूलमनणु' इत्यादि श्रुतेः स्थूलत्वादि यत्किंचिद्धर्मनिषेधकत्वेऽपि 'यस्सर्वज्ञ' इत्यादि श्रुत्युक्तानां सर्वज्ञत्वादीनामनिषेधात्। प्रत्युत अस्थूलमित्युत्तरेषु एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ तिष्ठत' इत्यादिवाक्येषु सूर्यादिप्रशासकत्व निर्मातृत्व द्रष्टृत्वाद्यनेक धर्माणामुक्तेः।

'अशब्दमस्पर्श' मिति कठवाक्यं शब्दादीनां केषांचिद् गुणानां निषेधकमिव भासमानमपि तस्मिन्नेव वाक्ये पूर्वोत्तरवाक्ययोश्च

महत्परत्वध्रुवत्वनित्यत्वात्यंताणुत्वात्यंतमहत्त्वभूतभव्येशितृत्व सूर्योदयास्तमयादिकारणत्व सर्वदेवाधारत्वाद्यन्तगुणानां कथनात् न निर्विशेषबोधकम् ।

एवं 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म' (छां. ८-१४-१) इति वाक्यं न कस्यापि धर्मस्य निषेधकं-प्रत्युत नामरूपनिर्वहणकर्तृत्वामृतत्वब्रह्मत्वादिधर्माणां बोधकमिति न ब्रह्मणः निर्विशेषत्वे प्रमाणं भवितुमर्हति ।

'दिव्योऽह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' (मुण्ड.२-१-२) इति वाक्यमपि दिव्यत्वादिधर्मान् वक्तीति न निर्विशेषत्वे प्रमाणम् ।

तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूः' (बृ. २-५-१९) इति वाक्यमपि सर्वज्ञत्वादि धर्मान् वक्ति । शंकराचार्यैरेव 'यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता बोद्धा विज्ञाता सर्वानुभूः सर्वात्मना सर्वमनुभवतीति सर्वानुभूः इति व्याख्यानात् इति नेदमपि वाक्यं ब्रह्मणो निर्विशेषत्वे प्रमाणं भवितुमर्हति ।

एवं नैतानि वाक्यानि ब्रह्मणो निर्विशेषत्वबोधकानि, प्रत्युत सविशेषत्वसाधकान्येवेति–एतेषां 'निष्प्रपंचब्रह्मात्मतत्वप्रधानकत्वमसिद्धमेवेति ।

यत्तूक्तं 'निर्विशेषब्रह्मात्मतत्वप्रधानत्वं प्रतिष्ठापितं 'तत्तु समन्वयात् इत्यत्र' इति, तदत्यंतमयुक्तम् । तस्मिन्नधिकरणे निर्विशेषब्रह्मात्मतत्वप्रधानत्वस्य अप्रतिष्ठानात्, प्रत्युत 'तत् = ब्रह्म सर्वज्ञं सर्वशक्ति - जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते–कथं ? समन्वयात्–सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येण एतस्यार्थस्य (सर्वज्ञत्वसर्वशक्तित्वजगदुत्पत्तिस्थितिलयकारणत्वविशिष्टस्य ब्रह्मणः) प्रतिपादकत्वेन समनुगतानि । 'सदेव सोम्येदमग्र आसीत्.. अयमात्मा ब्रह्म सर्वानुभूः' इत्यादीनि । न च तद्गतानां पदानां ब्रह्म-

स्वरूपविषये निश्चिते समन्वये अवगम्यमाने अर्थान्तरकल्पना (कार्य-परत्वकल्पना) युक्तेति ' शांकरभाष्येण वेदान्तानां कार्यपरतां निराकृत्य सर्वज्ञत्वसर्वशक्तित्वजगदुत्पत्तिस्थितिलयकारणत्वविशिष्टब्रह्म-परत्वस्य व्यवस्थापनात् । तथा च– ' तस्मामेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्य' मित्युक्तिरत्यन्तमसंगता । इतराणि त्वाकारवद्ब्रह्मविषयकाणि वाक्यानि न तत्प्रधानानि-उपासनाविधिप्रधानानि हि तानि-तेष्वसति विरोधे यथाश्रुतमाश्रयितव्य' मिति यदुक्तं तत्समीचीनमेव । ' मम माता वंध्या ' इति वाक्ये इव धर्मरहितवस्तुविषयकबोधजनकत्वस्य वाक्ये व्याहतत्वेन निराकार (निर्विशेष) ब्रह्मबोधस्यासंभवेन सर्वज्ञत्वादिगुणविशिष्टब्रह्म-विषयकबोधस्य बाधकाभावेन यथाश्रुतस्य सर्वज्ञत्वादिगुणविशिष्ट-ब्रह्मबोधकत्वस्य स्वीकार्यत्वात् ।

' उभयीष्वपि श्रुतिषु सतीषु अनाकारमेव ब्रह्म अवधार्यते न पुनर्विपरीतमिति यदुक्तं तत् हेयम् । अनाकारब्रह्मबोधकश्रुतेरेवा-भावात् इति ।

का तर्ह्याकारवद्ब्रह्मविषयाणां श्रुतीनां गतिरित्याशंका-निवर्तकतया अवतारितस्य –

## १५. ॐ प्रकाशवच्चावैयर्थ्यात् ॐ

इति सूत्रस्य यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्या-वतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमा-नेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात्त-दाकारतामिव प्रतिपद्यते, तदालंबनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते । एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति। न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिद-

नर्थवत्त्वमिति युक्तं प्रतिपत्तुम्; प्रमाणत्वाविशेषात् । नन्वेवमपि यत्पुरस्तात्प्रतिज्ञातं नोपाधियोगादप्युभयलिंगत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते. नेति ब्रूमः। उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः, उपाधीनां च अविद्याप्रत्युपस्थापितत्वात्-सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्र अवोचाम " इति श्रुतिप्रतिपाद्यानां ब्रह्मणः आकाराणाम् असत्त्वपरतया यद् व्याख्यानं तत् वेदाप्रामाण्यवादित्वमेवावगमयति । न हि वेदस्याप्रामाण्यं नाम प्रतिपाद्यार्थस्य असत्त्वातिरिक्तं किंचिदस्ति ।

न च न वयं वेदप्रतिपाद्यानां सर्वज्ञत्वाद्याकाराणाम् असत्त्वं ब्रूमः । किं तु मिथ्यात्वमिति न वेदाप्रामाण्यांगीकर्तारो वयमिति वाच्यम् । गौडपादकारिकायाश्शंकरभाष्ये—

१. ' यदेतत् द्वैतस्यासत्त्वमुक्तं युक्तितः तदेतत् वेदांतप्रमाणावगतमित्याहेति ।'

२. ' यथा च स्वप्नमाये दृष्टे असद्रूपे तथा विश्वमिदं द्वैतं समस्तम् असद्दृष्टम् ' (गौ. का. शां. २-३१)

श्रुतिभ्यः द्वैतस्यासत्वं सिद्धम् । सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः (गौ. का. शां.)

तस्मात् सूक्तं द्वैतस्यासत्त्वात् निरोधाद्यभावपरमार्थतेति (गौ.शां.

३. बाह्यं पृथिव्यादितत्त्वम् आध्यात्मिकं च देहादिलक्षणं रज्जुसर्पादिवत् स्वप्नमायादिवच्च असत् (गौ. शां. भा.)

४. बाधितस्य कालत्रयेऽपि सत्त्वाभावात् (गौ. १-४७. शां. आनंदगिरीयम्.)

५. नास्तित्वापरपर्यायत्वात् मिथ्यात्वस्य (ब्रह्मविद्याभरण) (ब्र. सू. शां.)

इत्यादिभिरनेकैर्वाक्यैरद्वैतिभिरेव मिथ्यात्वस्यासत्वरूपत्वोक्तेः। वेदोक्तस्यार्थस्य मिथ्यात्वोक्तौ पर्यायेण असत्त्वस्यैवोक्त्या वेदस्य असदर्थप्रतिपादकत्वप्राप्त्याला वेदाप्रामाण्यस्य दुर्वारत्वात् ।

किं च ब्रह्मणि पृथिव्याद्युपाधिसंबंधात् तदाकारतामिव प्रतिपद्यते, इति यदुक्तं तदप्ययुक्तम् । पृथिव्याद्युपाधेः अद्वैतमते असत्त्वेन 'असंगोह्ययं पुरुषः' इति श्रुत्या ब्रह्मणोऽपि असंगत्वेन अद्वैत्यंगीकृतस्य ब्रह्मणः पृथिव्याद्युपाधिसंबंधायोगात् ।

अपि च 'एवमवैय्यर्थ्यम् आकारवद् ब्रह्मविषयाणामपि वाक्यानां भविष्यति । न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम् । प्रमाणत्वाविशेषात्' इति यदुक्तं तत् अज्ञानां 'अद्वैतिनो वेदप्रामाप्यवादिनः आस्तिकाः– न हि बौद्धा इव वेदाप्रामाण्यवादिनो नास्तिकाः'इति भ्रमं जनयितुं वंचनाव्यापार एव । न हि वेदप्रतिपाद्यसर्वज्ञत्वादिधर्माणाम् असत्त्वापरपर्यायमिथ्यात्वोक्तौ वेदस्य प्रामाण्यं स्वीकृतं भवति । अस्ति परलोकः– अस्ति च स्वर्गादिफलदातृत्वाद्याकार (धर्म) युक्तः ईश्वर इति वदतां आस्तिकत्ववत् 'न वर्णा न वर्णाश्रमाचरधर्माः' 'न पुण्यं न पापं' 'न वेदा न लोकाः' 'न देवाः' इत्यादि कथयतामद्वैतिनाम् आस्तिकत्वं न संभवति– किं तु नास्ति परलोकः नास्ति फलदाता (फलदातृत्वाद्याकारविशिष्टं ब्रह्म) इत्यादि वदतामिव नास्तिकत्वमेव सिध्यतीति ।

किं च 'सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम' इति यदुक्तं, तदयुक्तम् सर्वस्यासत्त्वांगीकारात्, तदंतर्गतायाः अविद्यायाः सत्तैव नास्तीति 'सत्यामविद्यायां' मित्युक्तेरयोगात् । अद्वैतमते लोकवेदव्यवहारो न संजाघटीति इति तत्र तत्र निराकृतम् :

## १६. ॐ आह च तन्मात्रम् ॐ

इति सूत्रस्य "आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म– 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ. ४-६-१३) इति। एतदुक्तं भवति–नास्यात्मनोऽतर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम् – यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैवेति ॥ इति यद् व्याख्यानं शांकरीयं तदयुक्तम्। शब्दस्य यत्किंचिद्धर्मवत्येव प्रवृतेः- 'सकलधर्मरहितं (निर्विशषं) ब्रह्म' 'स यथा सैन्धवघन, इति श्रुतिः (शब्दः) आहेत्युक्तेरयोगात्। शब्दः निर्विशेषं ब्रह्म बोधयितुं प्रवर्तते इत्यस्यासंभवः पूर्वमेव बहुवारं प्रदर्शित इति पुनर्न कथ्यते। तत एवावगन्तव्यम् ॥

## १७. ॐ दर्शयति चाथो अपि स्मर्यते ॐ

इति सूत्रस्य "दर्शयति च श्रुतिः पररूपप्रतिषेधेनैन ब्रह्म, निर्विशेषत्वात्– 'अथात आदेशो नेति नेति' (बृ.२-३-६) इति। 'अन्यदेव तद्विदितादथो अविदितादधि' (के.१-३) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै २-४-१) इत्येवमाद्या-बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते– 'सहोवाचाधीहि भो इति स तूष्णीं बभूव, तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वन्तु न विजानासि उपशान्तोऽयमात्मा' इति - तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते–' ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' (गी. १३-१२) इत्येवमाद्यासु–तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते– 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्व-

भूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ' इति । " इति यद् व्याख्यानं, तत्सर्वमयुक्तम् । तथा हि—

तत्र 'दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्मनिर्विशेषत्वात्' इति तत्तावदयुक्तम् – निर्विशेषस्य शब्दबोध्यत्वासंभवात्–निर्विशेषस्य शब्दबोध्यत्वासंभवः, पूर्वं बहुवारमुक्तस्तत्रैवानुसन्धेयः ।

पररूपप्रतिषेधेन ब्रह्म दर्शयतीत्यस्य कोऽर्थः? पररूपस्य = ब्रह्मातिरिक्तस्य वस्तुनः प्रतिषेधेन = अभावकथनपूर्वकं ब्रह्म दर्शयतीति वा, पररूपात् प्रपंचात् निषेधेन भिन्नतया ब्रह्म दर्शयतीति वा ? नाद्यः- उत्तरत्र शंकरोदाहृतासु श्रुतिषु ब्रह्मा तिरिक्तवस्तुनः अभाव (नास्तीति) बोधकपदाभावात् । द्वितीयपक्षस्तु युक्त एव । 'अथात-आदेशो नेति नेति' इति, ' अन्यदेव तद्विदितादथो अविदितादधि ' इत्यादिश्रुतौ ब्रह्मणः मूर्तभेदस्यामूर्तभेदस्य कार्यकारणाभ्यां भेदस्य च कथ्यमानत्वात् ब्रह्मणश्च मूर्तभिन्नत्वात् अमूर्तभिन्नत्वात् कार्यकारणात्मकजगद्भिन्नत्वाच्च। परं तु पररूपप्रतिषेधेनैव ब्रह्म प्रतिपादयति इत्यस्मिन् विषये निर्विशेषत्वादिति हेतूकरणमयुक्तं, ब्रह्मणः सर्वप्रपंचरुपत्वं तत्र तत्र वदतश्शंकराचार्यस्य मूर्तामूर्तात्मकप्रपंचभेदकथनं स्वव्याहतं च । मूर्तामूर्तादिसकलप्रपंचभेदस्य भेदकधर्ममन्तरा अयोगेन प्रपंचभिन्नतया ब्रह्मणः प्रतिपादने व्यावर्तकधर्मवत्त्वस्यैव (सविशेषवत्त्वस्यैव) हेतुत्वेन निर्विशेषत्वहेतोः विरुद्धत्वाच्च ।

'अथात आदेशो नेति नेति' इति श्रुतिस्तु अथ = मूर्तामूर्तजगन्निरूपणानन्तरं, अतः = ब्रह्मज्ञानसाधनत्वात्, आदेशः = शास्त्राचार्योपदेशगम्यं ब्रह्म, इति = पूर्वप्रसक्तं मूर्तं, न मूर्तभिन्नं, इति = पूर्वप्रसक्तम् अमूर्तं, न अमूर्तभिन्नमिति मूर्तामूर्तात्मकजगद्भिन्नं ब्रह्मेति

प्रपंचवैलक्षण्यं कथयति । विशेषविचारः 'प्रकृतैतावत्त्वं हि प्रतिषेधति' ( ब्र. सू. ३-२-२२) इत्युत्तरसूत्रशांकरभाष्यविचारे करिष्यते ।

'अन्यदेव तद्विदितादथो अविदितादधि' (के. १-३) इति वाक्यमपि तत् = ब्रह्म, विदितात् = व्यक्तात् (कार्यात्) अन्यत् = भिन्नं, अविदितात् = अव्यक्तात् (कारणात्) अधि = भिन्नमिति भिन्नत्वमेव ब्रह्मणः प्रतिपादयति—इति ।

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनंदं ब्रह्मणो विद्वान् न बिभेति कदाचनेति' इति श्रुतिः वाचः, यतः = ब्रह्मणस्सकाशात्, मनसा सह अप्राप्य = साकल्येन ब्रह्म (परमात्मानं) अविषयीकृत्य, निवर्तन्ते, ब्रह्मणः आनन्दं विद्वान्, कदाचन = कदापि, न बिभेति = भयं न प्राप्नोति, इति ब्रह्मणः आनन्दवत्त्वरूपविशेषमेव गमयति न तु ब्रह्मातिरिक्तपदार्थाभावं न वा ब्रह्मणो निर्विशेषत्वम्।

न च 'यतो वाचो निवर्तन्ते' इति श्रुत्या ब्रह्मणः शब्दवाच्यत्वरूपधर्मनिषेधः कृत इति वाच्यम् – यत इति पदेन ब्रह्मण इति पदेन च ब्रह्मणः अबोधने इदं वाक्यं ब्रह्मणश्शब्दवाच्यत्वनिषेधकमिति कथनायोगात् । यच्छब्दादिना ब्रह्मणः अबोधने घटपटादिर्यत्किंचिद्वस्तुनोऽवाच्यत्वसिध्द्यापत्तेः ।

न च लक्षणया यत् । ब्रह्मशब्दाभ्यां ब्रह्म बोधयित्वा तस्य ब्रह्मणः अवाच्यत्वं श्रुतिर्वक्तीति वाच्यम् । शक्यसंबन्धवन्तमेवार्थं लक्षणया शब्दो बोधयति इति असंगे पुरुषे शक्यसंबन्धस्याभावात् लक्षणयापि ब्रह्मबोधानुपपत्तेः, पूर्वं ज्ञातस्यैव लक्ष्यत्वेन ब्रह्मणः प्रत्यक्षानुमानावेद्यत्वेन शब्दैनैव पूर्वं ज्ञातव्यत्वात् तदर्थं पुनः पूर्वं ज्ञानस्य आवश्यकत्वात् अनवस्थया लक्षणया ब्रह्मबोधानुपपत्तेश्चेति ।

यत्तूक्तम्— " बाष्कलिना च बाध्यः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते—'स होवाच अधीहि भो इति स तूष्णीं बभूव । तं ह

द्वितीये वा तृतीये वा वचन उवाच। ब्रूमः खलु त्वं तु न विजानासि-उपशान्तोऽयमात्मा" इति - तत्र 'अवचनेनैव ब्रह्म प्रोवाचे' ति यदुक्तं तस्य कोऽर्थः ? अवचनेनैव = शब्दमन्तरा, ब्रह्म प्रोवाच = ब्रह्मविषयकबोधजनकशब्दमकरोदिति, अवचनेनैव = वचनवृत्तिमन्तरा लक्षणयैव ब्रह्मविषयकबोधजनकशब्दमकरोदिति वा ? नाद्यः—शब्दमन्तरा ब्रह्मविषयकबोधजनकशब्दमकरोदित्यस्य व्याहतत्वात् । न द्वितीयः - अज्ञाते असंगे ब्रह्मणि लक्षणावृत्तेरप्रसरात्--पुनः पुनरधीहि भो इति निर्बन्धकारिणं तं द्वितीये तृतीये वचने = ( तूष्णीं भावं त्यक्त्वा ) उवाच. ब्रूमः खलु त्वं तु न विजानासि उपशान्तोऽयमात्मा - इतिवाक्येन तूष्णींभाव एव उत्तरं इत्यर्थस्य भासमानत्वेन ब्रह्म प्रोवाचेति श्रूयते इत्युक्त्वा तस्मिन् विषये एतादृशश्रुत्युदाहरणायोगाच्च ।

"तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते—'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते'॥ (गी. १३-१२) इत्येवमाद्यासु" इति कथनप्ययुक्तम्—

ज्ञेयं यत्तत्प्रवक्ष्यमि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतश्श्रुतिमल्लोके सर्वमावृत्यतिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चेषु निर्गुणं गुणभोक्तृ च ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥

इत्यादि (गी. १३-१२, १३,१४, १५, १६, १७) श्लोकैः (स्मृतिभिः) ज्ञेयत्व मोक्षजनकज्ञानविषयत्व ब्रह्मत्व सर्वव्याप्तपाणि-पादत्व- सर्वव्याप्तशिरोऽक्षिमुखत्व सर्वव्याप्यवृत्तित्व - सर्वेन्द्रियगुण-प्रकाशकत्व-सर्वधारकत्व-गुणभोक्तृत्व-भूतांतर्बहिःस्थितत्व – भूतरक्ष-कत्व-सर्वसंहारकत्व-सर्वोत्पादकत्व-ज्ञानगम्यत्व - सर्वहृदिस्थत्वादीना-मनेकेषां धर्माणां ब्रह्मणः कथनात् ।

न च एतच्छ्लोकेष्वेव अनादिमत् न सत् नासत् सर्वेन्द्रियवि-वर्जितमित्यादिपदैः पररूपप्रतिषेधेनैव ब्रह्म उपदिष्टमिति वाच्यम् । पूर्वोक्तानां बहूनां गुणानामुक्तत्वेन पररूपप्रतिषेधेनैवेति एवकारेण ज्ञेयत्वादिगुणनिषेधकरणायोगात् । एवकारपरित्यागेन पररूपप्रति-षेधेनेति उक्तौ तस्य सदसदादि (मूर्तामूर्तादि) भिन्नत्वेनेत्यर्थकत्वेन इष्टापत्तेः । पररूपाणां सदसदादीनां प्रतिषेधेन (असत्त्वेन) इति स्वीकारे न सत् नासत् इत्यनेन पररूपस्यासत्त्वाबोधनात् प्रथमान्त-प्रतियोग्यनुयोगिवाचकपदसमवधाने नयाँ अन्योन्याभावबोधनात् यथा घटः- पटो न इत्युक्ते घटे पटभेद एव प्रतीयते न तु पटस्यात्यं-ताभाव - सप्तम्यन्तानुयोगिवाचकपदसमवधाने नयाँ अत्यंताभाव-बोधनात् यथा भूतले न घटः इत्युक्तौ भूतले घटाभावः- प्रकृते ब्रह्म न सत् नासत् इत्यत्र उभयोः– प्रतियोग्यनुयोगिवाचकयोः पदयोः प्रथमान्तत्वेन नयँः अत्यंताभावबोधकत्वासिद्धेः– इति ।

किं च "तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते– 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ॥ इति–" वाक्येन गुणयुक्त (सविशेष) ब्रह्मणः

मायाकल्पितत्वं (मिथ्यात्वं) सिध्यतीति यदुक्तं–तदपि 'माया ह्येषा मया सृष्टा' इत्येतन्महाभारतपूर्वोत्तरवाक्य वाक्यार्थाज्ञान-स्वमताग्रहान्यतममूलकम्।

तथा हि–नमस्ते देवदेवेश........ब्राह्मणप्रिय विश्वमूर्ते महामूर्ते बांधव, भक्तवत्सल, ब्रह्मण्यदेव, भक्तोऽहं त्वां दिदृक्षुः एकान्तदर्शनाय नमो नमः' इति (महाभा.शान्तिप.अध्या.३४६) महाभारते देवदेवेशत्व ब्राह्मणप्रियत्व विश्वमूर्तित्वाद्यनेकधर्मविशिष्टब्रह्मबोधकैश्शब्दैर्नारदेन प्रार्थनायां कृतायां प्रवृत्तानां 'एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः। भगवान् विश्वदृक्सिंहः सर्वमूर्तिमयः प्रभुः॥ दर्शयामास मुनये रूपं तत्परमं हरिः। सहस्र....................आदिरव्ययः॥' (महाभा. शां. अ. ३४७) इत्यादि श्लोकानां नारदेन गुह्यैः (गोपनीयैः) तथ्यैर्विद्यमानगुणप्रतिपादकैः स्तुतः नारायणः मुनये नारदाय उत्तमरूपं प्रदर्शितवान्। प्रसन्नात्मा नारदः प्रसन्नं परमैश्वर्योपेतं नारायणं ववन्दे। मूर्ध्ना नतं नारदं प्रति देवानामादिकारणभूतः अव्ययः नाशरहितः नारायणः इत्याद्यर्थकत्वेन तथ्यैर्विद्यमानार्थप्रतिपादकैर्नामभिरित्युक्त्या तत्तत्पद प्रतिपाद्यानां देवदेवेशत्व ब्राह्मणप्रियत्व विश्वमूर्तित्व भक्तवत्सलत्वादीनां सत्यत्वसिध्द्या सविशेषत्वमेव ब्रह्मणस्सिध्यति तथा विश्वरूपस्य अव्ययत्वदेवकारणत्वाद्युक्त्या तादृशरूपस्य सत्यत्वं सिध्यति। न हि कल्पितं (मिथ्या) रूपं नाशरहितं (अव्ययं) भवति-न वा देवकारणं भवति। तस्माद्भारतवाक्यैः सगुण (देवदेवेशत्वादिधर्मयुक्त) रूपस्य तद्गतगुणानां च सत्यत्वं सिध्यति।

ननु 'माया ह्येषा मया सृष्टा' (महाभा. शां. अध्या. ३४७) इति श्लोकेन विश्वरूपस्य सगुणस्य मायिकत्वोक्तेः का गतिरिति चेत्, श्रृणु सावधानं–

एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ॥
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्येकान्तिकश्रेष्ठात्त्वं चैवैकान्तिकोत्तमः ॥

(महाभा.शां.अ. ३४७–१२, १३) इत्यादि श्लोकैः भगवान् नारायणः नारदाय स्वस्य रूपं दर्शयित्वा एकतादयो ऋषयः मम दर्शनार्थमागताः मां ते न दृष्टवन्तः-एकान्तभक्तातिरिक्तः कोऽपि मां न पश्यति । हे नारद! त्वमेकांतभक्तोत्तमोऽसि । अतोऽहं त्वया दृष्टः' इति भगवता कथिते रूपवन्तः पदार्थाः अस्मत्प्रयत्नेनैव उपलभ्यन्ते । न तत्र भक्तिरावश्यकी यथा घटपटादयः । न हि रूपवद्घटादि-पदार्थदर्शने घटे भक्तिर्वा भक्तिसाध्यघटप्रसादो वा यथा आवश्यकः तथा त्वमपि रूपवानसि । न हि त्वद्दर्शने त्वयि भक्तिर्वा भक्तिसा-ध्यप्रसादो वा (इच्छा वा) कारणम् इति हार्दं नारदशंकां निरस्यति भगवान् "एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते । इच्छन् मुहूर्ता-न्नश्येयमीशोऽहं जगतां गुरुः ॥४४॥' इति श्लोकेन । हे नारद ! यथा घटपटादयः रूपवत्त्वात् तत्र भक्तिं भक्तिसाध्येच्छां विना दृश्यन्ते एवं परमात्मा रूपवान् तत्र भक्तिं तत्साध्येच्छां वा विना दृश्यते इति न ज्ञेयम् । इच्छन् = अहमस्य दर्शनविषयो न भवामि इति ममेच्छायाम् एकस्मिन्मुहूर्ते नश्येयं = दर्शनविषयो न भवामि । अहं ईशः तादृश-शक्तिमान् जगतां गुरुरिति । कथं तर्हि मया दृष्ट इत्याशंकायां 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ॥४६॥' इति श्लोकेन नारद ! त्वं मां पश्यसि इति यत् एषा दृशिः (दर्शनं) मया माया = मायया इच्छया सृष्टा मदिच्छाधीना न तु मत्प्रसादनिरपेक्षत्वप्रयत्नाधीना । तस्मात् सर्व-भूतेषु विद्यमानदृश्यत्वादिगुणैर्युक्तं माम् एवं मदिच्छामन्तरा (पर-मात्मप्रसादमन्तरा) मनुष्यप्रयत्नेनैव घटपटादिवद्दृश्यते इति त्वं न

जानीथाः इति गुणयुक्तविश्वरूपस्य दर्शनं परमात्माधीनमित्येवोच्यते, न तु गुणयुक्तपरमात्मरूपस्य मायिकत्वम् ।

एवमेव गीतोक्तविश्वरूपस्यापि "अनेकवक्त्रनयनमनेकाभ्दुतदर्शनम् । अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् । सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥" (गी. ११-१०, ११) इत्यादिश्लोकैः विश्वरूपस्य अभरणानाम् आयुधानां माल्यांबराणां गन्धानां दिव्यत्वोक्त्या ( अप्राकृतत्वोक्त्या = सत्त्वरजस्तमोगुणात्मकाविद्याकार्यत्वाभावोक्त्या) पारमार्थिकत्वमेव सिध्यति । विश्वरूपस्यानन्तत्वोक्त्या (अपरिच्छिन्नत्व नाशाभावोक्त्या च) सविशेषरूपस्य सत्यत्वमेव सिध्यति'- इति सविशेषरूपं मायिकमित्युक्तिरयुक्ता । एतद्विषये 'माया ह्येषा' इति श्लोकोदाहरणमप्ययुक्तम् ।

## १८. ॐ अत एव चोपमा सूर्यकादिवत् ॐ

इति सूत्रस्य "यत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतःपरप्रतिषेधोपदेश्योऽतएवचास्योपाधिनिमित्ताम् अपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमा उपादीयते मोक्षशास्त्रेषु-'यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' ॥ इति 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकदा बहुधा चैव दृश्यते जलचन्द्रवत्' (ब्र बिं. १२) इत्येवमादिषु" इति यद्व्याख्यानं तत् परस्परविरुद्धार्थकपदघटितं (स्वव्याहतं) अप्रामाणिकं प्रामाणाविरुद्धं च । तथा हि-

अयमात्मा चैतन्यरूपः निर्विशेषः वाङ्मनसातीतः परप्रतिषेधोपदेश्यः इति विशेषणानि परस्परविरुद्धार्थकानि ।

'अयं' इति पदं प्रमाणसिद्धत्वं बोधयति। 'आत्मा' इति पदं 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भाव-स्तस्मादात्मेति भण्यते॥' इति भारतवचनानुसारेण आप्तिमत्त्वादान-कर्तृत्व विषयभोगकर्तृत्व व्याप्तिमत्वरूपगुणान् वदत् सत् ब्रह्मणोऽ-नेकविशेषवत्त्वं ब्रवीती। 'चैतन्यरूप' इति पदं चेतनपदस्य ज्ञानार्थ-कत्वेन तदुत्तर ष्यञः धर्मार्थकत्वेन ज्ञानवत्त्वं (ज्ञानाधिकरणत्वं) बोध-यति। 'निर्विशेष' इति पदं सकलधर्माभावं वक्ति-'वाङ्मनसातीतः' इति पदं वाग्जन्यज्ञानाविषयत्वं मनोजन्यज्ञानातीतत्वं) च वक्ति। 'परप्रतिषेधोपदेश्यः' इति पदं परप्रतिषेधेन-परविलक्षणत्वेन उप-देश्य इति व्युत्पत्त्या परविलक्षणत्वप्रकारकशब्दजन्यज्ञानविषयत्वं वक्तीति परस्परविरुद्धार्थकानीमानि पदानिति कथमेकस्य विशेषणानि भवेयुः? 'वन्ध्या पुत्रवती' इति पदयोरिव अयं आत्मा चैतन्यरूपः इति विशेषणानि सकलधर्माभावबोधकेन निर्विशेषपदेन वाग्जन्य-ज्ञानाविषयत्वमनोजन्यज्ञानाविषयत्वबोधकेन वाङ्मनसातीत इति पदेन पर (पदार्थ) विलक्षणत्वेनैव शब्दजन्य ज्ञानविषयत्वबोधकेन परप्रतिषेधोपदेश्यपदेन च विरुद्धार्थकानि।

किं च निर्विशेषत्वबोधकप्रमाणाभावात् प्रमाणेन निर्विशेषत्व-बोधासंभावाच्च सविशेषत्वबोधकप्रमाणसद्भावाच्च निर्विशेष इति विशेषणदानम् अप्रामाणिकं-प्रामाणविरुद्धं च तस्मात् (निर्विशेष-स्याप्रामाणिकत्वेन मिथ्यात्वात् = असत्त्वात्) .विशेषवत्तायाः प्रामा-णिकत्वेन सत्यत्वात्) ब्रह्मणः बाह्योपाधिनिमित्ताम् अत एव अपार-मार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवत् इत्युपमा उपादीयते मोक्षशास्त्रेषु इत्युक्तिरयुक्तैव। अद्वैतमते पृथिव्याद्युपाधेरसत्त्वेन तत्संबंधस्यासत्त्वेन असंगस्य ब्रह्मणः तत्संबंधायोगेन भ्रमस्यासंभवेन च विशेषवत्तायाः अपारमार्थिकत्व (कल्पितत्व) कथनायोगाच्च।

'यथा ह्ययं ज्योतिरात्मा' इति वाक्यस्य कस्मिन्नपि वेदादि-ग्रन्थे अनुपलंभात् कल्पितत्वमेव ॥ न च इदं वाक्यं युष्मद्दृष्टवेदादौ अनुपलब्धमपि युष्मददृष्टमोक्षशास्त्रे उपलभ्यते इति वाच्यम् तस्य उपलम्भासंमतेः। तुष्यत्विति न्यायेन सत्त्वांगीकारेऽपि तद्वाक्येन त्वदभिलषितार्थासिद्धेः--तथा हि--

'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥' इत्यस्य आपाततश्शब्दात्प्रतीयमानार्थस्तु-"यथा अयं ज्योतिरात्मा = ज्योतिः स्वरूपः, विवस्वान् = सूर्यः, एकोऽपि भिन्ना अपः अनुगच्छन् प्राप्तः सन् बहुधा क्रियते–एवं अजः अयमात्मा देवः उपाधिना = मायया, क्षेत्रेषु अनुगच्छन् भेदरूपः क्रियते" इति।

अत्रापाततः (आप्रतियमानेऽर्थे) बहवो दोषाः प्रतीयन्ते। गगनस्थसूर्यस्य भूमिस्थजलं प्रति आगमनं, गगनं परित्यज्य वा अपरित्यज्य वा ? नांत्यः गमनस्य पूर्वदेशविभागावच्छिन्नोत्तरदेश-संयोगानुकूलव्यापाररूपत्वेन पूर्वदेशपरित्यागं (विभागं) विना उत्तरदेशसंयोगरूप गमनासंभवात्। गगनरूपं पूर्वदेशं परित्यज्य गमनमित्याद्यपक्षोऽपि न युक्तः-पूर्वदेशे गगने प्रतिबिंबकालेऽपि सूर्यस्य दृष्टेः। बहुधा क्रियते इत्युक्तिरप्यसंगता। अद्वैतमते बिंबप्रतिबिंब-योरैक्यांगीकारेण बहुभावस्य (बहुत्वस्य) अनंगीकारात्।

अत्र प्रत्यवस्थीयते

## १९. ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ

इति सूत्रस्य "न जलसूर्यकादितुल्यत्वमिहोपपद्यते, तद्वदग्रहणात्। सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादि प्रतिबिंबोदयः, न त्वात्मा। मूर्तो न चास्मात्पृथ-

ग्भूताः विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात्सर्वानन्यत्वाच्च। तस्माद-युक्तोऽयं दृष्टान्तः" इति पूर्वं स्वेन सूत्रार्थतयोक्तबिंबप्रतिबिंबभाव-विषये य आक्षेपः शंकराचार्यैः कृतः, स च युक्त एव । अद्वैतमत-रीत्या ब्रह्मान्यपदार्थस्यैवाभावात्, ब्रह्मणो मूर्तत्वाभावाच्च । परंतु मूर्तत्वाभावे सर्वगतत्वादिति यो हेतुरुक्तः, स चायुक्तः । अद्वैतमते ब्रह्मणः निर्धर्मकत्वेन निस्सङ्गत्वेन च सर्वदेशसंबन्धित्वरूपसर्वगतत्वा-योगात् ।

आस्तां स विचारः— तस्याक्षेपस्य समाधायकतया अवतारि-तस्य ।

## २०. ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभय-सामंजस्यादेवम् ॐ

इति सूत्रस्य "युक्त एव त्वयं दृष्टान्तो विवक्षितांशसंभवात् । न हि दृष्टान्तदार्ष्टान्तिकयोःक्वचित् कंचिद्विवक्षितांशमुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते। सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्-न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्, शास्त्र-प्रणीतस्य तु अस्य प्रयोजनमात्रमुपन्यस्यते। किं पुनरत्र विवक्षितं सारूप्यमिति? तदुच्यते—वृद्धिह्रासभाक्त्वमिति - जलगतं हि सूर्य-प्रतिबिंबं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति जलभेदे भिद्यते इत्येवं जलधर्मानुयायि भवति न तु परमार्थतः। सूर्यस्य तथा-त्वमस्ति। एवं परमार्थतोऽविकृतमेकरूपमपि सत् ब्रह्म देहाद्युपाध्यन्त-र्भावाद्भजत इवोपाधिधर्मान् वृद्धिह्रसादीन् एवमुभयोर्दृष्टान्तदार्ष्टा-न्तिकयोः सामंजस्यादविरोधः" इति यत्समाधानपरतया व्याख्यानं तदयुक्तम्-प्रतिबिंबनाशेऽपि बिंबनाशाभावः बिंबस्य यदा यदा सत्त्वं तदा प्रतिबिम्बस्याभावः प्रतिबिम्बेन बिंबस्य अनुमानमित्याद्यनेक-

विरुद्धधर्मवत्त्वेन बिंबप्रतिबिंबयोर्भेदात् प्रतिबिंबे प्रतीयमानानां जल-वृद्धौ वृध्यादीनां बिंबे दर्शनाभावेन वृध्यादिरहिते सूर्ये वृध्यादि-दर्शनं कथमित्याशंकायाः एवासंभवेन जलरूपोपाधिगतधर्माः भासन्ते इति समाधानस्याप्ययोगेन दृष्टान्तासंमतेः। तद्दृष्टान्तेन परमार्थतो धर्मरहितमपि ब्रह्म (अविकृतमेकरूपमपि ब्रह्म) देहाद्युपाध्यन्तर्भावात् उपाधिधर्मान् वृद्धिह्रासादीन् भजत इवेति दृष्टान्तदार्ष्टान्तिकयोः सामंजस्यादविरोध इत्युक्तिरयुक्तैवेति।

अद्वैतमतरीत्या अनन्तरो बाह्य इत्यादि श्रुत्या ब्रह्मणः बहिः कस्यापि वस्तुनः अभावोक्त्या 'देहाद्युपाध्यन्तर्भावात्.' इति अन्तः-स्थित्युक्तिश्चायुक्तैवेति।

## २१. ॐ दर्शनाच्च ॐ

इति सूत्रस्य "दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपा-धिष्वन्तरनुप्रवेशम्--'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' (बृ. २-५-१८) इति. 'अनेन जीवेनात्मनानुप्रविश्य' (छां. ६-३-२) इति च. तस्माद्युक्तमेतत्-- 'अत एव चोपमा सूर्यकादिवत्' (ब्र. सू. ३-२-१८) इति – तस्मा-न्निर्विकल्पकैकलिङ्गमेव ब्रह्म, नोभयलिंगं विपरीतलिङ्गं चेति सिद्धम्' इति यद्व्याख्यानं, तत् स्वमत (अद्वैतमत) विरुद्धम्। स्वेनैव (शङ्करा-चार्येणैव) 'न तु सर्वगतस्य निरवयवस्य दिग्देशकालान्तरापक्रमण-प्राप्तिलक्षणः प्रवेशः कदाचिदपि उपपद्यते इति' (बृ. शां. भा. १-४-७) इत्याद्यनेकोपनिषद्भाष्यवाक्यैः प्रवेशाभावकथनात् "दर्श-यति श्रुतिः परस्यैव ब्रह्मणः देहादिषूपाधिष्वन्तरनुप्रवेशम्" इत्युक्तिः स्वोक्तिविरुद्धेति। ब्रह्म निर्विकल्पकैकलिङ्गमित्युक्तिरयुक्तैवेति सर्वेशत्व स्वतन्त्रत्व सर्वज्ञत्वाद्यनन्तकल्याणगुणपूर्णं ब्रह्म सविशेषमेवेति।

तथा च 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्व-मेति' 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति' इत्यादि श्रुत्युक्तप्रकारेण सर्वकर्तृत्वप्रेरकत्वसर्वज्ञत्वाद्यनन्तकल्याणगुणयुक्तं (सविशेषं) ब्रह्म ज्ञात्वा ध्यानेन अपरोक्षीकृत्य तत्प्रसादेन अनन्त-सुखं प्राप्नुत ॥ ईश्वरोऽहमिति ज्ञात्वा 'ईश्वरोऽहं' 'एतां दृष्टिमव-ष्टभ्य नष्टात्मानोऽल्पबुद्धयः' 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' 'आसुरीं योनिमापन्ना मूढा जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥' इति गीतोक्तरीत्या 'सर्वे विशेषाः (जगत्) मिथ्या। निर्विशेषं ब्रह्म। तत्स्वरूपोऽहमिति ज्ञात्वा ततो न प्राप्नुत इति।

अत्र केचिद्द्वे अधिकरणे कल्पयन्तीत्यादिना इतरमतानुवादं कृत्वा निराकरणं कृतं। तत् प्रकृतानुपयुक्तत्वान्न विचार्यते।

(अधिकरणम् ६)

## २२. ॐ प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ

'द्वे वाव ब्रह्मणो रूपे मूर्तंचैवामूर्तं च' (बृ. २-३-१) इत्युप-क्रम्य पंचमहाभूतानि द्वैराश्येन प्रविभज्य...........पुनः पठयते-- अथात आदेशो नेति नेति न ह्येतस्मादितिनेत्यन्यत्परमस्ति' (बृ. २-३-६) इति. तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे-न ह्यत्रेदं तदिति विशेषितं किंचित्प्रतिषेध्यमुपलभ्यते- इति शब्देनत्वत्र प्रतिषेध्यं किमपि समर्प्यते नेति-नेतीति परत्वान्नयँप्रयोगस्य। इति शब्दश्वायं संनिहितालंब न एवंनशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते- 'इति ह स्मोपाध्यायः कथयति' इत्येवमादिषु। संनिहितं चात्र प्रकरण सामर्थ्याद्रूपद्वैयं सप्रपंचं ब्रह्मणस्तच्च ब्रह्म यस्यैते द्व रूपे-तत्र नस्संशय

उपजायते किमयं प्रतिषेधः रूपे रूपवच्चोभयमपि प्रतिषेधत्याहोस्वित् एकतरम्। यदाप्येकतरं तदापि किं ब्रह्म प्रतिषेधति रूपे परिशिनष्टयाहोस्विद्रूपे प्रतिषेधति, ब्रह्म परिशिनष्टीति।

द्वौ चैतौ प्रतिषेधौ द्विर्नेतिशब्दप्रयोगात्। तत्र प्रकृतत्वाविशेषात् तयोरेकेन ब्रह्मणः सप्रपंचं रूपं प्रतिषिध्यते–अपरेण रूपवद्ब्रह्मेति उभयमपि प्रतिषेधति इति पूर्वपक्षे।

अथवा ब्रह्मैव रूपवत्प्रतिषिध्यते तद्धि वाङ्मनसातीतत्वात् असंभाव्यमानसद्भावं प्रतिषेधार्हं न तु रूपप्रपंचः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः नेति नेति इति अभ्यासस्त्वादरार्थः, इति वा पूर्वपक्षे प्रवृत्तमित्यवतार्य, 'प्रकृतैतावत्त्वं हि प्रतिषेधति' इति सूत्रभागं प्रकृतं प्रपंचितं च यत् एतावदियत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेषशब्दः (नेति नेतीतिशब्दः) प्रतिषेधति नतूभयं (ब्रह्म ब्रह्मणो रूपे च) नापि केवलं ब्रह्म प्रतिषेधति परिशिनष्टि रूपम् इति सिद्धान्तपरतया व्याख्याय तस्मिन् विषये केचन हेतवः सूत्राप्रतिपाद्या एव (उत्सूत्रा एव) कथिताश्शंकराचार्यैः – तत्र संशयपूर्वपक्षसिद्धांता अयुक्ता–इति प्रदर्श्य तदुक्तानुत्सूत्रितान् हेतून् अनूद्य तस्य दुष्टत्वमनन्तरं प्रदर्श्यंते। तथा हि–

'तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे' इत्यत्रोक्तप्रतिषेधशब्दार्थः कः? किमत्यंताभावः- (त्रैकालिकनिषेधरूपः) तस्य विषयः (प्रतियोगी) ब्रह्म वा मूर्तामूर्तं वा–ब्रह्म मूर्तामूर्तं सर्वं वा इति। किं वा प्रतिषेधशब्दार्थो भेदः (अन्योऽन्याभावः) तस्य भेदस्य प्रतियोगी ब्रह्म वा मूर्तामूर्तं वा– ब्रह्मादिसर्वं वा इति–

नाद्यः–तथा हि 'अथात आदेशो नेति नेति' इति श्रुतेः अथ = सत्य (मूर्तामूर्त) स्वरूपनिरूपणानन्तरं, अतः = फलसद्भावात्

आदेशः = ब्रह्मणः कथनं क्रियते (किंरूप इत्याकांङ्क्षायां) नेतिनेति इति ब्रह्म इति = मूर्तं, न मूर्तभिन्नं, इति = अमूर्तं, न अमूर्तभिन्नं, अथवा इति = मूर्तामूर्तात्मकपंचभूतं न पंचभूतभिन्नं । इति = वासनारूपं न वासनाभिन्नं इति त्रयाणामपि प्रकृतत्वात् इत्थंकत्वेन तया ब्रह्म मूर्तभिन्नं अमूर्तभिन्नं वासनाभिन्नमिति मूर्तामूर्तादिभेदः ब्रह्मणि सिध्यति, न तु मूर्तामूर्तवासनानां नास्ति नासीन्न भविष्यति इति प्रतीयमानत्रैकालिकनिषेधप्रतियोगित्वरूपम् असत्त्वं (मिथ्यात्वं) सिध्यति । पूर्वं ब्रह्मणोऽपि प्रसक्ततया इति = ब्रह्म, नेत्युक्तावपि ब्रह्मभेदः कुत्रचित्प्रतीयतां, न तु ब्रह्मणोऽत्यन्ताभावः प्रतीयते । नञः अन्योन्याभावे तात्पर्यग्राहक प्रथमान्तानुयोगिवाचकपदसमभिव्याहारात् अत्यन्ताभावे तात्पर्यग्राहकसप्तम्यन्तानुयोगिवाचकपदसमभिव्याहाराभावात् । किं च "अथवा नेति नेति विप्सेयमितीति यावत् किंचिदुत्प्रेक्षते तत्सर्वं न भवतीत्यर्थः—परिगणितप्रतिषेधे हि क्रियमाणे यदि न एतद्ब्रह्म किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात्, वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधात्, अविषयः (विषयभिन्नः) प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते" इत्यादि शांकरभाष्यवाक्यैः नेति नेतीति वाक्येन ब्रह्मणि मूर्तामूर्तादिसकलवस्तुप्रतियोगिकभेदरूपनिषेध एव बोध्यते नत्वत्यंताभाव इति सिद्धेश्च नेति नेतीति वाक्यं न मूर्तामूर्तादि पदार्थानाम् अत्यन्ताभावप्रतियोगित्वरूपासत्त्वबोधकमिति ब्रह्म मूर्तामूर्तपदार्थरूपं नेति मूर्तामूर्तपदार्थस्य सत्त्वमङ्गीकृत्य ब्रह्मणि मूर्तामूर्तभेदमेव वक्तीति प्रतिषेधस्य अन्योन्याभावबोधकत्वरूपद्वितीयपक्ष एव युक्तः । ब्रह्मणः मूर्तामूर्तादि जगद्विलक्षणत्वात् । परंतु अद्वैतिनां प्रतिकूलम् ब्रह्मणः मूर्तामूर्तादिजगद्भिन्नत्वं (विलक्षणत्वं) वाक्येन बोध्यते इत्यंगीकारे वक्ष्यमाणसंशयानां पूर्वपक्षयोश्चायोगः स चेतरत्र प्रदर्शयिष्याम इति ।

किंच इति न इति न इति वाक्यघटकाभ्यां इति शब्दाभ्यां पूर्व-प्रसक्ते मूर्तामूर्ते गृह्येते इति युक्तमेव । परन्तु ब्रह्मणोऽपि ग्रहणप्रसक्तिरित्याशङ्कैवायुक्ता - इति न इति न इत्यस्य ब्रह्मादेशरूपत्वेन ब्रह्म, इति = ब्रह्म नेति निषेधस्य (ब्रह्मणि ब्रह्मभेदस्य) बाधितत्वेन इति शब्देन ब्रह्मणः प्रसक्तेरेवासंभवेन 'किमयं प्रतिषेधः रूपे रूपवच्चोभयमपि प्रतिषेधत्याहोस्वित् एकतरमिति संशयस्यासंभवेन तथा संशयप्रदर्शनमयुक्तम् ।

यद्याप्येकतरं तदापि ब्रह्म प्रतिषेधति रूपे परिशिनष्टि आहोस्वित् रूपे प्रतिषेधति ब्रह्म परिशिनष्टि इति संशय प्रदर्शनमप्ययुक्तम् । ब्रह्म प्रतिषेधतीति पक्षे नेतिनेतित्यादेशस्य ब्रह्मदेशरूपत्वेन ब्रह्म इति न इत्यस्य ब्रह्म ब्रह्म । न इति प्रतिषेधप्राप्त्या तस्य चायोगेन ब्रह्म इति = मूर्तामूर्तरूपं न इति मूर्तामूर्तप्रतिषेधस्यैव अंगीकार्यत्वेन ब्रह्म प्रतिषेधतीति शंकाया एवाप्रसक्तेः ।

( ॥ इति संशयस्य अयुक्तत्वप्रदर्शनम् ॥ )

किं च तत्र प्रकृतत्वाविशेषादुभयमपि इति = ब्रह्म न इति = मूर्तामूर्तरूपं न इति प्रतिषेधतीति पूर्वपक्षोऽप्ययुक्तः । ब्रह्म, इति = ब्रह्म न इति निषेधकरणस्यायुक्ततायाः पूर्वमेवोक्तेः ।

अपि च 'इति = ब्रह्म न इति ब्रह्मैव प्रतिषिध्यते अभ्यासस्त्वादरार्थः' इति पूर्वपक्षान्तरमप्ययुक्तम् । ब्रह्म इति = ब्रह्मनेति निषेधस्यायुक्तत्वोक्तेः । (इति पूर्वपक्षस्यायुक्तत्वप्रदर्शनम् ।)

अथ सिद्धान्तस्याप्ययुक्तता प्रदर्श्यते । तथा हि–'प्रकृतैतावत्त्वं प्रतिषेधति' इति सूत्रभागस्य 'प्रकृतम् एतावत् = इयत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेषशब्दः प्रतिषेधति....युक्तं च कार्यस्य

वाचारंभणशब्दादिभ्योऽसत्वमिति नेति नेतीति प्रतिषेधनं न तु ब्रह्मणः सर्वकल्पनामूलत्वात् इति वाक्येन कृतः मूर्तामूर्तादिजगन्निषेध इति सिद्धान्तोऽप्ययुक्तः।

'विश्वं सत्यं' 'तदेतत्सत्यम्' 'याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः सामाभ्य' 'यतो वा इमानि भूतानि जायन्ते' इत्याद्यनेकश्रुतिभिः, 'जन्माद्यस्य यतः' 'अन्तस्तद्धर्मोपदेशात्' इत्यादिसूत्रैः, 'असत्यमप्रतिष्ठंते' इत्यादि गीतावाक्यैः शास्त्रं स्वयमेव मूर्तामूर्तादिजगद्दर्शयित्वा स्वेनैव पुनः जगद्विषयप्रतिषेधकरणस्य 'न हि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परं' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य, तस्यैव पुनरभावोऽभिलप्येत 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर' मिति ब्रह्मविषयप्रतिषेधस्य शङ्कराचार्योक्तायुक्ततेव 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर' मिति न्यायेन अयुक्तत्वेन नेति नेतीति वाक्येन जगतो निषेधायोगात्। उक्तं हि शङ्कराचार्यैः– न तु रूपप्रपंचः प्रत्यक्षा*दिगोचरत्वात् प्रतिषेधार्हः इति वाक्येन प्रतिषेधानर्हत्वम्।

न च शास्त्रं ब्रह्मणो रूपद्वयं न प्रतिपादयति किं तु निषेधायानुवदतीति वाच्यम्। प्रसक्त्यभावेन निषेधायानुवादायोगात्। न ह्यद्वैतिभिः निषेध्यत्वेनाभिमताः पुण्यपापदेवस्वर्गलोकनरकवैकुण्ठादयः प्रत्यक्षादिसिद्धा इति तेषां वेदेन (स्वेनैव) प्रपंचयित्वा निषेधः क्रियते इति वक्तव्यत्वेन 'प्रक्षालनाद्धि पङ्कस्य' इति न्यायविरोधस्य सुस्थिरत्वात्।

अपि च "युक्तं च कार्यस्य वाचारंभणशब्दादिभ्योऽसत्वमिति नेति नेतीति प्रतिषेधनमिति" यदुक्तं तत्तुच्छम् वाचारंभणश्रुतौ

---

* श्रुतिसूत्रगीताः आदिपदार्थाः।

जगतः असत्त्वबोधकपदाभावेन असत्त्वबोधकत्वासंभवात् । वाचारंभणश्रुत्यर्थस्तु पूर्वमेव वर्णितो द्रष्टव्यः । अद्वैतिभिर्जगतोऽसत्त्वोक्तौ अपसिद्धान्तश्च । यत्तु "रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तम् 'अथात आदेशो नेति नेति' (बृ. २-३-६) इति - तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिति निर्णीयते" इत्युक्तं, तत्तुच्छम् । अद्वैतमते कल्पनाधिष्ठानस्य निर्गुणब्रह्मणः अज्ञेयत्वेन स्वरूप जिज्ञासायाः तत्स्वरूपज्ञानस्य चायोगेन ब्रह्मस्वरूपावेदकत्वस्यासंभवात् ।

किं च "नापि ब्रह्मप्रतिषेध उपपद्यते; 'ब्रह्म ते ब्रवाणि' (बृ. २-१-१) इत्याद्युपक्रमविरोधात् 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' (तै. २-६-१) इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्यः' (कठ. ६-१३) इत्यवधारणविरोधात् सर्ववेदान्तव्याकोपप्रसंगाच्च' इति वाक्येन यथा ब्रह्मप्रतिषेध उक्तैर्हेतुभिर्नोपपद्यते इत्युक्तं तथा तैरेव हेतुभिः सप्रपंचरूपद्वयस्य (जगतः) निषेधस्यानुपपद्यमानत्वात् जगतो निषेधोऽपि न कार्य एव । तथा हि—सर्ववेदेषु ब्रह्मणः प्रतिपाद्यमानत्वेन निषेधे यथा सर्ववेदांतव्याकोपप्रसंगः तथा सर्ववेदेषु जगतः प्रतिपाद्यमानत्वेन तस्य जगतः निषेधे सर्ववेदान्तव्याकोपोऽस्त्येवेति ।

अंगीकृत्य चेदमुक्तम् अद्वैतमतरीत्या शुद्धब्रह्मणः अज्ञेयत्वेन एकेनापि वेदान्तवाक्येन अप्रतिपादनात् तस्य निषेधे वेदान्तव्याकोपप्रसंग एव नास्ति । जगतः ज्ञेयत्वेन वेदान्तप्रतिपाद्यतयाअद्वैतिभिरंगीकृतत्वेन जगतो निषेध एव सर्ववेदान्तव्याकोपप्रसंग इति ।

यथा ब्रह्मणोऽसत्त्वे 'अस्तीत्येवोपलब्धः' (कठ. ६–१३) इति कठश्रुतौ अवधारणविरोधः, तथा 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' (कठ. २-६) इति तस्यामेव कठश्रुतौ एत-

ल्लोकपरलोकानाम् असत्त्वोक्तौ यमप्राप्तिरूपनिंदाकरणेन सत्वसिध्या तद्विरोधः प्राप्नोति । इदमपि अंगीकृत्योक्तम् अस्तीत्येवोपलब्धव्य इति वाक्यस्य अद्वैतमतरीत्या ब्रह्मणः अस्तित्त्वबोधकत्वाभावात् । तथा हि 'अस्तीत्येवोपलब्धव्यः' इति वाक्येन किं निर्गुणस्य अस्तित्वेन उपलब्धव्यत्वमुच्यते उत सगुणस्य - नाद्यः. निर्गुणस्यास्तित्वादिधर्माणामभावेन अज्ञेयत्वेन च अस्तित्वेन ज्ञातव्यत्वबोधनासंभवात् । सगुणस्य तु मिथ्यात्वेन अस्तित्वेनोपलब्धेः भ्रमत्वेन तादृशश्रुतेः तदर्थे प्रामाण्यस्य च अद्वैतिभिरेवानंगीकारात् ।

'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' (तै. २-६-१) इत्यादिनिन्दाविरोधात्' इति यदुक्तं तदपि तुच्छम् - तथा हि—सत्त्वं नाम किं देशकालसंबंधित्वं किं वा प्रामाणिकत्वं ? उभयमपि नाद्वैतमते शुद्धब्रह्मणस्संभवति । देशकालासंबंधात् - प्रमाणाविषयत्वाच्च । अत एव (सत्यत्वरूपप्रवृत्तिनिमित्तासंभवेन शक्त्या बोधनायोगादेव) सत्यादिशब्दानां लक्षणया ब्रह्मबोधः स्वीकृतः शंकराचार्यैः तदुपनिषद्भाष्ये. तथा च सत्त्वाभाव एवासत्त्वमिति ब्रह्मणः सत्वाभावेन असत्त्वज्ञानस्य अद्वैतमते आवश्यकत्वेन असन्नेवेति वाक्यं ब्रह्मणोऽसत्त्वज्ञानिनः निन्दां करोतीति वक्तुं न शक्यमिति निन्दाविरोधादित्युक्तिरयुक्तैव । प्रत्युत 'अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति वाक्यं ब्रह्मणस्सत्त्वज्ञानिनः साधुत्वं कथयतीत्युक्तिरेवाद्वैतमतेऽयुक्ता - ब्रह्मणस्सत्त्वाभावेन अविद्यमानसत्त्वज्ञानस्य भ्रमत्वेन भ्रमवतः पुरुषस्य साधुत्वोक्तेरयुक्तत्वात् ।

किं च "नापि ब्रह्मप्रतिषेध उपपद्यते. 'ब्रह्म ते ब्रवाणि' (बृ. २-१-१) इत्याद्युपक्रमविरोधात्" इत्युक्तिरपि स्वव्याहता । 'दर्शयति चाथो अपि स्मर्यते' (ब्र. सू. ३-२-१७) इति सूत्रभाष्ये—'सहोवाचाधीहि भो इति स तूष्णीं बभूव' इति, भाष्यरत्नप्रभायाम्—

'तस्य तूष्णींभाव एवोत्तरम्' इति इत्यादिग्रन्थैः ब्रह्मणः प्रश्ने तूष्णींभावस्योत्तरत्वोक्तेः 'ब्रह्म ते ब्रवाणि' इति कथनस्य अद्वैतमतेऽयोगेन उपक्रमविरोधाभावात् ।

यच्चोक्तं "न तावदुभयप्रतिषेध उपपद्यते; शून्यवादप्रसंगात्" इति तत्तुच्छम्; अद्वैतवादस्य शून्यवादाविशेषेण शून्यवादप्रसंगादित्यापादनस्यायोगात् । तथा हि शंकराचार्यैर्विष्णुसहस्रनामभाष्ये ब्रह्मणः शून्यपदप्रतिपाद्यत्वकथनावसरे — 'निर्विशेषत्वाच्छून्यवच्छून्यः' इति शून्यवत् ब्रह्मणोऽपि निर्विशेषत्वमंगीकृत्य शून्यादवैलक्षण्यं स्वीकृतम् - तथा जगद्विषये 'ब्रह्मभिन्ने शून्यवादिभिरस्माकं साम्यमिष्टमित्यपि बोध्यम्' इत्यद्वैतसिद्धिव्याख्यायां, तथा 'यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्' इति गौडपादकारिकाभाष्ये, तथान्येषु च ग्रंथेषु जगतश्शून्यवादिवत् असत्त्वमुक्तमिति ब्रह्मविषये जगद्विषये च शून्यवादरूपत्वम् अद्वैतवादस्य स्वीकृतमिति शून्यवादप्रसंग इत्यापादनमयुक्तम् ।

यच्चोक्तं "किंचिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादयः - तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्प्यते - उभयप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत् - अपरिशिष्यमाणे चान्यस्मिन् य इतरः प्रतिषेद्धुमारभ्यते प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः" इति, तदपि तुच्छम्-निर्विशेषब्रह्मणोऽपि अद्वैतमते परमार्थत्वाभावात् । शून्यवादिमतेऽपि— 'द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना लोके सांवृतसत्यत्वं सत्त्वं च परमार्थतः ॥' इति शून्यस्य परमार्थत्वांगीकारावगमात् - 'शून्यवादेऽपि शून्यतायाः सत्यत्वांगीकारात्' इति भामत्युक्तेश्च ।

शून्यं प्रामाणिकं न - सत् । न अर्थक्रियाकारि, न शून्यं नास्तीत्यादिरूपेण शून्यस्य निषेधेऽपि निषिद्धे शून्ये रूपवन्न इत्यादि-

रूपेण अन्यधर्मनिषेधासंभवात् तथा च रज्जौ सर्पारोपः - तदनंतरं तत्र विषययुक्तत्त्वारोपः कुण्डलत्वाद्यारोपः बाधकाले रज्जौ सर्पत्वनिषेधः तदनन्तरं निषिद्धे सर्पे आरोपितविषययुक्तत्वकुण्डलित्वादीनां निषेधो दृष्ट इति किंचित् परमार्थमालम्ब्य निषेध इत्युक्तेरयुक्तवात । किंचित्परमार्थमालंब्य निषेध इत्यस्मिन् विषये यथा रज्वादिषु सर्पादय इति दृष्टांतग्रहणमप्ययुक्तम् अद्वैतमते रज्जोरपि कल्पितत्वेन पारमार्थिकत्वाभावात् ।

'ततो ब्रवीति च भूयः' इति सूत्रखण्डस्य "इतश्चैष एव निर्णयः यतस्ततः=प्रतिषेधात् भूयो ब्रवीति 'अन्यत्परमस्ति' (बृ. २-३-६) इति । अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परमस्तीति ब्रूयात्? तत्रैषाऽक्षरयोजना—नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति । नेति नेतीत्यस्य कोऽर्थः? न ह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेतिनेतीत्युच्यते, न पुनः स्वयमेव नास्तीत्यर्थः । तच्च दर्शयत्यन्यत्परमप्रतिषिद्धं ब्रह्मास्तीति यद्व्याख्यानं तदप्ययुक्तम् । अथात आदेश इति वाक्यस्य जगन्निषिध्य जगदतिरिक्तस्य ब्रह्मणः अस्तित्वबोधकत्वाभावात् । तथा हि 'अथात आदेशो नेति नेति' इति पूर्वभागेन ब्रह्म मूर्तामूर्तभिन्नमित्यादिश्य 'नह्येतस्मादिति नेत्यन्यत्परमस्ति' इति वाक्यं नेति इति मूर्तामूर्तभिन्नत्वेन कथ्यमानात् एतस्माद्ब्रह्मणः अन्यत् भिन्नं परं = उत्कृष्टं नास्ति हि इति परमात्मनः सकाशात् अन्यवस्तुनः परत्वनिषेधमेव करोति. न हि जगतः असत्त्वं बोधयित्वा अन्यत्परमस्तीति वस्तु गमयति नेति निषिध्यमानादेतस्माज्जगतः अन्यत्परं वस्तु ब्रह्म अस्तीत्यर्थकरणे न हीति निषेधवाचकपदस्य अन्वयाभावेन वैयर्थ्यं स्यात् । तस्य सार्थक्याय इति नेति निषिध्यमानाज्जगतः अन्यत् परं वस्तु न हि अस्तीति निषेधे ब्रह्मणोऽपि निषेधः प्राप्नोति, तस्मात् न ह्येतस्मा-

दिति नेत्यन्यत्परमस्तीति वाक्यं जगत् निषिध्य न ब्रह्मणोऽस्तित्व-बोधकम् ।

किं च " न ह्येतस्मादिति नेत्यन्यत्परमस्ति इति वाक्यस्य इति नेत्येतस्मात् प्रपंचनिषेधरूपात् आदेशनात् अन्यत्परमादेशनं ब्रह्मणो नास्तीति यद्व्याख्यानं भाष्ये तदप्ययुक्तम् - पूर्वोत्तरग्रन्थानवलोकन-मूलत्वात्. तथा ग्रन्थान्तरानवलोकनमूलत्वाच्च । पूर्वोत्तरग्रन्थे ग्रन्था-न्तरे च ब्रह्मणोऽनेकनाम्नां निर्देशात् । तथा हि उत्तरवाक्ये ' अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं ' (बृ. २–३–६) इति नेत्यस्मान्निर्देशात् सत्यस्य सत्यमित्यन्यनिर्देशस्य कथनात् - तस्योपनिषदहमिति तस्योपनिषदहमिति अहः अहमिति निर्देशस्य कथनात् । तस्योपनिषत् सत्यस्य सत्यमिति (बृ. २-१-१०) ब्रह्मणस्सत्यमित्यादेशः इति कथनात्–अहं नामाभवत् इत्यहमिति निर्देशस्य कथनात् ब्रह्मणो नाम सत्यमिति (छां ८–३–४) इत्यादौ सत्यमिति ब्रह्मणो नामकथनात् - विष्णुनामसहस्त्रेषु च बहूनां नाम्नां कथनाच्च ' विद्युद्ब्रह्मेत्याहुः ' ' इन्द्रमित्याचक्षते ' इत्याद्यनेकनाम्नां कथनाच्च । ग्रन्थगौरवभयादुपरम्यते ।

किं च नेति नेतीति आदेशादन्यदादेशनं ब्रह्मणो नास्तीत्येता-वन्मात्रेण निर्वाहे परमितिपदवैयर्थ्यं चैतद्व्याख्याने ।

## २३. ॐ तदव्यक्तमाह हि ॐ

इति सूत्रस्य "यत्प्रतिषिद्धात्प्रपंचजातादन्यत्परं ब्रह्म तदस्ति चेत्कस्मान्न गृह्यत इति ? उच्यते—तत् अव्यक्तमनिन्द्रियग्राह्यम्; सर्व-दृश्यसाक्षित्वात्. आह ह्येवं श्रुतिः—'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' । (मुण्ड. ३–१–८) 'स एष नेति नेत्या-त्माऽगृह्यो न हि गृह्यते' (बृ. ३–९–२६ ) 'यत्तदद्रेश्यमग्राह्यम्' (मुण्ड.

१-१-६) 'यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' (तै. २-७-१) इत्याद्या - स्मृतिरपि— 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽ-यमुच्यते'(गी. २-२५) इत्याद्या" इति यद्व्याख्यानं तत्र ब्रह्म अस्ति चेत् कस्मान्न गृह्यते इति शंकायां तत्=ब्रह्म, अव्यक्तं=इन्द्रियाग्राह्यं, हि=यस्मात् श्रुतिः स्मृतिश्च अव्यक्तत्वं इन्द्रियाग्राह्यत्वमाहेत्युक्तं युक्तमेव। परन्तु प्रतिषिद्धात्प्रपंचादिति यत्प्रपंचस्य प्रतिषिद्धत्वं विशेषणं दत्तं तदयुक्तम्। प्रपंचस्याप्रतिषिद्धत्वात्। प्रमाणसिद्धस्य प्रतिषिद्धत्वासम्भवाच्च। किं च तदव्यक्तम् अनिन्द्रियग्राह्यं सर्वदृश्यसाक्षित्वादिति अनिन्द्रियग्राह्यत्वे सर्वदृश्यसाक्षित्वहेतुकथनमयुक्तम्। तथा हि—साक्षाद्द्रष्टरि संज्ञायाम् इति द्रष्टां इत्यस्मिन्नर्थे साक्षाच्छब्दात् इति प्रत्यये निष्पन्नस्य साक्षिशब्दस्य साक्षाद्द्रष्टा इत्यर्थकत्वेन परमात्मनः सर्वदृश्यविषयकापरोक्षज्ञानकर्तृत्वरूपसर्वदृश्यसाक्षित्वस्य (सर्वापरोक्षज्ञानवत्त्वस्य) अनिन्द्रियग्राह्यत्वे हेतुत्वायोगः। चैत्रविषयकापरोक्षज्ञानवान् मैत्रः चैत्रेण न दृश्यते किम्? दृश्यत एव - एवं सर्वविषयकापरोक्षज्ञानवतोऽपि ईश्वरस्यान्यकर्तृकापरोक्षज्ञानसंभवात् इति।

## २४. ॐ अपि च संराधने प्रत्यक्षानु-मानाभ्याम् ॐ

इति सूत्रस्य "अपि चैनमात्मानं निरस्तसमस्तप्रपंचमव्यक्तं संराधनकाले पश्यन्ति योगिनः - संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम्. कथं पुनरवगम्यते संराधनकाले पश्यन्तीति? प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। तथा हि श्रुतिः—'पराञ्चिखानि व्यतृणात्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥' (कठ. ४।१) इति. 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मुं

३-१-८) इति चैवमाद्या - स्मृतिरपि—' यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युंजानास्तस्मै योगात्मने नमः ।। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् । ' इति चैवमाद्या" इति यद्व्याख्यानं तत्र भक्तिध्यानप्रणिधानाद्यनुष्ठाने योगिनः परमात्मानं पश्यन्तीति श्रुतिस्मृतिभ्यां सिध्यतीति यदुक्तं तद्युक्तमेव । प्रामाणिकत्वात् । परन्तु निरस्तसमस्तप्रपंचम् इति यत् परमात्मनः विशेषणं दत्तं, तदयुक्तम् । अप्रामाणिकत्वात् प्रमाणविरुद्धत्वात् प्रकृतपूर्वोत्तरवाक्यविरुद्धत्वात् - तथा हि—प्रपंचनिरासे (प्रपंचाभावविषये) श्रुति सूत्रगीतारूपप्रमाणस्य मायवादिना अप्रदर्शितत्वात् । प्रपंचसद्भावे 'विश्वं सत्यं' 'जन्माद्यस्य यतः' 'असत्यमप्रतिष्ठं ते' इत्यादि प्रमाणानां सत्त्वात् पूर्वोत्तरवाक्यैः योगिन इति योगिनां योगस्य च, पश्यन्तीति दर्शनस्य दर्शनकर्तृत्वस्य भक्तेर्ध्यानस्य प्रणिधानस्य सत्त्वोक्तेः श्रुतौ स्मृतौ चानेकेषां पदार्थानां सत्त्वोक्तेश्च पूर्वोत्तर वाक्यविरोधात् निरस्तसमस्तप्रपंचमिति ब्रह्मणो विशेषणमयुक्तम् ।

ननु संराध्यसंराधकभावाभ्युपगमात् परेतरात्मनोः (परमात्मा-जीवयोः) अन्यत्वं (भेदः) स्यादित्याशंकानिवर्तकतया ।

## २५. ॐ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॐ

इति सूत्रमवतार्य तस्य "यथा प्रकाशाकाशसवितृप्रभृतयोऽगुंलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते - न च स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवायमात्मभेदः स्वतस्त्वैकात्म्यमेव – तथा हि—वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते" इति यद्व्याख्यानं कृतं शंकराचार्यैः तस्य ' यथा प्रकाशादयः उपाधिषु भिद्यन्ते न स्वतः एवं प्रकाशः चिदात्मापि

कर्मणि = ध्यानादिकर्मणि उपाधौ भिद्यते, स्वतः तस्य अवैशेष्यं = एकरसत्वमेव वेदान्तेषु तत्त्वमसीत्याद्यभेदविषयकाभ्यासात् इति खल्वर्थः? स च न युक्तः - तत्त्वमसीत्यादिवेदानां जीवब्रह्मणोरेकत्वप्रतिपादकत्वाभावात्। अद्वैतिभिरेव तत्त्वमसीत्यादिवाक्यानां बोधकत्वमेव नास्तीति, बोधकत्वांगीकारेपि चिदिति अभेदाविषयकचिन्मात्रविषयकबोधजनकत्वमिति अंगीकारेण अभेदाबोधकत्वात् चिन्मात्रविषयबोधजनकत्वमपि असंभावितमिति बहुवारं प्रदर्शितत्वाच्च ।

यदुक्तं ध्यानादिकर्मणि उपाधौ भिद्यन्ते स्वतस्तु एकरसमेवेति तदप्ययुक्तमेव – तथा हि—ध्यानादिरूपोपाधिः किं सम्बद्धःसन् भेदकः उत असम्बद्ध एव भेदकः – न ह्यसम्बद्ध एव भेदकः। अनुभवविरोधात् – तथांगीकारे सदा सर्वेषां भेदकः स्यात् असम्बद्धत्वाविशेषात् – न हि सम्बद्धः सन् भेदक इत्याद्यः पक्षः संभवति। अद्वैतिभिः 'असंगो ह्ययं पुरुषः' इति श्रुत्या ब्रह्मणः असम्बद्धत्वांगीकारात्। उपाधिसम्बन्धोऽपि किं ब्रह्मणः एकदेशस्य उत समग्रस्य? नाद्यः – निरवयवस्य ब्रह्मणः एकदेशाभावेन एकदेशसम्बद्धः भिनत्तीति कथनायोगात्। न हि समग्रं ब्रह्म सम्बध्य भेदक इति द्वितीयः - समग्रसम्बन्धस्य भेदकत्वायोगात्। ध्यानादेरद्वैतमते कल्पितत्वेन ध्यानरूपोपाधिसिद्धौ जीवपरमात्मनोर्भेदसिद्धिः भेदसिद्धौ ब्रह्मभिन्नस्य जीवत्वसिध्द्या तस्य ध्यानाद्युपाधिसिद्धिः - उपाधिसिद्धौ भेदसिद्धिरित्यन्योन्याश्रयचक्रकानवस्थादि दोषदुष्टत्वेन उपाधिना भेदसिद्धेर्वक्तुमशक्यत्वाच्च ।

यथा प्रकाशाकाशसवितृप्रभृतय अंगुलिकरकोदकप्रभृतिषु उपाधिषु भिद्यन्ते न स्वतः इति दृष्टान्तोऽप्ययुक्तः – न हि गगनस्थ सवितुर्भूमिस्थितोदकेन सम्बन्धः – असम्बद्धस्य भेदकत्वे सर्वमपि सर्वदा भिद्येतेति अतिप्रसंगः – गगनस्थसूर्यस्य भूमिस्थजलेन

सम्बन्धस्तु नास्त्येवेति भेदकत्वायोगः, एवमाकाशस्याप्युपाधिर्न भेदकः - एकदेशं सम्बध्य उत समग्रमित्यादिविकल्पानां समग्रसम्बन्धे भेदकत्वायोगस्य गगनस्य भिन्नैकदेशाभावेन एकदेशसम्बन्धायोगस्य एकदेशमपि उपाधिना प्रकल्प्य कल्पितैकदेशसम्बन्धस्वीकारे भेद-कल्पकोपाधिसम्बन्धेऽपि एकदेशसमग्रविकल्पप्रसक्त्या अन्योन्याश्रय चक्रकानवस्थादिदोषप्राप्त्या गगनेऽप्युपाधिसम्बन्धेन भेदकल्पनायो-गश्च ।। एकदेशस्य (भागस्य) उपाधिसम्बन्धार्थं स्वतः(स्वाभाविकः) भागः (भेदः) स्वीकृतश्चेत् उपाधिकल्पनावैयर्थ्यम् । भेदसिध्यर्थं खलू-पाधिकल्पना - भेदस्य स्वतःसिद्धत्वादिति । एवं प्रकाशेऽपीति प्रकाशाकाशसवितृदृष्टान्तेन परब्रह्मण उपाधिना भेदसिद्धिरयुक्तेति ।।

'पृथगात्मानं प्रेरितारं च मत्वा' 'द्वा सुपर्णा' 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्याद्यनन्तश्रुतिभिः, श्रुत्यर्थनिर्णायकैः 'भेदव्यपदेशात्' 'भेदव्यपदेशाच्चान्यः' 'स्मृतेश्च' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इत्यादिसूत्रैः 'उत्तमः पुरुषस्त्वन्यः' 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादिगीता-वाक्यैः ईश्वरोऽहं' इतीश्वराभेदवादिना निन्दावाक्येन च ईशित्री-शितव्यत्वादिविरुद्धधर्मवत्त्वरूपानुमानैः, नाहमीश्वरः नाहं सर्वज्ञः इत्यादि प्रत्यक्षैश्च जीवपरमात्मनोर्भेदस्य प्रमितत्वात् स एव प्रामाणिक इति भेदशंकानिवृत्त्यर्थं सूत्रं प्रसक्तमित्युक्तिः केवलमाग्रहमूलैव, न प्रामाणिकीति ।

## २६. ॐ अतोऽनन्तेन तथाहि लिंगम् ॐ

इति सूत्रस्य "अतश्च स्वाभाविकत्वादभेदस्य अविद्याकृतत्वाच्च भेदस्य विद्यया अविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मनैकतां गच्छति । तथा हि लिंगम्—'स योहं वै तत्परमं ब्रह्मवेद ब्रह्मैव भवति'

(मुं.३-२-१) 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४-४-६) इत्यादि" इति यद्व्याख्यानं, तदतितुच्छम्। अभेदस्याप्रामाणिकत्वेन स्वाभाविकत्वायोगात् भेदस्य प्रामाणिकत्वेन अविद्याद्युपाधिसम्बन्धाद्ययोगेन च अविद्याकृतत्वस्य (कल्पितत्वस्य) अयोगाच्च। किंच चैत्रनिष्ठे शुक्तिविषयकज्ञाने शुक्तिविषयकचैत्रनिष्ठाज्ञाननिवर्तकत्वस्य दृष्टत्वेन विद्यायाः स्वसमानविषयक स्वसमानाधिकरणाविद्यानिवर्तकत्वस्यांगीकार्यत्वेन अद्वैतमते विद्यया अविद्यां विधूयेत्युक्तिरयुक्तैव। तथा हि—ब्रह्मविषयकं ज्ञानं ब्रह्मविषयकं स्वसमानाधिकरणं (ब्रह्मविषयकज्ञानसमानाधिकरणं) अज्ञानं निवर्तयतीति वक्तव्यम्। अद्वैतमते भेदादिजगत्कल्पकम् न तावत् जीवनिष्ठमिति शक्यते वक्तुम्। जीवस्याविद्याकल्पितत्वेन अविद्यासिध्यनन्तरभावित्वेन आश्रयसापेक्षाविद्यायाः पूर्वं जीवस्याभावेन जीवाश्रितत्वायोगात्।

नापि ब्रह्माश्रितं, ब्रह्मणः 'यस्सर्वज्ञस्सर्ववि' दिति श्रुत्यवगतसर्वविषयज्ञानवत्वेन कस्मिंश्चिदपि विषये अज्ञानासंभवात्। इत्याश्रयासंभवात् अज्ञानासंभवः॥ अज्ञानस्य विषयासंभवादप्यसंभवः, - न तावदज्ञानस्य जीवो विषयः, जीवस्य अविद्यासिध्द्युत्तरकालीनत्वेन अविद्याया विषयमन्तरा असंभवेन अविद्यासिद्धौ तत्कल्पितजीवसिद्धिः, जीवस्य सिद्धौ तद्विषयकाज्ञानसिद्धिरित्यन्योन्याश्रयादिना जीवस्याज्ञानविषयत्वासंभवात्।

नापि ब्रह्म अज्ञानस्य विषयः-तस्य स्वप्रकाशत्वेन (सर्वदा प्रकाशमानत्वेन) अज्ञानविषयत्वासंभवात्। नापि ब्रह्मणो धर्माः अज्ञानस्यविषयाः, अद्वैतमतरीत्या ब्रह्मधर्माणाम् अज्ञानकल्पितत्वेन अज्ञानानन्तरभावित्वेन अज्ञानाविषयत्वासंभवात्। आव्रियमाणवस्त्वभावेनापि (विषयाभावेनापि) अविद्याया असंभव एव। अस्तु वा ब्रह्माज्ञानं, तस्य ज्ञानेन निवृत्तिरपि न संभवति। ज्ञानस्य स्वसमानविषयकाज्ञाननिवर्तकत्व-

स्वभावेन तत्त्वमस्यादिवाक्यस्य ज्ञानजनकत्वाभावेन ज्ञानजनकत्वेऽपि तादृशज्ञाने अद्वैतमतरीत्या ब्रह्मणो विषयत्वासंभवेन च ज्ञानस्य ब्रह्माविषयकतया अज्ञानविषयविषयकत्वाभावेन (समानविषयकत्वाभावेन) अज्ञाननिवर्तकत्वासंभवात् । अद्वैतमते अविद्यानिवृत्तिफलदर्शनात् (ब्र. सू. २-१-१४) इति भाष्यव्याख्यानभामत्यादौ 'न हीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति, येनान्या स्यात् । किन्त्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते' इति ज्ञानस्य अविद्यानिवर्तकत्वाभावस्योक्तेश्च 'विद्यया अविद्यां विधूय' इत्युक्तिरयुक्तैव ।

'जीवः परेणानन्तेन प्राज्ञेनात्मना एकतां गच्छति' इति कथनमुत्सूत्रितं, अपसिद्धान्तकरम्, अप्रामाणिकं च । तथाहि—सूत्रे अनन्तेनेत्येतावन्मात्रमस्ति । न तु एकतां गच्छति इति जीव इति च अस्ति । अतः तद्बोधकपदानामभावात् जीव एकतां गच्छतीति उत्सूत्रितम् ।

अद्वैतमते जीवस्य सदा ब्रह्मरूपत्वेन ब्रम्हताप्राप्तिकथनानंगीकारेण ब्रम्हणा एकतां गच्छतीत्यंगीकारे अपसिद्धान्तः, प्राज्ञेनात्मना जीवस्य एकत्वप्राप्तौ प्रमाणाभावेन अप्रामाणिकं च ।

न च 'स यो ह वै तत्परमं ब्रम्ह वेद ब्रम्हैव भवति' (मुं. ३-२-९) 'ब्रम्हैव सन् ब्रम्हाप्येति' (बृ. ४-४-६) इति श्रुती जीवस्य परमात्मना एकतां वदतः इति वाच्यम् । तयोर्जीवपरमात्मनोरेकताबोधकत्वाभावात् । तथाहि—'परात्परं पुरुषमुपैति दिव्यं, (मु. ३-२-९) इति पूर्ववाक्येन (क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते । 'परात्परं पुरुषमुपैति दिव्य' मिति गन्तृगन्तव्यत्वेन - ( ब्र. सू. शां. ३-२-२७ ) इत्यादि शांकरभाष्योक्तरीत्या) गन्तृगन्तव्यभावेन जीवपरमात्मनोर्भेदकथानानन्तरं तदुपरि श्रेयसि अनेके विघ्नाः प्रसिद्धाः. अतः क्लेशानामन्यतमेन अन्येन वा देवादिना विघ्नितो ब्रम्हविदपि अन्यां गतिं

मृतो गच्छति न ब्रह्मैव इति शंकायां प्रवृत्तस्य 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इति वाक्यस्य ब्रह्मवित् नान्यां गतिं गच्छति. देवैरपि तस्य ब्रम्हप्राप्तिविघ्नो न शक्यते कर्तुम् । 'यः, परमं ब्रम्ह = परमात्मानं, वेद = जानाति, सः - ब्रम्हज्ञानी, ब्रम्ह भवत्येव = प्राप्नोत्येव,' इत्यर्थकत्वेन जीवब्रम्हणोरेकताबोधकत्वाभावात् ।

न च ब्रम्ह भवतीत्यस्य ब्रम्ह प्राप्नोतीत्यर्थकरणमयुक्तमिति वाच्यम् - एतच्छ्रुतिविचारे शांकरवार्तिककाराभ्यामेव भवतीत्यस्य प्राप्त्यर्थकत्वस्य मुख्यत्वोक्तेः । तस्मात् परमं ब्रम्ह वेद ब्रम्हैव भवतीति वाक्यं न जीवब्रम्हणोरैक्यबोधकम् । प्रत्युत प्राप्यप्राप्तृभावेन जीवब्रम्हणोर्भेदबोधकमेवेति ।

'ब्रम्हैव सन् ब्रम्हाप्येति' (बृ. ४-४-६) इति वाक्यमपि जीवब्रह्मणोर्भेदमेव बोधयति, नत्वैक्यम्. तथा हि—ब्रम्हैव सन् ब्रम्हाप्येतीति वाक्यं ब्रह्म अप्येति = प्राप्नोति इत्यर्थकत्वेन प्राप्यप्राप्तृभावेन जीवब्रह्मणोर्भेदबोधकमेव - न त्वैक्यबोधकम् ।

शंकराचार्यैरपि ब्रह्माप्येतीति वाक्यस्य मुख्यार्थस्वीकारे जीवब्रह्मणोर्भेदसिध्यापत्तेः अमुख्यार्थः स्वीकृतः । अमुख्यार्थेनाप्यभेदो न बोध्यते प्रत्युत ज्ञातृज्ञेयभावेन, जीवस्य भ्रमादिनिवृत्त्या च भेद एव सिध्यति । तथा हि तद्वाक्यं 'तस्मात् ब्रह्माप्येतीत्युपचारमात्रमेतत् विपरीतग्रहवद्देहसन्ततेर्विच्छेदमात्रं विज्ञानफलमपेक्ष्य' (बृ. शां. ४-४-६) विपरीतग्रहवती या देहसन्ततिस्तस्या विच्छेदमात्रं ज्ञानफलमपेक्ष्य उपचारमात्रमित्यर्थ इति (आनंदगिरीयम्). एताभ्यां शांकरभाष्यतद्व्याख्यानाभ्यां ब्रह्माप्येतीत्यस्य ब्रम्ह प्राप्नोतीति मुख्यार्थस्वीकारेण जीवब्रम्हणोर्भेद एव सिध्यति । स माभूत् इति स्वीकृतोऽपि गौणार्थः भेदसाधक एव, नत्वभेदसाधक इति ।

न च ब्रह्मैव सन्निति भागः जीवस्य ब्रह्मभावं (ब्रह्मत्वं) गमयतीति वाच्यम् ।

'अथ कस्मादुच्यते ब्रम्हेति, बृंहति बृंहयति च' इत्यादिश्रुत्यनुसारेण ब्रम्हशब्दस्य बृहत्त्वादि गुणविशिष्टार्थकत्वेन बृहत्त्वादिगुणानां जीवे असम्भवेन जीवः ब्रम्ह सन्= बृहत्त्वादिगुणविशिष्टः सन् ब्रम्ह प्राप्नोतीत्यर्थस्यासम्भवात् – ब्रम्हैव सन् इत्यत्रत्य ब्रम्हशब्दस्य लक्षणया चेतनमात्रार्थकत्वं स्वीकृत्य ब्रम्हैव सन् चेतनः सन् ब्रम्ह अप्येति प्राप्नोति इत्यर्थस्य स्वीकारे जीवब्रम्हणोरभेदासिद्धेः ।

किं च 'ब्रम्हैव सन् ब्रम्हाप्येति' इति मन्त्रार्थदृढीकरणायोदाहृते 'अत्र ब्रम्ह समश्नुते' इति मन्त्रे ब्रम्ह समश्नुते=प्राप्नोति इति प्राप्यप्राप्तृभावेन भेदस्यैवोक्तेः पूर्वमन्त्रस्यापि प्राप्यप्राप्तृभावेन भेदबोधकत्वमेव । अन्यथा एतन्मन्त्रविषये संवादितया 'ब्रम्ह समश्नुते' इति भेदबोधकमन्त्रोदाहरणस्यानुपपत्तेरिति ।

## २७. ॐ उभयव्यपदेशात्त्वहिकुन्डलवत् ॐ

इति सूत्रस्य "तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये - क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मुण्ड. ३-१-८) इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च - परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड.३-२-८) इति गन्तृगन्तव्यत्वेन - 'यः सर्वाणि भूतान्यन्तरो यमयति' इति नियन्तृनियन्तव्यत्वेन - क्वचित्तु तयोरेवाभेदो व्यपदिश्यते 'तत्त्वमसि' (छां. ६-८-७) 'अहं ब्रम्हास्मि' (बृ. १-४-१०) 'एष त आत्मा सर्वान्तरः' (बृ, ३-४-१) 'एष त आत्मान्तर्याम्यमृतः' (बृ. ३-७-३) इति - तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्ततो गृह्यते, भेदव्यपदेशो निरालम्बन एव स्यात् - अत उभयव्यपदेश-

दर्शनादहिकुण्डलवदत्र तत्वं भवितुमर्हति - यथाऽहिरित्यभेदः कुण्डला- भोगप्रांशुत्वादीनीति तु भेद एवमिहापीति'' इति यत् व्याख्यानम् ।

## २८. ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ

इति सूत्रस्य च "अथवा—प्रकाशाश्रयवदेतत् प्रतिपत्तव्यम् । यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नौ उभयोरपि तेजस्त्वाविशेषात् । अथ च भेदव्यपदेशभाजौ भवत एवमिहापि'' इति च यत् व्याख्यानं, तत्र जीवप्राज्ञयोर्भेदो व्यपदिश्यते इत्युक्ति र्युक्तैव । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' (मुण्ड. ३-१-८) इत्यादि श्रुतिभिस्तदुक्तरीत्या भेदकथनात् - 'यत्तूक्तं तत्त्वमसि' 'अहं ब्रम्हास्मि' एष ते आत्मा सर्वान्तरः । (बृ. ३-४-१) 'एष त आत्मान्तर्याम्यमृतः' (बृ. ३-७-३) इति श्रुतिभिरभेदो व्यपदिश्यते इति, तत्तु अयुक्तम् । 'तत्त्वमसि' 'अहं ब्रम्हास्मि' इति श्रुत्योरभेद प्रतिपादकत्वाभावस्य "सर्वेशत्व स्वतन्त्रत्व सर्वज्ञत्वादिभिर्गुणैः । सर्वोत्तमस्सत्यकामस्सत्यसंकल्प ईश्वरः ।। तत्पदार्थस्त्वमर्थस्तु किंचि- ज्ज्ञो दुःखजीवनः । संसार्ययं तद्गतिको जीवः प्राकृतलक्षणः ।। कथमे- कत्वमनयोर्घटते विपरीतयोः । विरुद्धधर्माक्रान्तत्वात्परस्परविलक्षणौ ।। जीवेशौ वन्हितुहिनाविव'' इत्याद्यनेकग्रन्थैरभेदबोधकत्वाभावस्य स्वेनैव (शंकराचार्येणैव) वर्णितत्वात् ।

'एष ते आत्मा सर्वान्तरः' (बृ. ३-७-३) इति वाक्यस्य 'भेद- व्यपदेशाच्चान्यः' (ब्र. सू. १-१-२१) इति सूत्रभाष्ये "अस्ति चादित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी, 'य आदित्ये तिष्ठान्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' (बृ. ३-७-९) इति श्रुत्यन्तरे भेदव्यपदेशात् । तत्र हि 'आदित्यादन्तरो यमादित्यो न

वेद' इति वेदितुरादित्याद्विज्ञानात्मनोऽन्योऽन्तर्यामी स्पष्टं निर्दिश्यते'' इत्याद्यनेकवाक्यैः जीवपरमात्मनोर्भेदः स्पष्टं प्रतीयते इति शंकराचार्यैरेवोक्तेर्नाभेदबोधकत्वम् । एवम् "एष ते आत्मा सर्वान्तर'' इति वाक्येन सर्वान्तरत्वाद्युक्त्या भेदस्यैव प्रतीयमानत्वात् नैकमप्यभेदबोधकमिति द्वैत्यद्वैतिभ्यां भेदव्यपदेशस्यांगीकृतत्वेऽपि द्वैत्यद्वैतिभ्यामभेदव्यपदेशस्यानङ्गीकृतत्वात् भेदाभेदव्यपदेशस्यासिद्धत्वात् अहिकुण्डलवत् भेदाभेदस्वीकार इति पूर्वपक्षस्यानुत्थानात् अहिकुण्डलवद्वा प्रकाशाश्रयवद्वा जीवपरमात्मनोर्भेदाभेदाविति पूर्वपक्षकरणमयुक्तम् ।

## २९ ॐ पूर्ववद्वा ॐ

इति सूत्रस्य "यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैवैतद्भवितुमर्हति । तथा ह्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते । यदि पुनः परमार्थत एव बद्धः कश्चिदात्माऽहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन चैकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत, न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति । अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया, तस्मात्प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः'' इति यत् सिद्धान्तसूत्रतया व्याख्यानं कृतवन्तश्शंकराचार्याः, तत्तु अतितुच्छम् । तथा हि—"यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैवैतद्भवितुमर्हति इति यदुक्तं तत् तत्सूत्रव्याख्यानिराकरणावसरे निराकृतमिति ।

यच्चोक्तं 'अविद्याकृतत्वाद्बन्धस्य विद्याया मोक्ष उपपद्यते । यदि पुनः परमार्थत एव बद्धः कश्चिदात्मा अहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन चैकदेशभूतोऽभ्युपगम्येत ततः पार-

मार्थिकबन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत' इति तदप्ययुक्तम् । अद्वैतमते ब्रह्मातिरिक्तजीवाभावात्, ब्रह्मणश्चासंगत्वेन सर्वज्ञत्वेन चाविद्यासम्बन्धाद्ययोगेन बन्धः अविद्याकृतः (कल्पितः) इत्यस्यायोगात् ।

विद्यया मोक्ष इत्येतदपि न युज्यते । तथा हि—मोक्षः ब्रह्मस्वरूपो वा अविद्यानिवृत्तिरूपो वा - नाद्यः । अद्वैतमते जीवस्य ब्रह्मस्वरूपतायाः सर्वदा सिद्धत्वेन विद्यासाध्यत्वायोगात् । नापि मोक्षः अविद्यानिवृत्तिरूप इति शक्यते वक्तुम् । अद्वैतमते विद्यायाः असंभवस्य तयोर्निवर्त्यनिवर्तकभावासंभवस्य च 'अतोऽनन्तेन' (ब्र. सू. ३-२-२६) इति सूत्रार्थनिराकरणावसरे उक्तत्वात् । 'यदि परमार्थ एव बन्धः.........तदा पारमार्थिकबंधस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रवैयर्थ्यं प्रसज्येत' इति यदुक्तं तदप्ययुक्तम् ( यथा दृष्टः प्रसन्नः सन् राजा बन्धापनोदकृत् । एवं तुष्टस्स भगवान् कुर्याद्बन्धविभेदनम् ।।) यथा राजा आराधनादिना प्रीतस्सन् सत्यभूतनिगडबन्धादिभ्यः निवृत्तिं करोति, तथा ईश्वरस्याप्याराधनादिना प्रीतस्य बन्धनिवर्तकतायाः संभवात् । प्रत्युत अद्वैतिभिरेव—"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्नवै मुक्त" इत्याद्युक्तरीत्या बन्धस्यासत्त्वेन तन्निवृत्तिरूपमोक्षस्य अयुक्ततायाः स्वीकारात् अद्वैतमत एव मोक्षासंभवः ।

यच्चोक्तं 'न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति । अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदंतु पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया' इति तत्तुच्छम् । विपरीतत्वात् - तथाहि—अभेदप्रतिपादकश्रुतेरेवाभावस्य भेदप्रतिपादकश्रुतेस्सत्त्वस्य च अद्वैतिभिरंगीकृतत्वेन 'अभेदं प्रतिपाद्यत्वेन निर्दिशति, भेदमनुवदति अर्थान्तरविवक्षया' (निराकरणार्थं) इत्यस्यायोगात् । श्रुतौ सूत्रे गीतायां च

भेदस्यानिराकरणात् । तस्मात् जीवपरमात्मनोर्भेदः, जगतः सत्यत्वं ब्रह्म सर्वाध्यक्षत्वसृष्टिस्थितिसंहारकारणत्व—देशकालविशेषाभिज्ञत्व (सर्वज्ञत्व) सर्वशक्तिमत्त्वाद्यनन्तगुणयुक्तमित्येष एव वैदिकानां सिद्धान्तः प्रामाणिकत्वात् - जीवपरमात्मनोरभेदः, जगतः मिथ्यात्वापरपर्यायमसत्त्वं ब्रह्म शून्यवत् सकलधर्मरहितं सर्वज्ञत्वादिगुणरहितमिति न वैदिकानां सिद्धान्तः. किन्तु अवैदिकानां बौद्धानां सिद्धान्त इति ।

## ३०. ॐ प्रतिषेधाच्च ॐ

इति सूत्रस्य "इतश्चैष एव सिद्धान्तः - यत्कारणं परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति शास्त्रम्— 'नान्योऽतोऽस्ति द्रष्टा' (बृ. ३-७-२३) इत्येवमादि 'अथात आदेशो नेति नेति' (बृ. २-३-६) 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ. २-५-१९) इति च ब्रह्मव्यतिरिक्तप्रपंचनिराकरणाद् ब्रह्ममात्रं परिशेषाच्चैष एव सिद्धान्त इति गम्यते" इति यद्व्याख्यानं, तदपि तुच्छम् । तथा हि— 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुतेः ब्रह्मातिरिक्तचेतननिषेधकत्वाभावस्य पूर्वं बहुवारमुक्तत्वात् तत्रैव द्रष्टव्यम् ।

'अथात आदेशो नेति नेति' इति श्रुतेरेवेदानीं विचारविषयत्वेन तस्य ब्रह्मातिरिक्तजगतः असत्त्वे हेतूकरणमयुक्तम् । न हि सन्दिग्धं कस्यचिदर्थस्य साधनाय प्रभवति ।

'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इति श्रुतौ जगतो निषेधकपदाभावात् प्रत्युत सर्वानुभूरिति पदं सर्वमनुभावयति=उत्पादयति इति सर्वस्रष्टृत्वोक्त्या, सर्वं अनुभवति=जानाति इति सर्वज्ञत्वोक्त्या ब्रह्मसृज्यस्य ब्रह्मणा ज्ञातस्य च जगतः

सत्त्वमेव बोधयतीति नेमाः श्रुतयः जगतः प्रतिषेधं (असत्वं) प्रतिपादयन्ति प्रत्युत अद्वैतमतरीत्या ब्रह्मणः ज्ञेयत्वासंभवेन ज्ञेयत्वानंगीकारेण च प्रमाणाभावात् शशविषाणवत् निर्गुणब्रह्मण एवासत्त्वं प्रतिपादयन्ति। तथा च 'यःपृथिव्यां तिष्ठन् पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयत्येष त आत्मांतर्याम्यमृतः' 'यतो वा-इमानि भूतानि जायंते' 'यः सर्वज्ञः सर्ववित्. . . .तस्मादेतद्ब्रह्म नामरूप-मन्नं च जायते' 'आत्मन आकाशः संभूत' इत्याद्यनेकवाक्यैः पृथि-व्यादिजगतः सत्त्वं, ब्रह्मणः सर्वज्ञत्वसर्वकर्तृत्वाद्यनंतगुणवत्त्वमेव सिध्यतीति जगतः सत्त्वं सर्वज्ञत्वादिगुणयुक्तब्रह्मणस्सत्त्वं वैदिकानां सिद्धान्तः, जगतः असत्वं शून्यवद् ब्रह्मणः निर्गुणत्वं (निर्विशेषत्वं) अवैदिकानां बौद्धानां सिद्धान्तः। स एव स्वीकृतः शंकराचार्य तत्परमगुरु गौडपादाचार्यादिभिरिति आस्तिकैर्न ग्राह्यमेतन्मतमिति।

(अधिकरणम् ७)

## ३१. ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ

इति सूत्रेण अतः ब्रह्मणःपरं अन्यत्तत्वमस्ति वा न वा इति संशये सेतुव्यपदेशात् उन्मानव्यपदेशात् सम्बन्धव्यपदेशात् भेदव्यप-देशाच्च अन्यत्तत्वमस्ति इति पूर्वपक्षयित्वा—

## ३२. ॐ सामान्यात्तु ॐ

इति सूत्रस्य 'न ब्रह्मणोऽन्यत् किंचिद्भवितुमर्हति प्रमाणाभावात्। न ह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे - सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम् - अनन्यत्वं च

कारणात् कार्यस्य - न च ब्रह्मव्यतिरिक्तं किंचिदजं संभवति। 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. ६-२-१) इत्यवधारणात्। एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते' इति ब्रह्मणोऽन्यत्तत्वं नास्तीति शंकराचार्याणां यद्व्याख्यानं तदुत्सूत्रितम्, प्रमाणविरुद्धं च। तथा हि—'सामान्यात्तु' इति सूत्रेण ब्रह्मणोऽन्यत्तत्वं नास्ति इत्यर्थस्य यथाकथंचिदप्यप्रतीतेः - उत्सूत्रितम् "सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु" रिति भाष्यलक्षणाभावेन तस्य अभाष्यत्वं च।

श्रुतिसूत्रगीता प्रत्यक्षानुमानरूपैः सर्वैः प्रमाणैः जगतस्सत्यत्वकथनात् प्रमाणविरुद्धं च। न हि जगतोऽभावे ब्रह्मणो जगत्स्सृष्टिकर्तृत्वं नियामकत्वमीशितृत्वं सर्वज्ञत्वमित्यादयः श्रुत्युक्ताः धर्माः संभवन्ति। न हि चैत्रः शशविषाणकर्ता शशविषाणनियामक इत्यादि कथनं घटते इति।

'न ह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे' इत्यस्तित्वे प्रमाणानुपलम्भोक्तिः जन्मान्धस्य बधिरस्य 'क्षीरे शौक्ल्यस्यास्तित्वे न किंचित् प्रमाणमुपलभामहे' इत्युक्तिसदृश्येव।

यच्चोक्तं 'सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम्। अनन्यत्वं च कारणात् कार्यस्य - न च ब्रह्मव्यतिरिक्तं किंचिदजं सम्भवति - 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. ६-२-१) इत्यवधारणात्। एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते' इति, तदयुक्तमेव। घटं प्रति कुलालस्येव ब्रह्मणो जगत्प्रति निमित्तकारणत्वेन कुलालस्य घटात् भिन्नत्वमिव ब्रह्मणो जगतो भिन्नत्वेन जगदभिन्नत्वाभावात्।

न च मृदो घटं प्रत्युपादानकारणत्वेन घटाभिन्नत्वमिव ब्रह्मणः जगत्प्रत्युपादानकारणत्वेन जगदभिन्नत्वमिति वाच्यम् - निर्विकारस्य ब्रह्मणो जगत्प्रति विकारवत्त्वरूपोपादानकारणत्वासम्भवात् । विवर्तोपादानत्वं तु अप्रामाणिकम् - तुष्यत्विति न्यायेन विवर्तोपादानत्व स्वीकारेऽपि अधिष्ठानतया स्वीकृतब्रह्मज्ञानेन अध्यस्तजगज्ज्ञाना - सम्भवः अधिष्ठानाध्यस्तशुक्तिरूप्ययोरिव ब्रह्मजगतोरभेदासम्भवश्च । न हि मिथ्यासत्ययोरैक्यं क्वापि दृष्टमित्यादयो दोषाः पूर्वं बहुधा प्रपंचिताः तत्रैव द्रष्टव्याः । एवं प्रमाणविरुद्धत्वात् अप्रामाणिकत्वात् सूत्राप्रतिपाद्यत्वात् (उत्सूत्रितत्वात्) नानेन सूत्रेण ब्रह्मणो जगदनन्यत्वसिद्धिः ।

यच्चोक्तं "अथ च य आत्मा स सेतुर्विधृतिः" (छां. ८-४-१) इति श्रुत्या ब्रह्मव्यतिरिक्तं तत्वं सिध्यतीति तदयुक्तम् । श्रुतौ ब्रह्मणस्सेतुत्वमुक्तं, न तु द्वितीयवस्तुसत्त्वम् । न च लोके सेतोः सद्वितीयत्वेन ब्रह्मणः सेतुत्वोक्त्या 'ब्रह्म सद्वयं (द्वितीयवस्तुसहितं) सेतुत्वात् लौकिकसेतुवत्' इत्यनुमानसूचनद्वारा द्वितीयवस्तुसिद्धिरिति वाच्यम् । तथा सति सेतोः मृद्दारुमयतादृष्टेः ब्रह्म मृद्दारुमयं सेतुत्वाल्लौकिकसेतुवत्' इति ब्रह्मणः मृद्दारुमयताया अपि सिध्द्यापत्तेः. तस्मात् सेतुरिव सेतुः यथा लौकिकसेतुः आधारस्तथा सेतुसामान्यात् ब्रह्म जगतस्तन्मर्यादानां च विधारकत्वात् सेतुरिति श्रुतौ उक्तमिति न सेतुत्वोक्त्या द्वितीयवस्तुसिद्धिरिति । नापि 'सेतुं तीर्त्वा' (छां. ८-४-२) इति श्रुत्या सेतुशब्दबोध्य ब्रह्मातिक्रमणोक्त्या ब्रह्मातिरिक्तं वस्तु सिध्यतीति युक्तम् । व्याकरणं तीर्णमित्यादिप्रयोगे तरतेः प्राप्त्यर्थकत्वस्य दृष्टेः सेतुं तीर्त्वेत्यत्रापि सेतुं = ब्रह्म, तीर्त्वा = प्राप्य इत्यर्थस्यैव न्याय्यत्वेन द्वितीयवस्त्वसिद्धेरिति 'सामान्यादि' ति सूत्रस्य यद्व्याख्यानं तदप्ययुक्तम्, सूत्रादेतादृशार्थस्याप्रतीतेः ।

सेतुशब्देन जगतस्तन्मर्यादानां च धारकत्वोक्तावपि धार्यजगतः धार्यमर्यादानां च सत्त्वं सिध्यति । धार्यधारकभावेन चेतनाचेतनात्मकजगतः परमात्मना भेदश्च सिध्यतीति 'सेतुं तीर्त्वे' त्यनेन सेतु (ब्रह्म) प्राप्त्युक्तावपि प्राप्यप्राप्तृभावेन प्राप्यब्रह्मणः प्राप्तृजीवेन भेदःसिध्यतीति अद्वैतिनामनिष्टमेवेति ।

## ३३. ॐ बुध्द्यर्थः पादवत् ॐ

इति सूत्रस्य 'यच्च लोके उन्मितं (एतावदिदमिति परिच्छिन्नं) कार्षापणादि ततोऽन्यद्वस्तु अस्तीति प्रसिद्धम् - तथा ब्रह्मणोऽपि तदेतद्ब्रह्म चतुष्पादष्टाशफं षोडशकलमिति उन्मानव्यपदेशात् ततोऽन्येन वस्तुना भवितव्यम्' इति तत्राभिधीयते - उन्मानव्यपदेशः न ब्रह्मातिरिक्तवस्तुप्रतिपादनार्थः । किं तर्हि बुध्द्यर्थः = उपासनार्थः, पादवत् = यथा कार्षापणे पादविभागः व्यवहारप्राचुर्याय कल्पते तद्वत्' इति व्याख्यानमपि उत्सूत्रितं सूत्रपदाबोध्यत्वात् ।

यच्चोक्तं 'उन्मानव्यपदेशः बुध्द्यर्थः उपासनार्थः' इति तदप्ययुक्तम् - असदुपासनाया निषिद्धत्वेन उपासनार्थमविद्यमानस्य कथनायोगादिति ।

## ३४. ॐ स्थानविशेषात्प्रकाशादिवत् ॐ

"यदप्युक्तं सम्बन्धव्यपदेशाद्भेदव्यपदेशाच्च परमतः स्यादिति पूर्वपक्ष्युक्तम् आक्षिप्य, तदप्यसत् - यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते इत्यादिना यत् सम्बन्धव्यपदेशस्य मिथ्यात्वेन सत्यद्वितीयवस्त्वसाधकत्वमुक्तं तत्तुच्छम् । 'सता सोम्य तदा सम्पन्नो भवति (छां. ६-८-१) 'प्राज्ञेनात्मना सम्परिष्वक्तः' (बृ.

४-३-२१) इति श्रुत्युक्तः, तथा सम्बन्ध (भेद) साधकतया 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रेण प्रतिपादितः - "सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात्. सुषुप्तौ तावत् अयं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' (बृ. ४-३-२१) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति" (ब्र. शां. भा १-३-४२) इति शांकरभाष्येण भिन्न (द्वितीय) वस्तुसाधकतया उक्तः सम्बन्धः मिथ्या, स च न सत्यद्वितीयवस्तुसाधक इति सम्बन्धस्य मिथ्यात्वोक्तेः श्रुतिविरुद्धत्वात् सूत्रविरुद्धत्वात् स्वव्याहतत्वाच्च। एवं श्रुत्यादि प्रतिपादिततया अद्वैत्युक्तस्य भेदव्यपदेशस्य मिथ्यात्वकल्पनस्याप्ययुक्तेश्च ।

एतेन 'उपपत्तेश्च' (३५) इति सूत्रव्याख्यानमपि निराकृतं वेदितव्यम् ।

## ३६. ॐ तथाऽन्यप्रतिषेधात् ॐ

इति सूत्रस्य "तथान्यवस्तुनः प्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते। तथाऽहि–'स एवाधस्तात्' (छां. ७-२५-१) 'अहमेवाधस्तात्' (छां. ७-२५-१) 'आत्मैवाधस्तात्' (छां. ७-२५-२) 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' (बृ. २-४-६) 'ब्रह्मैवेदं सर्वम्' आत्मैवेदं सर्वं (छां.७-२५-२) 'नेह नानास्ति किंचन' (बृ.४-४-१९) 'यस्मात्परं नापरमस्ति किंचित्' (श्वे.३.९) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृ. २-५-१९) इत्येवमादिवाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुमशक्यमानानि, ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति-सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तरात्मास्तीत्यवधार्यते" इति व्याख्यानमप्ययुक्तम् । उदाहृतश्रुतौ अन्यवस्तुनिषेधाभावात् । अद्वैतमतरीत्या अन्यवस्तुनिषेधस्य ब्रह्मातिरिक्तत्वे मिथ्यात्वात् तद्बोधने

वेदस्याप्रामाण्यापत्तेश्च । ननु वेदादेः सर्वस्यासत्त्वात् वेदस्य वेदप्रामाण्यस्य च असत्त्वमंगीक्रियत इति चेत् अन्यवस्तुनिषेधरूपप्रकृतप्रमेयासिद्धेः उदाहृतश्रुतौ अन्यवस्तुनिषेधः न क्रियते । तथा हि—न तावत् 'स एवाधस्तात्' (छां. ७-२५-१) 'आत्मैवाधस्तात्' (छां. ७-२५-२) 'अहमेवाधस्तात्' (छां. ७-२५-१) इति श्रुतयः अन्यवस्तु निषेधन्ति । प्रत्युत अन्यवस्तुसद्भावं ज्ञापयन्ति इति पूर्वमेव वर्णितं तत्रैव द्रष्टव्यम् ।

'आत्मैवाधस्तात्' 'आत्मा उपरिष्टात्.....................आत्मैवेदं सर्वम्' इति एकवाक्यस्थमेव आत्मैवाधस्तादिति पूर्ववाक्यम् अभेदविषये धृत्वा पुनः आत्मैवेदं सर्वमिति वाक्योदाहरणम् अभेदविषये अनेकाः श्रुतयः सन्तीति जनानां वंचनार्थमेव कृतम् ।

'यस्मात्परं नापरमस्ति किंचित्' (श्वे. ३-९) इति श्रुतिरपि यस्मात्=नारायणात्, परं=उत्तमं नास्ति, अपरं=उत्तमभिन्नं अधमं किंचिदल्पमस्ति 'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' इति, 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति च गीतोक्तेः । तथा च इदं वाक्यं परमात्मनः अधमं वस्तु अंगीकृत्य उत्तमवस्तु निषेधति, न तु परमात्मातिरिक्तवस्तु ।

न च 'तस्मान्नाणीयो न ज्यायोऽस्ति किंचित्' इत्युत्तरश्रुतिः यथा परमात्मनस्सकाशात् अणीयः वस्तु ज्यायः वस्तु नास्तीति उभयमपि निषेधति तथा यस्मात्परं न परमस्ति इति वाक्यं उत्तममधमं च वस्तु निषेधतीति वाच्यम्. । तत्र 'नाणीयः न ज्यायः' इति नञ्द्वयसद्भावेन उभयनिषेधेऽपि अत्र यस्मात्परं न अपरमस्ति किंचित् इत्येकस्यैव नञः विद्यमानत्वेन उत्तमवस्तुन एव निषेधात् ।

'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे. ३-९) इत्युत्तरवाक्ये तेन पुरुषेण इदं सर्वं पूर्णमिति अनेकपदार्थानंगीकृत्य परब्रह्मणा पूर्णत्वोक्तया-

अनेके पदार्थाः सन्तीति चावगम्यते । 'अग्निर्वै देवानामवमो विष्णुः परमः' ............... 'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' (गी. ७-७) 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो' (गी. ११-४३) इत्यादि श्रुतिस्मृत्यादिभिः यथा उत्तमवस्तुनिषेधः अधमवस्तुसद्भावश्च अवगम्यते तथानेनापि वाक्येन परब्रह्मण उत्तमं वस्तु निषिध्य अधमवस्तुसद्भावो बोध्यते ।

तथा 'य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवाभियन्ति' (श्वे. ३-१०) इत्युत्तरवाक्यं ब्रह्मज्ञानिनां सुखं इतरेषां दुःखं प्रतिपादयत् ज्ञातृज्ञेयभावेन जीवब्रह्मणोर्भेदं जीवानां सत्त्वम् सुखदुःखयोस्सत्त्वं च बोधयति ।

तथा 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः..........य एतद्विदुरमृतास्ते भवन्ति' (श्वे. ५-१३) इतीदमपि वाक्यं परब्रह्मातिरिक्ताननेकान् पदार्थान् बोधयति ।

अपि च 'वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च' (श्वे. ५-१८) इत्यादीनि अनेकानि उत्तरवाक्यानि ब्रह्मातिरिक्तानां स्थावरचरपदार्थानां सत्त्वं स्वीकृत्य तेषां परब्रह्माधीनत्वं कथयन्ति ।

'द्यावाभूमी जनयन् देव एकः' (श्वे.५-३) 'यो देवानां प्रभवः' (श्वे. ३-४) 'सर्वभूतेषु गूढं' (श्वे. ३-७) 'वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात् । तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे. २-८) इत्यादि पूर्ववाक्यानि द्यावाभूमी परब्रह्मणा जन्ये इति द्यावाभूम्योः सत्त्वं देवानां सत्त्वं सर्वप्राणिषु ब्रह्मणः अन्तःस्थित्युक्त्या सर्वप्राणिनां सत्त्वं परब्रह्मणः तमसः प्रकृतेः परतस्त्वोक्त्या प्रकृतेः सत्त्वं च ज्ञापयन्ति । तस्मात् पूर्वोत्तरवाक्यैः स्वेन च अनेकपदार्थानां सत्त्वस्य कथनात् ब्रह्मातिरिक्तद्वितीयवस्तुनः निषेधाभावाच्च नेदं वाक्यं ब्रह्मातिरिक्तद्वितीयवस्तुनिषेधकम् ।

'तदेतद्ब्रह्मापूर्वमनपरमनन्तरनबाह्यमयमात्मा ब्रह्म सर्वानुभूः' (बृ. २-५-१९) इति श्रुतिरपि ब्रह्मणोऽन्यद्वस्तु न निषेधति, किन्तु अपूर्वं=नास्य पूर्वं कारणं विद्यते इत्यपूर्वमिति ब्रह्म अनादित्वेन कारणशून्यमिति ब्रह्मणः कारणाभावमेव बोधयति. तदेव व्यनक्ति-नापरमिति—अपरं=कार्यं नेति न अपरं कार्यभिन्नमिति, अनन्तरं परमात्मा सर्वान्तर्यामिति परमात्मनः अन्तः किंचिद्वस्तु न अस्तीति अनन्तरमित्युच्यते। अबाह्यम् अस्य बहिः किंचिन्नास्तीत्यबाह्यमित्युच्यते न तु वस्तुन एवाभावात् - तथा सति (वस्तुन एवाभावे) सर्वानुभूरित्युत्तरपदेन सर्वमनुभवतीति वा सर्वमनुभावयतीति वा व्युत्पत्त्या सर्वज्ञानवत्त्वं सर्वोत्पादनकर्तृत्वमुक्तमयुक्तं स्यात्। न ह्यन्यस्य पदार्थस्यैवाभावे अन्यपदार्थकर्तृत्वं वा अन्यपदार्थानुभवितृत्वं वा सम्भवति. तस्मान्नेदमपि वाक्यं ब्रह्मातिरिक्तवस्त्वन्तरं वारयति।

यच्चोक्तं 'सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तरात्मास्तीत्यवधार्यते' इति तदप्ययुक्तम्। सर्वान्तरत्वोक्त्यैव अन्तर्विद्यमानस्य ब्रह्मणः बहिर्विद्यमानात् भेदसिद्धेः। 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' इत्याद्यन्तरत्वबोधकश्रुतीनां भेदबोधकत्वात्, भेदबोधकत्वेन शंकराचार्यैरपि व्याख्यातत्वाच्च।

## ३७. ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ

इति सूत्रस्य "अनेन सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति अन्यथा हि तन्न सिध्येत्। सेत्वादिव्यपदेशेषु हि मुख्येष्वंगीक्रियमाणेषु परिच्छेदात्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्. तथाऽन्यप्रतिषेधेऽप्यसति

वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत - सर्वंगतत्वं चास्यायामशब्दादिभ्योऽभिज्ञायते । आयामशब्दो व्याप्तिवचनशब्दः 'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छां. ८-१-३) 'आकाशवत्सर्वगतश्च नित्यः' 'ज्यायान् दिवः' (छां. ३-१४-३) 'ज्यायानाकाशात्' 'नित्यः सर्वगतस्थाणुरचलोऽयं सनातनः' (गी. २-२४) इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति" इति यद्व्याख्यानं तदप्ययुक्तम् । सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमात्मनःसिद्धं भवतीत्युक्तिरत्यन्तमसंगतैव । सर्ववस्तुसम्बन्धित्वं हि सर्वगतत्वम् - तच्च सर्वगतत्वं हि आत्मातिरिक्तवस्तुनः सत्त्व एवोपपद्यते. नत्वसत्वे शशविषाणवन्ध्यापुत्रादीनामभावेन शशविषाणादिसम्बन्धित्वं न हि यस्य कस्यापि सम्भवति ।

'आकाशवत्सर्वगतश्च नित्यः' इतिश्रुतिः यथा आकाशव्यतिरिक्तब्रह्मादिपदार्थसद्भावम् आकाशस्य तत्र सद्भावं तेन च आकाशस्य सर्वगतत्वमवगमयति. तथा ब्रह्मातिरिक्तवस्तुसद्भावं ब्रह्मणः तत्र सत्वं,तेन च ब्रह्मणः सर्वगतत्वमवगमयति, न तु ब्रह्मातिरिक्तं वस्तुनिषिध्य तस्य सर्वगतत्वं वक्ति । स्वातिरिक्तवस्तुनोऽभावे तत्सम्बन्धाभावे च न सर्वगतत्वमुपपद्यते - शशविषाणस्यासत्त्वे शशविषाणसंबन्धाभावे वा तद्गतत्वं न हि कस्यचिदुपपद्यते । सर्वा (पदार्था) भावमात्रेण तत्सम्बन्धाभावमात्रेण वा ब्रह्मणः सर्वगतत्वे नरविषाणस्यापि सर्वगतत्वं स्यात् - अद्वैतमतरीत्या स्वातिरिक्तपदार्थाभावात्, तत्सम्बन्धाभावाच्च ।

न च असतो नरविषाणस्य सम्बन्धाभावात् सर्वगतत्वं नोपपद्यते इति वाच्यम्. 'असंगो ह्ययं पुरुष' इति श्रुत्या ब्रह्मणोऽपि पदार्थसम्बन्धाभावावगमात् ।

न च अन्यप्रतिषेधे असति (अन्यपदार्थसत्त्वे) वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येतेति वाच्यम् - तथोक्तेरयुक्तत्वात् । तथा हि—सर्वगतत्वं हि सर्वपदार्थप्रतियोगिकसम्बन्धः-तच्च सर्वगतत्वं (स च सम्बन्धः) सर्वपदार्थप्रतियोगिकभेदसापेक्षं स्वेन स्वस्य सम्बन्धायोगात् । तथा च ब्रह्मणः परिच्छेदरूपा व्यावृत्तिः सर्वगतत्वस्यानुकूलैव । (साधिकैव) न तु सर्वगतत्वप्रतिक्षेपिकेति । एतेन सेतुव्यपदेशेऽङ्गीक्रियमाणे इतरस्मात् परमात्मनः परिच्छेदः प्रसज्येतेत्यापादनमपि निरस्तम् । परिच्छेदो हि भेदः स च सर्व (प्रतियोगिक) सम्बन्धरूपसर्वगतत्वसाधक एव न हि स्वस्य स्वेनैव सम्बन्धः संजाघटीति । तथा च 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिप्रमाणसिद्धं सर्वगतत्वम् अन्यपदार्थसत्त्व एव सम्भवतीति इतरप्रतिषेधः सर्वगतत्वविरोध्येवेति अन्यप्रतिषेधोऽयुक्त एवेति ।

## ३८. ॐ फलमत उपपत्तेः ॐ

इति सूत्रस्य "यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनां किमेतत्कर्मणो भवत्याहोस्विदीश्वरात् इति भवति विचारणा । तत्र तावत् प्रतिपाद्यते फलमत ईश्वराद्भवितुमर्हति- कुतः? उपपत्तेः - स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधद्देशकालविशेषाभिज्ञत्वात्कर्मिणां कर्मानुरूपं फलं सम्पादयतीत्युपपद्यते - कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्, अभावाद्भावानुत्पत्तेः । स्यादेतत् कर्म विनश्यत स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति. तदपि न परिशुध्यति, प्राग्भोक्तृसम्बन्धात्फलत्वानुपपत्तेः" - इति यद्व्याख्यानं शंकराचार्याणां तद्युक्तमेव प्रामाणिकत्वात्; परंतु कर्म- कर्मफलतद्दातृत्वादीनां सत्यत्वसिध्या अद्वैतिनां प्रतिकूलम्

# ३९. ॐ श्रुतत्वाच्च ॐ

इति सूत्रस्य च "न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः, किं तर्हि, श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे - तथा च श्रुतिर्भवति। 'स वा एष महानज आत्मान्नादो वसुदानः' (बृ. ४-४-२४) इत्येवं-जातीयका" इति यद्व्याख्यानं तद्युक्तमेव । परन्तु निर्विशेषब्रह्मवादि-नामद्वैतिनां प्रतिकूलम् । ईश्वरस्य सर्वाध्यक्षत्वविचित्रसृष्टिस्थिति संहारकारणत्व - देशकालविशेषज्ञानवत्त्वादीनां सिद्ध्या सविशेषत्व-सिद्धेः जगतः सृष्ट्याद्युक्त्या असतः सृष्टिस्थित्यादेः असम्भवात् जगतस्सत्त्वसिद्धेः, स्वर्गादिफलस्य च सत्त्वसिद्धेः द्वैतिनामनुकूलम् । न च तस्यैव ब्रह्मणः व्यावहारिक्याम् ईशित्रीशितव्यविभागावस्थायां अयमन्यः स्वभावो वर्ण्यते इति सर्वाध्यक्षत्वादीनां व्यावहारिकत्व-मुक्तमिति वाच्यम् - स्वव्याहतत्वात् । स्वयमेव बौद्धैः प्रमाणानि व्याव-हारिकवस्तुविषयकाणि मया पारमार्थिकत्वं वस्तूनां निराकरिष्यते इत्युक्तौ प्रमाणानि पारमर्थिकत्वमेव वस्तूनां विषयीकुर्वन्ति न व्याव-हारिकत्वं । बाधकप्रमाणसत्त्वे असत्त्वमेव वस्तूनां न व्यावहारिकत्व-मिति (ब्र. सू. २-२-३१) सूत्र भाष्यभामत्यादौ उक्तत्वेन पदार्थानां व्यावहारिकत्वोक्ती स्वव्याहते । 'स वा एष महानज आत्मा अन्नादो वसुदानः' इत्यादि श्रुत्युक्तफलस्य तद्दातृत्वस्य च नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वरूपव्यावहारिकत्व-कथनायोगात् इति ।

# ४०. ॐ धर्मं जैमिनिरत एव ॐ

इति सूत्रेण "जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते । अत एव श्रुतेरुपपत्तेश्च" इति पूर्वपक्षयित्वा.

# ४१. ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ

इति सूत्रस्य "बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्वते - हेतुव्यपदेशात्, धर्माधर्मयोरपि हि कारयितृत्वेन ईश्वरो हेतुर्व्यपदिश्यते - फलस्य च दातृत्वेन 'एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधुकर्म कारयति तं यमधो निनीषते' इति । स्मर्यते चायमर्थो भगवद्गीतासु— 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।। स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् ।।' (गी. ७–२१) इति. सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते - तदेव चेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजतीति ।" इति यद्व्याख्यानं तदपि ब्रह्मणो निर्विशेषत्वं जगतः त्रैकालिकनिषेधप्रतियोगित्वापरपर्यायम् असत्त्वं (मिथ्यात्वं) वदतामद्वैतिनां प्रतिकूलम् - द्वैतिनामनुकूलम् । ब्रह्मणः फलदातृत्वकर्मकारयितृत्वादिधर्मोक्त्या सविशेषत्वसिद्धेः- फलकर्मादिजगतः ईश्वरसृष्टत्वोक्त्या जगतः सत्त्वसिद्धेश्चेति ।

न च सर्वमसदेवेति वदतामस्माकं (अद्वैतिनां) ब्रह्मणः फलदातृत्वादेरसत्त्वादेव ब्रह्मणः सविशेषत्वं वा फलादिजगतः सत्यत्वं वा न सिध्यतीति वाच्यम् ।

"बालस्य हि विनोदाय धात्री वक्ति शुभां कथाम् । क्वचित् सन्ति महाबाहो राजपुत्रास्त्रयश्शुभाः ।। द्वौ न जातौ तथैकस्तु गर्भे एव न च स्थितिः । वसन्ति ते धर्मयुक्ता अत्यन्तासति पत्तने ।। स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः । गच्छन्तो गगने वृक्षान् ददृशुः फलशालिनः । भविष्यन्नगरे तत्र राजपुत्रास्त्रयोऽपि ते । सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः । धात्र्येति कथिता रामबालका-

ख्यायिका शुभा । निश्चयं स ययौ बालो निर्विचारणया धिया ।। इयं संसाररचना विचारोज्झितचेतसाम् । बालकाख्यायिका वेत्थमवस्थितिमुपागता ।।'' इत्यादिवाक्यैः 'हे बाहुशालिन् बालक! कस्मिश्चिद्ग्रामे शुभास्त्रयो राजपुत्राः सन्ति, तेषां मध्ये द्वौ न जातौ, एको गर्भ एव न स्थितः, एतादृशास्त्रयः पुत्राः अत्यन्तासति शशविषाणसदृशे पत्तने (गन्धर्वनगरे) धर्मयुक्ताः सन्तो वासं कुर्वन्ति । ते शुद्धान्तःकरणाः कदाचित् स्वकीयात् शून्यनगरात् निर्गत्य गच्छन्तो गगने फलशालिनः वृक्षान् दृष्टवन्तः - त्रयस्ते राजपुत्राः मृगयाव्यहारिणस्सन्तो भविष्यन्नसरे (इदानीमविद्यमाने नगरे) सुखं यथा स्यात्तथाः वासं चक्रुः - इति धात्र्या बालकं प्रति कथा कथिता । विचारशून्यः स बालकः कथितं सर्वं निश्चितमिति यथा ज्ञातवान् तथा विचारशून्यमानसाः इमां कर्तृत्वभोक्तृत्वफलदातृत्वादिरूपां संसाररचनां विचारशून्यबालकवत् निश्चितामन्वते' इति पंचदश्यां विद्यारण्योक्तरीत्या राजपुत्रकथां कथयित्री धात्रीव अद्वैतमतोपदेष्टारश्शंकराचार्याः विचारशून्यान् बालान् प्रतीव विचारोज्झितचेतसः मूर्खान् प्रति भ्रमोत्पत्तये एव शास्तृशास्त्रशिष्यगुरुयज्ञदेववेदब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमस्वर्गलोकवैकुण्ठादिलोकशिवविष्णुचतुर्मुखेंद्रादिसर्वदेवतादिकथाःकथितवंत इत्युक्तिरपि साधु वैदिकत्वं ख्यापयति. अवैदिकाग्रेसराणां भवतामिति उपरम्यते एतादृशैः सह वैदिकचर्चेति शिवम् ।

लौकिकश्चेश्वरो दानपरिचरणप्रणामांजलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति, विरोधतश्चापक्रियादिभिर्विरोधकायाहितमित्यपि सुप्रसिद्धम्, तदिह केवलं कर्म वा पूर्वं वा चेतनानधिष्ठितमचेतनं फलं प्रसूत इति दृष्टरुद्धम् - यथा विनष्टं कर्म न फलं प्रसूत इति कल्प्यते दृष्टविरोधादेवमिहापि इति, तथा देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूत

इत्यपि दृष्टविरुद्धम्. न हि राजपूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते । तस्मात् दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुत्पाद्यते । तथा च देवताप्रसादादेव स्थायिनः फलोत्पत्तेरुपपत्तेः कृतमपूर्वेण- एवमशुभेनापि कर्मणा देवताविरोधनं श्रुतिस्मृतिप्रसिद्धम्. ततः स्थायिनोऽनिष्टफलप्रसवः न च शुभाशुभकारिणां तदनुरूपं फलं प्रसुवाना देवता द्वेषपक्षपादवतीति युज्यते - न हि राजा साधुकारि-णमनुगृन्हन्निगृन्हन् वा पापकारिणं भवति द्विष्टो रक्तो वा तद्वदलौकि-कोऽपीश्वरः - यथा च परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामंगापूर्वाणां चोपयोगः. एवं प्रधानाराधनेंऽगाराधनानामुत्पत्त्याराधनानां चोप योगः. स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिति सर्वं समानमन्यत्राभिनिवेशात्' इत्यादिभामतीकारोक्तिरपि बालकं प्रति धात्रीकथितराजपुत्रकथेव अज्ञजनमोहिकैवेति मंगलम् ।

इति शांकरभाष्यस्य अद्वैतमतप्रतिकूलत्व प्रमाणविरुद्धत्वाप्रामाणि कत्वसमर्थने तृतीयाध्यायस्य द्वितीयःपादः

# तृतीयाध्याये तृतीयपाद:

शांकरभाष्यीय तृतीयाध्याय तृतीयपादीयाधिकरणेषु (१) जीवब्रम्हणोरभेदप्रस्तावो वा, (२) जगतो मिथ्यात्वप्रस्तावोऽपि वा न कृतः.

यत्र क्वचित् "सगुणं ब्रह्म निर्गुणं ब्रह्म" इति केवलं वाचा व्यवह्रियते, तस्यापि साधनार्थं न प्रयत्यते - यत्र 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' (ब्र. सू. शां. ३।२।११) इत्यत्र साधनार्थं प्रयतितं तत्र निर्गुणं ब्रह्म अप्रामाणिकं शशविषाणवत् नास्त्येवेत्युपपादितमस्माभिः ।

१७ सप्तदशे सूत्रे एक (ब्रह्म) विज्ञानेन सर्वविज्ञानं भवतीत्यादिकं च ब्रह्मणः परिणाम्युपादानकारणत्वाभावेन निरस्तम् । ब्रह्मणो जगत्प्रति विवर्तोपादानत्वं (भ्रमाधिष्ठानत्वं) च अद्वैतमते न सम्भवतीति च व्यवस्थापितम् । सम्भवेऽपि अधिष्ठानज्ञानेन पूर्वं विद्यमानं अध्यस्तज्ञानं निवृत्तमेव भवतीति अद्वैतमतरीत्या अधिष्ठानब्रह्मज्ञानेन अध्यस्तज्ञानं न सम्भवतीति च अद्वैतवाक्यैरेव व्यवस्थापितम्—। आरम्भणशब्दादिभ्यः जगतो यदनृतत्वं कथितं तदपि आरम्भणपदघटितश्रुतौ मिथ्यात्वबोधकपदाभावादिना निराकृतम् ।

२९, ३० सूत्रयोः गतिकारणभूतो ह्यर्थः पर्यंकविद्यादिषु सगुणेषूपासनेषु उपलक्ष्यते, तत्र हि पर्यंकारोहणं पर्यंकस्थेन ब्रह्मणा संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादिबहुदेशान्तरप्राप्त्यायत्तं फलं श्रूयते, तत्रार्थवती गतिः - न हि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । न ह्यात्मैकत्वदर्शिनां प्राप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किंचिदस्ति. । तत्रानर्थिका

गतिरिति वाक्येन सगुणोपासकानां देवयानेन गमनं न त्वात्मैकत्व-दर्शिनामिति यदुक्तं तत्तुच्छम् । ब्रह्म सर्वज्ञत्वाद्यनेकगुणयुक्तमेव न निर्गुणम् । तस्मिन् प्रमाणाभावेन शशविषाणायितत्वात् । निर्गुणात्मैकत्वदर्शनमपि प्रमाणाभावेन न उत्पत्तुमर्हति । प्रत्यक्षं वाऽनुमानं वा शब्दो वा (आगमो वा) यं कंचिद्धर्मवन्तमेव बोधयति न तु धर्मरहितं वस्तु । प्रत्यक्षं रूपादिमन्तं अनुमानं व्यापकतावच्छेदकधर्मवन्तं बोधयति । यथा धूमः व्यापकतावच्छेदकवन्हित्वादिधर्मवन्तमे वन्हि बोधयति । शब्दोऽपि तथा - यथा पाचकशब्दः पाककर्तृत्वादिधर्मवन्तं बोधयति । पाठकशब्दः पाठयितृत्वादिधर्मवन्तं दण्डीत्यादिशब्दः दण्डादि धर्मवन्तं दण्डिनम् । इत्यादि गंगायां घोष इत्यादिवाक्यस्थ लाक्षणिक गंगाशब्दोऽपि शक्यप्रवाहसम्बन्धिनमेव तीरं बोधयति । सिंहो माणवक इत्यादौ गौणसिंहशब्दः सिंहवृत्तिक्रौर्यादिगुणसदृशगुणवन्तमेव बोधयति । न किमपि प्रमाणं निर्गुणं बोधयितुमलमिति निर्गुणं ब्रह्म प्रमाणाविषयत्वात् शशविषाणायितमिति सगुणब्रह्मनिर्गुणब्रह्मभेदेन द्वैविध्यकल्पनं निर्गुणब्रह्मात्मैकत्वदर्शिनामित्युक्तिश्चायुक्ता तत्रापि आत्मैकत्वदर्शिनामित्युक्तिरत्यंतमयुक्ता तद्ग्राहकप्रमाणाभावात् । न हि 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि श्रुतिजातमात्मैकत्वज्ञानजनकमिति वाच्यम्. शंकराचार्याद्यद्वैतिभिरेव तत्त्वमस्यादिवाक्यानां बोधकत्वाभावस्य, बोधकत्वांगीकारेऽपि अखण्डार्थबोधकत्वस्य (चिदित्येतावन्मात्रबोधकत्वस्य) अंगीकारेण ऐक्यबोधकतानंगीकारात् इति ।

३१--सूत्रव्याख्याने 'सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायां..........सगुणास्वपि विद्यासु कस्यचिद्गतिः श्रूयते' इत्यादिना सगुणविद्या निर्गुणविद्येति विद्याभेदः प्रदर्शितः. स पूर्वोक्तदूषणेन निरस्तः, ब्रह्मद्वैविध्याभावेन विद्याद्वैविध्याभावात् इति ।

# ३२. ओं यावदधिकारमवस्थितिराधि-कारिकाणाम्' ओम्

इति सूत्रस्य 'निर्गुणविद्यायाः नापवर्गः फलं भवितुमर्हति । श्रुति स्मृतीतिहासपुराणेषु विदुषामप्यपान्तरतमःप्रभृतीनां तत्तद्देहपरिग्रह-परित्यागौ श्रूयेते' इति पूर्वपक्षे--

सिद्धान्तस्तु-"विद्याकर्मस्वनुष्ठानतोषितेश्वरचोदितम् ।। अधिकारं समाप्यैते प्रविशन्ति परं पदम् ।।" इति.

"न च विदुषामपान्तरतमःप्रभृतीनां ततद्देहसंचारात्सत्यामपि ब्रह्मविद्यायामनिर्मोक्षान्न ब्रह्मविद्या मोक्षस्य हेतुरिति साम्प्रतम् । हेतुरपि सति प्रतिबन्धे कार्यानुपजनो न हेतुभावमपाकरोति .......... प्रतिबन्धविगमे दास्यति" इति यद्भामतीव्याख्यानं तत्तुच्छम् । तथाहि-निर्गुणं ब्रह्म अप्रामाणिकं, निर्गुणविद्याजनकं प्रमाणमपि (प्रत्यक्षमनु मानमागमरूपं) नास्त्येव । प्रमाणसामान्यस्य धर्मवद्विषयकत्वात्-। अद्वैतमते अपवर्गः फलमित्यपि न युज्यते । अद्वैतमतेऽपवर्गस्य ब्रह्म स्वरूपत्वांगीकारेण जीवस्य ब्रह्मस्वरूपतायाः नित्यसिद्धत्वांगीकारेण फलत्वासम्भवात् । न चापवर्गः अविद्यानिवृतिस्वरूपः । स च विद्यया जन्य एवेति विद्याफलत्वमविद्यानिवृत्तिरूपमोक्षस्य सम्भवतीति वाच्यम् । अनेकदोषदुष्टत्वात् । तथाहि--समानाधिकरणयोः समान-विषयकयोरेव ज्ञानाज्ञानयोः निवर्त्यनिवर्तकभावदर्शनात् । अद्वैतमते न अज्ञानं ब्रह्मविषयकं ब्रह्मणः स्वप्रकाशत्वांगीकारेण तज्ज्ञानप्रतिबन्ध स्यासम्भवेन तदावरकतद्विषयकाज्ञानासंभवात् । अनंगीकाराच्च ब्रह्मणः ज्ञेयत्वप्रयोजकानां धर्माणां चाभावात्. अज्ञेयत्वेन (ब्रह्मणो ज्ञानविषयत्वाभावेन) ब्रह्मविषयकज्ञानासम्भवेन ज्ञानाज्ञानयोः ब्रह्म-विषयकत्वाभावेन ब्रह्माज्ञाननिवृतिः ब्रह्मज्ञानेन भवति इति वक्तुम-

शक्यत्वेन ब्रह्मज्ञानेन ब्रह्माज्ञानकल्पितबन्धरूपसंसारस्य निवृत्तिरूप-मोक्षः सम्भवतीति वक्तुमशक्यत्वात्।

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्नवै मुक्तः" इत्यादिगौडपादकारिकाशंकरभाष्यादिवाक्यैर्बन्धाज्ञानादेः शशविषाणवदसत्त्वेन शशविषाणादेरिव तस्य निवृत्तिरूपध्वंसासंभवाच्च। "न च महावाक्याज्जायमानं ज्ञानमेव ब्रह्मेत्युक्तम् तथा सति ज्ञानरूपस्य ब्रह्मण उत्पत्तिः स्वीकार्या स्यादिति वाच्यम्। तज्ज्ञानं नैव जायते - किंतु तदानीं केवलं तदावरकाज्ञाननिरास एव जायते - तन्मूलक एव तदानीं ज्ञानं जायत इति व्यवहारः"इत्याद्यद्वैत्युक्तरीत्या ब्रह्मज्ञानस्यैव केनाप्यजन्यत्वेन ज्ञानेनाज्ञाननिवृत्तिर्जायते इत्युक्तेरप्ययोगात्।

किं च अन्धकारप्रकाशयोरिव शुक्तिज्ञानतदज्ञानयोरिव च ब्रह्मज्ञानाज्ञानयोः विरोधात् ब्रह्मज्ञाने जाते तत्क्षण एव तद्विरोधिनोऽज्ञानस्य निवृत्त्या अद्वैतमतरीत्या अविद्याकल्पितदेहादेः विद्योत्पत्त्यनन्तरं स्थित्यसंभवात्। न च 'तस्य तावदेव चिरम् यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छां. ६-१४-२) इति श्रुत्युक्तप्रकारेण जातमपि ज्ञानं प्रारब्धकर्मणा प्रतिबद्धं सत् अज्ञानमनाशयदपि प्रारब्धकर्मावसाने अज्ञानं अज्ञानकल्पितदेहादिबन्धमपि नाशयतीति विद्योत्पत्त्यनन्तरमपि प्रारब्धकर्मसत्ताकाले देहादीनां स्थितिः संभवतीति वाच्यम्। अद्वैतमते ब्रह्मातिरिक्तस्य सर्वस्य अज्ञानोपादानकत्वेन विरोधिन्या विद्यया अविद्यानाशे अविद्याकल्पितप्रारब्धकर्मणोऽपि स्थित्यसंभवात्।

श्री शंकराचार्यैरेव "उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुंचति। इति यच्छ्रूयते शास्त्रात्तन्निराक्रियतेऽधुना ।। (अपरो ९०) तत्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते। देहादीनामसत्यत्वाद्यथा स्वप्नःप्रबोधतः ।।९१।। कर्म जन्मान्तरकृतं प्रारब्धमिति कीर्तितम्। तत्तु

जन्मान्तराभावात् पुंसो नैवास्ति कर्हिचित् ।। ९२ ।। देहस्यापि प्रपं-चत्वात्प्रारब्धावस्थितिः कुतः । अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ।। ९७ ।।" इत्यादि श्लोकैः प्रारब्धकर्मप्रतिपादकश्रुतिः अज्ञा-निजनमोहार्था । प्रारब्धं कर्मैव नास्ति । आत्मज्ञानोत्पत्त्यनन्तरं प्रारब्ध-कर्मसद्भावप्रतिपादनमयुक्तमिति स्पष्टमुक्तत्वेन प्रारब्धकर्मशेषात् ज्ञानिनामप्यपान्तरतमःप्रभृतीनां अविद्यासत्वोक्तेः अद्वैतमतेऽयुक्त-त्वात् ।

यच्चोक्तं "प्रत्यक्षफलत्वाच्चाज्ञानस्य फलविरहाशंकानुपपत्तिः ...................... अनुभवारूढन्तु ज्ञानफलम् । 'यत्साक्षादपरोक्षाब्रह्म' (बृ. ३-४-१) इति श्रुतेः, 'तत्त्वमसि' (६-८-७) इति च सिद्धव-दुपदेशात् - न हि 'तत्त्वमसि' इत्यस्य वाक्यस्यार्थस्तत्त्वं मृतो भविष्य सीत्येवं परिणेतुं शक्यः - 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनु-रभवं सूर्यश्च' (बृ. १-४-१०) इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति । तस्मादेकान्तिकी विदुषः कैवल्यसिद्धिः" इति तदयुक्तम् - स्वव्याहत्याद्यनेकदोषयुक्तत्वात्, तथाहि--प्रत्यक्षफल-त्वाच्च ज्ञानस्येत्यस्य अद्वैततत्वज्ञानेन (साक्षात्कारेण) जायमानं फलं प्रत्यक्षं = प्रत्यक्षज्ञानविषयः इति खल्वर्थः । स च अद्वैतमते न युक्तः । ब्रह्म खल्वद्वैतमते तत्त्वं - न तस्य साक्षात्कारः (प्रत्यक्षं) अद्वैतिभिः स्वीकृतः । तस्य प्रमाणविषयत्वानंगीकारेण तत्साक्षात्कारस्य शश-विषाणायितत्वात् । न हि शशविषाणसदृशेन फलं उत्पद्यते इति च वक्तुं शक्यम् ।

यच्च 'अनुभवारूढन्तु ज्ञानफलं - यत्साक्षादपरोक्षाब्रह्म' (बृ. ३-४-१) इति श्रुतेः' इति ज्ञानफलस्यानुभवारूढत्वे श्रुतिप्रदर्शनं, तत्तु साक्षात् । अपरोक्षात् ब्रह्म इति शब्दश्रवणसंजातभ्रममूलं, नहि तस्यां श्रुतौ ज्ञानफलस्य अनुभवारूढत्वं कथ्यते स्वेनैव (शंकराचार्यै-

रेव) तस्याः श्रुतेः अन्यथा व्याख्यानात् । तथाहि तद्व्याख्यानम्--'यत् ब्रह्म साक्षात्=अव्यवहितं केनचित् द्रष्टुः अपरोक्षात्=अगौणम्' इति । तेन व्याख्यानेन हि द्रष्टुः केनचित् अव्यवहितं ब्रह्म, अव्यवहितत्वं घटादिवत् न गौणं किन्तु 'अपरोक्षात्' =अगौणमिति ब्रह्मणो द्रष्टुः सकाशात् व्यवधानं नास्तीत्येव सिध्यति । न हि ज्ञानफलं अनुभवारूढमिति । तद्बोधकानां पदानामभावात् । स्वेनैव (शंकरेणैव) तथा व्याख्यानाकरणात् च तथा च ज्ञानफलस्यानुभवारूढत्वे एतच्छ्रुत्युदाहरणं साक्षादित्यादिपदश्रवणजनितभ्रममूलकं वा अज्ञजनमोहनार्थं वा इत्येतदीश्वर एव जानातु । वयन्तु ज्ञानफलं अनुभवारूढमित्यत्र इयं श्रुतिः प्रमाणं भवितुं नार्हतीति स्पष्टं वदामः,साधयिष्यामश्च, तद्बोधकपदाभावादिभिरिति अलं अपहसनीयप्रक्रियानिराकरणार्थकालयापनया ।

किं च 'तत्त्वमसि' (छां. ६-८-७) इति च सिद्धवदुपदेशात् - न हि 'तत्त्वमसि' इति वाक्यस्यार्थस्तत्त्वं मृतो भविष्यसीत्येवं परिणेतुं शक्यः,' इति वाक्यं तु 'मम माता वन्ध्या' इति वाक्यवत् स्वव्याहतं प्रकृतासम्बद्धं च, तथाहि अद्वैतमतरीत्या तत्त्वमसीति वाक्यं बोधकमेव न. तुष्यत्विति न्यायेन बोधकत्वांगीकारेऽपि 'चित्' इत्येतन्मात्रबोधकत्वांगीकारेण ज्ञानं वा तत्फलं वा तस्यानुभवारूढत्वं न बोधयतीति ।

तत्त्वमसीतिवाक्येन ज्ञानफलममनुभवारूढं इति सिध्यतीति शंकरादिभिरनुक्त्या तथा आपाततोऽपि प्रतीत्यभावेन च ज्ञानस्य फलविरहाशंकाकर्त्रा तत्त्वमसीत्यस्य वाक्यस्य 'तत् त्वं मृतो भविष्यसि' इति परिणामकरणे कारणाभावात् नहि...........परिणेतुं शक्य इति वाक्यं प्रकृतासम्बद्धम् ।

किं च "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' (बृ. १-४-१०) इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति" इत्युक्तिरप्ययुक्तैव। तस्यां श्रुतौ वामदेवस्य 'सर्वे देवाः परमात्मनो जाताः - परमात्मा सर्वप्रेरकः। पूर्णः, स च मदीयान्' गर्भस्थितानरातीन् नाशयामास - अहं भूमिं आर्याय अददाम्' इत्यादिज्ञानसद्भावोक्त्या स्वस्मात् देवादिजीवसकाशाच्च परमात्माभिन्न इतिज्ञानस्यैव सत्त्वावगमात्। न सर्वात्मत्वं (सर्वस्वरूपत्वं) सम्यग्दर्शनफलमित्यस्यासिद्धेः। श्रुत्यर्थविशेषविचारस्तु 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र. सू. १-१-३०) इति सूत्रस्य अद्वैत्यभिमतार्थखण्डने कृतो द्रष्टव्यः।

(अधिकरणम् २०)

## ३३. ओम् अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ओम्

इति सूत्रस्य "वाजसनेयके श्रूयते--'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्' (बृ. ३-८-८) इत्यादि। तथाथर्वणे श्रूयते-- 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' (मुं. १-१-५) इत्यादि। तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते। तत्र च क्वचित् केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते। तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थितेति संशये श्रुतिविभागाद् व्यवस्था प्राप्तावुच्यते-अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयःसर्वाः सर्वत्रावरोद्धव्याः सामान्यतद्भावाभ्याम्--समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः--तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते। तत्र किमित्यन्यत्र कृता बुद्धयोऽन्यत्र

नस्युः ? तथा च 'आनन्दादयः प्रधानस्य' (ब्र. सू. ३-३-११) इत्यत्र व्याख्यातम् । तत्र विधिरूपाणि विशेषणानि चिन्तितानीह प्रतिषेधरूपाणीति विशेषः-प्रपंचार्थश्चायं चिन्ताभेदः" इति ग्रन्थेन ब्रह्मणः सर्वत्र निर्विशेषत्वमेव प्रतिपाद्यते । इति व्याख्यानमत्यन्त-मयुक्तम् । सर्वेषां प्रमाणानां सविशेषविषयकत्वेन निर्विशेषे (धर्मशून्ये) प्रत्यक्षस्यानुमानस्यागमस्य वा अप्रवृत्तेः - ब्रह्मणि निषेधरूपाणां वा विधिरूपाणां वा सर्वधर्माणां केनापि प्रमाणेन निषेधासम्भवात् । विशेषविचारः 'न स्थानतोऽपि परस्योभयलिंगं सर्वत्रहि' इत्या-दावनेकत्र कृतो द्रष्टव्यः ।

(अधिकरणम् २१)

# ३४. ओम् इयदामननात् ओम्

इति सूत्रस्य "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिष-स्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति (मुं. ३-१-१) इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति. तथा कठः--- 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिनाचिकेताः।।' (कठ. ३-१) इति किमत्र विद्यैकत्वमुत विद्यानानात्वमिति संशयः, किं तावत् प्राप्तम् ? विद्यानानात्वमिति । कुतः ? विशेषदर्शनात्. द्वा सुपर्णेत्यत्र ह्येकत्र भोक्तृत्वं दृश्यते एकस्यचाभोक्तृत्वं दृश्यते । ऋतं पिबन्तावित्यत्रोभयोरपि भोक्तृत्वमेव दृश्यते तद्वेद्यरूपं भेद्यमानं विद्यां भिन्ध्यादित्येवं प्राप्ते ब्रवीति विद्यैकत्वमिति इतिशंकराचार्याणां यद्व्या-ख्यानं तत्त्वद्वैतिनां प्रतिकूलम् । 'द्वा सुवर्णा' इत्यादि श्रुतीनां जीव-ब्रह्मणोर्भेदबोधकत्वात् ।एतासां श्रुतीनां भेदबोधकतया शंकराचार्यै-रत्राधिकरणेऽन्यत्र च व्याख्यातत्वात् ।

यच्चोक्तम् 'तादात्म्यविविक्षयैव जीवोपादानं नार्थान्तरविवक्षया' इति तदप्ययुक्तम् । जीवपरमात्मामनोरभेदग्राहकप्रमाणाभावात् । शांकराचार्यैरेव 'सर्वेशत्व.........;...........जीवेशौ वन्हितुहिनाविव' इत्यादिना विशिष्टजीवब्रम्हणोवरभेदस्यनिषेधाच्च ।

अधिकरणम् २२

## ३५. ओम् अन्तरा भूतग्रामवत्स्वात्मनः ओम्
## ३६. ओम् अन्यथा भेदानुपपत्तिरितिचेन्नोप- देशान्तरवत् ओम्

इति सूत्रयोः "यत्साक्षादपरोक्षाद्ब्रम्ह य आत्मा सर्वान्तरः" (बृ. ३-४-१—३-५-१) इत्येवं द्विरुषस्तकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति । तत्र विद्यैकत्वं वा (प्रतिपाद्याभेदो वा) विद्यानानात्वं वा (प्रतिपाद्यभेदो वा) इति संशये, अभ्यास (पुनः पुनः कथन) सामर्थ्यात् अभ्यासात्कर्मभेद इव विद्याभेद इति प्राप्ते। उभयोरप्यन्तराम्नानात् वस्तुद्वयस्य अंजसा अन्तराम्नानासंभवात् उभयोरप्येकविद्यात्वं (एकब्रम्हप्रतिपादकत्वं) भूतग्रामवत्. इति श्रुत्यन्तरं निदर्शयति । यथा 'एको देवः सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे. ६-११) इत्यस्मिन् मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर अत्मांनायते एवमनयोरपि ब्राम्हणयोरित्यथः । तस्माद्वेद्यैक्याद्विद्यैकत्वमिति" इति यद्व्याख्यानं तत्त्वद्वैतिनां प्रतिकूलम् द्वैतिनामनुकूलम्। ब्रम्हविद्यायाः सर्वान्तरत्व प्राणचेष्टकत्वाद्यनन्तधर्मप्रतिपादकत्वोक्त्या ब्रम्हणः सर्वान्तरत्व चेष्टकत्वाद्यनन्तधर्मवत्त्वं सिद्धमिति निर्गुण (निर्धर्मक) ब्रम्हवादिनां अनिष्टमिदं वाक्यं सर्वान्तरत्वचेष्टकत्वाद्यनन्तधर्मवत्त्वसिध्द्या सर्वान्तरत्वचेष्टकत्वसर्वज्ञत्वाद्यनन्तधर्मव-

द्ब्रह्म (सगुणब्रह्म) वादिनामनुकूलम्. सर्वभूत (जीव) स्थितत्वोक्त्या जीवब्रह्मणोर्भेदसाधिका चेयं 'एको देव' इति श्रुतिः, 'अन्तरा भूतग्रामवदि' ति सूत्रं च।

(अधिकरणम् २३)

## ३७. ओं व्यतिहारो विंशिषन्ति हीतरवत् ओम्

इति सूत्रस्य "यथा--'तद्योऽहं सोऽसौ योऽसौ सोहम्' इत्यादित्यपुरुषं प्रकृत्यैतरेयिणः समामनन्ति - तथा जाबालाः 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इति - तत्र संशयः--किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्योतैकरूपैवेति। एकरूपैवेति तावदाह - न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वान्यत्किंचित् चिंतयितव्यमस्ति।यदि चैवं चिन्तयितव्यो विशेषः परिकल्प्येत संसारिणश्चेश्वरात्मत्वमीश्वरस्य संसार्यात्मत्वमिति। तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेदीश्वरस्य तु संसार्यात्मत्वे निष्कर्षः कृतः स्यात्। तस्मादैकरूप्यमेव मतेः- व्यतिहाराम्नायस्त्वेकत्वदृढीकारार्थ इति। एवं प्राप्ते प्रत्याह-- व्यतिहारोऽयमाध्यानायाम्नायते। इतरवत् यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते तद्वत् - तथाहि विंशिषन्ति समाम्नातारः उभयोच्चारणेन 'त्वमहमस्म्यहं च त्वमसि' इति तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति। अन्यथा हीदं विशेषेणोभयाम्नानामनर्थकं स्यात् एकेनैव कृतत्वात्" इति ग्रन्थेन अहं पदार्थस्य जीवस्य देवत्वेन (परब्रह्मत्वेन) परब्रह्मणः अहन्त्वेन मतिः (उपासना) कर्तव्येति यद्व्याख्यानं तदयुक्तम्। तथाहि -मतेः (उपासनायाः) असदर्थविषयकत्वं वाऽभिप्रेतं सदर्थविषयकत्वं वा ? नाद्यः - 'असत्यान्यनुपास्यानि अफलत्वविपर्ययाभ्यामिति' असदर्थविषयकोपासनाया अफलत्वेन विपरीतफलत्वेन च निन्दितत्वात्। अहंग्रहोपासनाया असदर्थ-

विषयकत्वे उपासनाविषयीभूतस्य जीवपरमात्मनोरभेदस्यासत्त्वापत्त्या भेदस्य सत्त्वप्राप्त्या अद्वैतमतहान्यापत्तेश्च । न द्वितीयः - विशिष्ट-योर्जीवेश्वरयोरभेदस्यासत्वेनाद्वैतिभिरपि विशिष्टाभेदस्यानंगीकृतत्वेन अहंग्रहोपासनायाः (विशिष्टाभेदोपासनायाः) सत्यार्थविषयकत्वा-योगात् ।

उपासनायाः सद्र्थविषयकत्वे (उपासनाविषयीभूतस्य सत्त्वे) अद्वैतमते सर्वज्ञत्वजगत्कर्तृत्वादिगुणयुक्त (सगुण) ब्रह्मोपासनायाः सदर्थविषयकत्वप्राप्त्या उपासनाविषयीभूतसर्वज्ञत्वादिगुणादेरपि सत्यत्वप्राप्त्या सगुणब्रह्मणः सत्यत्वापत्तेश्च । तस्मान्नेयं श्रुतिर्जीव-ब्रह्मणोरभेदसाधिका भवतीति ।

किं च 'व्यतिहारो विंशिषन्ति हीतरवदि' ति सूत्रे व्यतिहारेण (परस्परविशेषणविशेष्यभावेन) जीवपरमात्मनोरुपासनाकर्तव्यतायाः वाचकस्य सूचकस्य वा पदस्याभावात् तदर्थपरतया सूत्रयो-जनायाः करणे उत्सूत्रितत्वप्राप्तेः । कस्तर्हि श्रुत्यर्थ इति चेत्— 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्' (ब्र. सू. २-४-१७) इति सूत्र-व्याख्याने "यापि प्राणरूपतामिन्द्रियाणामभिदधाति तत्रापि पौर्वा-पर्यालोचनायां भेद एव प्रतीयते इत्युक्तं भाष्यकृता । तस्माद्बहुश्रुति-विरोधात् पूर्वापरविरोधाच्च प्राणरूपताभिधानमिन्द्रियाणां प्राणायत्त-तया भाक्तं गमयितव्यम्" इति भामत्याद्युक्तरीत्या राजाधीनं राष्ट्र-मित्यभिप्रायेण राजा राष्ट्रमित्यादिव्यवहारवत् अहं = जीवः, त्वं = त्वदधीनोऽस्मि, त्वं = परमात्मा, अहं = मत्स्वामी (मदन्तर्यामी) असि' इत्याद्यनेकार्थानां श्रुत्यादिप्रमाणानुकूलानां श्रुत्याद्यविरुद्धानां संभवेन श्रुत्याद्यननुकूलस्य तथा श्रुत्यादिविरुद्धस्य स्वमत - (अद्वैतमत) विरुद्धस्य चार्थस्य स्वीकरणायोगादिति ।

(अधिकरणम् २४)

# ३८. ओं सैवहि सत्यादयः ओम्

इति सूत्रस्य 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' (बृ. ५-४-१) इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायानन्तरमाम्नायते—'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः' (बृ. ५-५-२) इत्यादि। तत्र संशयः - किं द्वे एते सत्यविद्ये किंवैकैवेति। द्वे इति तावत्प्राप्तम्. भेदेन हि फलसंयोगो भवति. 'जयतीमाँल्लोकान्' (बृ. ५-४-१) इति पुरस्तात् 'हन्ति पाप्मानं जहाति च' ('बृ, ५-५-३, ४) इत्युपरिष्टात्-प्रकृताकर्षणं तूपास्यैकत्वादिति। एवं प्राप्ते ब्रूमः—एकैवेयं सत्यविद्येति। कुतः ? 'तद्यत्सत्यम्' इति प्रकृताकर्षणात्" इति यद्व्याख्यानं तत्तु अद्वैतिनां प्रतिकूलम्। द्वैतिनां अनुकूलम्. तथाहि— 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रम्हेति जयतीमाँल्लोकान्जित इन्न्वसावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रम्हेति सत्यं ह्येव ब्रम्ह' (बृ. ५-४-१) इति मन्त्रस्य भाष्यभामतीरत्नप्रभारीत्या अर्थस्तु—'सः यः कश्चिदधिकारी, महत्=व्यापकं, यक्षं=पूज्यं, प्रथमजं=भौतिकेषु प्रथमोत्पन्नं, सत्यं=सत् मूर्तं त्यत् अमूर्तं सच्च तत् त्यच्च सत्यं (मूर्तामूर्तात्मकं ब्रम्ह) हिरण्यगर्भाख्यं, वेद=उपास्ते, स इमान् लोकान् जयति, इनु=इत्थं, जितः असौ शत्रुः, असन् भवेत्=नश्येत्. उक्तमर्थं निगमयति य एवमेतत् महद्यक्षं प्रथमजं वेद सत्यं ब्रम्हेति एवं विद्वान् कस्माज्जयतीत्यत आह—सत्यं ह्येव ब्रम्ह, हि यस्मात् सत्यं ब्रम्ह अतस्तदुपासनात् फलोत्पादोऽपि सत्य इति। तथा च अनया श्रुत्या हिरण्यगर्भाख्यब्रम्हणः सत्यत्वं तदुपासनाजन्यफलस्य सत्यत्वं उपासनायाः कार्याव्यवहितप्राक्क्षणवृत्तित्वरूपकारणत्वोक्त्या सत्यत्वं च सिद्ध्यति. इत्यद्वैतिनां प्रतिकूलं, द्वैतिनामनु-

कूलम् । एतेन 'माध्वाः अहं शब्दस्य अहेयत्वादहमित्यर्थं वर्णयन्ति - सत्यमित्यादेः सत्त्वं नाशं यापयति इति निर्वचनं कृत्वा विलक्षणार्थं वर्णयन्ति' इति वदन्तो निरस्ता वेदितव्याः। अद्वैतिभिरपि सत्यशब्दस्य सच्च तत् त्यच्च इति, अहः अहमित्यादिशब्दानां हन्ति पाप्मानं जहाति च य एवं वेद इत्यहंशब्दस्याहेयत्वाद्यर्थकरणात्. श्रुतावपि तथार्थ-करणात् । एवमनेकेषां 'इदं पश्यतीति इदन्द्रः इदन्द्रं सन्तमिन्द्रमित्या-चक्षते' - 'इन्धयतीति इन्धः इन्धं सन्तमिन्द्रमित्याचक्षते' - विदा-नात् विद्युत्.' इत्यादिशब्दानां वेदेष्वेव विलक्षणार्थकथनादिति । तथा चेदं सूत्रं द्वैतिनामनुकूलमद्वैतिनां प्रतिकूलमेव । न च वेदोक्तफलादीनां सर्वेषां व्यावहारिकत्वात् (मिथ्यात्वात्) नाद्वैतहानिरिति वाच्यम् । बौद्धमतनिराकरणावसरे वेदादिप्रमाणानि पारमार्थिकमेव कथयन्ति न व्यावहारिकमिति प्रमाणबोध्यानां व्यावहारिकत्वं न वक्तव्यमित्यद्वैति-भिरेव खण्डितत्वादिति ।

## ३९.ओं कामादीतरत्र तत्र चायतनादिभ्यः ओम्

इति सूत्रस्य 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽवि-जिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छां. ८-१५) इत्यादि । तथा वाजसनेयिनः 'स वा एष महानज आत्मा सोऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते सर्वस्य वशी' (बृ. ४-४-२२) इत्यादि । तत्र विद्यैकत्वं परस्परगुणयोगश्च, किंवा नेति संशये, छान्दोग्यविद्यावाजसनेयिविद्ययोः सगुणनिर्गुणरूपभेदेन भेदात् निर्गुणविद्यायां गुणोपसंहारस्य फलाभावाच्च अनुपसंहार इति पूर्वपक्षे च, यदेतच्छान्दोग्ये कामादि=छान्दोग्ये हृदयाकाशस्य सत्य-कामत्वादिगुणजातमुपलभ्यते, तत् इतरत्र=वाजसनेयके 'स वा एष महानज आत्मा' इत्यत्र सम्बध्यते यच्च वाजसनेयके वशित्वाद्युपलभ्यते

तदपीतरत्र छान्दोग्ये 'एष आत्मापहतपाप्मा' (छां. ८-१-१) इत्यत्र सम्बध्यते. कुतः? आयतनादिभ्यः=आयतनादिसामान्यात् समानं ह्युभयत्रापि हृदयमायतनं समानश्च वेद्य ईश्वरः समानं च तस्य सेतुत्वं बहुसामान्यं दृश्यते इत्येवमादि यद्व्याख्यानं तदप्ययुक्तम् - विद्ययोः सगुणनिर्गुणरूपभेदस्य शशविषाणायितत्वात्. तथाहि—सगुणविषयकज्ञानजनिका हि सगुणविद्या निर्गुणविषयकज्ञानजनिका हि निर्गुणविद्या इति प्रतिपाद्यभेदेन हि प्रतिपादकविद्याभेदो वक्तव्यः— अद्वैतमते निर्गुणब्रह्मणः प्रत्यक्षानुमानागमरूपप्रमाणप्रवृत्तिप्रयोजकधर्माभावेन शशविषाणवत् प्रमाणागम्यत्वात् निर्गुणविषयक ज्ञानजनक विद्यैव असम्भाविता. इति सर्वासां विद्यानां सगुणविषयकत्वेन सगुणविद्या निर्गुणविद्येति भेदकथनमयुक्तम्.

एतेन "सगुणा हि ब्रम्हविद्या छान्दोग्य उपदिश्यते. 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' (छां. ८-१-६) इत्यात्मवत्कामानामपि वेद्यत्वश्रवणात्. वाजसनेयके तु निर्गुणमेव परं ब्रम्होपदिश्यमानं दृश्यते 'अत उर्ध्वं विमोक्षाय ब्रूहि' (बृ. ४-३-१४) 'असंगो ह्ययं पुरुषः' (बृ. ४-३-१५) इत्यादि प्रश्नप्रतिवचनसमन्वयात्" इत्येतदपि निरस्तम् - अद्वैतमते प्रमाणप्रवृत्तिप्रयोजकधर्माभावेन निर्गुणब्रह्मणः वेदप्रतिपाद्यत्वासंभवात्. अद्वैतिनां सगुणविद्यात्वेनांगीकृते छान्दोग्ये यथा कामादयो गुणाः कथितास्तथा निर्गुणविद्यात्वेनाद्वैतिभिरंगीकृतेऽपि वाजसनेयके 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः................एष सर्वेश्वरः एष भूताधिपतिरेष भूतपालः एष सेतुर्विधारणे' (बृ. ४-४-२२) इत्यादिवाक्यैः सर्ववशित्व सर्वनियामकत्व सर्वाधिपतित्व - सर्वेश्वरत्व भूताधिपतित्व भूतपालत्व धारकत्वादयो - बहवो गुणाः कथिता इति

शंकराचार्यैः एतन्मंत्रस्य "स च सर्वस्य ब्रम्हेन्द्रादेर्वशी - सर्वो ह्यस्य वशे वर्तते. उक्तं चैतस्य वा अक्षरस्य प्रशासन इति. न केवलं वशी सर्वस्येशान ईशिता च ब्रम्हेन्द्रप्रभृतीनामीशितृत्वं च कदाचिज्जातिकृतं यथा राजकुमारस्य बलवत्तरानपि भृत्यान्प्रति तद्वन्मा भूदित्याह सर्वस्याधिपतिरधिष्ठाय पालयिता स्वतन्त्र इत्यर्थः - न राजपुत्रवदमात्यादिभृत्यतन्त्रः - त्रयमप्येतद्वशित्वादिहेतुहेतुमद्रूपम् - यस्मात् सर्वस्याधिपतिस्ततोऽसौ सर्वस्येशानः - योहि यमधिष्ठाय पालयति स तं प्रतीष्ट एवेति प्रसिद्धम्. यस्माच्च सर्वस्येशानस्तस्मात्सर्वस्य वशीति- किं चान्यत्स एवं भूतो हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयो न साधुना शास्त्रविहितेन कर्मणा भूयान् भवति न वर्धते पूर्वावस्थातः केनचिद्धर्मेण - नो एव शास्त्रप्रतिषिद्धेनासाधुना कर्मणा कनीयानल्पतरो भवति पूर्वावस्थातो न हीयत इत्यर्थः - किं च सर्वो ह्यधिष्ठानपालनादि कुर्वन् परानुग्रहपीडाकृतेन धर्माधर्माख्येन युज्यतेऽस्यैवतु कथं तदभाव इति. उच्यते—यस्मादेष सर्वेश्वरः सन् कर्मणोऽपीशितुं भवत्येव शीलमस्य तस्मान्न कर्मणा सम्बध्यते किं चैष भूताधिपतिर्ब्रम्हादि स्तम्बपर्यन्तानां भूतानामधिपतिरित्युक्तार्थं पदम्" इत्यादिना एतदुपनिषद्भाष्ये परमात्मनः गुणप्रतिपादकत्वेन व्याख्यानाच्च - न च छान्दोग्ये 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' (छां. ८-१-६) इत्यात्मवत्कामानामपि वेद्यत्वश्रवणात् छान्दोग्यविद्या सगुणा - वाजसनेयी विद्या च वशित्वादिगुणानां वेद्यत्वाश्रवणात् निर्गुणेति वाच्यम् - श्रुत्युक्तानां गुणानामवेद्यत्वे तत्कथने प्रयोजनाभावात् व्यावर्तकगुणं (धर्मं) अगृहीत्वा केवलवस्तुनः वेदेन इतरव्यावृततया ज्ञानासंभवात्. 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रम्हयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरजंनः परमं साम्यमुपैति' 'पृथगात्मान प्रेरितारं च मत्वारं जुष्टस्ततस्तेनामृतत्वमेति'

इत्यादिश्रुतिभिर्ब्रम्हणः जगत्प्रेरकत्व जगद्भिन्नत्वरुक्मवर्णत्व चतुर्मुखादिकर्तृत्वस्वामित्वाद्यनेकगुणवत्त्वेनैव मोक्षार्थं ज्ञेयत्वोक्तेश्च वाजसनेय श्रुत्युक्तगुणानामपि छान्दोग्योक्तकामादिगुणवत् ज्ञातव्यत्वाच्च ।

एतेन "वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते तथा चोपरिष्टात् 'स एष नेति नेत्यात्मा (बृ. ३-९-२६) इत्यादिना निर्गुणमेव ब्रम्ह उपसंहरति" इति कथनमपि निरस्तम्. वशित्वादिधर्माणां मिथ्यात्वे (असत्वे) मिथ्याभूतार्थप्रतिपादकत्वेन अद्वैत्यभिमतवाजसनेयकविद्यायाः (उपनिषदः) अप्रामाण्यापातात् 'स एष नेति नेत्यात्मा' (बृ. ३-९-२६) इति वाक्यं स एष परमात्मा, इति = मूर्तं न (मूर्तभिन्नं) इति = अमूर्तं न (अमूर्तभिन्नं) इति ब्रम्हणो मूर्तामूर्तात्मकप्रपंचविलक्षणत्वं वक्ति, न तु निर्गुणत्वं 'अथ तस्य नामधेयं सत्यस्य सत्यमिति प्राणावै सत्यं तेषामेष सत्यं' इत्युत्तरवाक्ये प्राणानां सत्यत्वप्रदत्वादिगुणानां प्रतिपादितत्वात् । एतच्छ्रुत्यर्थविशेषविचारस्तु 'प्रकृतैतावत्त्वं हि प्रतिषेधति' (ब्र. सू. ३-२-२२) इति सूत्र शांकरभाष्यनिरासावसरे कृतो द्रष्टव्यः ।

(अधिकरणम् २६)

## ४०. ओम् आदरादलोपः ओम्

## ४१. ओम् उपस्थितेऽतस्तद्वचनात् ओम्

इति सूत्रद्वयात्मकस्याधिकरणस्य, भोजनाकरणे प्राणाग्निहोत्रं लुप्यते नवेति सन्देहे, प्राणाहुतिर्न लुप्यते इति पूर्वपक्षे, भोजनलोपे प्राणाग्निहोत्रलोपः इति सिद्धान्तः ("न लुप्यते लुप्यते वा प्राणाहुतिरभोजने । न लुप्यतेऽतिथेः पूर्वं भुंजीतेत्यादरोक्तितः ।। भुज्यर्थान्नोपजीवित्वात्तल्लोपे लोप इष्यते । भुक्तिपक्षे पूर्वभुक्तावाद

रोऽप्युपपद्यते ।।") इत्येवं रूपं यद्व्याख्यानं तत् भोजनप्राणाग्निहोत्रादिकर्मणां सत्यत्वसाधकतया द्वैतिनामनुकूलम् । अद्वैतिनां प्रतिकूलम् ।

(अधिकरणम् २७)

## ४२. ओम् तन्निर्धारणानियमस्तदृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ओम्

इति सूत्रस्य "नित्या अंगावबद्धाः स्युः कर्मस्वनियता उत । पर्णवत्क्रतुसम्बन्धो वाक्यान्नित्यास्ततो मताः ।। पृथक् फलश्रुतेर्नैता नित्या गोदोहनादिवत् । उभौ कुरुत इत्युक्तं कर्मोपास्यनुपासिनोः।।" इत्येवं रूपं यद्व्याख्यानम्,

(अधिकरणम् २८)

## ४३. ओम् प्रदानवदेव तदुक्तम् ओम्

इति सूत्रस्य "एकीकृत्य पृथग्वा स्याद्वायुप्राणानुचिन्तनम् । तत्वाभेदात्तयोरेकीकरणेनानुचिन्तनम् ।। अवस्थाभेदतोऽध्यात्ममधिदैवं पृथक्श्रुतेः । प्रयोगभेदो राजादिगुणकेन्द्रप्रदानवत् ।।" इत्येवं रूपं यद्व्याख्यानम्,

(अधिकरणम् २९)

## ४४. ओम् लिगंभूयस्त्वात्तद्धि बलीयस्तदपि ओम्

इति सूत्रस्य "कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः । कर्मशेषाः प्रकरणाल्लिंगं त्वन्यार्थदर्शनम् ।। उन्नेयविधिगाल्लिंगादेव श्रुत्या च वाक्यतः । बाध्यं प्रकरणम् तस्मात्स्वतन्त्रं वन्हिचिन्तनम्।।" इत्येवं रूपं यद्व्याख्यानम्—

(अधिकरणम् ३०)

## ४५. ओम् एक आत्मनश्शरीरे भावात् ओम्

इति सूत्रस्य "आत्मा देहस्तदन्यो वा चैतन्यं मदशक्तिवत् । भूतमेलनजं देहे नान्यत्रात्मा वपुस्ततः ।। भूतोपलब्धिर्भूतेभ्यो विभिन्ना विषयित्वतः । सैवात्मा भौतिकाद्देहादन्योऽसौ परलोक भाक् ।।" इत्येवंरूपं यद्व्याख्यानम् ।

(अधिकरणम् ३१)

## ४६. ओम् अंगावबद्धास्तु न शाखासु हि प्रतिवेदम् ओम्

इति सूत्रस्य "उक्थादिधीः स्वशाखांगेष्वेवान्यत्रापि वा भवेत् । सान्निध्यात्स्वस्वशाखांगेष्वेवासौ व्यवतिष्ठते ।। उक्थोद्गीथादिसामान्यं तत्तच्छब्दैः प्रतीयते । श्रुत्या च सन्निधेर्बाधस्ततोऽन्यत्रापि यात्यसौ ।।" इत्येवंरूपं यद्व्याख्यानम् ।।

(अधिकरणम् ३२)

## ४७. ओम् भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ओम्

इति सूत्रस्य "ध्येयो वैश्वानरांशोऽपि ध्यातव्यः कृत्स्न एव वा । अंशेषूपास्तिफलयोरुक्तेरस्त्यंशधीरपि ।। उपक्रमावसानाभ्यां समस्तस्यैव चिन्तनम् । अंशोपास्तिफले स्तुत्यै प्रत्येकोपास्तिनिन्दनात् ।। इत्येवंरूपं यद्व्याख्यानम् ।।

(अधिकरणम् ३३)

## ४८. ओम् नाना शब्दादिभेदात् ओम्

इति सूत्रस्य "न भिन्ना उत भिद्यन्ते शाण्डिल्यदहरादयः । समस्तोपासनश्रैष्ट्याच्चाब्रह्मैक्यादप्यभिन्नता ।। कृत्स्नोपास्तेरशक्यत्वाद्गुणैर्ब्रह्म पृथक्कृतम् । दहरादीनि भिद्यन्ते पृथक्पृथगुपक्रमात् ।।" इत्येवंरूपं यद्व्याख्यानम् ।।

(अधिकरणम् ३४)

## ४९. ओम् विकल्पोऽविशिष्टफलत्वात् ओम्

इति सूत्रस्य "अहंग्रहेष्वनियमो विकल्पनियमोऽथवा । नियामकस्याभावेन यथाकाम्यं प्रतीयताम् ।। ईशसाक्षात्कृतेस्त्वेकविद्ययैव प्रसिद्धितः । अन्यानर्थक्यविक्षेपौ विकल्पस्य नियामकौ ।।" इत्येवंरूपं यद्व्याख्यानम् ।।

(अधिकरणम् ३५)

## ५०. ओम् काम्यास्तु यथाकामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् ओम्

इति सूत्रस्य "प्रतीकेषु विकल्पः स्याद्याथाकाम्येन वा मतिः अहंग्रहेष्विवैतेषु साक्षात्कृत्यै विकल्पनम् ।। देवो भूत्वेतिवन्नात्र काचित्साक्षात्कृतौ मितिः । याथाकाम्यमतोऽमीषां समुच्चयविकल्पयोः।।" इत्येवंरूपं यद्व्याख्यानम् ।।

(अधिकरणम् ३६)

# ५१. ओम् अंगेषु यथाश्रयभावः ओम्

इति सूत्रस्य "समुच्चयोंऽगबद्धेषु याथाकाम्येन वा मतिः । समुच्चितत्वादंगानां तद्बद्धेषु समुच्चयः ।। ग्रहं गृहीत्वा स्तोत्रस्यारम्भ इत्यादिवन्नहि । श्रूयते सहभावोऽत्र याथाकाम्यं ततो भवेत् ।।" इत्येवंरूपं यद्व्याख्यानं एतत्सर्वं अंगाश्रितोपासनानां अंगतया नित्यान्युता नित्यानि इति नित्यानि इत्यादि संशये उपासनानां नित्यत्वमिति पूर्वपक्षे अनित्यत्वमिति सिद्धांत इत्यादि चिंतनरूपत्वेन कर्मणां तदंगानां च सत्वसिद्ध्या अद्वैतिनां प्रतिकूलं द्वैतिनां अनुकूलं । विशेषविचारस्य कारणाभावेनोपरम्यते इति ।।

इति शांकरभाष्ये तृतीयाध्याय तृतीयपादखंडनम् ।।

———

श्रीः

# अथ तृतीयाध्याय चतुर्थपादीय शांकरभाष्यविचारः

-०-

(अधिकरणम् १)

## १. ओम् पुरुषार्थोऽतश्शब्दादिति बादरायणःओम्

इति सूत्रस्य "औपनिषदमात्मज्ञानं कर्मांगम्, आहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति संशये, अतः =अस्माद्वेदान्तविहितात् आत्मज्ञानात् स्वतंत्रात् पुरुषार्थः भवति न तु कर्मांगतया - कुतः; शब्दात् = 'तरति शोकमात्मवित्' (छां. ७-१-३) 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मुं ३-२-९) 'ब्रह्मविदाप्नोति परम्' (तै. २-१-१) 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छां. ६-१४-२) इति - 'य आत्मापहतपाप्मा' (छां. ८-७-१) इत्युपक्रम्य 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' (छां. ८-७-१) इति. 'आत्मावाऽरे द्रष्टव्यः' (बृ ४-५-६) इत्युपक्रम्य 'एतावदरे खल्वमृतत्वम्' (बृ. ४-५-१५) इत्येवंजातीयकायाः केवलविद्यायाः पुरुषार्थहेतुत्वबोधकश्रुतेः" इति यद्व्याख्यान शांकरीयं तत्तु अद्वैतिनां प्रतिकूलं, द्वैतिनामनुकूलम् - तथाहि—

१. 'तरति शोकमात्मवित्' (छां. ७-१-३) इति श्रुतिः आत्मविदित्यनेन परमात्मनः ज्ञेयत्वेन जीवस्य ज्ञातृत्वेन जीवपरमात्मनोर्भेदं बोधयति - ज्ञातृज्ञेयभावः जीवपरमात्मनोर्भेदव्यवस्थापक इति श्री शंकराचार्यैरपि स्वीकृतः ।

२. शोकतरणं प्रत्यात्मज्ञानस्य हेतुत्वोक्त्या कार्याव्यवहितप्राक्क्षणवृत्तित्वरूपं सत्वं, शोकतरणस्य कार्यत्वोक्त्या कारणोत्तरकाल-

वृत्तित्वरूपं सत्त्वं च सिध्यति - तच्च अद्वैत्यभिमतत्रिकालावृत्तित्वरूप-मिथ्यात्वस्य विरोधि ।

३. ब्रह्मणः (आत्मनः) ज्ञेयत्वोक्त्या सगुणत्वं च सिध्यति । निर्गुणस्याज्ञेयत्वात् शोकनाशकज्ञानविषयस्य ब्रह्मणः सगुणत्वं निर्गुणवादिनामनिष्टम् ।

'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मुं. ३-२-९) इति श्रुतिरपि परमं ब्रह्म वेदेति ज्ञातृज्ञेयभावबोधनेन, ब्रह्म भवति = ब्रह्म प्राप्नोति इति प्राप्यप्राप्तृभावबोधनेन च जीवब्रह्मणोर्भेदं, ज्ञानप्राप्त्योः कार्यकारणभावोक्त्या तयोः सत्यत्वं च बोधयति ।

न च ब्रह्मैव भवतीति वाक्येन ब्रह्माभेदोक्तेरिदं वाक्यमद्वैतिनामनुकूलं द्वैतिनां प्रतिकूलमिति वाच्यम्. ब्रह्म भवतीत्यस्य ब्रह्म प्राप्नोति इत्यर्थकत्वात् । तथाहि 'परात्परं पुरुषमुपैति दिव्यम्' (मुं. ३-२-८) इति पूर्वमंत्रोक्तब्रह्मप्राप्तिरूपफलस्य श्रेयसामनेकविघ्नवत्त्वेन विघ्नेन कस्यचिद् ब्रह्मज्ञानिनः ब्रह्मप्राप्तिरूपं फलं न भवतीत्याशंक्य, ब्रह्मज्ञानी ब्रह्म प्राप्नोत्येव नान्यां गतिं गच्छतीति मुण्डकभाष्ये "न नु श्रेयस्यनेके विघ्नाःप्रसिद्धाः अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविदपि अन्यां गतिं मृतो गच्छति न ब्रह्मैव। न, विद्ययैव सर्वप्रतिबंधस्यापनीतत्वात्............देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुं" इत्यादिवाक्यैश्शंकराचार्यैरेव ब्रह्मैव भवतीत्यस्य ब्रह्म प्राप्नोत्येवेत्यर्थकतायाः उक्तत्वेन ब्रह्मैव भवतीति वाक्यं प्राप्यप्राप्तृभावेन जीवपरमात्मनोर्भेदबोधकमेवेति ।

'ब्रह्मविदाप्नोति परं' (तै. २-१-१) इति वाक्यमपि ज्ञातृज्ञेयभावेन प्राप्यप्राप्तृभावेन च जीवपरमात्मनोर्भेदमेव बोधयति ।

'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ-संपत्स्ये' (छां. ६-१४-२) इत्येतद्वाक्यमपि, 'पुरुषो वेद' इति ज्ञातृज्ञेयभावेन, अथ संपत्स्ये' इति प्राप्यप्राप्तृभावेन जीवपरमात्मनोर्भेदं, कार्यकारणभावेन ज्ञानस्य ब्रह्मप्राप्तेश्च सत्यत्वं यावन्न विमोक्ष्य इति ब्रह्मज्ञानानन्तरमपि प्रारब्धकर्मणः सत्वोक्त्या सत्यत्वं (अज्ञान-कल्पितत्वाभावं) च बोधयति ।

'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' (छां. ८-७-१) इति श्रुतिरपि आत्मानम् अन्विष्य विजानाति इति ज्ञातृज्ञेयभावोक्त्या भेदं. सर्वलोकावाप्तेः सर्वकामावाप्तेः ज्ञानफलत्वोक्त्या च लोकानां कामानां सत्वं ज्ञानस्य कारणत्वोक्त्या च सत्वं ज्ञानानंतरं लोकानां कामानां च सत्वोक्त्या अज्ञान-कल्पितत्वरूपमिथ्यात्वाभावं च गमयतीति.

'आत्मा वाऽरे द्रष्टव्यः' (बृ. ४-५-६) इति श्रुतिरपि आत्मनो दर्शनकर्मत्वं जीवस्य दर्शनकर्तृत्वं वदन्ती जीवपरमात्मनोर्भेदमेवाव-गमयति इति द्वैतिनामनुकूलम् । नात्र श्रुतौ सूत्रे वा अभेदवाचकं वा ज्ञापकं वा पदमस्ति इत्यद्वैतिनां प्रतिकूलमेवेति.

## २. ओं शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ओम्

इत्यारभ्य 'नियमाच्चे' ति सप्तमसूत्रपर्यन्तं षट्सूत्राणि पूर्वपक्ष-सूत्रतया व्याख्यातानीति न किंचिदर्थसाधकानि न वा कस्यचिदर्थस्य बाधकानीति नात्र विशेषविचारस्यावसरः । तथापि किंचिद्विचार्यते ।

यथान्येषु द्रव्यसंस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापँ श्लोकँ श्रृणोति' इत्यादिफलश्रुतिरर्थवादः तथा आत्मज्ञानस्य

कर्मांगत्वेऽपि 'तरति शोकमात्मविदि' ति फलश्रुतिरर्थवाद इति आत्मज्ञानस्य कर्मांगत्वमिति जैमिनिर्मन्यते इति ।

## ३. ओम् आचारदर्शनात् ओम्

ज्ञानिनामपि कर्माचारदर्शनात् ज्ञानस्य कर्मांगत्वमेव । केवलाच्चेज्ज्ञानात्पुरुषार्थसिद्धिः स्यात् किमर्थमनेकायाससमन्वितानि कर्माणि कुर्युः ? 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् आत्मज्ञानं कर्मांगमिति ।

## ४. ओम् तच्छ्रुतेः ओम्

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छां. १-१-१०) इति च कर्मशेषत्वश्रवणाद्विद्याया न केवलायाः पुरुषार्थहेतुत्वम्" इति ।

## ५. ओम् समन्वारंभणात् ओम्

"तं विद्याकर्मणी समन्वारभेते' (बृ. ४-४-२) इति च विद्याकर्मणोः फलारंभे सहकारित्वदर्शनान्न स्वातंत्र्यं विद्यायाः" इति ।

## ६. ओम् तद्वतो विधानात् ओम्

"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' (छां. ८-१५-१) इति चैवंजातीयका श्रुतिः समस्तवेदार्थज्ञानवतः कर्माधिकारं दर्शयति । तस्मादपि न विज्ञानस्य स्वातंत्र्येण फलहेतुत्वम्" इति ।

## ७. ॐ नियमाच्च ॐ

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।' (ई २) इति, तथा 'एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' इत्येवंजातीयकान्नियमादपि कर्मशेषत्वमेव विद्याया" इति षड्भिः सूत्रैः जैमिनिमतावष्टंभेन पूर्वपक्षे, तन्निरासार्थं प्रवृत्ततया अवतारितस्य।

## ८. ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ

इति सिद्धान्तसूत्रस्य "यदुक्तम्— 'शेषत्वात्पुरुषार्थवादः' (ब्र. सू. ३-४-२) इति, तन्नोपपद्यते, कस्मात्, अधिकोपदेशात्। यदि संसार्येवात्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषूपदिष्टस्स्यात्ततो वर्णितेन प्रकारेण फलश्रुतेरर्थवादत्वं स्यात्। अधिक (भिन्न) स्तावच्छरीरादात्मनोऽसंसारीश्वरः कर्तृत्वादिसंसारिधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु। न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्युच्छिनत्तीति वक्ष्यति 'उपमर्दं च' (ब्र. सू. ३-४-१६) इत्यत्र। तस्मात् 'पुरुषार्थोऽतश्शब्दात्' (ब्र. सू. ३-४-१) इति यन्मतं भगवतो बादरायणस्य तत्तथैव तिष्ठति, न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते। तथाहि - तमधिकं (भिन्नं) शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः— 'यः सर्वज्ञः सर्ववित्' (मुं. १-१-९) 'भीषास्माद्वातः पवते' (तै. २-८-१) 'महद्भयं वज्रमुद्यतं' (कठ. ६-२) 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ. ३-८-९) 'तदैक्षत बहुस्यां प्रजायेयेति, 'तत्तेजोऽसृजत' इत्येवमाद्याः" इति यद्व्याख्यानं तद्युक्तमेव-

तथा हि शारीरो जीवः कर्तृत्व, भोक्तृत्व शरीरभिन्नत्वमात्रेण वेदान्तेषूपदिष्टस्यात्तदा आत्मज्ञानस्य कर्मांगत्वप्राप्त्या फलश्रुतेरर्थवादत्वं स्यात् । न हि तथा उच्यते किन्तु शारीरात् जीवात् भिन्नः असंसारी ईश्वरः कर्तृत्वादिधर्मरहितः अपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेनोपदिश्यते वेदान्तेषु - नैतादृशमीश्वरज्ञानं कर्मांगं भवति प्रत्युत कर्म उच्छिनत्ति इति आत्मज्ञानादेव पुरुषार्थो भवतीति बादरायणस्य मतमेव समीचीनम् । न आत्मज्ञानस्य कर्मांगत्वम् - यतः 'यः सर्वज्ञः सर्ववित्' (मुं. १-१-९) 'भीषाऽस्माद्वातः पवते' (तै. २-८-१) 'महद्भयं वज्रमुद्यतं' (कठ. ६-२) 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ. ३-८-९) 'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' (छां. ६-२-३) इत्येवमाद्याभिः श्रुतिभिर्जीवपरमात्मनोर्भेदकथनात्. इति यत्, "यस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' (बृ. २-४-१०) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ. ३-५-१) परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छां. ८-१२-३) इत्येवमादिभिर्वाक्यशेषैः अधिकोपादिदिक्षायां सत्यां, 'आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वाऽरे द्रष्टव्यः' (बृ. २-४-५) इति, 'यः प्राणेन प्राणिति स ते आत्मा सर्वान्तरः' (बृ. १-४-१) इत्येवमादिना यत् प्रियादिसंसूचितस्य संसारिण एवात्मनो - वेद्यतया अनुकर्षणं तदत्यन्ताभेदाभिप्रायम्" इति वाक्येन उत्तरवाक्यशेषे भेदविवक्षायां सत्यामेव पूर्ववाक्यैः आत्मा वाऽरे द्रष्टव्य इत्यादिपूर्ववाक्यैः अत्यन्ताभेदविवक्षेति शांकरकथनं तदत्यन्तमयुक्तम् । उत्तरवाक्ये भेदप्रतिपादनं पूर्ववाक्ये अभेदप्रतिपादनमिति स्वप्रतिपाद्यार्थविरुद्धार्थकत्वकथनस्य प्रमाणभूतायाःश्रुतेरयोगात् । न हि श्रुतिर्व्याहतभाषिणीति वैदिकैर्वक्तुं शक्यते । आत्मनस्तु कामाय सर्वं प्रियं भवति..........आत्मा वाऽरे द्रष्टव्यः' इत्यादिश्रुतेर्जीवपरमात्मनोरभेदेप्रतिपादकत्वाभावाच्च ।

किं च "परमेश्वरमेव शारीरस्य पारमार्थिकं स्वरूपम् उपाधिकृतं शारीरत्वं 'तत्त्वमसि' नान्यदतोऽस्तिद्रष्टृ' (बृ. ३-८-११) इत्यादि-श्रुतिभ्यः सर्वं चैतद्विस्तरेणास्माभिः पुरस्तात्तत्र तत्र वर्णितम्' इति वाक्येन परमात्मा एक एव तस्य जीवत्वमुपाधिकल्पितमिति श्रुतिभ्यः पूर्वमेव वर्णितमिति यदुक्तं तत् अस्माभिरपि जीवः परमेश्वराद्भिन्नः, न हीश्वरस्य कदापि जीवभावः जीवस्य वा ब्रह्मभावः प्रमाणाभावात्। तत्त्वमस्यादिवाक्यानि जीवब्रह्मणोरभेदं न वर्णयन्तीति पूर्वमेव तत्र तत्र प्रदर्शितं, तत एव विज्ञेयम्।

'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यं शासकाक्षरस्य प्रधानत्वशं-कायां सांख्येन कृतायां शासकमक्षरं द्रष्टृ, प्रधानं न द्रष्टृ इति शास-काक्षरस्य प्रधानत्वनिरासकमिदं वाक्यम् इति शंकरेणैव उपनिषद्भाष्ये व्याख्यातमिति तद्विरुद्धार्थविषये अत्र एतच्छ्रुतेरुदाहरणस्यायुक्तत्वा-दिति।

## ९. ॐ तुल्यं तु दर्शनम् ॐ

यत्तूक्तमाचारदर्शनात्कर्मशेषो विद्येति - तुल्यमाचारदर्शनमकर्म। शेषत्वेऽपि विद्याया इति।

## १०. ॐ असार्वत्रिकी ॐ

'यदेव विद्यया करोति' (छां. १-१-१०) इत्येषा श्रुतिर्न सर्व-विद्याविषया, प्रकृतविद्याभिसंबंधात्-प्रकृता चोद्गीथविद्या 'ओमित्ये-तदक्षरमुद्गीथमुपासीत' (छां. १-१-१) इत्यत्र।

## ११. ॐ विभागश्शतवत् ॐ

यदप्ययुक्तम्—'तं विद्याकर्मणी समन्वारभेते' (छां. ४-४-२) इत्येतत्समन्वारंभवचनमस्वातन्त्र्ये विद्याया लिंगमिति, तत्प्रत्युच्यते।

यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पंचाशदेकस्मै पंचाशदपरस्मै तद्वत् - विभागः = विद्या अन्यं पुरुषमन्वारभते अनुसृत्य गच्छति, कर्म अन्यं पुरुषमन्वारभते इति - विद्याया न स्वातंत्र्यमिति निषेधस्त्वयुक्त इति ।

## १२. ॐ अध्ययनमात्रवतः ॐ

'आचार्यकुलाद्वेदमधीत्य' (छां. ८-१५-१) इत्यत्राध्ययनमात्रस्य श्रवणात् तन्मात्रवतः (अध्ययनप्रभवकर्मज्ञानवतः) कर्मविश्वानं न तु औपनिषदात्मज्ञानवतः कर्मविधानं ब्रूम इति -

## १३. ॐ नाविशेषात् ॐ

'कुर्वन्नेवेह कर्माणि जिजीविषेत्' (ईशा. २) इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति' इति न ब्रह्मज्ञानिनः कर्मनियम इति -

इत्येवं तुल्यं तु दर्शनमित्यादिपंचसूत्राणि शंकरव्याख्यानरीत्या ज्ञानिनामपि कर्मकरणाद्युक्त्या कर्मादीनां सत्यत्वं (अज्ञानाकल्पितत्वं) प्रतिपादयन्तीति अद्वैतिनां प्रतिकूलानि, द्वैतिनामनुकूलान्येवेति ।

## १४. ॐ स्तुतयेऽनुमतिर्वा ॐ

यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति संबध्येत, तथापि विद्यास्तुतये कर्मानुष्ठानमेतद्द्रष्टव्यम्. 'न कर्म लिप्यते नरे' (ईशा.२) इति हि वक्ष्यति । एतदुक्तं भवति यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति विद्यासामर्थ्यादिति व्याख्यानमपि विद्यास्तुतये आत्मज्ञानानन्तरमपि कर्मकरणाद्युक्त्या कर्मादीनां सत्यत्वं (अज्ञानाकल्पितत्वं) बोधयति ।

# १५. ओम् कामकारेण चैके ओम्

इति सूत्रस्य 'एतद्धस्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' (बृ. ४-४-२२) इति श्रुत्या विद्यावतां प्रजादिषु प्रयोजनाभावकथनेन विद्यायाः स्वतंत्र-फलत्वं न कर्मांगत्वमिति व्याख्यानमपि विद्याया फलस्य च कार्य-कारणभावोक्त्या सत्वसाधकमेवेति ।

# १६. ओम् उपमर्दं च ओम्

"अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपंचस्याविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति—'यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' (बृ. २-४-१४) इत्यादिना - वेदान्तोदितात्मज्ञानपूर्विका तु कर्माधिकारसिद्धि प्रत्या-शासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत । तस्मादपि स्वातंत्र्यं विद्यायाः" इत्येतत्सूत्रव्याख्यानमयुक्तम् । 'विश्वं सत्यं' इति श्रुति - व्याख्याने सत्यमिति पदस्य अनारोपितं इत्यर्थस्य वेदभाष्यकर्त्रा विद्यारण्येन कृतत्वात् । अज्ञानकल्पितत्वस्यासंभावाच्च प्रपंचस्याविद्या-कृतत्वाभावेन ज्ञानेन अद्वैत्यभिमतनिवृत्तिरूपोपमर्दाभावात् । 'यत्र वा अस्य सर्वमात्मैवाभूत्' इति श्रुतिर्न जगतः अविद्याकल्पितत्वं बोध-यति, प्रत्युत यत्र = मोक्षावस्थायां सर्वमात्मैवाभूत आत्मातिरिक्तं किमपि न स्यात्, तदा केनेन्द्रियेण कं पश्येदित्यादिना मोक्षे 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' इत्यादिश्रुतिसिद्धानां जक्षणक्रीडनरमणादीनाम् अभावप्रसंगमापाद्य मोक्षे जक्षणक्रीडनरमणा-भावस्त्वनिष्ठस्तस्मात् मोक्षे सर्वम् आत्मस्वरूपं न भवति इति तर्कप्रदर्श-नद्वारा पदार्थानां सत्वमेव गमयतीति नानया श्रुत्या सर्वस्य स्वरू-पनाशो वक्तव्या इति ।

उपमर्दशब्दस्य स्वरुपनाशार्थकत्वाभावाच्च ।

## १७. ओम् ऊर्ध्वरेतस्सु च शब्दे हि ओम्

ऊर्ध्वरेतस्सु चाश्रमेषु विद्या श्रूयते. न च तत्र कर्मांगत्वं विद्याया उपपद्यते कर्माभावात् इति यत् कर्माभाववचनं तदयुक्तम् । तेषामग्निहोत्रादिकर्माभावेऽपि इतरकर्मणां प्रवचनादिकर्मणां सत्त्वात् । सन्यासिभिः शंकराचार्याद्यैः प्रवचनग्रन्थकरणादिरूपकर्मणः कृतत्वादिति ।

(अधिकरणम् २)

## १८. ओम् परामर्शं जैमिनिरचोदनाचापवदति हि ओम्

## १९. ओम् अनुष्ठेयं बादरायणः साम्यश्रुतेः ओम्

## २०. ओम् विधिर्वा धारणवत् ओम्

इत्येतैस्त्रिभिः सूत्रैः ऊर्ध्वरेता अस्ति नवेति सन्देहे विधानाभावात् नास्तीति पूर्वपक्षे अस्तीति सिद्धांतः कृतः - अत्र द्वैताद्वैतसंबंधिविशेषविचाराभावात् न युक्तायुक्तचिन्ता क्रियते । अत्रापि आश्रमादीनां तद्विहितकर्मणां सत्त्वोक्त्या अद्वैतिनां प्रतिकूलमेवेदमधिकरणम् ।

'अथ परिव्राट् विवर्णवासाः मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति' (जाबा. ५) इति श्रुतिगतस्य ब्रह्मभूयाय इति पदस्य ब्रह्मसाक्षात्काराय इत्यर्थस्य रत्नप्रभान्यायनिर्णयव्याख्यानयोः कृतत्वेन 'ब्रह्म भूयाय कल्पते' (गी १८।५३) इत्यादिस्थले

ब्रह्मभूयाय=ब्रह्मत्वाय कल्पते=समर्थो भवति इत्युक्तत्वेन जीवस्य ब्रह्मत्वं सिद्धं भवतीति निरस्तं, ब्रह्मभूयपदस्य ब्रह्मसाक्षात्कारार्थकत्वेन ब्रह्मसाक्षात्काराय भवति इति ज्ञातृज्ञेयभावेन भेदस्यैव सिद्धेः।

(अधिकरणम् ३)

## २१. ओम् स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ओम्

## २२. ओम् भावशब्दाच्च ओम्

इति सूत्रद्वयात्मकमधिकरणं 'स एष रसानां रसतमः परमः पराध्योंऽष्टमो यदुद्गीथः' (छां. १-१-३) इत्यादिश्रुतयः किमुद्गीथादेः स्तुत्यर्थाः आहोस्विदुपासनाविध्यर्था इति संशये स्तुत्यर्था इति पूर्वपक्षे विध्यर्था इति सिद्धान्तः कृत इति व्याख्यातं शांकराचार्यैः इति इदमधिकरणं पूर्वाधिकरणानीव उद्गीथादीनां सत्यत्वं ज्ञापयति इत्यद्वैतिनां प्रतिकूलमेव।

(अधिकरणम् ४)

## २३. ओम् पारिप्लवार्था इति चेन्न विशेषितत्वात् ओम्

## २४. ओम् तथा चैकवाक्यतोपबन्धात् ओम्

इति सूत्रद्वयात्मकमधिकरणम् "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च (बृ. ४-५-१) 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' (कौषी. ३-१) 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' (छां. ४-१-१) इत्येव-

मादिषु वेदान्तपठितान्याख्यानानि पारिप्लवप्रयोगार्थानि आहोस्वत् सन्निहितविद्याप्रतिपत्त्यर्थानि इति संशये आख्यानश्रुतयः पारिप्लवार्था इति पूर्वपक्षे सन्निहितविद्याप्रतिपत्त्यर्था इति प्रतिपादयति" इति व्याख्यानमपि पदार्थानां सत्वव्यवस्थापकतया पूर्ववदेवाद्वैतिनां प्रतिकूलमिति ।

(अधिकरणम् ५)

## २५. ओम् अत एव चाग्नीन्धनाद्यनपेक्षा ओम्

इति सूत्रस्य "अत एव च विद्यायाः पुरुषार्थहेतुत्वात् अग्नीन्धनादीनि आश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानि" इति शंकराचार्यैर्व्याख्यातत्वेन पुरुषार्थानां ज्ञानस्य च कार्यकारणभावोक्त्यादिना ब्रह्मातिरिक्तस्य सत्यत्वं सिध्यतीति अद्वैतिनां प्रतिकूलमेव ।

(अधिकरणम् ६)

## २६. ओम् सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ओम्

इतीदं सूत्रं "विद्याया अत्यन्तम् अग्निहोत्रादिकर्मानपेक्षा उत काचिदपेक्षा इति संशये यथा स्वार्थसिद्धौ कर्मानपेक्षा एवमत्यन्तानपेक्षेति प्राप्ते, विद्या सर्वाण्याश्रमकर्माण्यपेक्षत एव. नात्यन्तमनपेक्षा । न च विद्या कर्माणि अपेक्षते नापेक्षते इति विरुद्धमिति वाच्यम् । विद्या स्वार्थसिद्धौ कर्माणि नापेक्षते, स्वोत्पत्तौ अपेक्षते इति अविरोधात् । कुतः यज्ञादि श्रुतेः='तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' (बृ. ४-४-२२) इति यज्ञादीनां विद्यासाधनत्वश्रुतेः । अश्ववत्, यथा अश्वः लांगलाकर्षणे न युज्यते, युज्यते च रथचर्यायामितिव्याख्यातम्-

## २७. ॐ शमदमाद्युपेतः स्यात्तथापि तु तद्विधे स्तदंगतया तेषामवश्यानुष्ठेयत्वात् ॐ

इतीदमपि सूत्रं विद्योत्पत्तौ शमदमादीनामंतरंगसाधनत्वं यज्ञादीनां बहिरंगसाधनत्वमिति व्यवस्थापकमिति. व्याख्यातमिति एते द्वे सूत्रे पूर्ववत् शमदमादीनां यज्ञादीनां च कारणत्वं विद्यायाः कार्यत्वमिति कार्यकारणबोधनद्वारा सत्यत्वबोधके इत्यद्वैतिनां प्रतिकूले एव ।

## २८. ॐ सार्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ

इत्यस्य सूत्रस्य " न ह वा एवंविदि किंचनानन्नं भवति (छां. ५-२-१) इत्यादिश्रुतौ सर्वं प्राणस्यान्नमिति ध्यानं कुर्वतः किंचन अनन्नं (अभक्ष्यं) न हि भवति. इति किं सर्वान्नभक्षणविधिः उत स्तुतिरिति संशये सर्वान्नभक्षणविधिरिति पूर्वपक्षे, अत्र विधेरश्रवणात् अनन्नं (अभक्ष्यं) न हि भवति इत्यर्थवाद एवेति सिद्धान्तः" इति यद् व्याख्यानम् ।

## २९. ॐ अबाधाच्च ॐ

इति सूत्रस्य "सर्वभक्षणस्य विध्यनंगीकारादेव आहारशुद्धौ सत्त्वशुद्धिरित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रं अबाधितम् भविष्यति" इति च यद् व्याख्यानम्.

## ३०. ॐ अपि च स्मर्यते ॐ

इति सूत्रस्य "सुरापाः कृमयो भवन्त्यभक्ष्यभक्षणात्" इति स्मर्यंते वर्जनमन्नस्य इति सुरापानादिनिषेधकतया यद् व्याख्यानं.

## ३१. ॐ शब्दश्चातोऽकामकारे ॐ

इति सूत्रस्य "अकामकारे = यथेष्टप्रवृत्त्यभावे (स्वेच्छानुसारेण प्रवृत्तिर्न कार्येत्यस्मिन् विषये शब्दश्च = 'तस्माद्ब्रह्मणः न सुरां पिबेत्' इति सुरापाननिषेधकः शब्दश्च वर्तते। अतः किंचनानन्नं भवति' इत्यादयोऽर्थवादा एव न विधय इति च यद्व्याख्यानं तत्सर्वं द्वैतिनामनुकूलम्। विधीनां निषेधानां पुण्यपापादीनां सत्त्वव्यवस्थापकत्वात्। सर्वमिथ्यात्ववादिनाम् (सर्वासत्त्ववादिनां) अद्वैतिनां प्रतिकूलमेवेति।

(अधिकरणम् ८)

## ३२. ॐ विहितत्वाच्चाश्रमकर्मापि ॐ

## ३३. ॐ सहकारित्वेन च ॐ

## ३४. ॐ सर्वथाऽपि त एवोभयलिंगात् ॐ

## ३५. ॐ अनभिभवं च दर्शयति ॐ

एतान्यपि सूत्राणि अमुमुक्षोः आश्रममात्रनिष्ठस्य विद्यामकामयमानस्य आश्रमकर्माणि अनुष्ठेयानि, उताहो नेति संशये अननुष्ठेयानीति प्राप्ते आश्रममात्रनिष्ठस्यापि अमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि, यावज्जीवमग्निहोत्रं जुहुयादिति विहितत्वादिति शांकर - व्याख्यानानुसारेण आश्रमकर्मादीनां सत्यत्वं बोधयंतीति सर्वं मिथ्यात्ववादिनां अद्वैतिनां प्रतिकूलानि। द्वैतिनामनुकूलानीति।

(अधिकरणम् ९)

## ३६. ॐ अन्तरा चापि तु तद्दृष्टेः ॐ

इति सूत्रस्य विधुरादीनां द्रव्यादिसम्पद्रहितानां चान्यतमाश्रम - प्रतिपत्तिहीनानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति किंवा

नास्तीति संशये आश्रमकर्मणां विद्याहेतुत्वावधारणादाश्रमकर्मासंभवाच्च एतेषां ब्रह्मविद्यायामधिकारो नास्तीति पूर्वपक्षे ।

अन्तराचापि तु अनाश्रमित्वेन वर्तमानोऽपि विद्यायामधिक्रियते. (इति सिद्धांतः) तद्दृष्टेः रैक्ववाचन्कवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः इति ।

## ३७. ॐ अपि च स्मर्यते ॐ

संवर्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यते इतिहासे इति ।

ननु लिंगमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तं' कानु खलु प्राप्तिरितिसाऽभिधीयते ।

## ३८. ॐ विशेषानुग्रहश्च ॐ

तेषामपि च विधुरादीनामविरुद्धैः पुरुषमात्रसंबधिभिर्जपोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः संभवति । तथा च स्मृतिः—"जप्येनैवतु संसिद्धे ब्राह्मणो नात्र संशयः । कुर्यादन्यन्नवाकुर्यान्मैत्रो ब्राह्मण उच्यते" इत्यसंभवदाश्रमकर्मणोऽपि जप्येऽधिकारं दर्शयंति । जन्मांतरानुष्ठितैरपि चाश्रमकर्मभिः संभवत्येव विद्याया अनुग्रहः । तथा च स्मृतिः— "अनेकजन्मसंसिद्धस्ततो याति परां गतिं (गी. ६।४५) इति जन्मांतरसंचितानपि संस्कारविशेषाननुग्रहीतॄन्विद्यायां दर्शयति, तस्माद्विधुरादीनामप्यधिकारो न विरुध्यते, इति ।

## ३९. ॐ अतस्त्वितरज्ज्यायो लिंगाच्च ॐ

अतस्त्वन्तरालवर्तित्वात् इतरत् आश्रमवर्तित्वं ज्यायो विद्यासाधनं श्रुतिस्मृतिसंदृष्टत्वात् श्रुतिर्लिंगात् स्मृतिर्लिंगादिति च, शंक-

राचार्याणां यद्व्याख्यानं तेनापि पूर्वोक्तरीत्या वर्णाश्रमाणां वर्णाश्रमधर्माणां धर्मविद्ययोः कार्यकारणभावस्य जन्मान्तरस्य च पारमार्थिकत्वं सिध्यतीति इदमधिकरणं एतदधिकरणोक्तश्रुतिस्मृत्यादयश्च अद्वैतिनां प्रतिकूलाः, द्वैतिनामनुकूला इति ।

(अधिकरणम् १०)

## ४०. ॐ तद्भूतस्य च नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॐ

इति, सूत्रं संति ऊर्ध्वरेतस आश्रमा इति स्थापितम्, तान् आश्रमान्, प्राप्तस्य कथंचित्ततः (आश्रमात्) प्रच्युतिररित नवेति संशये पूर्वकर्मस्वनुष्ठानच्चिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्यात् । विशेषाभावादिति, पूर्वपक्षे च तद्भूतस्य प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदप्यतद्भावः ततः प्रच्युतिः स्यात् नियमातद्रूपाभावेभ्यः= अत्यन्तमात्मानमाचार्यकुलेऽवसादयन् (छां. २।२३।१) इति अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत् इति "आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमं । आविमोक्षाच्छरीरस्य सोनुतिष्टेद्यथाविधि" इत्येवं जातीयकात् नियमात् अतद्रूपात्=यथा च 'ब्रह्मचर्यं समाप्य-गृही भवेत्' (जा. ४) 'ब्रह्मचर्यादेव प्रव्रजेत्' (जा. ४) इति चैवमादीन्यारोहरूपाणि वचांसि उपलभ्यन्ते नैवं प्रत्यवरोहरूपाणि इति, (आरोहण तुल्यत्वाभावात् अवरोहणस्य,) अभावात्=एवमवरोहणविषयकशिष्टाचाराभावात् इति जैमिन्याचार्योपि एवं मन्यते इति, यद्व्याख्यानं शंकरभाष्ये तत् आश्रमाणां तदुक्तधर्माणां सत्यत्वव्यवस्थापकत्वेन अद्वैतिनाम् अननुगुणं, द्वैतिनाम् अनुगुणमेवेति ।

(अधिकरणम् ११)

## ४१. ॐ न चाधिकारिकमपि पतनानुमानात्तद-योगात् ॐ

इति सूत्रं नैष्ठिको ब्रह्मचारी प्रमादात् अवकीर्येत (व्यभिचरेत्) तस्य "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत्." इत्येतत्प्रायश्चित्तं स्यादुत नेति संशये तस्य अवकीर्णिनः = नैष्ठिकब्रह्मचारिणः अधिकारिकं = अधिकारलक्षणे निर्णीतं प्रायश्चित्तं "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्" (जै-सु. ६-८-२१) इति तदपि न भवितुमर्हति. पतनानुमानात् = 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति अप्रतिसमाधेयपतनस्मरणात्, तदयोगात् = छिन्नशिरस इव प्रतिक्रियानुपपत्तेः उपकुर्वाणस्य तु = उपापातकं कुर्वाणस्य तादृ्वपतनस्मरणाभावात् उपपद्यते तत्प्रायश्चित्तम् इति ।

## ४२. ॐ उपपूर्वमपि त्वेके भावमशनव-त्तदुक्तम् ॐ

इति सूत्रं एके आचार्याः उपपूर्वं = उपपातकमेवेति मन्यन्ते यन्नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रम्हचर्यं विशीर्येत न तन्महापातकं भवति, गुरुतल्पादिषु महापातकेष्वपरिगणनात्. तस्मादुपकुर्वाणवन्नैष्ठिकस्यापि प्रायश्चित्तस्य भावमिच्छन्ति, ब्रम्हचारित्वाविशेषादवकीर्णित्वाविशेषाच्च । अशनवत् यथा ब्रम्हचारिणो मधुमांसाशने व्रतलोपः पुनः संस्कारश्चैवमिति । ये हि प्रायश्चित्तस्याभावमिच्छन्ति तेषां न मूलमुपलभ्यते । येतु भावमिच्छन्ति तेषां ब्रम्हचार्यवकीर्णीत्येतदविशेषश्रवणं मूलम् । तस्माद्भावो युक्ततरः । तदुक्तं प्रमाणलक्षणे

'समा विप्रतिपत्तिः स्यात्' (जै. सू. १-३-८) 'शास्त्रस्था वा तन्निमित्त त्वात्'. (जै.सू.१-३-७) इति यद्व्याचक्रुः शंकराचार्याः तद्व्याख्यानमपि ब्रह्मातिरिक्तजगतः पूर्ववदेव भेदस्य आश्रमाणां पापादीनां च सत्यत्व साधकत्वात् अद्वैतिनां प्रतिकूलं । द्वैतिनाम् अनुकूलमेवेति ।

(अधिकरणम् १२)

## ४३. ॐ बहिस्तूभयथापि स्मृतेराचाराच्च ॐ

इति सूत्रस्य "यद्यूर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकं यदि वोपपातकमुभयथापि शिष्टैस्ते बहिष्कर्तव्याः । "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति "आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टं च स्पृष्टवा चांद्रायणं चरेत् ।" इति चैवमादिनिन्दातिशयस्मृतिभ्यः । शिष्टाचाराच्च । न हि यज्ञाध्ययनविवाहादीनि तैः सहाचरंति शिष्टाः" इति यद्व्याख्यानं तत् द्वैतिनां मतरीत्या युक्तमेव । पापस्य प्रायश्चित्तस्य ग्रहणस्य यज्ञाध्ययनविवाहादीनां सर्वस्य चासत्ववादिनाम् अद्वैतिनां मतरीत्या अयुक्तम् । (अद्वैतिनां प्रतिकूलमेव)

(अधिकरणम् १३)

## ४४. ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ

इति सूत्रेण अंगेषु उपासनेषु किं तानि यजमानकर्माणि आहोस्वित् ऋत्विक्कर्माणीति संशये, यजमानकर्माणि यजमानस्य फलश्रुतेरिति आत्रेयमतावष्टंभेन पूर्वपक्षे—

## ४५. ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॐ

इति सूत्रेण ऋत्विक्कर्माण्येतानि स्युः इति औडुलोमिराचार्यो मन्यते, तस्मै=सांगाय कर्मणे यजमानेन ऋत्विजः परिक्रीतत्वात् इति ।

## ४६. ॐ श्रुतेश्च ॐ

इति सूत्रेण च "यां वै कांचन यज्ञे ऋत्विज आशिषमाशासते इति यजमानायैव तामाशासत इति होवाचेति तच्च ऋत्विक्कर्तृकस्य यजमानगामिफलं दर्शयति, तस्मादंगोपासनानां ऋत्विक्कर्मत्वसिद्धि" रिति यः सिद्धान्तः कृतः शंकराचार्यैः, तेन ऋत्विजः यजमानेन भेदः उपासनानां फलानां च कार्यकारणभावोक्त्या असतः कार्यकारणभावासंभवात्, प्रमाणगृहीतानाम् असति बाधके पारमार्थिकत्वावश्यकत्वात् प्रकृते च बाधकाभावात् पारमार्थिकसत्यत्वं च सिध्यति इति शशविषाणादिवत् उत्पत्तिनाशोपासनाफलानाम् असत्वं वदताम् अद्वैतिनां प्रतिकूलमेव ।

यजमानऋत्विग्भेदोपासनाफलतत्प्रतिपादनादीनां सूत्रस्य सर्वस्य असत्वे शून्यवादिवत् (अवैदिकत्वप्राप्त्या वैदिका अद्वैतिना इति मत्वा) असंभाषणीया एवेति वेदार्थभूतब्रह्मसूत्रव्याख्याने अनधिकृता एवेति ।

(अधिकरणम् १४)

## ४७, ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ

इति सूत्रस्य 'तस्माद्ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनं च मौन च निर्विद्याथ ब्राह्मणः, (बृ. ३।५।१) इति बृहदारण्यके उक्ते मौने विधीयते नवेति संशये न विधीयते इति पूर्वपक्षे, सहकार्यंतरविधिः = विद्यासहकारिणो मौनस्य बाल्यपांडित्यवत् विधिः आश्रयितव्यः अपूर्वत्वात्, पांडित्यशब्देन मौनस्यावगतत्वात् कथं विधिरित्याक्षेपे तृतीयं = बाल्यपाण्डि-

त्यापेक्षया तृतीयमिदं ज्ञानातिशयरूपं तद्वतः=ज्ञानवतः संन्यासिनः विधीयते ।

ननु सति विद्यावत्वे प्राप्नोत्येव तत्रातिशयः किं मौनविधानेनेति शंकायां पक्षेणेति. यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिरिति विध्यादिवत्=यथा— "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवं जातीयके विध्यादौ सहकारित्वेनाग्न्यन्वाधानादिकर्मांगजातं विधीयते । एवमविधिप्रधानेऽपि अस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः ।। इति यद्व्याख्यानम्, एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने कस्माच्छान्दोग्ये गृहिणोपसंहारः "अभिसमावृत्य कुटुंबे" (छां. ८।१५।१) इत्यत्र, तेन ह्यु पसंहरंस्तद्विषयमादरं दर्शयतीति शंकायां प्रवृत्तमिति अवतारितस्य.

## ४८. ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ

इति सूत्रस्य "गृहिणः=गृहस्थाश्रमिणः कृत्स्नभावात्=बहुलायाससाध्यबव्हाश्रमकर्मणां कर्तव्यतया उपदिष्टत्वात्, उपसंहारः" इति यद्व्याख्यानं.

## ४९. ॐ मौनवदितरेषामप्युपदेशात् ॐ

इति सूत्रस्य "यथा मौनं गार्हस्थ्यं चैतावाश्रमौ श्रुतिमन्तौ एव मितरावपि वानप्रस्थगुरुकुलवासौ श्रुतिप्रतिपाद्यौ तयोरप्युपदेशादि"ति व्याख्यानं च वर्णानां वर्णाश्रमधर्माणां यज्ञादीनाम् इन्द्रियसंयमनादीनां सत्वव्यवस्थापकतया 'न वर्णा न वर्णाश्रमाचारधर्माः न मे धारणाध्यानयोगादयोऽपि । न पुण्यं न पापं 'न माता पिता वा न देवा न लोका यज्ञा न वेदा न तीर्थं ब्रुवंति'न निरोधो न चोत्पत्तिः न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्तः' इत्यादीनां वर्णवर्णाश्रमादीनां सर्वेषां असत्वं वदताम् अद्वैतिनां प्रतिकूलान्येवेति ।

(अधिकरणम् १५)

## ५०. ॐ अनाविष्कुर्वन्नन्वयात् ॐ

इति सूत्रस्य "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" (ब्र. -३-५-१) इति श्रुतौ अनुष्ठेयतया श्रुतं बाल्यं कामचारवादभक्षणत्वतिष्ठन्मूत्रत्वादिबालकर्म वा भावशुद्धिर्दंभदर्पादिरहितत्वं वा इति संशये, लोके बाल्यशब्दस्य कामचारवादभक्षणत्वादिव्यापारे प्रसिद्धेः कामचारवादत्वादिरूपं बाल्यं विधीयते इति पूर्वपक्षे—

अनाविष्कुर्वत् = बालः यथा अप्ररूढेन्द्रियतया न परेषां आत्मानमाविष्कर्तुम् ईहते तथा ज्ञान्यपि ज्ञानाध्ययनधार्मिकत्वादिभिः आत्मानम् अविख्यापयन् दंभदर्पादिरहितो भवेत्, एवं कृतौ विद्योपकारकत्वेन "बाल्यस्यान्वयात्" (संबंधात्) इति यद्व्याख्यानं तदपि अनेकपदार्थानां सत्वसाधकतया अद्वैतिनां प्रतिकूलमिति ।

(अधिकरणम् १६)

## ५१. ॐ ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ

इति सूत्रस्य "विद्यासाधनस्य फलीभूता विद्या किमिहैव जन्मनि सिध्यति उत कदाचिदमुत्रापि इति संशये, अस्मिन्नेव जन्मनि विद्यासिध्यतीति पूर्वपक्षे कठश्रुतिस्मृत्युदाहरणेन, साधनेन जायमाना विद्या अस्मिन्नेव जन्मनि भवति प्रारब्धकर्मप्रतिबन्धाभावे, प्रारब्धकर्मप्रतिबन्धकसत्वे जन्मांतरे विद्या सिध्यति" इति यद्व्याख्यानं, तत्तु युक्तमेव द्वैतमते, अद्वैतमते 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्तः, इत्याद्यद्वैतिवाक्यैः उत्पत्यादेः सर्वस्यापि असत्वांगीकारा-

वगमात्, विद्योत्पत्तेरेवाभावात् तस्या अस्मिन् जन्मनि उत्पत्तिर्वा जन्मान्तरे उत्पत्तिर्वा इति शंकायाः, अस्मिन्नेव जन्मनि उन्पत्तिरिति पूर्वपक्षस्य चानवतारात्, तस्याः विद्यायाः प्रारब्धप्रतिबन्धाभावे अस्मिन् जन्मनि उत्पत्तिः, प्रतिबंधकप्रारब्धकर्मसत्वे जन्मान्तरे उत्पत्तिरिति समाधानस्य चायोगात्, उत्पत्यादिकथनानुपपत्त्या ज्ञानस्य ज्ञानसाधनस्य च सत्त्वं (कल्पितत्वाभावः) पारमार्थिकत्वं च सिध्यति इति इदम् अधिकरणम् अद्वैतिनां प्रतिकूलमेव.।

यच्च 'गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती जन्मान्तरसंचितात् साधनात् जन्मान्तरे विद्योत्पत्तिं दर्शयति.। नहि गर्भस्थस्यैहिकं किंचित्साधनं संभाष्यते, इति वाक्येन पूर्वजन्मकृतेन साधनेन जन्मान्तरे (गर्भस्थित्यवस्थायामेव) ज्ञानम् जायते, इत्युक्तं तत्सत्यमेव,। परन्तु ब्रह्मभावपदस्य ब्रह्मज्ञानार्थकत्वे (ब्रह्मणः भावं ज्ञानम् इत्यर्थकत्वे) गर्भस्थ एव वामदेवः ब्रह्मज्ञानं प्राप्तवानित्यर्थसिध्या जन्मान्तरकृतसाधनेन जन्मान्तरे ज्ञानं उत्पद्यते इत्यस्मिन् विषये तादृशश्रुतिः प्रमाणं भवितुमर्हति.। ब्रह्मभावमित्यस्य 'ब्रह्मणो भावः धर्मः ब्रह्मत्वं प्रतिपेदे, (ब्रह्मैवाभूत्) इत्यर्थकत्वे जन्मान्तरकृतज्ञानसाधनस्य जन्मान्तरे ज्ञानजनकत्वम् इत्यस्मिन् विषये अस्या उदाहरणम् असंगतं भवति । तादृशश्रुतौ वामदेवस्य जन्मान्तरकृतसाधनेन जन्मांतरे ज्ञानम् जातमिति अश्रवणात्, वामदेवेन ब्रह्मत्वस्य (ब्रह्माभेदस्य) च अश्रवणात् प्रत्युत जीवब्रह्मणोः प्रेर्यप्रेरकभावेन भेदस्य वामदेवस्य ब्रह्मणा भेदज्ञानवत्वस्यैवश्र वणात् । एतच्छ्रुत्यर्थविचारः 'शास्त्रदृष्टया तूपदेशो वामदेववत्, (ब्र. सू. १-१-२९) इति सूत्रविचारे कृतो द्रष्टव्यः ।

(अधिकरणं १७)

# ५२. ॐ "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" ॐ

इति सूत्रस्य "यथा विद्यालक्षणे फले साधनवीर्यविशेषात् ऐहिकत्वामुष्मिकत्वलक्षणो विशेषः एवं मुक्तिलक्षणे फले उत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः अस्ति नवेति संदेहे मुक्तिः सविशेषा फलत्वात् विद्यावदिति अनुमानेन मुक्तिः सविशेषा इति पूर्वपक्षे,एवं मुक्तिफलानियमः=न खलु मुक्तिरूपे फले कश्चिदेवंभूतः विशेषप्रतिनियमोस्ति, कुतः तदवस्थावधृतेः – मुक्त्यवस्था हि सर्ववेदान्तेषु एकरूपैवावधार्यते, ब्रह्मैव हि मुक्त्यवस्था न च ब्रह्मणोऽनेकाकारयोगोस्ति एकलिंगत्वावधारणात्, 'अस्थूलमनणु' (बृ. ३-८-८) 'स एष नेति नेत्यात्मा' (बृ. ३-९-२६) 'यत्र नान्यत्पश्यति' (छां. ७-२४-१) 'ब्रह्मैवेदममृतं पुरस्तात्' (मुण्ड. २-२-११) 'इदं सर्वं यदयमात्मा'(बृ. २ ४-६)'स वा एष महानज आत्माऽजरोमृतोऽमरोऽभयो ब्रह्म' (बृ ४-४-२५) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ. ४-५-१५) इत्यादिश्रुतिभ्यः। अपि च विद्यासाधनं स्ववीर्यविशेषात्स्वफल एव विद्यायां कंचिदतिशयमासंजयेन्न विद्याफले मुक्तौ, तद्ध्यसाध्यं नित्यसिद्धस्वभावमेव विद्ययाधिगम्यत इत्यसकृदवादिष्म, न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावादुत्कृष्टैव हि विद्या भवति, तस्मातस्यां चिराचिरोत्पत्तिरूपोऽतिशयो भवन्भवेत्। न तु मुक्तौ कश्चिदतिशयसंभवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः कर्मफलवत्, नहि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्तीति। सगुणासु तु विद्यासु 'मनोमयः प्राणशरीरः' (छां. ३-१४-२) इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यामुप-

पद्यते यथास्वं फलभेदनियमः कर्मफलवत् - तथा च लिंगदर्शनम्— 'तं यथा यथोपास्ते तदेव भवति' इति. नैवं निर्गुणायां विद्यायां गुणाभावात्, तथा च स्मृतिः— "नहि। गतिरधिकारित कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्" इति यद्व्याख्यानं तदत्यंतमप्रामाणिकम्, प्रमाणविरुद्धं च । तथा हि—

तदवस्थावधृतेरित्यस्य मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते, ब्रह्मैव हि मुक्त्यवस्था, न च ब्रह्मणोऽनेकाकारयोगोस्ति, एकलिंगत्वावधारणात्, अस्थूलमित्यादि श्रुतिभ्यः इति यदुक्तं तत्तावदप्रामाणिकं प्रमाणविरुद्धं च । ब्रह्मैव मुक्त्यवस्था इत्यस्मिन् विषये प्रमाणाभावात्, प्रत्युत "ब्रह्मविदाप्नोति परं" (तै) परात्परं पुरुषमुपैति-दिव्यं (आ) परंज्योतिरुपसंपद्य स्वेन रूपेण अभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाणः" इत्यादिभिः मुक्तस्य ब्रह्मभिन्नत्वग्राहकप्रमाणैः ब्रम्हणः मुक्त्यवस्थाभिन्नत्वोक्तेः ।

न च अस्थूलमनणु इत्यादिश्रुतिभ्यः ब्रम्हणः मुक्त्यवस्थात्वमुक्तमितिवाच्यम् । तत्र ब्रम्हणः स्वरूपस्य उक्तत्वेन ब्रम्हणः मुक्त्यवस्थात्वानुक्तेः । तथा हि—अस्थूलमनणु इति वाक्यं गीताभाष्ये शंकराचार्योक्त रीत्या अप्राकृतस्थौल्यादिमत्वं वक्ति न तु सामान्यतः स्थौल्याद्यभावम्. अणीयान् व्रीहेर्वा इत्यादिश्रुतौ अणुत्वस्थूलत्वाद्युक्तेः । तुष्यत्विति न्यायेन स्थौल्यादीनां सामान्यतः अभावमेव बोधयतीत्यंगीकारेऽपि सर्वज्ञत्व प्रशासकत्व सर्वोत्तमत्व द्रष्टृत्वाद्यनेकधर्माणां तदुत्तरवाक्ये कथनेन अनेकाकारत्व (अनेकधर्मवत्व) निषेधासिद्धेः ।

"स एष नेति नेति" इति वाक्यं तु सः एषः परमात्मा इति न= पूर्वोक्तमूर्तं न इति, इति न=पूर्वोक्तामूर्तं न इति मूर्तामूर्तादित्रैलक्षण्यं बोधयति न तु ब्रम्हणः मुक्त्यवस्थात्वम्,विशेषविचारः "प्रकृतैतावत्वम्" इति सूत्रविचारे कृतो द्रष्टव्यः । स वा एष महानज इति वाक्यं ब्रम्हणः

महत्वाजरत्वामृतत्वाभयत्वादिधर्मान् वदत् ब्रम्हणः अनेकाकारत्वमेवावगमयति। यत्र त्वस्येतिवाक्यं मोक्षावस्थायामपि अनेकपदार्थानां सत्वं जीवपरमात्मनोर्भेदं कथयति, न तु मुक्त्यवस्थायाः ब्रम्हरूपत्वम् ।

"अपि च विद्यासाधनं स्ववीर्यविशेषात्स्वफल एव विद्यायां कंचिदतिशयमासंजयेन्न विद्याफले मुक्तौ, तद्धि असाध्यं नित्यसिद्धस्वभावमेव विद्ययाधिगम्यत इत्यसकृदवादिष्म" इति वाक्येन मुक्तिरूपफलस्य नित्यसिद्धब्रम्हस्वरूपत्वेन असाध्यत्वं विद्यया अधिगम्यते इति च बहुवारं उक्तमिति यदुक्तं तत् अस्माभिरपि बहुवारं निराकृतम् प्रकृतेऽपि किंचिन्निराक्रियते, तथा हि ब्रम्हैव मुक्त्यवस्था इत्युक्त्वा तस्य साध्यत्वं नास्ति इति स्वीकारे किमर्थं ज्ञानरूपं साधनं। ज्ञानमपि ब्रम्हरूपं निर्विषयकम् इति अद्वैतिभिः स्वीकृतत्वेन ब्रम्हरूपज्ञानस्यापि नित्यत्वेन अजायमानत्वेन ब्रम्हरूपज्ञानार्थं यत्नोऽपि व्यर्थ एवाद्वैतिनां मते ।

न च अज्ञाननिरासार्थं यत्न इति वाच्यम् यथा शुक्त्यज्ञानं शुक्तिज्ञानेन निवर्तते तथा ब्रम्हाज्ञानमपि ब्रम्हणः ज्ञानेन निवर्तनीयं। न चास्ति ब्रम्हविषयकं ज्ञानम्। अद्वैतमते ब्रम्हणः अज्ञेयत्वांगीकारात् इत्यादिदोषाः पूर्वोक्ताः न विस्मर्तव्या इति ।

यच्चोक्तं 'तद्धि असाध्यं नित्यसिद्धस्वभावमेव विद्यया अधिगम्यते' इति तत्र अधिगम्यते इत्यस्य ज्ञायते इत्यर्थो वा प्राप्यते इत्यर्थो वा-नाद्यः ब्रम्हणः ज्ञानाविषयत्वात्। नापि द्वितीयः अप्राप्तस्य खलु प्राप्तिः अद्वैतमतरीत्या ब्रम्हस्वरूपस्य सदा विद्यमानत्वेन विद्यया प्राप्यते इत्यस्यायोगात् ।

यत्तु 'न हि मुक्तिसाधनीभूताया विद्यायाः कर्मणामिव भेदोऽस्तीति विद्याभेदाभावात् तत्फले भेदः सगुणासु विद्यासु 'मनोमयः प्राण-

शरीरः' इत्याद्यासु गुणावापोद्वापवशात् भेदोपपत्तौ सत्यां उपपद्यते यथास्वं फलभेदनियमः कर्मफलवत्। तथा च लिंगदर्शनं—'तं यथा यथोपास्ते तदेव भवति' इति। नैवं निर्गुणायां विद्यायां गुणाभावात्, तथा च स्मृतिः—'न हि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यतां, इति तदप्ययुक्तम् तथा हि—रूढियोगान्यतरशक्यतावच्छेदकगुण (धर्म) योगे हि मुख्यवृत्या शक्यसंबंधे सति वा शक्यगुणसदृशगुणे वा सति अमुख्यवृत्या पदार्थविषयको बोधो जायते। अद्वैत्यभिमते निर्गुणे ब्रम्हणि मुख्यवृत्यमुख्यवृत्तिभ्यां शब्दप्रवृत्तिप्रयोजकानां धर्माणां अभावेन निर्गुणं ब्रम्ह शब्दप्रमाणविषयो न भवति! तथैव रूपादिगुणाभावेन ऐंद्रियिको न भवति. निर्धर्मके अनुमानस्याप्यप्रवृत्या अनुमेयोऽपि न भवतीति प्रमाणागम्यतया शशविषाणवत् असत्वेन विषाणं द्विविधं शशविषाणं गोविषाणमितिवत् ब्रम्हद्विविधं निर्गुणं सगुणं चेति द्वैविध्यकल्पनमयुक्तमेव। प्रमाणेन सविशेषस्यैव (सगुणस्यैव) प्रतीतेश्च। 'विशेषविचारः ' न स्थानतोऽपि' (ब्र. सू. ३-२-१२) इति सूत्रार्थविचारे कृतो द्रष्टव्यः। तथा सगुणविद्या निर्गुणविद्या इति विभागोऽपि असन्। 'पृथगात्मानं प्रेरितारं च मत्वा' इति श्रुत्या भिन्नत्वगुणेन प्रेरकत्वगुणेन च ब्रम्हणः बोधनात्। एवं 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रम्हयोनिम्' इत्यादि सर्वश्रुतिभिः रुक्मवर्णत्व कर्तृत्व स्वामित्व पूर्णषड्गुणत्व चतुर्मुखकारणत्वादिधर्मवत्वेन ब्रम्हणः बोधनात्.

'आकाशस्तल्लिंगात्' 'सर्वधर्मोपपत्तेः' इत्याद्यनेकसूत्रैः सगुण ब्रह्मण एव व्यवस्थापनात्, 'वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहं' 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।। यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इत्यादि गीतावाक्यैरपि गुणविशिष्टब्रह्मणएव प्रतिपादनात्। वेदसूत्र-

गीतारूपप्रस्थानत्रयरूपप्रमाणजन्या ब्रह्मविद्या गुणविषयैवेति गुणा-वापोद्वापवशात् भेदोपपत्तौ सत्यां 'तं यथायथोपासते तदेव भवति' इति श्रुत्यनुसारेण उपपद्यते यथास्वं फलभेदनियमः कर्मफलवदिति।

न च मोक्षस्य ब्रह्मस्वरूपत्वेन तत्र भेदोऽनुपपन्नः इति वाच्यम्, मोक्षस्य ब्रह्मस्वरूपत्वे प्रमाणाभावात्, ज्ञानसाध्यत्वासंभवाच्च. प्रत्युत मोक्षे जीवब्रह्मणोर्भेदोक्तेः।

न च मोक्षस्यानंदानुभवरूपत्वेऽपि मुक्तानंदस्यैकरूपत्वात् न तत्र तारतम्यं (उत्कर्षनिकर्षात्मकोतिशयः) संभवतीति वाच्यम् तैत्तिरीय-बृहदारण्यकश्रुत्यादौ मुक्तमनुष्यमारभ्य मुक्तचतुर्मुखपर्यंतम् आनन्दता-रतम्यस्य कथनात्।

न च मुक्तानन्दतारतम्यम्, आनन्दपरिमाणापकर्षोत्कर्षनिमित्तकं किं वा आनन्दगतसंख्यान्यूनाधिकनिमित्तकम्. (एकस्य मुक्तस्य एक आनन्दः, अन्यस्य द्वौ, अपरस्य त्रयः एवं संख्यान्यूनाधिकनिमि-त्तकम्.) नाद्यः—सर्वेषां जीवानामणुत्वेन जीवस्वरूपभूतानन्दस्यैक-स्याणुत्वे अपरस्य महत्त्वमिति परिमाणकृततारतम्यायोगात्। न द्वितीयः - आनन्दस्य जीवस्वरूपत्वेन तत्तदेकजीवस्वरूपभूतानन्दस्य द्वित्वत्रित्वादीनामयोगात्. इति वाच्यम् यथा एकस्य वज्रस्य अन्यवज्रा-पेक्षया परिमाणतारतम्याभावेऽपि प्रकाशस्वरूपत्वेपि एकस्य वज्रस्य प्रकाशः न्यूनः अन्यस्य अधिक इति तरतमभावः अनुभवसिद्धः यथा च नीरपानजानंदात् क्षीरपानजानन्दः अधिक इति अनुभवसिद्धः तथा एकमुक्तस्वरूपभूतानन्दस्य अन्यमुक्तस्वरूपानन्दात् अतिशयस्य शास्त्रसिद्धत्वादिति।

यत्तु "नैवं निर्गुणायां विद्यायां गुणाभावात्, तथा च स्मृतिः "नहि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्' इति

वाक्येन निर्गुणविद्यायाः गुणविषयत्वाभावे स्मृत्युदाहरणं तदपि मन्दम्। निर्गुणविद्याया एवाप्रामाणिकत्वात्। स्मृतौ निर्गुणविद्यायाः तस्याः गुणविषयकत्वाभावस्य चाश्रवणात्। स्मृत्यर्थस्तु आधिक्यप्रयोजकगुणा (धर्मा) भावे कस्यचित् पुरुषस्य गतिः फलं अधिका नास्ति हि= प्रसिद्धं. सति विद्यमाने हि गुणे=आधिक्यप्रयोजके धर्मे फलस्य अतुल्यतां=न्यूनाधिकभावं कथयंति इति न्यूनाधिकगुण (धर्म) निमित्तक एव फले न्यूनाधिकभावः इत्येतत् हि=प्रसिद्धमिति।

रत्नप्रभान्यायनिर्णययोः स्मृतिस्थस्य कस्यचित् इति पदस्य निर्गुणविद इत्यर्थकरणं न शब्दमर्यादानुसारि, किंतु स्वाग्रहमूलकमेवेत्युपेक्षणीयम्, निर्गुणवस्तुनः अभावात्, निर्गुणज्ञानस्य तज्ज्ञानवतश्च अभावादिति।

तस्माद् ब्रह्मणःमुक्त्यवस्थारूपत्वाभावात् अधिकाधिकतरज्ञानानुसारेण मुक्तौ अधिकाधिकतरानंदानुभवरूपवत्वविशेषः मुक्त्यवस्थायां अस्तीति सिद्धम्।

इति शांकरभाष्यखंडने तृतीयाध्यायस्य

चतुर्थःपादः.

---

# अथ चतुर्थाध्याय शांकरभाष्यविचारः

-०-

## १. ॐ आवृत्तिरसकृदुपदेशात् ॐ

अस्य सूत्रस्य "तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात् । अथेह चतुर्थे फलाश्रय आगमिष्यति. प्रसंगतं चान्यदपि किंचिच्चिन्तयिष्यते । प्रथमं तावत्कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः— 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. ४-५-६) 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' (बृ. ४-४-२१) 'सोऽन्वेष्टव्यः सविजिज्ञासितव्यः' (छां. ८-७-१) इति चैवमादि श्रवणेषु संशयः—किं सकृत्प्रत्ययः कर्तव्य आहोस्विदावृत्त्येति. किं तावत्प्राप्तम् सकृत्प्रत्ययः स्यात् प्रयाजादिवत् । तावता शास्त्रस्य कृतार्थत्वात् । अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत् । नन्वसकृदुपदेशा उदाहृताः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवमादयः एवमपि यावच्छब्दमावर्तयेत्सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति नातिरिक्तम्. सकृदुपदेशेषु तु वेदोपासीतेत्येवमादिष्वनावृत्तिरिति. एवं प्राप्ते ब्रूमः—प्रत्ययावृत्तिः कर्तव्या. कुतः ? असकृदुपदेशात्. 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति । ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति - न दर्शनपर्यवसितत्वादेवाम्. दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथावघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि तद्वत्. अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियभिधीयते तथा हि—लोके गुरुमुपास्ते राजानमुपास्त इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते. तथा ध्यायति प्रेषितताथा

पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सा एवमभिधीयते........तस्मात् सकृदुपदेशेष्वपि आवृत्तिसिद्धिः असकृदुपदेश स्त्वावृत्तेः सूचक इति यच्छांकरव्याख्यानं तदद्वैतमते न युक्तम्। "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्तः (गौ०) इत्याद्यनेकाद्वैतग्रंथैः श्रवणाद्यावृत्तिरूपसाधनस्य साध्यस्य मोक्षादेश्च 'नास्ति नासीन्न भविष्यतीति' त्रैकालिक निषेधप्रतियोगित्वरूपासत्त्वस्यांगीकारावगमेन साधनाद्यावृत्तिकरणस्यासंभवात्।

## २ ॐ लिंगाच्च ॐ

अस्य सूत्रस्य 'रश्मींस्त्वं पर्यावर्तयात्' (छां. १।५।२) इति वाक्ये पर्यावर्तयादितिपदेन रश्मिध्यानावृत्तेरुक्तत्वेन, ध्यानत्वसामान्यात् फलपर्यन्तत्वसामान्याद्वा लिंगात् श्रवणमननध्यानेष्वप्यावृत्तिः कर्तव्येति श्रवणाद्यावृत्तिसाधकलिंगपरतया यद्व्याख्यानं तत्पूर्वोक्तरीत्या अद्वैतमते न युक्त ब्रह्मातिरिक्तस्य ध्यानादेः सर्वस्यासत्त्वेन ध्यानादेः तदावृत्तेश्चासंभवात्।

यत्तु 'अत्राह–भवतु नामेत्यारभ्य तस्मात्परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिरित्यंतेन ये शंङ्कासमाधाने कृते तेऽप्ययुक्ते। १ निर्गुणस्य शशविषाणायितत्वेन ब्रह्मसगुणं निर्गुणमिति–भेदकरणस्यायुक्तत्वात्। २ अद्वैत्यभिमत सकलधर्मरहितब्रह्मणोऽज्ञेयत्वेन तद्विषयकसाक्षात्कारस्यासंभवेन आवृत्त्या ब्रह्मसाक्षात्कारायोगात्। ३ वाक्येन शक्त्या वा लक्षणया वा बोधस्य जनने पूर्वं पदार्थज्ञानस्य कारणत्वेन ब्रह्मणश्च

सर्वथाऽज्ञेयत्वेन 'तत्त्वमसि' इति वाक्येन ब्रह्मविषयकज्ञानस्य वा-तत्साक्षात्कारस्य वाऽसंभवात् ॥ ६ ॥

## ३ ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ

इति सूत्रस्य शङ्कराचार्यकृतं व्याख्यानं अप्रामाणिकं प्रमाणविरुद्धं स्वव्याहतमिति आदावेवोक्तत्वेन नेह पुनर्विचार्यते॥

## ४ ॐ न प्रतीके न हि सः ॐ

अस्य सूत्रस्य मनआदित्यादिप्रतीकेषु, अहंग्रहः कर्तव्यो नवेति संशये, मनआदिप्रतीकेषु आत्मग्रह. ( मनोऽहं आदित्योऽहं-इतिग्रहः) कर्तव्यः प्रतीकानां ब्रह्मत्वात् (ब्रह्माभेदात्) आत्मनश्च ब्रह्मत्वात्, यत् यदभिन्नाभिन्नं तत्तेऽभिन्नमिति न्यायेन प्रतीकस्य आत्माभिन्नब्रह्माभिन्नत्वेन आत्माभिन्नत्वादिति पूर्वपक्षे 'न प्रतीके न हि सः' न प्रतीकेषु आत्ममतिं बध्नीयात् आत्माभेददृष्टिं न कुर्यात् हि यस्मात् कारणात् स आत्मा प्रतीकं न हि इति यद् व्याख्यानं तद्युक्तमेव। परंतु यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्वं ततश्च आत्मत्वमिति तदसत्, प्रतीकाभावप्रसंगात् । विकारस्वरूपो-पमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वेत्यादि । तत्र ( प्रतीकेषु आत्मग्रहस्य कर्तव्यत्वाभावे)या युक्तिरभिहिता सा अत्यन्तमयुक्ता । ब्रह्मणो निर्विकारत्वेन, प्रतीकरूपेण विकाराभावात्, जीवस्य च ब्रह्माभिन्नत्वाभावाच्च, प्रतीकात्मनोरभेदप्रसक्त्यभावेन प्रतीकाना-मात्मत्वोपासनप्रसक्त्यभावेन शंकाया एवानुदयात् । अद्वैतमते

निष्क्रियब्रह्मरूपस्य जीवस्य निष्क्रियत्वेन, उपासनाकर्तृत्वादेर-सम्भवाच्च इति ।

## ५ ॐ ब्रम्हदृष्टिरुत्कर्षात् ॐ

इति सूत्रस्य किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः, किंवा ब्रह्मदृष्टिरादित्यादिष्विति संशये आदित्यादिषु ब्रह्मदृष्टिर्वा कर्तव्या ब्रह्मणि आदित्यादिदृष्टिर्वा कर्तव्या, इत्यत्र नियामकाभावात् आदित्यब्रह्मशब्दयोः सामानाधिकरण्यस्य उभयथापि संभवात् अथवा ब्रह्मणि आदित्यादिदृष्टिः कर्तव्या न आदित्यादिषु ब्रह्मदृष्टिः कर्तव्येति पूर्वपक्षे प्राप्ते आदित्यादिषु ब्रह्मदृष्टिः कर्तव्या, कुतः उत्कर्षात् । आदित्यादिषु ब्रह्मदृष्टौ कृतायां आदित्यादयः उत्कृष्टत्वेन दृष्टाः फलदा भवंति । क्षत्तरि राजदृष्टौ कृतायां, उत्कृष्टत्वेन दृष्ट्या क्षत्ता प्रीतः सन् फलं ददाति, राज्ञि क्षत्तृदृष्टौ कृतायां राजा आत्मानं हीनक्षत्तृत्वेन जानते, इति क्रुद्धः सन् फलं न ददाति प्रत्युत बाधकं च करोतीति हि लौकिको न्यायः, इति शंकराचार्याणां व्याख्यानं अत्यन्तमयुक्तम् । अचेत-नासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यां ' ( संकर्षणसूत्रं ) इत्यादिभिरसत्योपासनाया अनर्थहेतुत्वोक्तेः । यथा चण्डालो नृप इति नृपश्चण्डाल इत्यप्युक्तौ नीचचण्डालनृपयोस्तदीयाभेदज्ञानमनु-माय फलदानसमर्थस्य राज्ञः यथा कोपः तेनानिष्टप्राप्तिश्च तथा आदित्यादिः ब्रह्म इति ' ब्रह्म आदित्यादिरिति ' उपासनायां कृतायां अधमादित्यब्रह्मणोस्तदीयाभेदज्ञानमनुमाय तेन कुपितं ब्रह्म अनिष्टं ददात्येवेति अद्वैतमते निष्क्रियस्यात्मन उपासनाकर्तृत्वाद्य-संभवाच्च ।

"न प्रतीके न हि सः" (ब्र. सू. ४-१-४) इति पूर्वसूत्रे शंकराचार्यैरेव प्रतीकस्यात्मत्वाभावेन प्रतीके आत्मदृष्टिर्न कर्तव्येति निषिद्धतया तन्न्यायेनैव आदित्यादेर्ब्रह्मत्वाभावेन ब्रह्मत्वेनोपासनायाः अकर्तव्यत्वसिद्ध्या पुनरादित्यादिषु ब्रह्मदृष्टेः कर्तव्यत्वोक्तेः स्वसिद्धान्तविरुद्धत्वाच्च इति ।

## ६ ॐ आदित्यादिमतयश्चांग उपपत्तेः ॐ

इति सूत्रस्य अंगेषु उद्गीथादिषु आदित्यादिमतयः कर्तव्या इति व्याख्यानं पूर्वोक्तहेतुभिरेवानुपपन्नम् ।

## ७ ॐ आसीनः सम्भवात् ॐ

## ८ ॐ ध्यानाच्च ॐ

## ९ ॐ अचलत्वं चापेक्ष्य ॐ

## १० ॐ स्मरन्ति च ॐ

इति चतुस्सूत्र्यात्मकस्याधिकरणस्य 'आसीन एवोपासीतेति व्याख्यानं उपासनादीनां सत्यत्ववादिनां द्वैतिनां मते उपासनं प्रत्यासनस्य कारणत्वादिसंभवात् युक्तमेव । परं 'न निरोधो न चोत्पत्ति' रित्येवंरूपेण सर्वमिथ्यात्ववादिनां अद्वैतिनां मते कार्यकारणभावादीनाम् असत्त्वांगीकारादयुक्तमिति ।

## ११ ॐ यत्रैकाग्रता तत्राविशेषात् ॐ

इति सूत्रस्य 'यत्रैकाग्रता मनसः तत्रैव भावना प्रयोजयेत् । अविशेषात्, न ह्यत्रास्ति वैश्वदेवादिवद्वचनं वैशेषिकं तस्मा-

दिति व्याख्यानमपि पूर्ववदुपासनादीनां सत्यत्ववादिनां मते युक्तं न सर्वासत्त्ववादिनामद्वैतिनां मत इति ।

## १२ ॐ आप्रायणात्तत्राऽपि हि दृष्टम् ॐ

इति सूत्रस्य, ' आप्रायणादेवावर्तयेत्प्रत्ययं तत्रापि प्रयाण कालेऽपि प्रत्ययावृत्तिं दर्शयति श्रुति ' रिति व्याख्यानं पूर्ववदेव सत्यत्ववादिनां द्वैतिनां मते युक्तं, न तु सर्वमिथ्यात्ववादिनाम् अद्वैतिनां मत इति ।

## १३ ॐ तदधिगम उत्तरपूर्वाघयोरश्लेष-विनाशौ तद्व्यपदेशात् ॐ

इति सूत्रस्य तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्वयोरघयोरश्लेष-विनाशौ भवतः, उत्तरस्याश्लेषः पूर्वस्य विनाशः । कस्मात् । तद् व्यपदेशात् । तथा हि ब्रह्मविद्याप्रक्रियायां सम्भाव्यमानसंबन्धस्या-गामिनो दुरितस्यानभिसंबन्धं विदुषो व्यपदिशति ' यथा पुष्कर-पलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते ' ( छां. ४–१४–३ ) इति तथा विनाशमपि पूर्वोपचितस्य दुरि-तस्य व्यपदिशति– 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ( छां. ५–२४–३ ) इति अयमपरः कर्मक्षय-व्यपदेशो भवति– भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि, तस्मिन्दृष्टे परावरे ' ( मुं. १–२–८ ) इति यद् व्याख्यानं, तत् श्रुतिसूत्रानुसारित्वात् युक्तमेव । परंतु अद्वैतमतविरुद्धत्वात् अद्वैतिनां प्रतिकूलमेव । तथा हि–

तदधिगमे ब्रह्माधिगम इत्युक्तिरयुक्तैवाद्वैतमते। निर्धर्मकब्रह्मणः प्रमाणप्रवृत्तिप्रयोजकधर्माभावेन अत एवाज्ञेयत्वेन अधिगमासम्भवात् उत्तरपूर्वाघयोरश्लेषविनाशौ भवत इति व्याख्यानमपि अयुक्तमेव अद्वैतिमते। 'न निरोधो न चोत्पत्तिः (गौ० का० ३२) श्लोके, तथा- 'द्वैतस्यासत्त्वं सिद्धं' सतो ह्युत्पत्तिः प्रलयो वा स्यात न असतः शशविषाणादेः (गौ० का० शा० ३२) इत्यादि शांकरभाष्यवाक्येन "बाधितस्य कालत्रयेऽपि सत्त्वाभावात्"(गौ० शां०आनं०)इत्याद्यानंदगिरिवाक्येन, अघादीनां सर्वेषां असत्त्वां (मिथ्यात्वां) गीकारावगमेन असतः कालत्रयासम्बन्धस्य अघस्य पूर्वमिति पूर्वकालसंबन्धोक्तेः, उत्तरमित्युत्तरकालसंबन्धोक्तेः तथा तस्य विनाशोक्तेश्चायोगात्। न च "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत इति छान्दोग्यश्रुतिरेव अघानां ब्रह्मज्ञानेन नाशं बोधयतीति वाच्यं, पापानां ब्रह्मणः तज्ज्ञानस्य च सत्त्वांगीकारमते तदुपपत्तेः। पापानां अद्वैत्यभिमतनिर्गुणब्रह्मज्ञानस्य च असत्त्ववादिनां अद्वैतिनां मते, 'तद्यथेषीकातूल' मित्यघसंबन्धविनाशादिबोधकश्रुतेरसम्भव एवेति।

किं च "अयमपरः कर्मक्षयव्यपदेशो भवति- 'भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः" क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु. २-२-८) इति परावरब्रह्मज्ञानेन कर्मक्षयकथनमयुक्तम्। परावरब्रह्मणोऽदृश्यत्वात् 'हृदयग्रन्थेरभावेन तस्य भेदनाभावात् संशयादीनां अभावेन तेषां छेदनाऽनुपपत्तेः। सतो हि छेदः नाऽसत इति ॥

अस्मिन्नधिकरणेऽपि पुनः सगुणविद्या निर्गुणविद्येति विद्याभेदकथनं च अप्रामाणिकत्वात् अयुक्तमेव । "किं च पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं, ब्रह्माहमस्मि, नेतः पूर्वमपि कर्ता, भोक्ता वाऽहमासं नेदानीं नापि भविष्यत्काल इति ब्रह्मविदवगच्छति" इत्युक्तिरप्यत्यन्तमयुक्ता, कर्ता शास्त्रार्थवत्त्वात् ( ब्र. सू. २।३।३३ ) इत्यादिसूत्राणां 'अहरहः संध्यामुपासीत, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' तमेवं विद्वानमृत इह भवति' इत्यादिश्रुतीनां च निर्विषयत्वेन अप्रामाण्यापत्तेरिति ।

## १४. ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ

अस्य सूत्रस्य पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ । धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशंक्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते इतरस्यापि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः । कुतः, तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात् 'उभे उ हैवैष एते तरति' ( बृ. ४।४।२२ ) इत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात् । अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् । 'क्षीयन्ते चास्य कर्माणि' ( मु २।२।८ ) इति चाविशेषश्रुतेः । यत्रापि केवल एव पाप्मशब्दो दृश्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम् ज्ञानफलापेक्षया निकृष्टफलत्वात् । अस्ति च श्रुतौ पुण्येऽपि

पाप्मशब्दः 'नैनं सेतुमहोरात्रे तरतः' ( छां. ८।४।१ ) इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य सर्वे पाप्मानोऽतो निवर्तन्त इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात् । पातेत्विति तु शब्दोऽवधारणार्थः । एवं धर्माऽधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्वंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति इति यद् व्याख्यानं तदद्वैतमतविरुद्धम् । तथा हि तत्र 'पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ' इत्युक्तिरयुक्ता । अद्वैतमते 'न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः' इति बन्धस्य शशविषाणवदसत्त्वांगीकारात् न पुण्यमित्यघस्याप्यसत्त्वांगीकारात् असद्भूतबन्धस्य विनाशप्रसक्तेरेवाभावेन असद्भूतज्ञाननिमित्तं पापस्याश्लेषो विनाश इत्युक्तिरयुक्ता । अद्वैतमते ब्रह्मातिरिक्तस्य वेदादेः शास्त्रस्य मिथ्यात्वेन ( असत्त्वेन ) तत्त्वावेदकत्व ( विद्यमानार्थप्रतिपादकत्व ) रूपप्रामाण्याभावात् अर्थप्रतिपत्तिजनकत्वस्याप्यभावात् ।

२ 'धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाऽविरोध इत्याशंक्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते' इत्युक्तिरपि पूर्वोक्तरीत्या अयुक्तैव । पुण्यादीनां असत्त्वात्, शास्त्रीयत्वादित्यस्य शास्त्रजन्यज्ञानविषयत्वादित्यर्थकत्वेन अद्वैतमते शास्त्रस्यासत्त्वेन तस्य धर्मविषयकज्ञानजकत्वस्याभावात् । तुष्यत्विति न्यायेन ज्ञानजनकत्वाङ्गीकारेऽपि ब्रह्मातिरिक्तस्य पुण्यस्य वा ज्ञानस्य वा मिथ्यात्वेन ( असत्त्वेन ) असद्भूतपुण्यादिप्रतिपादकत्वे शास्त्रस्याप्रामाण्यापातात् । असद्भूतयोः पुण्यज्ञानयोरविरोध-

शंकाया एवाभावेनाऽविरोधशंकानिराकरणार्थं पूर्वोक्तरीत्या-पूर्वाधिकरणन्यायस्यायुक्तत्वेन " पूर्वाधिकरणन्यायातिदेशा - योगात् । एतेन 'इतरस्यापि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः, कुतः, तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्' इति सूत्रार्थवर्ण-नमप्ययुक्तम् । पापस्याभावेन तस्य विनाशादेरभावात् तदृष्टान्तेनाऽसतः पुण्यस्य विनाशादिर्न भवति, इति असङ्गतज्ञानस्याश्लेष-विनाशकारणत्वोक्तिरप्ययुक्ता, पुण्यस्य तत्फलस्य चासत्त्वेन तस्य स्वफलहेतुत्वस्याप्यभावेन तस्य ज्ञानफलप्रतिबन्धकत्वाप्रसरात् ।

एतेन 'उभे उ हैवैष एते तरति' ( बृ. ४।४।२२ ) इत्यादि श्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात्' इति पापकर्मदृष्टान्तेन पुण्यस्य नाशवत्त्वोक्तिरपि निरस्ता, पुण्यपापा-दीनां, अद्वैतमतानुसारेण असत्त्वेन, नाशाभावात् । "अकर्त्रा-त्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वादिति वाक्येन 'त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माऽहमस्मि नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासं नेदानीं नापि भविष्यत्काल इति ब्रह्मविदवगच्छति' इति पूर्वाधिकरणवाक्येन च यः आत्मा अकर्ता, (पुण्यकर्ता न, पापकर्ता न, ज्ञानकर्ता न, कस्यचिदपि कार्यस्याकर्ता) सोऽहमस्मि । नेतः पूर्वमपि कर्ता भोक्ता वा अहमासं नेदानीमपि न भविष्यत्काल इति ज्ञानेन पूर्वकृतकर्मणो नाशः, उत्तरत्र करिष्यमाण-पापादीनां असंबन्ध इत्युक्तिः, मे माता वंध्येति वाक्यवत् स्वव्या-हता, क्रियासामान्यशून्यस्य ( अकर्तुः ) ब्रह्मविदवगच्छति इति ब्रह्मविषयकज्ञानकर्तृत्वस्य अवगच्छतीति कर्तृत्वाभावावगमकर्तृत्वस्य चोक्तिः व्याहतैवेति ।

'क्षीयन्ते चास्य कर्माणि' ( मुं. २।२।८ ) इति श्रुति-रपि, अद्वैतमतानुसारेण अयुक्तैव । अकर्तुरात्मनः अस्य कर्माणि इति कर्मसंबन्धोक्तिः ( कर्मकर्तृत्वोक्तिः । ) कर्तृरहितकर्मणः असत्त्वेन क्षीयन्ते इति नाशोक्तिरप्ययुक्ता ।

## १५. ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ

इति सूत्रस्य, यदकर्तृब्रह्म तदेवाहमस्मि इति ज्ञानेन आरब्धानारब्धकार्ययोः पुण्यपापयोर्नाश उत अनारब्धकार्ययोः पुण्यपापयोरेव नाश इति संशये उभयोरपि कर्मणोर्नाश इति पूर्वपक्षे सति अनारब्धकार्ययोरेव नाशः न तु आरब्धकार्ययोः । साभिभुक्तफलयोः पुण्यपापयोः, 'तदवधेः, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति (छां. ६।१४।२) श्रुतौ, प्रारब्धकर्मक्षयावधेर्मोक्षस्य श्रवणात् इति यद् व्याख्यानं तत्पूर्वोक्तरीत्यैव निरस्तम् । अकर्तृब्रह्मस्वरूपस्य जीवस्य कर्मकर्तृत्वाभावात् कर्मफलभोक्तृत्वाभावात्, अकर्तृ ब्रह्माऽहमिति ज्ञानाभावाच्च, तस्य नाशकथनायोगात् ।

शंकराचार्यैरेव "उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुंचति । इति यच्छ्रूयते शास्त्रात्तन्निराक्रियतेऽधुना ॥ तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते । देहादीनामसत्यत्वाद्यथा स्वप्नः प्रबोधतः" इति ( अपरोक्षानुभूतौ ) ज्ञानानन्तरं प्रारब्धकर्मणोऽभावस्योक्तेः तस्य प्रतिबन्धकत्वकल्पनाऽयोगाच्च इति ।

## १६. ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ

इति सूत्रस्य, ब्रह्मज्ञाने पापवत् पुण्यस्य नाशोऽतिदिष्टः स किं सर्वपुण्यविषय इत्याशंक्य न सर्वपुण्यनाशः वैदिकाग्निहोत्रादि तत्कार्यायैव ज्ञानस्य यत्कार्यं तदेव अग्निहोत्रादेः कार्यं, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' ( बृ. ४।४।२२ ) इति श्रुतेरिति व्याख्यानं, पूर्वोक्तरीत्या जगत्सत्यत्ववादिनां द्वैतिनां मते, संभवदपि, 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधक' इति सर्वमिथ्यात्ववादिनां (असत्ववादिनां) अद्वैतिनां मते न संभवति । न ह्यसतः कार्यत्वं कारणत्वं

संभवति । तस्मान्नायं सूत्रार्थोऽद्वैतमते युक्त इति ।

## १७. ॐ अतोऽन्याऽपि ह्येकेषामुभयोः ॐ

अस्य सूत्रस्य अग्निहोत्रादेर्नित्यकर्मणोऽन्याऽपि या साधुकृत्याऽस्ति, सा सुहृदः फलं जनयति इति व्याख्यानं, सर्वासत्त्ववादिनां (अद्वैतिनां) प्रतिकूलमेव ।

## १८. ॐ यदेव विद्ययेति हि ॐ

अस्य सूत्रस्य, मोक्षप्रयोजनोद्देशेन कृताग्निहोत्रादिकर्म-दुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिं सम्पाद्य मोक्षहेतुब्रह्माधिगमकारणं सत् ब्रह्मविद्यया सह मोक्षरूपैककार्यकं भवति इत्युक्तौ, विद्या-रहितं विद्यासहितं चेति द्विविधं अग्निहोत्रादिकर्म, तत्र विद्यासहि, तस्यैव कर्मणो ज्ञानसाध्यमोक्षकार्यकारित्वं वा, केवलस्यापि वा इति संशये, विद्यासहितस्यैव कर्मणः ज्ञानेनैककार्यकारित्वं न तु केवलस्येति पूर्वपक्षे विद्यारहितस्याप्याग्निहोत्रादेः ज्ञानसाध्यमोक्षरूप-कार्यकारित्वं विद्यासहितस्याग्निहोत्रादेस्तु विशेषः (अतिशयः) इति यद् व्याख्यानं तद् वन्ध्यापुत्रः शशविषाणादिसहकार्येण गन्ध-र्वनगरं निर्माय जनानां सुखं उत्पादयतीति उन्मत्तवाक्यतुल्यमि-त्युपक्षेणीयमेवेति । अद्वैतमते अग्निहोत्रज्ञानादीनां सर्वेषां असत्त्वेन कार्यकारणभावादीनां अतिशयितकारणत्वस्य च असंभवात् ।

## १९ ॐ भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॐ

इति सूत्रस्य अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्या-त्क्षय उक्तः "इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छान्दो० ६-११-२) इति 'ब्रह्मैव सन् ब्रह्माऽप्येति' इति चैवमादिश्रुतिभ्यः इति यद् व्याख्यानं तत्तु श्रुत्यनुकूलत्वात् सूत्रानु सारित्वात् युक्तमेव, परंतु अद्वैतिनां विरुद्धमेव । 'न पुण्यं न पाप'

मिति पुण्यादेरद्वैतिमते नास्ति नासीन्न भविष्यतीति त्रैकालिक-निषेधप्रतियोगित्वापरपर्यायमिथ्यात्वोक्त्या शशविषाणवदसत्वात् २ 'न निरोधो न चोत्पत्ति' रिति कारिकया, अद्वैतमते कार्यवस्तुन-एवाभावाऽवगमेन, कार्यारम्भयोग्यत्वाभावेन, ३ ब्रह्मणः अज्ञेय-त्वेन प्रमाणप्रवृत्तिप्रयोजकधर्माभावेन च ब्रह्मणो विद्याया एवा-सम्भवेन तस्यां विद्यायां नाशजनकत्वसामर्थ्यासम्भवेन 'न निरोध इति कारिकया' पुण्यपापादीनां नाशानङ्गीकारेण च अनारब्धकार्ययोः पुण्यपापयोः विद्यासामर्थ्यात्क्षय उक्त इत्युक्तिः अद्वैतमतविरुद्धैव ।

तथा इतरेत्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वेत्यु-क्तिरपि, अद्वैतमतविरुद्धैव । तथा हि—पूर्वोक्तरीत्या अद्वैतमते पुण्य-पापयोरभावेन, तयोः कार्यारम्भसामर्थ्याभावेन, कार्यस्य चासत्त्वेन, उपभोक्तुरभावेन, उपभोगाभावेन तस्य क्षपणरूपनाशासम्भवात् । 'ब्रह्म सम्पद्यते' इत्यस्य ब्रह्म प्राप्नोतीत्यर्थकत्वेन, प्राप्यप्रापक-भावेन, ब्रह्मजीवयोर्भेदाङ्गीकारप्राप्त्या ब्रह्म सम्पद्यत, इत्युक्तिरपि, जीवब्रह्मणोरभेदाङ्गीकर्त्रद्वैतमतविरुद्धैव ।

प्रारब्धकार्यपुण्यपापाभ्यां यावत्कालपर्यन्तं मोचनाभावः तावत्काल एव ब्रह्मप्राप्तेरवकाशः प्रारब्धकार्यपुण्यपापनाशानन्तरं, ब्रह्म प्राप्नोतीत्यर्थिका 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संम्पत्स्ये' (छां० ६-१४-२) इति श्रुतिरपि पूर्वोक्तरीत्या अद्वैतमतविरोधिनी, द्वैतिनां अनुकलैव । अस्यां श्रुतौ, मोक्षे ब्रह्म-प्राप्त्युक्त्या, जीवब्रह्मणो भेदसिद्धेः, पुण्यपापकर्मणोःजीवे तत्संब-न्धस्य संबन्धनाशस्य मोक्षप्रतिबन्धकतायाश्चकथनेन सत्यत्वसिद्धेः।

ब्रह्मैव सन्ब्रह्माप्येति इति श्रुतिरपि, ब्रह्माप्येतीति परब्रह्म-प्राप्त्युक्त्या, जीवेश्वरभेदबोधकत्वेन, अद्वैतिनां प्रतिकूला । द्वैतिनां अनुकूला च इति ।

।। शांकरभाष्यचतुर्थाध्यायस्य प्रथमपादविचारः ।।

अथ चतुर्थाध्याय द्वितीयपादीय शांकरभाष्य–विचारः ।

अयं पादः'अथापरासु विद्यासु फलप्राप्तये देवयानं पंथानमवतारयिष्यन् प्रथमं तावद्यथाशास्त्रम् उत्क्रांतिक्रममन्वाचष्टे' इति शंकराचार्यैरवतारितः । पूर्वपादांतिमाधिकरणं विदुषो निर्गुण ब्रह्मसंपत्तिपरतया परविद्यापरत्वेन व्याख्यातम् । तदेतदसंगतम् । तन्मते हि परविद्याफलं निर्गुणब्रह्मसंपत्तिर्मुख्या पश्चात्तनी । तद्द्वारभूतमपरविद्याफलं देवयानं त्वमुख्यं पूर्वतनम्, अतः प्राप्तिक्रमानुरोधेनादौ अमुख्यं निरुप्य तदनंतरं मुख्यनिरुपणं संगतम् । तद्विहाय मुख्यमेव प्रथमं निरुप्यामुख्यं पश्चान्निरुप्यते इति व्याख्यानं कथं नासंगतम् ।

देवयानस्यापरविद्याफलत्वोक्तिः प्रमाणविरुद्धा च । तथा हि । गीतायां 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः, इति, 'एकया यात्यनावृत्तिम् इति च देहादुत्क्रम्य देवमार्गेण गतानां विदुषामनावृत्तिहेतु परब्रह्मप्राप्तिरेव फलमुक्तं । एवं भागवतेऽपि 'एवं परेत्य भगवंतमनुप्रविष्ट । ये योगिनो जितमरुन्मनसो विरागाः ।। तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयांत्यगताभिमानाः ।।' इत्युत्क्रम्य देवयानेन हिरण्यगर्भमनुप्रविष्टानां तेनैव साकं प्रधान परब्रह्मोपगरूपपरविद्या फलमेवोक्तम् । 'ते ब्रह्मलोके तु परांतकाले परामृतात् परिमुच्यंति सर्वे' इति श्रुतिरपीममेवार्थं श्रावयति ।।

(अधिकरणं १)

## १. ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ

इति सूत्रस्य 'वाङ्मनसि संपद्यत' इति श्रुतौ वाग्वृत्तेरेव मनसि लयो न तु वाचः । दर्शनात् । आगमो हि दृष्टानुसारेणार्थं बोधयति । अतो वाग्वृत्तेरेव मनसि लयो लक्षणया श्रुत्या बोध्यते वाङ्-

मनसि संपद्यत इति शब्दस्तु वृत्तिवृत्तिमतोरभेदोपचारादव कल्पते' इति यद् व्याख्यानं तदद्वैतिनां प्रतिकूलम्। वृत्तिवृत्तिमतोर्भेद एव, अभेदस्त्वौपचारिक इति कथनेन भेदपरत्वात्। श्रुतिसूत्राननुगुणं च। यदि वृत्तेरेव लयो न तु वृत्तिमत्या वाच इति सूत्राभिप्रायः स्यात्तर्हि 'वाग्वृत्तिर्मनसि' इत्येव सूत्रे शब्दविन्यासो भवेत्। न हि श्रौतं वाक्पदं वृत्तौ लाक्षणिकमिति निर्णयाय प्रवृत्ते सूत्रे पुनर्वाच एव मनसि लय इति वाक्पदप्रयोगेण प्रतिज्ञा युक्ता। शब्दाच्चेति सौत्रो हेतुरप्ययुक्त आपद्यते। न हि वाग्वृत्तेर्लयं 'वाङ् मनसि संपद्यत' इति श्रुतिर्बोधयति, किंतु वाच एव। वृत्तिवृत्तिमतोरभेदोपचारेण वाक्शब्दः प्रयुक्त इत्युक्तं तूत्सूत्रम्।

यदत्रोक्तं, आगमो हि दृष्टानुसारतोऽर्थं बोधयति' इति, तदनु मन्यामहे। एवं हि ऐंद्रियकार्थविषये आगमापेक्षया प्रत्यक्षस्यैव प्राबल्यमिति न्यायः शंकराचार्यैरंगीकृत इत्यवगम्यते। तथा च प्रबल प्रत्यक्षसिद्ध जगत्सत्यत्वस्य बाधो न दुर्बलैरागमैः शक्य इति तन्न्यायेनैव सिध्यतीति सुधीभिर्विभावनीयम्।

## २. ॐ अत एव च सर्वान्यनु ॐ

इति सूत्रस्य, अत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् वृत्तिद्वारेणैव लय इति व्याख्यानमपि पूर्ववदेव वृत्तिवृत्तिमतोर्भेदसाधकत्वेन अद्वैतिनां प्रतिकूलमेव।

(अधिकरणं २)

## ३. ॐ तन्मनः प्राण उत्तरात् ॐ

इति सूत्रस्य 'मनसो न प्राणे स्वरूपाप्ययः किंतु वृत्त्यप्यय एवेति। व्याख्यानमपि पूर्ववदेवाद्वैतिनां प्रतिकूलमेव।

(अधिकरणं ३)

## ४. ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ

इति सूत्रस्य पंचवृत्तेः प्राणस्य देहेंद्रियपंजराध्यक्षे जीवे लयः इति ।

## ५. ॐ भूतेषु तच्छ्रुतेः ॐ

इति सूत्रस्य, प्राणसंपृक्तस्याध्यक्षस्यैवैतत्तेजःसहचरितेषु भूतेष्ववस्थानं इति ।

## ६. ॐ नैकस्मिन् दर्शयतो हि ॐ

इति सूत्रस्य तेजःशब्दश्च सर्वभूतोपलक्षकः इति च, यद्व्याख्यानम् तत् भूतानां परस्परं अध्यक्षपदोक्तजीवाच्च भेदसाधकमेवेति अद्वैतिनां प्रतिकूलमेव ।

(अधिकरणं ४)

## ७.ॐ समाना चासृत्युपक्रमादमृतत्वं चानुपोष्यॐ

इति सूत्रस्य सेयं भूताश्रयविशिष्टोत्क्रांतिः पुनर्भवहेतुत्वाद-विदुष एवेति प्राप्ते, आकार्यब्रह्मप्राप्ते विद्वदविदुषोः समानैव । अदग्ध्वाऽत्यंतमविद्यादीनपरविद्यासामर्थ्यादापेक्षिकमेवामृतत्वं प्रेप्सते' इति व्याख्यानं प्राप्यप्राप्तृभावोक्त्या विद्वदविदुषोः कार्य-ब्रह्मणा भेदस्य, विद्वदविदुषोः परस्परं भेदस्य च साधकत्वेनाद्वैतिनां प्रतिकूलमेव ।

यत्तु पुनरत्र दहरोपासनाया सगुणविद्यात्वेनापरत्वं तत्प्राप्यस्या-

मृतत्वस्यापेक्षिकत्वमुक्तं तदप्रामाणिकत्वादुपेक्ष्यं । तथा हि । यानि नामानि गौणानि विख्यातानि महात्मनः। ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ' इति प्रतिज्ञाय सगुणविष्णुमाहात्म्यप्रतिपादनाय प्रवृत्तानां सहस्रनाम्नां परविद्यात्वं स्वीकृत्य सगुणोपासनस्यैव परममोक्ष-हेतुत्वं वर्णितं, तद्व्याख्यानावसरे शंकराचार्यैः । उदाहरणतया केषां-चिन्नाम्नां तद्व्याख्यानं प्रदर्श्यते -

मुकुंदः – मुक्तिं ददातीति मुकुंदः

शुभेक्षणः – यस्येक्षणं सर्वशुभं, शुभकरं, मुमुक्षूणां मोक्षदं, भोगा-र्थिनां भोगदं......अविद्यानिवर्तकम् ।

कथितः – देवादिभिरयमेव परत्वेन कथितः । सर्वैः वेदैः कथित इति वा । 'सर्वे वेदा यत्पदमामनंति' । 'वेदैश्च सर्वैरहमेववेद्यः' । वेदे रामायणे चैव पुराणे भारते तथा । आदावंते च सर्वत्र विष्णुः सर्वत्र गीयते । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' । 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति ।

वरारोहः – न स पुनरावर्तते । यद्गत्वा न निवर्तंते तद्धाम परमं मम ।

महेज्यः – सर्वासु देवतासु यष्टव्यासु प्रकर्षेणायमेव यष्टव्यो-मोक्षफलदातृत्वात् ।

मुक्तानां परमागतिः – अविद्या-रागद्वेषादिदोषमुक्तानां प्रकृष्टा गंतव्या देवता। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते इति भगवद्वचनात् ।

एवमादीनां तत्तद्विष्णुनाम्नां व्याख्यानेन सगुणस्य विष्णोरेव मोक्षप्रदत्वं, अविद्यानिवर्तकत्वं, सर्वोत्तमत्वेन सर्वैर्देवैः सर्वैर्वेदैश्च कथितत्वं, अपुनरावृत्तिफलकप्राप्तिकर्मत्वं, गंतव्यदेवताप्रकृष्टत्वं वर्णितम्। इह सूत्रे पुनःसगुणविद्याया अपरविद्यात्वमिति तत्प्राप्तेरापेक्षिकामुख्य-मोक्षत्वमिति च भाषणे, न केवलं स्वोदाहृतसकलप्रमाणविरोधः किं नाम स्ववचनविरोधोऽपि।

यच्चोक्तं अदग्ध्वाऽत्यंतमविद्यादीनीति तदप्यसारम्। 'अविद्या सहकार्येण नासीदस्ति भविष्यति इति कालत्रयेऽपि सत्ताविधुराणां अविद्यादीनां दाहलक्षणनाशस्यैवानुपपत्तेः। ज्ञानमात्रनिवर्त्या या अविद्याया ज्ञाने जातेऽप्यनिवृत्तौ तस्याः पुनर्निवृत्तेरेवायोगेनानुवृत्तिरेव नित्यदा संसारस्येत्यापत्तेः। न ह्यविद्या भागवती येन तन्निवृत्तौ आत्यंतिकत्व सावशेषत्वलक्षणविभागः कल्प्येत।

(अधिकरणं ५)

## ८. ॐ तदाऽपीतेः संसारव्यपदेशात् ॐ

अस्य सूत्रस्य 'तेजःपरस्यां देवतायामित्यत्र श्रूयमाणा सत्संपत्तिर्ना-त्यंतिकी। सुषुप्तिप्रलयवद् बीजभावावशेषैवैषा। मिथ्याज्ञाननिमितो बंधो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति' इति यद्व्याख्यानं तदपि पूर्वाधिकरणव्याख्यानवदेव ज्ञानिप्राप्यमोक्षस्यामुख्यत्वप्रतिपादनपरत्वेन न केवलं पूर्वोक्तदूषणेन किंतु गतार्थतादोषेणापि दुष्टम्। अद्वैतिनां प्रतिकूलं च। सत्संपत्तिरात्यंतिकी भवतु माभूद्वा। सर्वथाऽपि सा संपत्तृसंपद्यमानयोर्भेदमेवावलंबत इति तावदविवादम्। तथा हि शांकरभाष्यं "भेदनिर्देशात्सता सौम्य तदा संपन्नो भवति (छां. ६-८-१) इत्येवं जातीयकः कर्तृकर्मादिभेदनिर्देशः जीवादधिकं (अन्यत्) ब्रह्म दर्शयति (सू. २-१-२२) इति। सत्संपत्तेरात्यंतिकत्वनिषेधोऽपि

स्वव्याहतः। परंज्योतिरुपसंपद्य (छां. ८-१२-३) इत्यत्रोक्तपरदेवता-संपत्तेरात्यंतिकत्वमंगीकृत्य, कथं तर्हि 'जक्षन् क्रीडन्' इति तत्रैवोक्त जक्षणक्रीडनादिकं परममुक्तावुपपद्यतामित्याशंक्य यथाप्राप्तस्य संसारिकस्य जक्षणादिकस्य मोक्षप्रशंसार्थं भूतपूर्वगत्याऽनुवाद इति परिहारस्तत्राभिहितः। तेनोत्क्रांतिकालीना सत्संपत्तिरात्यंतिक्येवे-त्यंगीकारः शंकराचार्याणां विज्ञायते। अन्यथा बीजभावावशेषसंसार-दशायां जक्षणादिभोगेऽनुपपत्तेरेवाप्रसंगात् तन्निरासप्रयासस्तैः कृतोऽनर्थक एव भवेत्।

यच्चात्रोक्तं 'मिथ्याज्ञाननिमित्तो बंधो न सम्यग्ज्ञानादृते विध्वंसितुमर्हती' ति न तद्युक्तं। एवं वदतो हि सगुणस्य ब्रह्मणो ज्ञानं मिथ्याज्ञानं निर्गुणस्य तु सम्यग्ज्ञानं इत्यभिप्रेतं तदुभयमप्यसाधु। गुणज्ञानस्य मिथ्याज्ञानत्वे तत्प्रतिपादकश्रुतीनामप्रामाण्यापत्तेः। न च तथाऽस्त्विति वाच्यं अविशेषान्निर्गुणश्रुतीनामपि तथात्वापातात्। 'ज्ञानं च तस्मिन्परात्मभावनिवृत्तिरेवे' ति भाष्ये निर्गुणब्रह्मज्ञानं नैव जायेत इत्यंगीकृतत्वेन तज्ज्ञानस्य सम्यग्ज्ञानत्वोक्तेः सुतरामनुपपत्तेश्च।

यदप्युक्तं बंधो न विध्वंसितुमर्हतीति। तदपि तुच्छं। बंधस्य सत्वे खलु तस्य विध्वंसनार्हता विचारणीया भवति। न विध्वंसनार्हताऽसतः शशविषाणस्य विचार्यते। अंगीकृतं च बंधस्य द्वैतस्य शशविषाणवदेवा सत्वं शंकराचार्यैः 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः' इति गौडपादकारिका व्याख्यानावसरे, 'द्वैतस्यासत्त्वात्। सतो ह्युत्पत्तिः प्रलयो वा नासतः शशविषाणादेः' इति।

## ९. ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ

इति सूत्रस्य, 'जीवस्याश्रयभूतं तेजः स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति इति।

## १०. ॐ नोपमर्दनातः ॐ

इति सूत्रस्य 'अतएव न स्थूलस्य शरीरस्योपमर्देनोपमृद्यत इति ।

## ११. ॐ अस्यैवचोपपत्तेरेष ऊष्मा ॐ

इति सूत्रस्य, अस्यैव च सूक्ष्मस्य शरीरस्यैष ऊष्मा' इति च यद् व्याख्यानं तत्स्थूलसूक्ष्मशरीरयोस्तदाश्रितस्य जीवस्य च सोपपत्तिकं भेदसाधकमेवेत्यद्वैतिनां प्रतिकूलमेव ।

(अधिकरणम् ६)

## १२. ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ

एतत्सूत्रं 'शारीरादात्मन एव उत्क्रांतिप्रतिषेधः प्राणानां न शरीरात् । उच्चिक्रमिषोर्जीवात्प्राणा नापक्रामंति सहैव तेन भवंति' इति व्याख्यातं । तच्च उत्क्रांत्यवधेः शरीरस्य, उच्चिक्रमिषोर्जीवस्य तेन सहैव भवतां प्राणानां च भेदसाधकमेव ।

## १३. ॐ स्पष्टो ह्येकेषाम् ॐ

एतस्य सूत्रस्य "ब्रह्मैव सन्ब्रह्माप्येति" 'अत्र ब्रह्म समश्नुते' इति चैवंजातीयकाः श्रुतयः परब्रह्मविदो मुख्यामृतत्वे गत्युत्क्रांत्योरभावं सूचयंतीति यद् व्याख्यानं तदयुक्तं । अप्येतीत्यस्य प्राप्नोतीत्येव मुख्योऽर्थः इति शंकराचार्यैः (ब्र. सू. भा. ४-४-६) स्वीकृतम् । अतः इयं श्रुतिः प्राप्तिलक्षणगतिसद्भावमेव प्रतिपादयति । एवं 'ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे, अत्र ब्रम्ह समश्नुत इत्येवमादौ (ब्र. सू. भा. १-३-२) इति समश्नुत इत्यस्यापि उपसर्पणरूपगत्यर्थत्वमेव

व्याख्यातं। तस्मादेषाऽपि श्रुतिर्गतिप्रतिपादनपरैव। अत एवं जातीयकाः श्रुतयो गत्यभावं सूचयंतीति यदत्र भाषितं तदप्रामाणिकं स्वव्याहतं च। गतिश्च भेदनियतेति "क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते परात्परं पुरुषमुपैति दिव्यं" इति गंतृगंतव्यत्वेन (ब्र. सू. २-२-२७) इति शंकराचार्यैर्निरूपितं। अत इदमपि सूत्रव्याख्यानं तदुक्तरीत्यैवाद्वैतिनां प्रतिकूलमेव।

## १४. ॐ स्मर्यते च ॐ

अस्य सूत्रस्य, स्मर्यते च महाभारते गत्युत्क्रांत्योरभावः-- 'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः देवा अपि मार्गे मुह्यंत्यपदस्य पदैषिणः इति। नह्यशरीरं गच्छंतं सर्वभूतानि द्रष्टुं शक्नुयुः। तस्मादभावः परब्रह्मविदो गत्युत्क्रांत्योः' इति यद् व्याख्यानं तदतितुच्छं। स्मृतौ गत्यभावाप्रतिपादनात्। प्रत्युत 'मार्गे' इत्युक्त्या तेन मार्गेण गतेरेव स्पष्टं निरूपणात्। न हि मार्गे मुह्यंतीत्यस्य मार्गस्य गतेश्चाभाव इत्यर्थं कोऽपि विवेकी वक्तुमर्हति। नापि 'अशरीरं गच्छंतं' इति स्वयं गतिं वर्णयन्नेव पुनर्गत्यभावमनुन्मत्तो वर्णयितुमुत्सहते। न वा कोऽपि प्रेक्षावान् 'अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरं। यः प्रयाति त्यजन्देहं स याति परमां गतिं' इति गीतोक्तां ज्ञानिनो देहादुत्क्रांत्यनंतरां 'याती'त्युक्तां गतिं 'ततो मां तत्वतो ज्ञात्वा विशते तदनंतरं' इति तत्वज्ञानोत्तरकालीनां प्रवेशरूपां गतिं च सुस्पष्टतया तत्र तत्र प्रतिपादितां अपलपितुं प्रवर्तते।

किंचात्रव्याख्याने सर्वभूतात्मभूतस्येति, सर्वभूतेति भूतानां सर्वत्वोक्त्या, भूतस्येति भवनोक्त्या, भूतानीति बहुवचनेन, पश्यत इति द्रष्टृदृश्यभाववचनेन सम्यगिति दर्शनेऽसम्यक्त्वव्यावृत्त्युक्त्या, मार्गे इति गतिकथनेन सप्तम्या मार्गस्य ज्ञान्याधारत्वलक्षणभेदकधर्मोक्त्या इत्येवं बहुधा भेदस्यैव वर्णितत्वेन इदमपि व्याख्यानमद्वैतिनां प्रतिकूलं, द्वैतिनामेवानुकूलं च।

(अधिकरणं ७)

# १५. ॐ तानिपरे तथा ह्याह ॐ

अस्य सूत्रस्य 'तानि पुनः प्राण शब्दोदितानि इंद्रियाणि भूतानि च परब्रह्मविदस्तत्रेन परस्मिन्नात्मनि प्रलीयंते। कस्मात्। तथा ह्याहश्रुतिः' एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तंगच्छंतीति यद् व्याख्यानं तदपि पूर्ववदेव तस्मिन्नेव परात्मनीति सप्तम्याऽधिकरणाधिकर्तव्यभावनिर्देशेन परिद्रष्टुरिति द्रष्टृदृश्यभावोक्त्या, परीत्युक्त्या दर्शने विशेषसूचनपूर्वकं सखंडत्वकथनेन कलानामस्तमयरूपध्वं सोक्त्या त्रैकालिकनिषेधलक्षणबाधाभाव - प्रतिपादनेन च भेदसाधकमेव।

यत्पुनरत्रोक्तं 'गताः कलाः पंचदशप्रतिष्ठाः' इति श्रुतिर्व्यवहारापेक्षा न विद्वत्प्रतिपत्त्यपेक्षेत्यादि तत्केवलं कल्पनामूलतया श्रुतौ तथाभाव प्रतिपादकपदाभावेनोपेक्षणीयमेव।

(अधिकरणं ८)

# १६. ॐ अविभागो वचनात् ॐ

इदं सूत्रं, 'विदुषःकलाप्रलयः प्रलयसामान्यात्सावशेष इति प्राप्ते, अविभागापत्तिरेव भिद्येते तासां नामरुपे, पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इति वचनादिति व्याख्यातम्। अत्रापि सत्यत्वसापेक्षभेदनरुपविशरणोक्त्या नामरूपात्मकस्य प्रपंचस्य सत्यत्वं, पुरुष इत्येवं प्रोच्यते इति ज्ञानिप्राप्यस्य ब्रह्मणोऽवाच्यत्वापक्षेपपूर्वकं वाच्यत्वं, प्रेत्युपसर्गेण वाच्यत्वे प्रकर्षकथनेन परममुख्यवृत्या वाच्यत्वं तत एव जहदजहल्लक्षणया बोध्याभिमतस्य निर्विशेषत्वस्य च निरासः, 'स एषोऽकलोऽमृतो भवति' इति भेदसापेक्षाभवनरूपा

प्राप्तिस्तत एव मुक्तब्रह्मणोर्भेदश्च प्रतिपादित इति परोदाहृतश्रुत्या तस्याः परव्याख्यानानुसारेण च इदमपि सूत्रं भेदसाधकमेव ।

(अधिकरणं ९)

## १७. ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ

अस्य सूत्रस्य 'इदं सूत्रमपरविद्याविषयकविचारपरम्। तत्र पूर्वोक्तोत्क्रांतिर्विद्वदविदुषोः समानैवेति प्राप्ते विद्वान्मूर्धन्ययैव नाड्या निष्क्रामतीतराभिरितरे' इति व्याख्यानं मूर्धन्यतदितरनाडीनां विद्वदविदुषां च भेदपरमेव। सौत्रविद्याशब्दोऽपरविद्यापर इति व्याख्यानं तु निर्मूलत्वादनादरणीयम् ।

(अधिकरणं १०)

## १८. ॐ रश्म्यनुसारी ॐ

इति सूत्रस्याहनिरात्रौ वा म्रियमाणस्याविशेषेणैव रश्म्यनुसारित्वं इति ।

## १९. ॐ निशिनेतिचेन्न यावद्देहभावित्वाद्दर्शयति च ॐ

इति सूत्रस्य यावद्देहभावी हि शिराकिरणसंपर्क इति च यद्व्यानं तत्र मरणकालनियमनिरपेक्षेणैव विदुषउत्क्रांतस्यालोकप्राप्तिरिति यदभिप्रेतं तदुपपन्नमेव। अपरविद्याफलमेतदिति तु पूर्ववन्निर्मूलम् ।

## २०. ॐ अतश्चायनेऽपि हि दक्षिणे ॐ

इति सूत्रं, दक्षिणायनेऽपि म्रियमाणो विद्वान्प्राप्नोत्येव विद्याफल-मिति व्याख्याय, कथं तर्हि धूमोरात्रिस्तथाकृष्णः षण्मासा दक्षिणायनं ' तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ' इति दक्षिणायने मृतस्य स्मृतौ पुनरावृत्तिवचनानीति आशंक्य, तत्परिहारकतया

## २१. ॐ योगिनः प्रति स्मर्येते स्मार्त्ये चैते ॐ

इति सूत्रस्य योगिनः स्मार्तीमुपासनां प्रत्येवायं कालविनियोगः स्मर्यते । न तु पुनरस्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः इति यद्व्याख्यानं तत् प्रमाणेन विना श्रुतिस्मृत्योर्भिन्नार्थत्व कथनपरमित्यनादरणीयमेव । 'अग्निर्ज्योतिरिति' धूमो रात्रिरिति च श्लोकयोर्गीताया अहरादिपदेः नैव कालविशेषो विवक्षितः । तथा सति धूमः अग्निः ज्योतिरितिपदानामसंगत्यापत्तेः । किं नाम देवता एव । अतो गीताया अनभिप्रेतमेवार्थं परिकल्प्य तत्र प्राप्तशंकायाः परिहार-कत्वेन यत् सूत्रव्याख्यानं सा छलोक्तिरेव ।

एतैः पदैर्देवतानां ग्रहणे श्रुतिस्मृत्योर्न कश्चिद्विरोध इति तेषामेव यद् व्याख्यानांतरं तदभ्युगम्यते । परं देवताग्रहणेऽपि श्रौतस्मार्तोपास-नयोरर्थतः फलतश्चाविरोधो नैव तद्रीत्या संपादितो भवतीति-त्वन्यदेतत् ।

## ब्रम्हसूत्रशांकरभाष्यस्य चतुर्थाध्याय तृतीयपादपरामर्शः ।

(अधिकरणं १)

## १. ॐ अर्चिरादिना तत्प्रथितेः ॐ

इति सूत्रस्य, ब्रह्मप्राप्तिहेतुर्देवयानमार्गोऽर्चिरादिलक्षण एक-

एवेति यद्व्याख्यानं गम्यगंतृगतिमार्गादिकथनद्वारा भेदप्रतिपादकमेवेति अद्वैतिनां प्रतिकूलमेव ।

(अधिकरणं २)

## २. ॐ वायुशब्दादविशेषविशेषाभ्यां ॐ

इति सूत्रस्य अर्चिरादौ वर्त्मनि वायुः संवत्सरादित्ययोरंतराले निवेशयितव्य इति व्याख्यानं पूर्ववदेवाद्वैतिनां प्रतिकूलमेव ।

(अधिकरणं ३)

## ३. तडितोऽधि वरुणः संबंधात् ॐ

इति सूत्रस्य विद्युत्–उपरिष्टाद्वरुणलोक इति व्याख्यानं लोकयोरुर्ध्वाधरीभावव्यवस्थापनेनसत्यत्वं भिन्नत्वमेव च साधयतीति - प्रतिकूलमेवाद्वैतिनाम् ।

(अधिकरणं ४)

## ४. आतिवाहिकस्तल्लिगात् ॐ

अत्र सूत्रव्याख्याने अर्चिरादयो न मार्गचिन्हानि न वा भोगभूमयः किं तु नेतारो गंतृणामिति साधितम् ।

## ५. ॐ उभयव्यामोहात्तत्सिद्धेः ॐ

इति सूत्रस्य व्याख्याने अर्चिरादिमार्गगानामस्वतंत्रत्वादर्चिरादीनामप्यचेतनत्वेनास्वातंत्र्यात्तदभिमानिनो देवताविशेषाश्चेतना - एवातियात्रायां नियुक्ता इति साधितम् ।

## ६. ॐ वैद्युतेनैवततस्तच्छ्रुतेः ॐ

एतत्सूत्रव्याख्याने विद्युदनंतरममानव पुरुषःआब्रह्मलोकं गमयिता, वरुणादयस्त्वनुग्राहका एवेति साधितम ।

तथा च सूत्रत्रयात्मकमिदमधिकरणं मार्गगानां चेतनानां संपिंडितकरण ग्रामत्वेनास्वातंत्र्यं तत एव भोगाभाव इति, लोकनामचेतनत्वेनास्वातंत्र्यमिति च प्रतिपादनद्वारा देवताविशेषा वाऽमानवपुरुषो वा एव आतिवाहिक इति समर्थयतीति व्याख्यातं । तदेतच्चेतनाचेतनानां चेतनानामपि चान्योन्यं भेदप्रतिपादकमेवेत्यद्वैतिनां प्रतिकूलमेव । अप्रस्तुता अप्रामाणिकाश्च विषयास्त्वत्रोक्ता उपेक्षणीयतामेवार्हंति । इदं पुनरवधेयं । अद्वैतिनो हि ब्रह्माभिन्नो जीवो विभुः अणुभूतबुद्धिरूपपरिच्छिन्नोपाधिना परिच्छिन्न इव भूत्वा बुद्धिगमनागमनादिना स्वयंगत इवागत इव प्रतीयते, वस्तुतो बुद्धेरेवोपाधिभूताया गमनागमने न जीवस्येति कथयंति । अतस्तन्मते बुद्धिवदचेतनानां लोकानामेव गमयितृत्वं युक्तं न तु मार्गस्थानां वा लोकाभिमानिमानवामानव पुरुषाणां चेतनानां । अत एवं व्याख्यानमद्वैतिनां स्वव्याघातात् प्रतिकूलमेव । अत्र विस्तरउत्क्रांतिगत्यधिकरणविचारे द्रष्टव्यः ।

(अधिकरण ५)

## ७ ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ

एतस्मिन्नाधिकरणे भागद्वयं परिकल्प्य आद्यानि पंचसूत्राणि बादरिमतावष्टंभेन, कार्यस्य ब्रह्मणो देवयानपथगम्यत्वं समर्थयंति, परं जैमिनिर्मुख्यत्वादित्यारभ्यावशिष्टानि जैमिनिमतानुसारेण परस्य ब्रह्मणो गंतव्यतां गमयंतीति, तत्र कार्यं ब्रह्म गम्यमिति प्रतिपादनपरः पूर्वभागोक्तः सिद्धांतः, मुख्यं ब्रह्म गम्यमिति समर्थनपर उत्तरभागोक्तस्तु पूर्वपक्षः सूत्रकारैः प्रज्ञाविकासनाय केवलमुपदर्शित इति व्याख्यातं । तदत्यंतमयुक्तम् । तथा हि । औपाधिकस्य कार्यब्रह्मणो गंतव्य-

त्वमुपपद्यते प्रदेशवत्वात् । न तु परस्मिन्ब्रह्मणि गंतृत्वं गंतव्यत्वं गतिर्वाऽवकल्पते सर्वगतत्वात् गंतृणां प्रत्यगात्मत्वाश्चेति यदुक्तं तदनुपपन्नम् । तन्मते परब्रह्मणो निर्विशेषत्वेन सर्वगतत्व प्रत्यगात्मयोरसंभवात् । परमेव ब्रह्मोपाधिसंबंधेन कार्यब्रह्मतामापद्यत इति च हेयं। असंगस्य तस्योपाधिसंबंधायोगात् । अस्तु वा संबंधः । स किमेकदेशस्य किं वा समस्तस्य । नाद्यः । तस्याखंडस्यैकदेशाभावात् । न द्वितीयः । गंतव्यतोपयुक्तप्रदेशवत्त्वानुपादकत्वात् । अत औपाधिकस्य कार्यब्रह्मण एवानुपपत्तौ कुत एव तस्य गंतव्यत्वम् ।

## ८ ॐ विशेषितत्वाच्च ॐ

अस्य सूत्रस्य 'ब्रह्मलोकान्गमयति, ते तेषु ब्रह्मलोकेषु पराःपरावतो वसंति' इति श्रुत्यंतरे बहुवचनेन विशेषणं न परस्मिन्ब्रह्मण्यवकल्पते । लोकश्रुतिरपि भोगभूमावाजसी । गौणी तु ब्रह्मणि । अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन्ब्रह्मण्यनांजसः स्यात् ; तस्मात्कार्यविषयमेवेदं नयनं इति यद् व्याख्यानं तदयुक्तम् । परस्मिन् ब्रह्मणि न बहुवचनेन विशेषणं अवकल्पते इत्यस्य कोऽर्थः । अवाच्ये तस्मिन्वचनमेव नोपपद्यते इति । उत एकस्मिंस्तस्मिन्नेकवचनोपपत्तावपि बहुत्वाभावाद् बहुवचनं न युज्यत इति । नाद्यः । परस्मिन् ब्रह्मणीत्येवं वचनेन तत् स्वयं निर्दिश्य पुनस्तस्यावाच्यत्वकथने व्याघातात् । उक्तं च स्याद्वादिमत निरासावसरे शंकराचार्यैः न चैषां पदार्थानावक्तव्यत्वं संभवति । अवक्तव्याश्चेन्नोच्येरन् । उच्यंते चावक्तव्याश्चेति विप्रतिषिद्धमिति । न द्वितीयः । निर्गुणे तस्मिन्नेकत्वसंख्याया अभावेन एकवचनस्याप्यनुपपत्तेः । अपि च श्रुतौ 'ब्रह्मलोकान्' इति बहुवचनेन विशेषणान्नात्रोक्तं परं ब्रह्म इति वदतः कोऽभिप्रायः । विमतं श्रुत्युक्तं ब्रह्म न परं भवितुमर्हति बहुवचनेन विशेषणात् इति युक्तिसूचनमिति चेन्न । श्रुतौ लोकानामेव बहुत्वेन विशेषणेन ब्रह्मणस्तदभावेनासिद्धेः। नापि बहुलोकासंबंधित्वं हेतुः । परब्रह्मणः सर्वगतत्वांगीकारेण तस्य

बहुलोकसंबंधित्वावश्यंभावेन अप्रयोजकत्वात् । 'त्रिपादस्यामृतं-दिवि' इति परब्रह्मलोकानां बहुत्वस्य प्रमितत्वेन बाधापत्तेश्च ।

यच्चात्रोक्तं लोकश्रुतिर्भोगभूमावांजसी, गौणी तु ब्रह्मणीति तदप्यसमंजसम् । ब्रह्मशब्दस्यार्थः परं ब्रह्म वा कार्यं वेति विचारे क्रियमाणे लोकशब्दार्थविमर्शस्यासंगतत्वात् । नापि लोकशब्दो-ब्रह्मणि गौण इति युक्तं । आत्मानमेवलोकमुपासीतेत्यादौ लोक-शब्दस्य ब्रह्मणिमुख्यवृत्तेरेवांगीकारात् । निर्गुणे तस्मिन्गौण्यावृत्ते-रपि असंभवाच्च ।

अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन् ब्रह्मण्यनांजसः स्यादिति च स्वव्याहतं । स तत्र पर्येति इति श्रुतौ तत्रेत्यत्रयतच्छब्दस्य पर ब्रह्मार्थकत्वं स्वीकृत्य सप्तम्यर्थक - त्रक्प्रत्ययेन अधिकरणत्वबोधनेन-मुक्तजीवानां परब्रह्मणश्च भेद एतच्छ्रुतिबोध्य इति शंकराचार्यैर्व्या-ख्यातत्वात् । स च भेदोऽपारमार्थिक इति तेषामेववचनंत्वप्रामाणि-कत्वात् । श्रुतिपदालभ्यत्वान्मुक्तिकालीनस्यापारमार्थिकत्वासंभवा-च्चोपेक्षणीम् ।

## ९. ॐ सामीप्यात्तु तद्व्यपदेशः ॐ

एतत्सूत्रस्य 'परब्रह्मणः सामीप्यादपरस्यब्रह्मणस्तस्मिन्नपि-ब्रह्मशब्दव्यपदेशो न विरुध्यते' इति यद् व्याख्यानं तदयुक्तम् । न तावदत्र सामीप्यं देशकालाभ्यां । सर्वगतेन नित्येन च तादृशसामीप्य-स्याचेतनेऽपि सत्वेन तत्रापि ब्रह्मशब्दव्यपदेशप्रसंगात् । न च तत्समी-पवर्तिनितच्छब्दव्यवहारो लौकिकः । गोसमीपे महिषे - गोशब्दव्यवहा-रस्य, कृत्तिकासमीपकालवर्तिनि रोहिण्युदये कृत्तिकापदप्रयोगस्य वाऽदर्शनात् । नापि गुणतः निर्गुणेन सगुणस्य तथाविधसामीप्यानुपपत्तेः। प्रत्युत विरुद्धस्वभावयोरतिदूरस्थत्वस्यैवोपपत्तेः । किंच सति हि परब्रह्मणि ब्रह्मशब्दव्यपदेशे तत्सामीप्यादपरेऽपि सः कथंचित्संभा-

व्येतापि । अवाच्याभिमते तस्मिन् परेण शब्दव्यपदेशस्यैवानंगीकारात् ।

यच्चोक्तं परमेव हि ब्रह्म विशुद्धोपाधिसंबंधं उपासनायोपदिश्यमानमपरमिति स्थितिरिति तदप्ययुक्तम् । असंगस्योपाधिसंबंधानुपपत्तेरुक्तत्वात् । अपरस्य मिथ्याभूतस्योपास्यत्वानुपपत्तेश्च 'न च रमंत्यहो असदुपासनयाऽऽत्महनः इति स्मृत्या मिथ्योपासनस्यानर्थहेतुत्वोक्तेः ।

## १०. ॐ कार्यात्यये तदध्यक्षेण सहातःपरमभिधानात् ॐ

अस्य सूत्रस्य 'देवयानेन पथा प्रस्थिताः कार्यब्रह्मलोकप्रलय प्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः संतस्तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यंते इति यद् व्याख्यान तत्, सगुणविष्णुरेव परब्रह्म, तत्प्राप्तिरेव च परममुक्तिरनावृत्तिलक्षणेत्यभ्युपगमेन प्रवृत्तमिति न निराकरणार्हम् । परं यदत्रोक्तं 'तत्रैवोत्पन्नसम्यग्दर्शनाः संतः' इति तत्प्रमाणविरुद्धत्वादुपेक्षणीयं । लोकत्रयादुपरितनस्य कार्यब्रह्मलोकस्य प्राप्तेरनुत्पन्नसम्यग्दर्शनानामसंभवात् । 'वेदांतविज्ञानसुनिश्चितार्थाः' इति श्रुतेः । ईयुस्त्रीन् कर्मणालोकान् ज्ञानेनैव तदुत्तरानिति स्मृतेश्च ।

## ११. ॐ स्मृतेश्च ॐ

इति सूत्रस्य 'स्मृतिरप्येतमर्थमनुजानाति । ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यांते कृतात्मानःप्र विशंति परं पदम्' इति व्याख्याने, कार्यरुपमपरं ब्रह्मप्राप्तवतां तदनंतरं परब्रह्म प्राप्तिर्भवतीति । सा च प्राप्तिस्तत्पदप्रवेशरूपेति च कथिततत्वेन न केवलमपरमुक्तौ, किंतु तदनंतरं क्रमप्राप्यायां परममुक्तावपि प्रवेष्टृप्रवेश्यभावोक्त्या भेदः

स च मुक्तिकालीनत्वात् पारमार्थिक एवेति च सिध्यतीति एतदप्यद्वै-तिनां प्रतिकूलमेव ।

## १२. ॐ परं जैमिनिर्मुख्यत्वात् ॐ

इतः पराणि त्रीणि सूत्राणि पूर्वपक्षप्रापकाणि प्रज्ञाविकासनायेति-यद् व्याख्यानं तदयुक्तमपहासास्पदं च । सूत्रेषु पूर्वपक्षपरत्वप्रापक-लिंगाभावात् । किं च प्रज्ञाविकासनायाविद्यमानोऽप्यर्थश्चेत्सूत्रेषुवर्ण्येत हा हंत तर्हि वंध्यासुतादिकमपि कुतो वा न निरूप्येत । अतो नेमानि पूर्वपक्षसूत्राणि ।

प्रत्युत तदुदाहृतश्रुतिभिस्तद्व्याख्यानरीत्यैव च सिद्धांतप्रति-पादनपराण्येवेत्यवगम्यते । तथा हि 'स एनान् ब्रह्म गमयतीत्यत्र पर-ब्रह्मण्येव मुख्यस्य ब्रह्मशब्दस्य प्रयोगः 'तयोर्ध्वमायन्नमृतत्वमेति इति गतिपूर्वकामृतत्वप्राप्तिः, अन्यत्र धर्मादन्यत्राधर्मात्' इति परब्रह्मण एव प्रक्रांतत्वं, 'प्रजापतेः संभावेश्म प्रपद्ये' इति कार्यविषय प्रति-पत्त्याभिसंध्यभाव इत्येवं परनिरूपिताभिर्युक्तिभिः सिद्धांतपरत्वमेवैषा सूत्राणां विज्ञायते । यदत्रोक्तगत्युपपत्त्यादयः प्रभवंति मुख्यत्वादिना भासयितुं न तु मुख्यत्वादयो गत्युपपत्त्यादीनीति आद्यपक्ष एव सिद्धांतः द्वितीयो जैमिनिपक्षः, पूर्वपक्षो व्याख्यात इति तदयुक्तम् । स्यादेवं यदि गतिविषयताऽमुख्यस्यैव न तु मुख्यस्य ब्रह्मण इति भवेत् । नैत-दस्ति 'ब्रह्मविदाप्नोति परं' ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतिषु-मुख्यमेव ब्रह्म गतिविषयः इति शंकराचार्यैरंगीकारात्, अत्रैवाधिकरणे सिद्धांतसूत्रत्वेनाभिमते कार्यात्यये तदध्यक्षेण सहातः परमभिधाना'-दित्यत्र च विष्णुरेव परं ब्रह्म तत्प्राप्तिरेव च परमयुक्तिरिति व्याख्या-नाश्च जैमिनिमतस्य प्राप्तिलक्षणगत्युपपत्तिविरोधाप्रसक्तेः तद्विरोधेन जैमिनिमतस्याभासीकरणमिति वर्णनस्य व्याहतत्वात् ।

यच्चोक्तं 'आकाशवत्सर्वगतश्च नित्यः' 'आत्मैवेदं सर्वं', ब्रह्मै-

वेदं विश्वमिदं वरिष्ठं इत्यादिश्रुतिनिर्धारितविशेषस्य ब्रह्मणो न-गंतव्यतोपपद्यते प्रतिविद्धसर्वविशेषत्वाद् ब्रह्मण इति तदप्ययुक्तम्। एवं हि, पूर्वोक्तश्रुतिनिर्धारितविशेषं परं ब्रह्म, न गतिविषयोभवितुमर्हति प्रतिषिद्धसर्वविशेषत्वापिति खल्वनुमानप्रयोगोऽभिप्रेतः। तत्र प्रतिज्ञा-हेत्वोर्विरोधः सुस्फुटः।

हेतोरसिद्धिश्च। न च वाच्यं 'निष्कलं निष्क्रियं शांत' 'स एव नेति नेत्यात्मा' इत्यादिभिः शंकराचार्यैरत्रैवोदाहृताभिः श्रुतिभि-स्तत्सिद्धिरिति। तैरेव 'आकाशवत्सर्वगतश्च नित्यः' इत्याद्यनेकाः-श्रुतीरुदाहृत्य ताभिर्ब्रह्मणि विशेषाणां निर्धारणस्योक्तत्वेन पुनः 'निष्कलं निष्क्रियं' इत्यादिभिरन्याभिः काभिश्चिद्वा श्रुतिभिर्विशेष-प्रतिषेधस्यायोगात् न हि श्रुतयोऽद्वैतिन इव व्याहतभाषिण्यो येन प्रक्षा-लनाद्धि पंकस्येति न्यायमनादृत्य स्वनिर्धारितविशेषानेव स्वयं-निराकुर्युः।

यदत्रोक्तं गंतव्यत्वे परब्रह्मणस्तस्य देशकालादिविशेषयोगोऽपे-क्षितः। सचाभिः श्रुतिभिः प्रतिषिध्यते इति तदप्यसारम्। श्रुतिषु तादृशप्रतिषेधबोधकपदाभावात्। श्रौतपदालभ्यस्य वाक्यार्थत्वं शंकराचार्यैः 'नह्यक्षरबाह्यो वाक्यार्थः' इति व्यवस्थापयद्भिरपा-कृतम्। देशकालसंबंधाभावे शशविषाणवद् ब्रह्मणोऽसत्त्वापत्तिश्च। न हीतोऽन्यच्छशशृंगस्यासत्वे शृंगमस्ति। न च निर्विशेषत्वे ब्रह्मणः-शून्यात्तस्य विशेषः शक्यनिरूपणः। समर्थितं च निर्विशेषस्य शून्य-त्वसाधकत्वं शंकराचार्यैर्विष्णुसहस्रनामव्याख्यानावसरे 'निर्विशेष-त्वाच्छून्यवच्छून्य' इति।

यच्चात्र मृदादिदृष्टांतैर्विकारस्यानृतत्वप्रतिपादनं तदारंभणा-धिकरणे पूर्वमेव निरस्तमनुसंधेयम्।

विशेषनिराकरणश्रुतीनांनिराकांक्षार्थत्वात् शेषितवं उत्पत्त्यादि-

श्रुत्यादीनां निराकांक्षार्थप्रतिपादनासामर्थ्यात्तच्छेषत्वं इति यद्वर्णितं-तदप्यसाधु । वाक्यमात्रस्यान्वयरूपविशेषबोधकत्वनियमेन वाक्यं च विशेषमात्रनिराकरणार्थं चेति व्याहृतेः । अंततो निर्विशेषत्वलक्षण-विशेषप्रतिपादस्यावश्यकत्वात् । 'तत्र को मोहः कः शोक एकत्वमनुप श्यतः' इति निर्विशेष बोधकतायामुदाहृतवाक्येऽपि, शोकमोहनिवर्त-कत्वैकत्वानुदृश्यत्वादिविशेषाणां कथितत्वेन 'अभयं वै जनक प्राप्तोऽसि' इत्यत्राभयत्वप्राप्यत्वादिविशेषाणां वर्णितत्वेन एवं सर्वत्रापीति न तेषां निर्विशेषबोधकत्वं । निर्विशेषबोधकत्वादेव निराकांक्षत्वमित्युक्तिस्तु गर्भस्रावेणैव निरस्ता ।

किं च विशेषनिराकरणश्रुतीनां निराकांक्षार्थत्वात् शेषित्वमित्यस्य कोऽर्थः । आकांक्षाशून्यत्वादिति वा आकांक्षाऽजनकत्वादिति वा आकांक्षापूरकत्वादिति वा । नाद्यः वाक्यमात्रस्याकांक्षावत्त्वलक्षणनियमेन व्याघातात् । न द्वितीयः । शून्यप्रतिपादक वाक्यानामपि शेषित्वापत्त्या तदापत्तेरपि परममुक्तित्वापातात् । न तृतीयः । 'इष्टमाकांक्षते सर्वः' इत्युक्तरीत्या सर्वेष्टपुरुषार्थरूपविशेषानिरूपणे आकांक्षापूरकत्वस्या-योगात् । प्रत्युत तादृशविशेषनिरूपणएवाकांक्षापूर्वकत्वस्य सर्वत्र दर्शनात् ।

गंता जीवो गंतव्यस्य ब्रह्मणोऽवयवो विकारो वा न संभवतीति-यत्कथितं शंकराचार्यैस्तदनुमन्यत एव । तत्रोक्ता नित्यप्राप्तत्वनिर-वयत्वादयो युक्तयस्तु निर्मूलाः ।

एवं जीवस्य व्यापित्वमध्यमपरिमाणत्वप्रतिषेधोऽप्यंगीक्रियते । अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिरिति कथितं तु नोपपन्नम् । अणो-रपि जीवस्य 'तद्यथाऽणुनश्चक्षुषः प्रकाशोव्याततः, एवमेवास्यपुरुषस्य प्रकाशोव्याततः अणुर्ह्येवैषः' इति श्रुतौ जीवः स्वरूपतोऽणुरेव प्रकाश रूपेण व्याप्त इति स्पष्टं कथनेन प्रकाशरूपेण व्याप्त्या स्वदेहसर्वावय-वावच्छेदेन सुखदुःखानुभवोपपत्तेः । उत्क्रांतिगत्यागतीनां' इत्यादिसूत्रैः

स्पष्टमणुत्वस्य समर्थिततत्वेन, शंकराचार्यैरपि तेषां सूत्राणामणुत्वसमर्थनपरतया व्याख्याततत्वेनात्र पुनस्तन्निराकरणं उत्सूत्रं व्याहृतं च। विस्तरस्तु तत्सूत्रविचार एवानुसंधेयः।

तत्स्मात्कर्तृत्वभोक्तृत्वस्वभावे सत्यात्मन्यसत्यां विद्यागम्यायां-ब्रह्मात्मतायां न कथंचन मोक्षं प्रत्याशास्तीति यदुक्तं तदप्यसारम्। कर्तृत्व - भोक्तृत्वस्वभावत्वे मोक्षः (कर्तृत्वनिवृत्तिः) न स्यादित्यापादनमयुक्तम्। कर्तृत्वादेर्मोक्षेऽपीष्टत्वेन (प्रमाणसिद्धत्वेन) तन्निवृत्त्यभावस्यापादयितुमशक्यत्वात्। अप्रामाणिकं ह्यापादनीयम्। संति च मोक्षेऽपि कर्तृत्वादिप्रतिपादकानि 'स तत्र पर्येति' इत्यादि श्रुतिवाक्यानि 'संकल्पादेव तच्छ्रुतेः' इत्यादि सूत्राणि प्रमाणानि।

यदपि परापरत्वेन ब्रह्मत्वविभागः जक्षण - क्रीडनादीनां मुक्तिगोचरत्वाभावः इत्यादिकमप्रामाणिकमुत्सूत्रं व्याहृतं च भाषितंतत्सर्वं आरंभणाधिकरणे सविस्तरं निरस्तमनुसंधेयम्।

एवं स्थिते जैमिनिमतावष्टंभेन प्रवृत्तं सूत्रत्रयं पक्षांतरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकासनायेत्येतदधिकरणभाष्योपसंहारे यच्छंकराचार्यैरुक्तं तत्स्वकल्पितविषयवर्णनस्य सूत्रारूढतानाटनमात्रार्थम्।

(अधिकरणं ६)

## १५ ॐ अप्रतीकालंबनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॐ

## १६ ॐ विशेषं च दर्शयति ॐ

इति सूत्रद्वयस्य प्रतीकाप्रतीकालंबनानां विभिन्नगतिरिति यद्व्याख्यानं तदुपासकानां प्राप्यफलानां च भेदप्रतिपादनपरमेव। यत्तु कार्यविषयैवैषा गतिर्नपरविषयेति भाषितं तद्वाक्यान्वयाधिकरण आरंभणाधिकरण एवं तत्र तत्र सविस्तरमेव दूषितमिति नात्र पुनर्निराक्रियते।

।। श्री दिग्विजयरामोविजयतेतराम् ।।

अथ ब्रह्मसूत्रचतुर्थाध्यायीयचतुर्थपादशांकरभाष्यविचारः

- o -

(अधिकरणं १)

# १. ॐ सम्पद्याविर्भावः स्वेन शब्दात् ॐ

इति सूत्रस्य " एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रूयते । तत्र संशयः –किं देवलोकाद्युपभोगस्थानेष्विवागन्तुकेन केनचिद्विशेषेणाभिनिष्पद्यते, आहोस्विदात्ममात्रेणेति । किं तावत्प्राप्तम् ? स्थानान्तरेष्विवागन्तुकेन केनचिद्रूपेणाभिनिष्पत्तिः स्यात्; मोक्षस्यापि फलत्वसिद्धेः अभिनिष्पद्यत इति चोत्पत्तिपर्यायत्वात् । स्वरूपमात्रेण चेदभिनिष्पत्तिः पूर्वास्वप्यवस्थासु स्वरूपानपायाद्विभाव्येत । तस्माद्विशेषेण केनचिदभिनिष्पद्यत इति । एवं प्राप्ते ब्रूमः–केवलेनैवात्मनाऽऽविर्भवति न धर्मान्तरेणेति । कुतः ? स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्दात् । अन्यथा हि स्वशब्देनेति विशेषणमनवक्लृप्तं स्यात् । नन्वात्मीयाभिप्रायः स्वशब्दो भविष्यति, न, तस्यावचनीयत्वात् । येनैव हि केनचिद्रूपेणाभिनिष्पद्यते तस्यैवात्मीयत्वोपपत्तेः स्वेनेति विशेषणमनर्थकं स्यात् । आत्मवचनतायां त्वर्थवत्, केवलेनैवात्मरूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणापीति " इति यद् व्याख्यानरूपं शांकरभाष्यं तत्तु द्वैतमतानुकूलम् अद्वैतमतविरोधि च ।

एतद्भाष्यतद्व्याख्येयसूत्रगृहीतायां 'परं ज्योतिरुपसम्पद्य' इति श्रुतौ परं ज्योतिः परमात्मानं सम्पद्य इति कर्तृकर्मभावनिर्देशेन तथा 'स तत्र पर्येति' इत्युत्तरवाक्येऽपि अधिकरणाधिकर्तव्यनिर्देशेन च जीवपरमात्मनोर्भेदबोधनात्। तस्य च भेदस्य अविद्यानिवृत्तिरूपमोक्षावस्थागतत्वेन अविद्याकल्पितत्वरूपव्यावहारिकत्वशंकाऽविषयतया पारमार्थिकत्वाच्च।

नच स्वेण रूपेण परमात्मस्वरूपेण अभिनिष्पद्यते इत्युक्त्या मुक्तस्य परमात्मस्वरूपत्वमेवोक्तं मुक्ताविति वाच्यम्। परं ज्योतिः= परमात्मानं उपसम्पद्य इति प्राप्यप्राप्तृभावोक्त्या भेदस्य स्फुटं कथनेन जीवः स्वेन' रूपेण = स्वकीयरूपेणैव अभिनिष्पन्नो भवतीति आवरक ( बन्ध ) निवृत्त्या स्वस्वरूपा ( जीवस्वरूपा ) निर्भावस्यैव सिद्धेः।

अद्वैतमते अज्ञाननिवृत्तेरेव मोक्षत्वाङ्गीकारेण तस्य ( अज्ञाननिवृत्तिरूपमोक्षस्य ) ज्ञाने जाते देशकालगमनाद्यनपेक्षत्वेन अस्माच्छरीरात्समुत्थायेति शरीरादुत्क्रमणस्य परंज्योतिरुपसम्पद्येति परमात्मप्राप्तेश्चानपेक्षणात्।

यत्तु भाष्यरत्नप्रभायां 'आदौ अभ्यर्हितपरविद्याप्राप्यं निर्विशेषब्रह्मभावमाह' इति अवतरणं दत्तमेतत्सूत्रस्य, तत्तुच्छम्। 'सम्पद्याविर्भावः स्वेन शब्दात्' इति सूत्रे जीवस्य ब्रह्मभाव ( ब्रह्मत्व ) बोधकपदाभावात् जीवब्रह्मणोर्भेदबोधकपदस्य सत्त्वाच्च। तथा हि-'सम्पद्याविर्भावः स्वेन शब्दात्' इति सूत्रस्य 'परं ज्योतिरुपसम्पद्य' इति श्रुत्यनुसारेण परं ज्योतिः इति पदसंयोजने

परं ज्योतिः=परमात्मानं, सम्पद्य=प्राप्य, स्वेन रूपेणाविर्भवति शब्दादित्यर्थः सम्भवति । नह्येतेन सूत्रेण जीवस्य ब्रह्मभावः (ब्रह्मत्वं) कथ्यते–प्रत्युत प्राप्यप्राप्तृभावेन भेद एव कथ्यते इति ।

कः पुनर्विशेषः पूर्वास्ववस्थासु इह च स्वरूपानपायसाम्ये सतीत्यत आह ।

## २. ॐ मुक्तः प्रतिज्ञानात् ॐ

इति सूत्रस्य योऽत्राभिनिष्पद्यत इत्युक्तः स सर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते पूर्वत्रत्वन्धो भवत्यपि रोदितीव विनाशमेवापीतो भवतीति चावस्थात्रयकलुषितेनात्मनेत्ययं विशेषः । कथं पुनरवगम्यते मुक्तोयमिदानीं भवतीति ? प्रतिज्ञानादित्याह तथा हि – 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छां. ८-९-३-८-१०-४।८-११-३ ) इत्यवस्थात्रयदोषविहीनमात्मानं व्याख्येयत्वेन प्रतिज्ञाय 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ( छां. ८-१२-१ ) इति चोपन्यस्य 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' ( छां. ८-१२-३) इति चोपसंहरति । तथाऽऽख्यायिकोपक्रमेऽपि 'य आत्मा अपहतपाप्मा' (छां. ८-७-१) इत्यादिमुक्तात्मविषयमेव प्रतिज्ञानं, फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा नापूर्वोपजननापेक्षा यदप्यभिनिष्पद्यते इत्युत्पत्तिपर्यायत्वं, तदपि पूर्वावस्थापेक्षम्" यथा रोगनिवृत्तावरोगोऽभिनिष्पद्यत इति तद्वत् । तस्माददोषः" इति यद् व्याख्यानं तदपि मुक्तौ जीवस्य सर्वबन्धविनिर्मुक्ततया दुःखदायकप्राकृतशरीरराहित्येन स्वस्वरूपेण परमात्मभिन्नतया स्थितिकथनेन श्रुत्याद्यनुसारितया युक्तमेव, परन्तु अद्वैतमतस्य विरुद्धम् ।

# ३. ॐ आत्मा प्रकरणात् ॐ

इति सूत्रस्य कथं पुनर्मुक्त इत्युच्यते, यावता परं ज्योतिरुपसम्पद्यत' ( छां. ८-१२-३ ) इति कार्यगोचरमेवैनं श्रावयति; ज्योतिश्शब्दस्य भौतिके ज्योतिषि रूढत्वात्। न चानतिवृत्तो विकारविषयात् कश्चिन्मुक्तो भवितुमर्हति विकारस्यार्तत्वप्रसिद्धेरिति। नैष दोषः। यत आत्मैवात्र ज्योतिश्शब्देनावेद्यते प्रकरणात्। 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' ( छां ८-७-१ ) इति हि प्रकृते परस्मिन्नात्मनि नाकस्माद्भौतिकं ज्योतिश्शक्यं ग्रहीतुम्। प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। ज्योतिश्शब्दस्त्वात्मन्यपि। दृश्यते– 'तद्देवा ज्योतिषां ज्योतिः' ( बृ. ४-४-१६ ) इति। प्रपंचितं चैतत् 'ज्योतिर्दर्शनात्' इत्यत्र" इति व्याख्यानमपि समीचीनं श्रुत्याद्यनुकूलत्वात्। तेन व्याख्यानेन ज्योतिश्शब्दस्य भौतिकज्योतिःपरत्वमाशंक्य 'तद्देवा ज्योतिषां ज्योतिः' ( बृ. ४-४-१६ ) इत्यादि प्रमाणप्रदर्शनपूर्वकं परमात्मपरत्वं समर्थ्य मुक्तस्य परमात्मप्राप्तिकथनद्वारा मुक्तावपि जीवपरमात्मनोभेदकथनेन जीवपरमात्मनोभेदस्य तत्पारमार्थिकत्वस्य च सिद्धेः द्वैतमतानुकूलम्, अद्वैमतविरुद्धं च।

(अधिकरणं २)

# ४. ॐ अविभागेन दृष्टत्वात् ॐ

इति सूत्रस्य शंकराचार्यकृतभाष्यस्थदोषान् प्रदर्श्य जीवेशाभेदपरत्वं निराकृत्य भेदपरतायाः आरम्भ एवोक्तत्वात् नेह पुनर्विचार्यते।

(अधिकरणं ३)

# ५ ॐ ब्राम्हेण जैमिनिरुपन्यासादिभ्यः ॐ

इति सूत्रस्य स्थितमेतत् 'स्वेन रूपेण' (छां. ८-३-४) इत्यत्रात्ममात्ररूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणेति, अधुना तु तद्विशेषबुभुत्सायामभिधीयते, स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादिसत्यसङ्कल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यते इति जैमिनिराचार्यो मन्यते। कुतः ? उपन्यासादिभ्यस्तथात्वावगमात्। तथा हि— 'य आत्माऽपहतपाप्मा' ( छां. ८-७-१ ) इत्यादिना 'सत्यकामस्सत्यसङ्कल्पः' ( छां. ८-७-१ ) इत्येवमन्तेनोपन्यासेनैवमात्मैकतामात्मनो बोधयति। तथा 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' ( छां. ८-१२-३ ) इत्यैश्वर्यरूपमावेदयति। 'तस्य सर्वेषु लोकेषु कामचारो भवति ( छां. ७-२५-२) इति च 'सर्वज्ञः सर्वेश्वरः' इत्यादि व्यपदेशाश्चैवमुपपन्ना भविष्यन्ति' इति व्याख्यानेन यत् मुक्तस्य अपहतपाप्मत्वादिविशिष्टब्रह्मरूपत्वाभिधानं तदयुक्तम्। 'य आत्माऽपहतपाप्मा' 'सत्यकामः सत्यसंकल्पः' इत्याद्युपन्यासे ( वेदे ) ब्रह्मणोऽपहतपाप्मत्वादिधर्मोक्तावपि मुक्तस्यापहतपाप्मत्वादिधर्मवद्ब्रह्मस्वरूपताऽनभिधानात्। 'परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते' ............ स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इति मुक्तस्य जक्षणक्रीडनाद्युक्तावपि ब्रह्मस्वरूपताऽनभिधानात् प्रत्युत 'परं ज्योतिरुपसम्पद्य' इति प्राप्यप्राप्तृभावेन जीवब्रह्मणोर्भेदस्यैव कथितत्वाच्च। शङ्कराचार्यैरपि उपसम्पद्यत इति प्राप्यप्राप्तृभावेन भेदः कथ्यत इति स्वीकृतत्वाच्च। 'तस्य सर्वेषु लोकेषु कामचारो भवति' ( छां. ७-२५-२) इति व्यपदेशेऽपि, ब्रह्मज्ञानिनो लोकसंचरणोक्तावपि परमात्माऽभेदानुक्तेः। प्रत्युत ज्ञातृज्ञेयभावेन भेदस्यैवोक्तेः :

किं च अद्वैतमते सत्यकामत्वसत्यसंकल्पत्वादिविशिष्टस्य ब्रह्मणो मिथ्यात्वेन मिथ्याभूतब्रह्मणा जीवस्य ऐक्यायोगात् ।

# ॐ चितितन्मात्रेण तदात्मकत्वादि-त्यौडुलोमिः ॐ

इति सूत्रस्य यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्माः निर्दिश्यन्ते; तथापि शब्दविकल्पजा एवैते । पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते । चैतन्यमेवत्वस्यात्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता । तथा च श्रुतिः—' एवं वा अरेऽय मात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानधन एव ( बृ. ४–५–१३ ) इत्येवंजातीयकाऽनुगृहीता भविष्यति । सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यंते सत्याः कामाः अस्येति; तथाप्यु पाधिसंबंधाधीनत्वात्तेषां न चैतन्यवत्स्वरूपत्वसंभवः अनेकाकारत्व-प्रतिषेधात् प्रतिषिद्धं हि ब्रह्मणो अनेकाकारत्वं 'न स्थानतोऽपि परस्योभयलिंगम् ( ब्र. सू. ३–२–११ ) इत्यत्र । अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायम् स्तुत्यर्थमात्मरतिरित्यादिवत् । न हि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि शक्यन्ते वर्णयितुं द्वितीयविषयत्वात्तेषाम् । तस्मान्निरस्ताशेषप्रपंचेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यते इत्यौडुलोमिराचार्यो मन्यते इति यद् व्याख्यानं तदयुक्तम् । निर्विशेषस्य वस्तुनः प्रमाणागम्यत्वेन शशविषाणवत् असत्त्वात् जीवस्य ब्रह्मणश्च निर्विशेषचिद्रूपत्वांगीकारेण प्रमाणागम्यत्वात् । चिन्मात्ररूपमेवासदिति । जीवाः परं ज्योतिः परमात्मानं प्राप्तः स्वेन रूपेण अभिनिष्पद्यते इत्यस्य निर्विशेषचिति स्वरूपेणाभिनिष्पद्यत इति उक्ते रत्यंतमसंगतत्वात् ।

न च पापाभावादिरूपाणां अपहतपाप्मादीनाम् अभावरूपत्वेऽपि मिथ्याभूतप्रतियोगिसापेक्षत्वेन मिथ्यात्वं, सर्वज्ञत्वादिभावधर्माणां तु स्वयं मिथ्यात्वमिति धर्माणामेव अभावेन (असत्त्वेन) ब्रह्मणः सर्वधर्माभावे चितिस्वरूपत्वम् अङ्गीकरणीयमिति वाच्यम् । मानाधीना मेयसिद्धिरिति नियमात् निर्विशेषचैतन्ये प्रमाणाप्रवृत्तेः प्रमाणाभावेन निर्विशेषचितिमात्रस्य असिध्या शशविषाणवदसत्त्वात् । मानाभावेऽपि वस्तुसिद्ध्यंगीकारे शशविषाणादेः सिद्धिप्रसंगः । यदि स्वप्रकाशत्वात् चिद्रूपब्रह्मसिद्धिः तर्हि शशविषाणमपि स्वप्रकाशत्वात्सिध्येत् । शशविषणं प्रमाणाभावेन स्वप्रकाशं नेति चेत्, ब्रह्मणो।पि प्रमाणाभावेन स्वप्रकाशत्वाभाव एव । यदि परप्रकाशत्वाभावः (परप्रकाश्यत्वं) स्वप्रकाशत्वं ब्रह्मप्रकाशकस्यान्यस्याभावेन परप्रकाश्यत्वरूपप्रतियोग्यनुपलम्भरूपप्रमाणादेव परप्रकाश्यत्वाभावरूपस्वप्रकाशत्वसिद्धिः, तर्हि शशविषाणप्रकाशकस्यान्यस्याभावेन परप्रकाश्यत्वरूपप्रतियोग्यनुपलंभरूपप्रमाणदेव शशविषाणस्य परप्रकाश्यत्वाभावरूपस्वप्रकाशत्वसिद्धिः समा । यदि शशविषाणस्य प्रमाणाविषयत्वेन परप्रकाश्यत्वरूपप्रतियोग्यनुपलंभरूपप्रमाणेन परप्रकाश्यत्वाभावरूपस्वप्रकाशत्वस्य शशविषाणे न सिद्धिः, तर्हि ब्रह्मणोऽपि प्रमाणाविषयत्वेन परप्रकाश्यत्वरूपप्रतियोग्यनुपलम्भरूपप्रमाणेन परप्रकाश्यत्वाभावरूपस्वप्रकाशत्वस्य ब्रह्मणि सिद्ध्यभावोऽपि तुल्य इति आ९तां प्रसक्तानुप्रसक्तचिन्ता । प्रकृतमनुसरामः ।

यदुक्तं 'न स्थानतोऽपि परस्योभयलिङ्ग' मित्यत्र प्रतिषिद्धं हि ब्रह्मणो अनेकाकारत्व ( सविशेषत्व ) मिति तत् 'यः सर्वज्ञः स सर्ववित्' 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः' इत्याद्यनेकेषां श्रुतिसूत्रगीतारूपप्रमाणानां परमात्मनो

धर्मबोधकानां सत्त्वात् एच्छ्रुतिबोधितानां धर्माणां कस्यामपि श्रुतौ सूत्रे गीतायामनिषिद्धत्वात् अयुक्तमिति व्यवस्थापितम् 'न स्थानतोऽपि' इति सूत्रविचारावसरे, तत्रैव द्रष्टव्यम्। अत एव जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायमिति यदुक्तं तदप्ययुक्तम्। दुःखाभावस्यापि मिथ्याभूतदुःखप्रतियोगिकत्वेन त्वन्मतरीत्या मिथ्यात्वात् अविद्यानिवृत्तिरूपमोक्षे अविद्याकल्पितपदार्थानां सत्त्वायोगेन तत्प्रतिपादकस्य वेदस्य अविद्यमानार्थप्रतिपादकत्वरूपाप्रामाण्यप्रसंगो दुर्वार एवेति। तस्मान्निरस्ताशेषप्रपंचेन प्रसन्नेन अव्यपदेश्येन बोधात्मना अभिनिष्पद्यते इत्यौडुलोमिरिति उक्तिः 'एष वंध्यासुतो याति खपुष्पकृतशेखरः। मृगतृष्णांभसि स्नातः शशशृङ्गधनुर्धरः' इतिवत् व्याहतैव। नन्वेतौ अर्थौ सूत्रयोः पूर्वपक्षतया शंकराचार्यैः उक्ताविति तदुक्तार्थयोः खण्डनं संमतमेवाद्वैतिनां इति चेन्न एवमप्युपन्यासादिति (७) सिद्धान्ततया अद्वैत्यभिमते सूत्रे अर्थद्वयस्यापि पक्षभेदेन व्यवस्थापितत्वेन तादृशार्थद्वयखंडनस्य अद्वैतिनामनुमतत्वायोगात्।

## ७ ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ

इति सूत्रस्य यत् एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वास्याप्युपन्यासादिभ्योऽवगतस्य ब्रह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते इति व्याख्यानं तदपि न समीचीनम्। निर्विशेषचिन्मात्रे प्रमाणानां प्रवृत्त्यसंभवेन तस्य शशविषाणादिवदप्रामाणिकत्वस्य पूर्वसूत्रार्थखण्डने-

स्पष्टमुपपादितत्वेन निर्विशेषचिन्मात्रस्वरूपताया एव अभ्युपगंतुमशक्यत्वेन तत्पारमार्थिकतायाः कफोणिगुडायितत्वात् । अपहतपाप्मत्वादीनाम् श्रुत्यादिप्रमाणप्रमितानां प्रत्याख्यानासंभवेऽपि ब्राह्मेण जैमिनिरिति सूत्रशांकरभाष्यखण्डनावसरे उक्तरीत्या श्रुत्याद्यप्राप्तानां मुक्तस्य सर्वज्ञत्वादिधर्माणां प्रत्याख्यानस्यावश्यकत्वाच्च मुक्तस्य निवृत्ताविद्यत्वेन तत्र त्वन्मतरीत्याऽपि व्यावहारिकाणां ( आविद्यकानां ) धर्माणामंगीकर्तुमशक्यत्वेन व्यवहारापेक्षयेत्याद्युक्तेरप्यसंगतत्वाच्च ।

## ८. ॐ संकल्पादेव तु तच्छ्रुतेः ॐ

इतिसूत्रस्य "हार्दविद्यायां श्रूयते— 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ' (छां. ८-२-१) इत्यादि - तत्र संशयः - किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुरुत निमित्तान्तरसहित इति । तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता युक्ता । यथा लोकेऽस्मदादीनां संकल्पाद्गमनादिभ्यश्च हेतुभ्यः पित्रादिसम्पत्तिर्भवत्येवं मुक्तस्यापि स्यात् । एवं दृष्टविपरीतं न कल्पितं भविष्यति । संकल्पादेवेति तु राज्ञ इव सङ्कल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्योच्यते । न च संकल्पमात्रसमुत्थानाः पित्रादयो मनोरथविजृंभितवच्चलत्वात्पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति । एवं प्राप्ते ब्रूमः— संकल्पादेव तु केवलात्पित्रादिसमुत्थानामिति । कुतः, तच्छ्रुतेः 'संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति ( छां. ८-२-१) इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीडयेत । निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्याद्भवतु, न तु - प्रयत्नान्तरसम्पाद्यं निमित्तान्तरमितीष्यते प्राक्तत्सम्पत्तेर्व-

न्धसंकल्पत्वप्रसंगात्। न च श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते। संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपत्तिः। प्राकृतसंकल्पविलक्षणत्वामुक्तसंकल्पस्य इति यद् व्याख्यानं शंकराचार्याणां तत्तु मुक्तौ जीवाः निरस्तप्रतिबंधास्संतः ईश्वरानुग्रहेण ईप्सितफलानुभवं कुर्वन्तः सामगानादिना ईश्वरमाराधयन्तस्तिष्ठन्ति इत्यर्थप्रतिपादकश्रुतिसूत्रादिप्रमाणानुकूलत्वात् युक्तमेव।

परन्तु भाष्यरत्नप्रभायां— 'एवं परविद्याफलमुक्तम्। इदानीम् अपरविद्याफलं प्रपचंयति संकल्पादेवेति' इति वाक्येन, तथा आनन्दगिरीयन्यायनिर्णये— 'पूर्वाधिकरणेषु परविद्याफलमभिधाय अपरविद्याफलं प्रपंचयितुमधुना उपक्रमते-संकल्पादिति' इति वाक्येन परविद्या अपरविद्या इति विद्याद्वयं स्वीकृत्य पूर्वमुक्तं परविद्याफलं (निर्गुणविद्याफलं) इदानीम् अपरविद्या (सगुणविद्या) फलमुच्यते इत्युभाभ्यां कथनमयुक्तम्। निर्गुणब्रह्मणश्शशविषाणवत् अप्रामाणिकत्वेन अज्ञेयत्वेन च तस्य (ब्रह्मणः) विद्याया एव असंभवाच्च। अद्वैतिभिः परस्य ब्रह्मणो विद्याविषयत्वा.. नङ्गीकारात्। एतत्सूत्रशांकरभाष्ये सूत्रे वेदे च सगुणब्रह्मनिर्गुण ब्रह्मभेदेन विद्याभेदस्यानुक्तत्वाच्च।

## ९. ॐ अत एव चानन्याधिपतिः ॐ

इति सूत्रस्य "अत एव चावन्ध्यसंकल्पत्वादनन्याधिपतिर्विद्वान् भवति। नास्यान्योऽधिपतिर्भवतीत्यर्थः। न ही प्राकृतोऽपि संकल्पयन्नन्यस्वामिकत्वमात्मनः सत्यां गतौ सङ्कल्पयति। श्रुतिश्चैतद्दर्शयति— 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छां. ८-१-६) इति" इति यद् व्याख्यानं शंकराचार्याणां तदयुक्तम्। एतत्सूत्रोद -

हृतायां 'तद्य इहात्मानमननुविद्य व्रजन्ति एतांश्च सत्यान् कामान् तेषु सर्वेषु लोकेषु अकामचारो भवति, अथ च इह आत्मानमनुविद्य व्रजन्त्येनांश्च सत्यान् कामान् तेषु सर्वेषु लोकेषु कामचारो भवतीति छान्दोग्यश्रुतौ परमात्मानं परमात्मसंबंधिसत्यकामत्वादि गुणांश्च अज्ञात्वा ये गच्छन्ति तेषां सर्वलोकेषु यथेष्टाचरणं न भवति ईश्वरज्ञानाभावात् । ये परमात्मानं परमात्मसम्बन्धिनः सत्यभूतान् कामान् गुणान् ज्ञात्वा व्रजंति, तेषां परमात्मज्ञानात् यथेष्टाचरणं भवति इति ईश्वरज्ञानेन फलसिध्युक्त्या ईश्वरः अधिपतिरिति सिध्यतीति तच्छ्रुत्यनुसारेण अत एव परमेश्वरानुग्रहादेव मुक्तः अनन्याधिपतिः अन्यः स्वोत्तमादन्यः स्वाधमः पतिर्वास्ति यस्य सः भवति। यथा बद्धावस्थायां स्वाधमा अपि स्वं नियमयन्ति न तथा मुक्त्यवस्थायां स्वोत्तमादन्यः अधमो नियन्ता भवति इत्यर्थकत्वस्यैव वक्तव्यत्वेन, सामान्यतः अधिपतिरेव मुक्तानां नास्ति इत्यर्थकरणायोगात् । अद्वैतमतरीत्याऽप्यस्य सगुणमोक्षपरत्वांगीकारेण ईश्वरस्य मुक्तेन भेदसद्भावेन नियम्यनियामकभावसद्भावेन च ईश्वराधिपतित्वस्यावर्जनीयत्वाच्च । किं च अन्यः स्वोत्तमादन्यः स्वाधमः पतिर्यस्य नास्ति न विद्यते सः तादृशः भवतीत्येवार्थः स्वीकरणीयः सूत्रस्य, नत्वधिपतिरेव नास्तीति । तथात्वे अनधिपतिरित्येव ब्रूयात् । लाघवात् । न विद्यते अधिपतिर्यस्येत्युक्तिमात्रेण अधिपतिसामान्याभावसिद्धेरिति ।

## १०. ॐ अभावं बादरिराह ह्येवम् ॐ

मुक्तौ मुक्तस्य शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते ।

## ११. ॐ भावं जैमिनिर्विकल्पामननात् ॐ

जैमिन्याचार्यस्तु 'स एकधा भवति त्रिधा भवति ( छां.

(७-२६-२ ) इति श्रुतौ मुक्तस्य अनेकधा भावविकल्पाम्नानात् ( बहुरूपत्वकथनात् ) अनेकविधतायाश्शरीरभेदमन्तरा असम्भवात् देहसद्भावं मुक्तस्य मन्यते ।

## १२. ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ

बादरायणाचार्यो मुक्तस्य देहसद्भावं देहाभावं च मन्यते । न च विरोधः, यदा सशरीरतां संकल्पयति तदा सशरीरः, यदा अशरीरतां सङ्कल्पयति तदा अशरीरो भवतीति कालभेदेन सशरीरत्वाशरीरत्वयोरङ्गीकारादिति ।

## १३. ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ

देहाभावे स्वप्नवदस्पष्टभोगमनुभवन्ति मुक्ताः ।

## १४. ॐ भावे जाग्रद्वत् ॐ

देहसत्त्वे यथा जाग्रदवस्थायां भोगस्तथा मुक्तस्यापि भोगः इतीमानि सूत्राणि यत् व्याचक्रुः शंकराचार्याः तदपि युक्तमेव । श्रुत्याद्यनुकूलत्वात् । अनुमतत्वाच्च । परंतु अद्वैतिनां मोक्षरूपं फलं सगुणमोक्षरूपं निर्गुणमोक्षरूपमिति द्विधा विभज्य सगुणमोक्षस्तु सगुणब्रह्मज्ञानेन द्वैतविषयकेण भवति । मोक्षेऽपि जीवेश्वरयोर्भेदः अनेकभोगभोक्तृत्वम् । निर्गुणमोक्षे तु केवलमखण्डचिद्रूपनिर्विशेषब्रह्मरूपेणावस्थानं, न तत्र भोगादिकं किंचित्, सुखानुभवश्च तत्र नास्ति, नापि कस्यचिद्वस्तुनो ज्ञानम् एवं रूपं शशविषाणसोदरम् अप्रामाणिकं, मोक्षं, ज्ञाता, ज्ञानं ज्ञेयमित्यादित्रिपुट्याः तत्राभाव इति च कल्पयित्वा कथाचिद्विद्यया सगुण-

मोक्षः कयाचिद्विद्यया निर्गुणमोक्षः इति च प्रकल्प्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भमा' इति श्रुत्युक्त-भूमविद्यायाः निर्गुणविद्यात्वं, तस्य फलं निर्गुणब्रह्म-भावरूपमोक्षः, मोक्षे च एकधाभवनादिरूपव्यापारो नास्तीति यत्स्वीकरणं, मोक्षे देहो वर्तत इति जैमिनिर्मन्यते, नास्तीति बादरिः, इच्छानुसारेण उभयसद्भावं बादरायणाचार्यो मन्यते इति विचारविषयस्य मोक्षस्य निर्गुणभूमविद्याफलत्वेन तत्र एकधाभवनद्विधाभवनरूपव्यापारो नास्त्येवेति च यत्स्वीकरणं तदयुक्तम् ।

सगुणविद्या निर्गुणविद्या इति विद्याविभागस्य शशविषाणायितत्वात् । तथाविभागश्चेत् अद्वैतिभिर्निर्गुणविद्याफलत्वेन कथ्यमाने मोक्षे सगुणविद्याफलत्वेनोच्यमानं एकधाभवन-द्विधाभवनस्वेच्छासंचरणादिकम् उक्तं कथं संजाघटीति इत्याद्यनुपपत्तयः प्राप्नुवन्ति । एतद्दोषप्रसङ्गभिया संभ्रान्तचेतसा शंकराचार्येण तदनुयायिना भामतीकारेण च ।

'यद्यपि निर्गुणविद्यायामप्ययम् अनेकधाभावविकल्पः पठ्यते तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याभावेनोपतिष्ठते' (भाष्यम्) इति–

'यद्यपि निर्गुणायामिदं भौमविद्यायां पठ्यते तथापि तस्याः पुरस्तादनेन सगुणावस्थागतेनैश्वर्येण निर्गुणविद्या स्तूयते' (भामती) इत्याद्यद्वैतिग्रंथेष्वेवोक्तमिति चेत् स्तुतिरूपत्वोक्तेरयुक्तत्वात् । तथा हि–स्तुतिर्नाम अल्पफलसाधनतया प्रमितस्य महाफल साधनत्वकथनं (अल्पफलकस्य महाफलकत्वकथनं) यथा अल्प-पापादिनिवृत्तिफलकस्य वैशाखस्नानस्य ज्ञानसाध्यमोक्षरूपमहा-फलवत्त्वकथनम् । प्रकृते च अल्पसगुणविद्याफलीभूतस्य एकधा

द्वेधाभवनादेर्महाफलभूतनिर्गुणविद्याफलत्वेन कथनं कथं स्तुतिः स्यात् । स्वापेक्षया महासाधनेन सिध्यत्फलं स्वेन (साधनेन) सिध्यतीत्युक्तौ स्तोत्रं स्यात्, न तु स्वापेक्षया अल्पसाधनेन सिध्यत्फलं महासाधनेन सिध्यतीत्युक्तौ । प्रकृते अल्पया सगुणविद्यया साध्यमेकत्वादिभवनं महत्या निर्गुणभूमविद्यया भवतीत्युक्तौ महत्याःनिर्गुणविद्याया निन्दैव स्यात् इति ।

# १५ ॐ प्रदीपवदावेशस्तथाहि दर्शयति ॐ

'अस्य सूत्रस्य जैमिनिर्निर्विकल्पामननात्' (ब्र. सू. ४–४–११) इत्यत्र सशरीरत्वं मुक्तस्योक्तम् ; तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्राणीव सृज्यन्ते, किं वा सात्मकान्यस्मदादिशरीरवदिति । भवति वीक्षा तत्र चात्ममनसो भेदानुपपत्तेरेकेन शरीरेण योगात् इतराणि शरीराणि निरात्मकानीति । एवं प्राप्ते प्रतिपद्यते– प्रदीपवदावेश इति । यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात् । एवमेकोऽपि सन् विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति । कुतः । तथा हि शास्त्रमेकस्यानेकभावम्- 'स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधा' (छां. ७–२६–२) इत्यादि" इति यद् व्याख्यानं तद्युक्तमेव । मुक्तानामिच्छया अनेकाप्राकृतदेहग्रहणसंभवात् स एकधा भवतीत्यादिश्रुतिसिद्धत्वाच्च ।

यच्चोक्तं पूर्वाधिकरणे स एकधा भवतीति श्रुतिः सगुणमोक्षावस्थायाम् अनेकदेहवत्त्वं प्रतिपादयतीति तन्न युक्तम् । निर्गुणमोक्षः सगुणमोक्ष इति मोक्षद्वैविध्यस्याप्रामाणिकत्वात् । अद्वैतमतरीत्या निर्गुणभूमविद्यासाध्यमोक्षावस्थायामेव बहुभावस्य कथितत्वात् ।

कथं पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते ? यावता तत्केन कं विजानीयात् । ( बृ. ४-५-१५ ), न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' (बृ. ४-३-३०) 'सलिल एको द्रष्टाऽद्वैतो भवति ( बृ. ४-३-३२ ) इति चैवं जातीयका श्रुतिर्विशेषविज्ञानं वारयतीत्यत उत्तरं पठति ।

## १६. ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ

स्वाप्ययः सुषुप्तम् 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' ( छां. ६-८-१ ) इति श्रुतेः सम्पत्तिः कैवल्यम्, 'ब्रह्मैव सन् ब्रह्माप्येति' ( बृ. ४-४-६ ) इति श्रुतेः तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनम् । क्वचित्सुषुप्तावस्थामपेक्ष्योच्यते क्वचित्कैवल्यावस्थाम् । कथमवगम्यते ? यतस्तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' ( बृ. २-४-१४ ) 'यत्र त्वस्य सर्वमात्मैवाऽभूत' ( बृ. २-४-१४ ) 'यत्रसुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' ( बृ. ४-३-१९ ) ( माण्डू. ५ ) इत्यादि श्रुतिभ्यः सगुणविद्याविपाकावस्थानं त्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते तस्माददोषः" इति वाक्येन मुक्त्यवस्थायां 'तत् केन कं विजानीयात्' 'न तु तद्द्वितीयमस्ति' 'सलिल एको द्रष्टाऽद्वैतो भवति' इत्यादिश्रुतिभिः सर्वविशेषप्रतिषेधात् कथमिच्छया अनेकदेहग्रहणमिति शङ्का; तादृशश्रुतीनां सुषुप्तिमोक्षविषयत्वात् अनेकदेहादिभोगस्तु सगुणोपासकस्येति भिन्नविषयत्वान्न विरोध इति समाधानं च यदुक्तं तदुभयमपि न युक्तम् ।

'तत्केन कं विजानीयात्' (बृ.) इति श्रुतिर्मोक्षावस्थायाम् अद्वैत्यभिमतं ज्ञानाद्यभावं निराकृत्य ज्ञानादिसद्भावं व्यवस्थापयतीति तदनन्यत्वाधिकरणशंकरभाष्यखंडनावसरे व्यवस्थापितत्वात् नेयं श्रुतिर्मोक्षे अनेकदेहेच्छाग्रहणादिरूपैश्वर्यस्य विरोधिनीति अनेकदेहग्रहणेच्छाद्यैश्वर्यं सगुणमोक्षावस्थाकालीनम् इति भिन्नविषयत्वेन विरोधपरिहारकरणमयुक्तम् ।

## १७. ॐ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॐ

इति सूत्रस्य ये सगुणब्रह्मोपासनात् सहैव मनसा ईश्वरसायुज्यं व्रजन्ति किं तेषां निरवग्रहमिति संशयः – किं तावत्प्राप्तम् ? निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति 'आप्नोति स्वाराज्यम् (तै. १-६-२) सर्वेऽस्मै देवा बलिमावहन्ति (तै. १-५-३) तेषां सर्वेषु लोकेषु कामचारो भवति (छां. ७-२५-२-८-१-६) इत्यादिश्रुतिभ्य इति । एवं प्राप्ते पठति—जगद्व्यापारवर्जमिति । जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य । कुतः ? तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम् । पर एव हीश्वरो जगद्व्यापारेऽधिकृतः तमेव प्रकृत्योत्पत्त्याद्युपदेशात्, नित्यशब्दनिबन्धनत्वाच्च । तदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते । तेनासन्निहितास्ते जगद्व्यापारे समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित् स्यात् । अथ कस्यचित्संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषा-

मिति व्यवतिष्ठते" इति यद्व्याख्यानं तद्युक्तमेव। परन्तु 'ये सगुणब्रह्मोपासनात् सहैव मनसा ईश्वरसायुज्यम्' इत्यत्र सगुण ब्रह्मोपासनाप्रयोज्यं मनसा सह ईश्वरसायुज्यम् उक्तं तदयुक्तम्। सगुण (सर्वज्ञत्वाद्यनन्तकल्याणगुणपूर्ण) ब्रह्मातिरिक्तस्य ब्रह्मणोऽप्रामाणिकत्वेन शशविषाणायितत्वात्। निर्गुणब्रह्मव्यावृत्त्यर्थं सगुणमिति ब्रह्मणः विशेषणदानस्य अयुक्तत्वात्।

अस्मिन् सूत्रभाष्ये पूर्वोत्तरसूत्रभाष्येषु द्वैताद्वैतविषयविचारा आगताश्चेद्विचार्यन्ते। पंचम्यर्थषष्ठ्यर्थान्वयादिविचारो न क्रियते इत्यवगन्तव्यम्।

## १८ ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमन्डलस्थोक्तेः ॐ

इति सूत्रस्य "अथ यदुक्तम् 'आप्नोति स्वाराज्यम् (तै. १–६–२) इत्यादि प्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति' तत्परिहर्तव्यम्। अत्रोच्यते– नायं दोषः; आधिकारिकमण्डलस्थोक्तेः। आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणमनन्तरम् 'आप्नोति मनसस्पतिम्' (तै. १–६–२) इत्याह। यो हि सर्वमनसां पतिः पूर्वसिद्धईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति। तदनुसारेणैव चानंतरं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवतीत्याह। एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्त मेवेतरेषामैश्वर्यं योजयितव्यम्" इति यद्व्याख्यानं तदपि समीचीनमेव। जीवस्य मोक्षे श्रुतिसूत्रगीताप्रमाणैः ईश्वरभेद ईश्वरायत्तभोगवत्त्वयोः प्रतिपादनात्।

# १९ ॐ विकारावर्ति च तथा हि स्थितिमाह ॐ

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं ? न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम् । तथा ह्यस्य द्विरूपां स्थितिमाहाम्नायः ' एतावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ' (छां. ३-१२-६) इत्येवमादिः । न च तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुमतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्टन्ते एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम् ।" इति वाक्येन परमेश्वररूपं विकारावर्ति ( निर्विकारं ) विकारवर्ति ( सविकारं ) इति द्विविधम् ' तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि ' इति श्रुतिः तावानस्य महिमेति पूर्ववाक्येन परमात्मनो विकारवर्तिरूपं वक्ति । ततो ज्यायांश्च पुरुषः इत्युत्तरवाक्येन परमात्मनो निर्विकाररूपं वक्ति । पादोऽस्य विश्वा भूतानीति पूर्ववाक्येन परमात्मनो विकारवर्तिरूपं वक्ति, त्रिपादस्यामृतं दिवीत्युत्तरवाक्येन परमात्मनो निर्विकाररूपं वक्ति । तथा च यथा एवं द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते एवं सगुणेऽपि निरवग्रह (समस्त) मैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति परमेश्वरस्य रूपद्वयं तत्र तावानस्येति श्रुतेः प्रमाणत्वोक्तिः सम्पूर्णैश्वर्याप्राप्तौ निर्विकारब्रह्माप्राप्तिदृष्टान्तकथनं च श्रुतिसूत्रादिविरुद्धम् । तथा हि ब्रह्मणः सविकाररूपवत्त्वस्य ' निर्विकारोऽक्षरश्शुद्धः इत्यादि श्रुत्या निषेधात् ।

" तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वाभतानि त्रिपादस्यामृतं दिवि ।। (पुरु. ३ ) इति वाक्य-

घटकं 'तावानस्य महिमा' 'पादोऽस्य' इत्येतद्वाक्यद्वयं न ब्रह्मणः सविकारत्वं वक्ति तत्र तद्बोधकपदाभावात्। परमात्मनो निर्विकारत्वेऽपि 'ततो ज्यायांश्च पुरुषः' 'त्रिपादस्यामृतं दिवि' इति वाक्यद्वयं न परमात्मनो निर्विकारत्वं बोधयति तत्र तद्बोधकपदाभावात्। प्रत्युत अद्वैतोक्तरीत्या एकपादरूपस्य सविकारत्वोक्तौ त्रिपाद्रूपस्य तदपेक्षया अत्यन्तं विकारित्वस्यैव प्राप्तेः। एकमन्त्रे प्रथमतृतीयपादौ सविकारत्वबोधकौ द्वितीय-चतुर्थपादौ निर्विकारत्वबोधकावित्यस्य ज्ञापकाभावेनायोगाच्च।

सावग्रहैश्वर्यस्य निरवग्रहैश्वर्यस्य तद्विशिष्टरूपस्य च मिथ्यात्वेन = नास्ति नासीन्न भविष्यतीति त्रैकालिकनिषेधप्रतियोगित्वेन (असत्त्वेन) सावग्रहैश्वर्यप्राप्तेः निरवग्रहैश्वर्यप्राप्तेश्चासंभवेन निरवग्रहैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्ते इत्युक्तेः शशविषाणमप्राप्य नरविषाण एवावतिष्ठन्ते' इत्युक्तिवत् व्याहतत्वात्। तस्मात् निरवग्रहैश्वर्यमप्राप्य सावग्रहैश्वर्यप्राप्तौ दृष्टान्तकथनमयुक्तम्। 'विकारावर्ति च तथा हि स्थितिमाह इति सूत्रे एतदर्थबोधकपदानामभावात्। अलमधिकमसंबद्धनिराकरणेन।

## २०. ॐ दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ

इति सूत्रस्य "दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः (कठ. ५-१५. श्वे. ६-१४ मुण्ड. २-२-१०) इति 'न तद्भासयते सूर्यो न शशांको न पावकः' गी. १५-६) इति च तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः" इति यद् व्याख्यानं तदप्ययुक्तम्। सूत्रे तदर्थबोधकपदाभावात्। न तत्रेति श्रुतिः तत्र = परमात्मविषये सूर्यो न भाति न प्रकाशते—चन्द्रतारकं न प्रकाशते इमा विद्युतः

न प्रकाशन्ते अयमग्निः कुतो भाति ? न कुतोपीति । यथा दीपस्य अतिप्रकाशयुक्तसूर्यविषये न भासकत्वम् अल्पप्रकाशत्वात् तथा सूर्योदयः परमात्मप्रकाशापेक्षया अत्यन्ताल्पप्रकाशत्त्वेन परमात्म-विषये न प्रकाशं कुर्वन्ति इत्यर्थकत्वेन परमात्मनो निर्विकाररूप-सद्भावे न प्रमाणं भवितुमर्हति । एवं श्रुतिसमानार्थिका गीताऽपि पर-मात्मनः विकारावर्तिरूपे ( निर्विकारे रूपे )न प्रमाणं भवितुमर्हतीति ।

## २१. ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ

इति सूत्रस्य "इतश्च न निरंकुशं विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते—तमा-हापो वै खलु मीयन्ते लोकोऽसौ' इति 'स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति' तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' ( बृ. १–५–२३ ) इत्यादि भेदव्यपदेशलिंगेभ्यः" इति व्याख्यानमप्ययुक्तम् । भाष्योदा-हृतासु श्रुतिषु भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति एव-कारो न श्रूयत इति न तेन विकारालम्बनानां निरंकुशमैश्वर्यं जगत्सर्जनादिजगद्व्यापारः नास्तीति वक्तुमशक्यत्वात् इदं सूत्रं तदुदाहृताश्च श्रुतयः जगद्व्यापाराभावे न प्रमाणं भवितुमर्हति। द्वैतिनोऽपि-मुक्तस्य जगद्व्यापारः सर्जनादयः न सन्तीति कथयंति परम् अद्वैतमते निर्गुणब्रह्मातिरिक्तस्य सर्वस्य जगद्व्यापारादेः 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्नवै मुक्तः' इत्यादिना अद्वैतिकृतग्रन्थैः शशविषाणवदसत्त्वांगीकारेण सगुणं ब्रह्म नास्ति, तस्य जगज्जन्मादिकर्तृत्वरूपाद्यैश्वर्यं नास्ति, सगुण-ज्ञानं नास्ति, सगुणमोक्षो नास्ति, तत्प्राप्तिः नास्ति । कस्यचिद-प्यैश्वर्यस्य प्राप्त्यभावात् समग्रैश्वर्यप्राप्तिशंका तन्निराकरणं चायुक्तम् ।

## २२. ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ

पूर्वं परमेश्वरं प्राप्तानामपि मुक्तानां तस्माद्भेदे युक्ती निरूपिते, जगद्व्यापारराहित्यं भोगमात्रसाम्यं चेति। तथा सति तदैश्वर्ये सातिशयत्वस्य तत एवांतवत्त्वस्य च प्राप्त्या तेषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान् बादरायणः पठतीत्येवं प्रकारेणैतदधिकरणमवतार्य शंकराचार्यैः सूत्रं व्याख्यातम् "देवयानेन ब्रह्मलोकं गतानां न चंद्रलोकादि वा वृत्तिः तेषां न पुनरावृत्तिः (बृ) 'न च पुनरावर्तते' (छां) इत्यादिशब्देभ्य" इति। एवं तद्व्याख्यानेनैवेदमपि सूत्रं भेदपरमेव। चंद्रलोकगतानामावृत्तिर्न पुनर्ब्रह्मलोकगतानामिति वर्णनेन लोकानां तद्गतानां च परस्परं भेदः, एवमितरदेवता 'प्राप्तावविद्यमानस्यानावृत्तिलक्षणातिशयस्य परमेश्वरप्राप्तौ वर्णनेनेतरदेवताभ्यः परमेश्वरस्य भेदः इत्येवं जडजीवेश्वेराणां भेदस्य स्फुटमवगमात्।

यत्तु पुनरत्रोक्तं नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिरिति श्रुतिसूत्रेषु तदवर्णनमिति तदयुक्तं। श्रुतिसूत्रेष्ववर्णनेनैव निर्गुणपरायणानामनावृत्तेरप्रामाणिकत्वात्। विना प्रमाणैरपि तत्सिद्धौ वंध्यासुतप्राप्तिरपि मुक्तिरिति कुतो न सिध्यति। नित्यसिद्धत्वे तस्याःशास्त्रफलत्वानुपपत्तेश्च। यदि पुनः सगुणप्राप्तेरनावृत्तित्वकथनेन निर्गुणप्राप्तेस्तथात्वं कैमुत्येन सिद्धयतीत्याशयः सोऽप्यसारः। सगुणाद्भिन्नस्य निर्गुणस्यैवाप्रामाणिकत्वेनाभावात्। विष्णुसहस्रनामसु 'मुक्तानां परमा गतिः' इति नाम्नो व्याख्याने शंकराचार्यैः 'प्रकृष्टा गंतव्या देवता। मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते इति भगवद्वचनादिति सर्गुणस्यैव विष्णोर्गंतव्येषु प्रकृष्टत्वं गीतासंमतिप्रदर्शनपूर्वकं समर्थितम्। एवं 'यत्र हि द्वैतमिवभवति' इति श्रुतिव्याख्यानावसरे विष्णुप्राप्तिरेव परममोक्ष इत्यंगीकृतम्। अन्यथा तत्र जक्षन् क्रीडन्नित्याद्युक्तभोगवर्णनस्यानुपपत्तिमाशंक्य तस्यानुवादपरत्वरूप-

समाधानोक्तिस्तेषामसंगता स्यात् । एवं सगुणप्राप्तेरेव परममुक्तित्वं स्वयं सोपपत्तिकं समर्थ्यात्र निर्गुणप्राप्तेस्तथात्वोक्तिः स्ववचनविरोधादयुक्तैव ।

एवं सगुणशरणानामनावृत्तिरेवैतत्सूत्रे समर्थितेति निरूपयद्भिः निर्गुणब्रह्मभावरूपमुक्तेः असूत्रितत्वं तत एव तद्वर्णनपरस्य स्वभाष्यस्योत्सूत्रत्वं च स्वयमेवोररीकृतमिति कृतमेतादृशस्वव्याहतनिर्मूलभाष्यनिरासप्रयासेन ।

तथा च सर्वाण्यपि ब्रह्मसूत्राणि न केवलमस्मद्रीत्या किं नाम पररीत्यापि भेदपराण्येवेति विभावनीयं सुधीभिरिति ।

– o –

इति दुर्वादध्वान्तदिवाकर – श्रीचन्द्रिकामण्डनादिविद्वन्मान्यनैकप्रौढप्रबन्धप्रणेतृ – सर्वतन्त्रस्वतन्त्र–पदवाक्यप्रमाणपारावारपारीणअभिनवानन्दतीर्थजगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानश्रीमदुत्तरादि मठाधीश–विद्वत्कुलचक्रवर्ति श्री श्रीमत्सत्यध्यानतीर्थमुनिवर्यविरचिते ब्रह्मसूत्राणां भेदैकपरत्वप्रतिपादके "भेदपराण्येव खलु ब्रह्मसूत्राणि" इति नाम्नि प्रबन्धे चतुर्थाध्यायचतुर्थपादः समाप्तः। समाप्तोऽयं ग्रंथः ।

–: श्री कृष्णार्पणमस्तु :–